

# गीता-व्याख्यान-सङ्ग्रहः

(पञ्चदशव्याख्यानसमेता श्रीमद्भगवद्गीता)

## तृतीयं सम्पुटम्

### नवमाध्यायतः द्वादशाध्यायपर्यन्तम्







॥ श्रीमन्मूलरामो विजयते ॥

॥ श्रीगुरुराजो विजयते ॥

# गीता-व्याख्यान-सङ्ग्रहः

## (पञ्चदशव्याख्यानसमेता श्रीमद्भगवद्गीता)

## तृतीयं सम्पुटम्

नवमाध्यायतः द्वादशाध्यायपर्यन्तम्


*प्रधानसम्पादकाः*

राष्ट्रपतिप्रशस्तिपुरस्कृताः पण्डितकेसरी
श्री राजा एस्. गिरि आचार्याः

*सम्पादकाः*

विद्वान् कडप राघवेन्द्राचार्यः
विद्वान् डॉ. एन्. वादिराजाचार्यः
विद्वान् पुराणिक सुब्रह्मण्याचार्यः



*प्रकाशकः*



**श्रीगुरुसार्वभौमसंशोधनमन्दिरम्**
**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्**
जगद्गुरु श्रीमन्मध्वाचार्यमूलमहासंस्थानम्
श्रीराघवेन्द्रस्वामिनां मठः, मन्त्रालयः

॥ श्रीमन्मूलरामो विजयते ॥

॥ श्रीगुरुराजो विजयते ॥

# गीता-व्याख्यान-सङ्ग्रहः

## (पञ्चदशव्याख्यानसमेता श्रीमद्भगवद्गीता)

## तृतीयं सम्पुटम्

नवमाध्यायतः द्वादशाध्यायपर्यन्तम्


*प्रधानसम्पादकाः*

राष्ट्रपतिप्रशस्तिपुरस्कृताः पण्डितकेसरी
श्री राजा एस्. गिरि आचार्याः

*सम्पादकाः*

विद्वान् कडप राघवेन्द्राचार्यः
विद्वान् डॉ. एन्. वादिराजाचार्यः
विद्वान् पुराणिक सुब्रह्मण्याचार्यः





*प्रकाशकः*

**श्रीगुरुसार्वभौमसंशोधनमन्दिरम्**
**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्**
जगद्गुरु श्रीमन्मध्वाचार्यमूलमहासंस्थानम्
श्रीराघवेन्द्रस्वामिनां मठः, मन्त्रालयः

# Gīiā-Vyākhyāna-Saṅgraha

**A Collection of Fifteen Commentaries on**

## Srīmad Bhagavad Gītā

Valume : III - Adhyāyas 9 to 12

Printed Pages : xvi + 420

*Chief Editor :*
***President Awardī, Paṇḍitakesari,***
***Śrī Rājā S. Giri Ācārya***

*Edited By :*
**Vidwān Kaḍapa Rāghavendrāchārya**
**Vidwān Dr. N. Vādirājāchārya**
**Vidwān Purāṇik Subrahmaṇyāchārya**

*Published By :*
**Śrī Gurusārvabhouma Samśodhna Mandira**
**Śrī Gurusārvabhoum Sanskrit Vidyāpīṭha**
Jagadguru Śrīman Madhvācharya Mūla Mahāsamsthānam
Śrī Rāghavendra Swāmi Muṭha, Mantrālayam (A.P)

*Printed By :*
**Dhananjay Warkhedkar**
at : **Sudhā Mudraṇa**
Śankarpuram, Bangalore - 560 004.
*Phone* : 080-65602836 *Mobile* : 9243074414

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमत्परमहंसपरिव्राजकाचार्य-पदवाक्यप्रमाणपारावारपारङ्गत-सर्वतन्त्रस्वतन्त्र-
श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्य-श्रीमन्मूलरघुपतिवेदव्यासदेवदिव्यश्रीपादपद्माराधक-
**जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थानाधीश्वराणां**

श्रीराघवेन्द्रस्वामिमठीयवेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
**श्रीमत्सुशमीन्द्रतीर्थश्रीचरणकरकमलसञ्जात-**
**श्रीमत्सुयतीन्द्रतीर्थवरकुमारकाणां**

# श्रीमत्सुबुधेन्द्रतीर्थश्रीपादानां

## अनुग्रहसन्देशः

**"गीतायाः पुस्तकं यत्र यत्र पाठः प्रवर्तते ।**
**तत्राहं निश्चितं पृथ्वि निवसामि सदैव हि ॥"**

इत्यनेन पुराणवचनेन गीतायाः महत्त्वं अवगमयितुं शक्यते । जगतिविद्यमान-बहुभाषासु अनुवादितग्रन्थेति अस्य प्रत्येकप्रसिद्धिरपि वर्तते । इयं गीता न केवलं आध्यात्मिकचिन्तकानां अपितु सर्वेषां जनानां उत्तमजीवनाय मार्गदर्शिका । कर्तव्य-विमुखानां कर्तव्यांशं बोधयति । क्रियमाणमपि कर्म कर्तृत्वस्वातन्त्र्यभ्रान्त्या न कर-णीयमित्यपि बोधयति । ग्रन्थस्यास्य अस्मन्मठीयप्राक्तनपीठाधिपतयः, गृहस्थाश्रमिणः उत्तमव्याख्यानकरणेन महत्त्वमप्रकटयन् । अस्मद्गुरवः "गीताव्याख्यानसङ्ग्रह" इति नाम्ना उपलभ्यमानगीताव्याख्यानानि एकत्र सङ्गृह्य मुद्रापनीयमिति विचिन्त्य अस्मत्पूर्वाश्रम एव उपक्रमोऽकुर्वन् । तदा द्वौ सम्पुटौ मुद्रणं सम्प्राप्तौ । इदानीं अवशिष्टसम्पुटद्वयं अस्म-न्मठीयविदुषां निरन्तरपरिश्रमेण अधुना प्रकाशनमर्हतीति अतीव प्रमोदः समजनि ।

अस्य सम्पुटस्य संशोधनमुद्रणादिकार्ये सहकृतवतां सर्वेषां अस्मद्गुर्वन्तर्गत-श्रीमद्राघवेन्द्रतीर्थगुर्वन्तर्गत-भारतीरमणमुख्यप्राणान्तर्गत-श्रीमन्मूलरघुपति-वेदव्यासदेवः सकलसन्मङ्गलानि विदधात्विति प्रार्थयामः ।

*इति नारायणस्मरणानि ।*

# गीता-व्याख्यान-सङ्ग्रहः

## प्रस्तुतग्रन्थे समाविष्टानि व्याग्ख्यानानि

| क्र. | लेखकनाम | ग्रन्थनाम | ग्रन्थे सङ्क्षिप्तनाम |
|---|---|---|---|
| मूलगीताविभागः— | | | |
| १. | श्रीविद्याधिराजतीर्थाः | गीताविवृतिः | वि०वि०— |
| २. | श्रीवादिराजतीर्थाः | गीतालक्षालङ्कारः | वा०ल०— |
| ३. | श्रीराघवेन्द्रतीर्थाः | गीतासारसङ्ग्रहः | सा०सं०— |
| ४. | श्रीराघवेन्द्रयतिः | गीताअन्वयप्रकाशिका | अ०प्र०— |
| ५. | पांगरी श्रीनिवासाचार्यः | त्रिविधार्थविवृतिः | त्रि०वि०— |
| गीताभाष्यविभागः— | | | |
| ६. | श्रीमन्मध्वाचार्याः | गीताभाष्यम् | भाष्यम् |
| ७. | श्रीपद्मनाभतीर्थाः | गीताभावप्रकाशिका | प०टी०— |
| ८. | श्रीनरहरितीर्थाः | गीताभाष्यभावप्रकाशिका | न०टी०— |
| ९. | श्रीमज्जयतीर्थाः | गीताभाष्यप्रमेयदीपिका | प्र०दी०— |
| १०. | श्रीराघवेन्द्रतीर्थाः | प्रमेयदीपिकाभावदीपः | भा०दी०— |
| ११. | श्रीसुमतीन्द्रतीर्थाः | भावरत्नकोशः | भा०र०— |
| गीतातात्पर्यविभागः— | | | |
| १२. | श्रीमन्मध्वाचार्याः | गीतातात्पर्यनिर्णयः | गीतातात्पर्यनिर्णयः |
| १३. | श्रीपद्मनाभतीर्थाः | भावप्रदीपिका | प्रका०— |
| १४. | श्रीमज्जयतीर्थाः | गीतातात्पर्यन्यायदीपिका | न्या०दी०— |
| १५. | श्रीराघवेन्द्रतीर्थाः | न्यायदीपिकाभावदीपः | भा०दी०— |

॥ श्रीः ॥

# प्रस्तावना

ज्ञाने तिरोहिते उत्तमज्ञानमार्गात् भ्रष्टे सज्जने सर्वोत्तमः भगवान् नारायणः श्रीवेदव्यासत्वेन अवतीर्य वेदार्थनिर्णायकानि ब्रह्मसूत्राणि अष्टादशपुराणानि उपपुराणानि महाभारतं च अरचयत् । अत एव "व्यासोच्छिष्टं जगत्सर्वं" इति वाक् सुप्रसिद्धा । व्यासः साक्षात् विष्णुरेव । तथा च श्रीमन्महाभारते—

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षात् महाभारतकृद्भवेत् ॥ इति ।

## महाभारतम्

महाभारतं गात्रेण अर्थेन च श्रेष्ठः ग्रन्थः । अस्य च भावं विशेषं च यो जानाति सः सर्वपापविमुक्तो भवतीति महाभारतवचनम् ।

महत्त्वात् भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥

सर्वशास्त्रेषु श्रीमन्महाभारतग्रन्थः अत्यन्तश्रेष्ठः इति प्रतिपादितः । भारतं पञ्चमो वेदः इत्युक्त-दिशा महाभारतस्य पञ्चमवेदत्वं प्रसिद्धम् । एतादृशे श्रीमन्महाभारते अष्टादश पर्वाणि सन्ति, लक्षाधिकश्लोकाश्च विद्यन्ते ।

## भगवद्गीता

"भारतपारिजातमधुभूताम्" इत्यनया वाचा भगवद्गीतायाः महत्त्वं अवगम्यते । "भारते गीतिका वरा", "विष्णोः सहस्रनामाऽपि ज्ञेयं पाठ्यं च तद् द्वयम्" पौरुषेयनिर्णयशास्त्रेषु यदा महाभारतग्रन्थः श्रेष्ठः तदा भगवद्गीता विष्णुसहस्रनामस्तोत्रं च । अन्यत्र एवं वर्णितम्—

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥

सर्वा उपनिषदः गोस्थानीयाः । श्रीकृष्णपरमात्मा दोग्धृस्थानीयः । अर्जुनश्च वत्सस्थानीयः । क्षीरस्थानीयं च गीतामृतम् । इदं अमृतं सर्वे सज्जनाः पिबन्तु ।

श्रीमद्भगवद्गीता सर्वेषामपि जनानां उत्तमजीवनाय मार्गदर्शिका । एतस्याः अर्थविवरणाय न केवलं अस्मद्देशीयव्याख्यानानि अपि तु पाश्चात्यदेशीयानि व्याख्यानानि च उपक्रान्तानि ।

पुराणेष्वपि गीतायाः महात्त्वं वर्णितमस्ति—

गीतायाः पुस्तकं यत्र यत्र पाठः प्रवर्तते ।
तत्राहं निश्चितं पृथ्वि निवसामि सदैव हि ॥ इति वराहपुराणे ।

गीतायाः पुस्तकं यत्र विद्यते, यत्र च गीतापाठः प्रवर्तते, तत्र सर्वदा निश्चयेन अहं वसामि इति साक्षात् भगवतः वचनं विश्रुतम् । गीता गङ्गा गायत्री गोविन्दः इति चतुर्भिः गकारैः यः युक्तो भवति सः न पुनर्भवति – संसारात् मुच्यते इति यावत् । गीतायां च अस्याम् अर्जुनविषाद-साङ्ख्य-कर्म-ज्ञान-संन्यास-आत्मसंयमन-ज्ञान-विज्ञान-अक्षरब्रह्म-राजविद्याराजगुह्य-विभूति-भक्ति-क्षेत्रक्षेत्रज्ञ-गुणत्रयविभाग-पुरुषोत्तम-दैवासुरसम्पद्विभाग-श्रद्धात्रयविभाग-मोक्षसंन्यासयोग-नाम्ना अष्टादश अध्यायाः वर्तन्ते ।

कर्तव्यविमुखानां कर्तव्यांशं बोधयति, क्रियमाणमपि कर्म स्वतन्त्रकर्तृत्वभ्रान्तिरहितेन फला-पेक्षारहितेन च कर्तव्यमिति गीता बोधयति ।

**श्रीमन्मध्वाचार्याः – गीताव्याख्यानम्**

भगवतः आज्ञां शिरसि धृत्वा भुवमवतीर्णः मुख्यप्राण एव श्रीमन्मध्वाचार्यः । तत्त्वप्रसाराय 'सप्तत्रिंशदमन्दधीः' इत्युक्तदिशा सप्तत्रिंशत्सङ्ख्याकान् ग्रन्थान् आरचय्य, एकविंशतिकुभाष्यान् अवखण्ड्य, सिद्धान्तं स्थापितवान् । ज्ञानिसिंहोऽयं "गीताभाष्यं चकारोऽसौ प्रथमं तुष्टिदं हरेः" इति व्यासार्यकृत ग्रन्थमालिकास्तोत्रोक्तदिशा भगवतः प्रीत्यै प्रथमं गीताभाष्यं ग्रथयित्वा हरये समार्पयत् ।

गीताभाष्यस्य मङ्गलाचरणम्—

देवं नारायणं नत्वा सर्वदोषविवर्जितम् ।
परिपूर्णं गुरुंश्चान् गीतार्थं वक्ष्यामि शक्तितः ॥

इति 'शक्तितः' इति पदयोजनेनाचार्यैः प्रथमं विहितिम् । अथापि श्रीवेदव्यासः श्रीमदाचार्यं प्रति भवतः अगाधज्ञानसागरे लवमात्रांशोपयोगेन लिखितमेतद्भाष्यमतः 'शक्तितः' इति पदं त्यक्त्वा 'लेशतः' इति पदसंयोजनमुचितमिति आचार्यस्य सर्वज्ञतां संसूचयामास ।

श्रीमदाचार्याः प्रारम्भे गीतायाः महत्वबोधनमपहाय महाभारतस्य तदन्तर्गतायाः सहस्रनाम-स्तोत्रस्य च महत्त्वमुक्त्वा वेदानधिकारिणां कृते विरचितं महाभारतं सर्ववेदसारभूतमिति सूचयन् द्वितीयाध्यायस्य एकादशश्लोकादारभ्य (अशोच्यानन्वशोचस्त्वं) भाष्यं व्यरचयन् । तथा तत्र तत्र इतरमतीयानां व्याख्यानान्यपि निराकृत्य श्रीवेदव्यासानां सम्मतं गीतायाः विवरणमकुर्वन् ।

अत्र भाष्ये 'अकर्म', 'प्रज्ञावादः', 'सर्वधर्मान्', 'विज्ञानम्' इत्यादिशब्दानां विशिष्टां व्याख्यां वयं पश्यामः । एवं जगद्वृक्षः, ज्ञानिनां कर्तव्याचरणं, दानं इत्यादि शब्दानामर्थविषयेऽपि प्रमाणबद्धं विवरणमाचार्या अदुः ।

**गीतातात्पर्यम्**

श्रीमदाचार्याः गीताविषये गीतातात्पर्यमिति व्याख्यानान्तरं व्यलिखन् । गीताभाष्ये अप्रद-र्शितानाम् अनेकविषयाणां विवेचनं गीतातात्पर्ये वयं पश्यामः । एवम् अनेकहेतुभिः गीतातात्पर्ये वैशिष्ट्यं वर्तते इति विदुषां मतम् । अत एव 'एकान्ते' कथयन्नपि व्यासरूपेण तदेव लोके प्रकाश-यिष्यति हि इति वचनं प्रवृत्तमासीत् ।

**गीताभाष्यटीकाः**

अस्य भाष्यस्य पद्मनाभतीर्थैः विरचिता भावदीपिका, नरहरितीर्थानां भावप्रकाशिका तथा श्रीजयतीर्थानां प्रमेयदीपिका इति तिस्रः टीकाः विलसन्ति ।

**श्रीपद्मनाभतीर्थानां गीताभाष्यतात्पर्यटीका**

श्रीमदाचार्याणां प्रथमशिष्याः श्रीपद्मनाभतीर्थाः ज्ञानिश्रेष्ठाः । एते पूर्वम् अद्वैतमतस्थाः । आचार्यैः साकं वादं कृत्वा तेषां युक्तिभिः पराजिताः । द्वैतसिद्धान्ते सञ्जातविश्वासः श्रीमदाचार्याणां शिष्यत्वं स्वीकृत्य जगति मध्वतत्त्वप्रसारे दीक्षिता अभूवन् । द्वादशसङ्ख्याकादधिकग्रन्थनिर्मातारः एते श्रीपद्मनाभतीर्थाः गीताभाष्यस्य गीतातात्पर्यस्य च भावदीपिका, प्रकाशिका इति व्याख्याने कृत्वा आचार्याणां हृदयप्रकाशकाः आसन् । अत्र गीताभाष्यस्य पद्मानाभतीर्थानां टीकाद्वयमपि अस्म-त्पुस्तके संयोजितमस्ति ।

**श्रीनरहरितीर्थाः**

श्रीमदाचार्याणां साक्षाच्छिष्याः एते गजपतिभण्डारात् श्रीमूलरामदेवस्य प्रतिमाम् आनीय विशिष्टसेवां कृत्वा गीताभाष्यभावप्रकाशिका इति व्याख्यानं निर्माय सारस्वतप्रपञ्चस्यापि सेवाम्

अकुर्वन् । श्रीमद्गीताभाष्यस्य अत्युपयुक्तविवरणपूर्वकं गीतायाः अपि केषुचित्स्थलेषु व्याख्यानम् अकुर्वन् । एतत् व्याख्यानमपि अत्र प्रकाश्यमानमस्ति ।

### श्रीजयतीर्थानां टीका

श्रीमट्टीकाकृत्पादाः श्रीमदाचार्याणां पाठप्रवचनसमये वृषभरूपेण पुरत उपविश्य, तैः सर्वमूल-ग्रन्थानाम् आशयं विज्ञाय जन्मान्तरे अक्षोभ्यतीर्थैः तुर्याश्रमं स्वीकृत्य श्रीजयतीर्थ इति नाम्ना प्रख्याताः आसन् । आचार्यविरचितानां बहूनां ग्रन्थानां टीका विलिख्य टीकाचार्याः इत्येव प्रसिद्धिं प्रापुः । एते गीताभाष्यस्य प्रमेयदीपिका इति तथा गीतातात्पर्यस्य न्यायदीपिका इति टीकां व्यलिखन् ।

एतेषां ग्रन्थशैली गभीरा, भाष्यार्थबोधने अत्यन्तोपयुक्ता च वर्तते । एते आचार्याणां वाक्यानां व्याख्यानं कुर्वन्तः तत्र तत्र अन्यमताचार्याणामुक्तीः विमृशन्तः तन्मतं खण्डयन्तः नितरामुपकुर्वन्ति । गीतायाम् अस्पष्टं विचारं श्रीमदाचार्याः स्वभाष्ये सूक्ष्मतया प्रकटयन्ति । तं विचारं श्रीटीकाकृत्पादाः विशेषतः स्पष्टीकृत्य अध्येतृणां महानन्दमुत्पादयन्ति । एतादृशानां टीकाकृत्पादानां गीताभाष्यतात्पर्ययोः वाक्ये अत्र मुद्रापिते ।

### श्रीविद्याधिराजानां गीताव्याख्यानम्

टीकाचार्याणां अनन्तरं गीतायाः साक्षाद्व्याख्यातारः यतिश्रेष्ठाः श्रीजयतीर्थानां शिष्याः श्रीविद्याधिराजतीर्थाः एव । एते श्रीजयतीर्थेभ्यः तुर्याश्रमं आप्त्वा महासंस्थानस्य आधिपत्यञ्च स्वीकृत्य आचार्याणां मतप्रसारे बद्धकङ्कणास्सन्तः सर्वत्र सञ्चरितवन्तः आसन् । एते विष्णुसहस्र-नामस्तोत्रस्य विष्णुसहस्रनामविवृतिः इति व्याख्यानम् अकुर्वन् । गीतायाः एतेषां व्याख्याने भाष्य-तात्पर्यटीकासूक्तविषयाः सङ्गृहीताः । अतिगाम्भीर्येण तत्र तत्र प्रमाणानि उदाहरन्ती तेषां शैली सर्वैः मानिता । एतादृशी तेषां कृतिरपि अस्माभिः मुद्रितपुस्तकेऽस्मिन् संयोजिता वर्तते ।

### श्रीवादिराजतीर्थानां महाभारतलक्षालङ्कारान्तर्गतं गीताव्याख्यानम्

श्रीभाविसमीराः श्रीवादिराजगुरुसार्वभौमाः श्रीमदानन्दतीर्थानां अनुजैः श्रीविष्णुतीर्थैः प्रवर्तिते भव्यपीठे मण्डितानां श्रीवागीशतीर्थानां शिष्याः । श्रीव्यासराजानां शास्त्रपरम्परायां समागताः एते तत्त्वशास्त्रप्रचारस्य भारमूढ्वा ग्रन्थरचन-वादिनिग्रहादिभिः स्वीयैरसाधारणैः कार्यैः, द्वैतसिद्धान्तप्रपञ्चं श्रीमन्तमकुर्वन् । शताधिकग्रन्थप्रणेतारः एते माध्वानां काव्यरसाभिज्ञता नास्तीति अपवादं तिर-स्कुर्वन्तः श्रेष्ठानि रसमयकाव्यानि विरचय्य, सुजनानन्वगृह्णन् ।

एते भगवद्गीतायाः व्याख्यानं चिकीर्षवः महाभारतलक्षालङ्कारावयवत्वेन गीताव्याख्यानं व्यरचयन् । साक्षात् गीतायाः व्याख्यानं कृत्वा, गीतार्थस्य अनायासेन बोधनं एषां वैशिष्ट्यम् । अनेकेषु स्थलेषु केषाञ्चित् पदानां विशिष्टार्थलेखनं एतद्व्याख्याने दृश्यते । तत्र तत्र परमत-व्याख्यानक्रमं निराकृत्य श्रीमदाचार्याणां व्याख्यानपद्धतिसमर्थनम् एतेषां अपरं वैशिष्ट्यम् ।

प्रकृते, एतद्ग्रन्थोऽपि अस्माकं एतत्प्रकटने संयोजितः ।

**श्रीगुरुसार्वभौमानां गीताव्याख्यानानि**

वाय्वावेशसम्भूताः श्रीप्रह्लादा एव बाह्लीकरूपेण, व्यासराजरूपेण, श्रीराघवेन्द्रतीर्थरूपेण अवतारं कृतवन्तः । श्रीसुधीन्द्रतीर्थश्रीमच्चरणैः चतुर्थाश्रमं स्वीकृतवन्तः श्रीराघवेन्द्रतीर्थाः जातिमत-मविगणय्य सर्वान् उद्धृत्य सर्वेष्वपि धर्मजागृतिमुत्पाद्य, अनेकमहिम्नः प्रदर्श्य, अष्टचत्वारिंश-दधिकग्रन्थान् विरचय्य, आबालगोपालं सर्वेभ्यः प्रियगुरवः भूत्वा, समस्तभारते सञ्चार्य, अवसाने सशरीरमेव मन्त्रालये वृन्दावनप्रवेशं कृतवन्तः । एषां सान्निध्येन अल्पग्रामतयी स्थिता 'मञ्चाला' मन्त्रालयक्षेत्रमिति नाम्ना प्रथिता सती सर्वसज्जनान् आकर्षति । श्रीराघवेन्द्रतीर्थाः स्ववाङ्मयद्वारा समस्तविद्वद्भ्यः अनुग्राहका अभूवन् । एते गीतायाः आहत्य त्रीणि व्याख्यानानि रचितवन्तः ।

**गीताविवृतिः अथवा गीतार्थसङ्ग्रहः**

एतत् गुरुराजैः कृतं साक्षात् गीताव्याख्यानम् । एते भाष्यटीकादिग्रन्थेषु अभिहितविचारान् सङ्गृह्य, विशिष्टशैल्या ग्रन्थमिमं लिखितवन्तः । प्रतिश्लोकं अर्थं वदन्तः तत्र तत्र आचार्याणां सिद्धान्तस्य वैशिष्ट्यं बोधितवन्तः । मध्ये क्वचिच्छ्लोकेषु पदानां शास्त्रोक्तं निर्वचनं दत्त्वा, व्याक-रणविचारान् बोधयित्वा अध्येतॄणां उत्तममार्गदर्शनं कृतवन्तः । श्रीजयतीर्थाणां गीताभाष्यतात्पर्य-टीकयोरपि टिप्पण्यौ कृतवन्तः । अन्वपि साक्षात् गीतायाः व्याख्यानावश्यकतां वर्णयन्तः 'गुरुगुणस्तवन'काराः श्रीवादीन्द्रतीर्थाः

गीतामत्यर्थधूतश्रितजनदुरितामिन्दुवंशप्रसूतौ
व्याचक्षाणे मुरद्विष्यभिजनमभजद्भद्रमिन्दोरनिद्रम् ।
धीर श्रीराघवेन्द्र त्वयि पुनरनघे हंसवंशोदिते तां
व्याकुर्वत्यद्य भव्यं कथमिव न भजेदाशु मित्रान्ववायः ॥

इति श्लोके अतिसुन्दरतया वर्णितवन्तः ।

अकुर्वन् । श्रीमद्गीताभाष्यस्य अत्युपयुक्तविवरणपूर्वकं गीतायाः अपि केषुचित्स्थलेषु व्याख्यानम् अकुर्वन् । एतत् व्याख्यानमपि अत्र प्रकाश्यमानमस्ति ।

**श्रीजयतीर्थानां टीका**

श्रीमट्टीकाकृत्पादाः श्रीमदाचार्याणां पाठप्रवचनसमये वृषभरूपेण पुरत उपविश्य, तैः सर्वमूल-ग्रन्थानाम् आशयं विज्ञाय जन्मान्तरे अक्षोभ्यतीर्थैः तुर्याश्रमं स्वीकृत्य श्रीजयतीर्थ इति नाम्ना प्रख्याताः आसन् । आचार्यविरचितानां बहूनां ग्रन्थानां टीका विलिख्य टीकाचार्याः इत्येव प्रसिद्धिं प्रापुः । एते गीताभाष्यस्य प्रमेयदीपिका इति तथा गीतातात्पर्यस्य न्यायदीपिका इति टीकां व्यलिखन् ।

एतेषां ग्रन्थशैली गभीरा, भाष्यार्थबोधने अत्यन्तोपयुक्ता च वर्तते । एते आचार्याणां वाक्यानां व्याख्यानं कुर्वन्तः तत्र तत्र अन्यमताचार्याणामुक्तीः विमृशन्तः तन्मतं खण्डयन्तः नितरामुपकुर्वन्ति । गीतायाम् अस्पष्टं विचारं श्रीमदाचार्याः स्वभाष्ये सूक्ष्मतया प्रकटयन्ति । तं विचारं श्रीटीकाकृत्पादाः विशेषतः स्पष्टीकृत्य अध्येतॄणां महानन्दमुत्पादयन्ति । एतादृशानां टीकाकृत्पादानां गीताभाष्यतात्पर्ययोः वाक्ये अत्र मुद्रापिते ।

**श्रीविद्याधिराजानां गीताव्याख्यानम्**

टीकाचार्याणां अनन्तरं गीतायाः साक्षाद्व्याख्यातारः यतिश्रेष्ठाः श्रीजयतीर्थानां शिष्याः श्रीविद्याधिराजतीर्थाः एव । एते श्रीजयतीर्थेभ्यः तुर्याश्रमं आप्त्वा महासंस्थानस्य आधिपत्यञ्च स्वीकृत्य आचार्याणां मतप्रसारे बद्धकङ्कणास्सन्तः सर्वत्र सञ्चरितवन्तः आसन् । एते विष्णुसहस्र-नामस्तोत्रस्य विष्णुसहस्रनामविवृतिः इति व्याख्यानम् अकुर्वन् । गीतायाः एतेषां व्याख्याने भाष्य-तात्पर्यटीकासूक्तविषयाः सङ्गृहीताः । अतिगाम्भीर्येण तत्र तत्र प्रमाणानि उदाहरन्ती तेषां शैली सर्वैः मानिता । एतादृशी तेषां कृतिरपि अस्माभिः मुद्रितपुस्तकेऽस्मिन् संयोजिता वर्तते ।

**श्रीवादिराजतीर्थानां महाभारतलक्षालङ्कारान्तर्गतं गीताव्याख्यानम्**

श्रीभाविसमीराः श्रीवादिराजगुरुसार्वभौमाः श्रीमदानन्दतीर्थानां अनुजैः श्रीविष्णुतीर्थैः प्रवर्तिते भव्यपीठे मण्डितानां श्रीवागीशतीर्थानां शिष्याः । श्रीव्यासराजानां शास्त्रपरम्परायां समागताः एते तत्त्वशास्त्रप्रचारस्य भारमूढ्वा ग्रन्थरचन-वादिनिग्रहादिभिः स्वीयैरसाधारणैः कार्यैः, द्वैतसिद्धान्तप्रपञ्चं श्रीमन्तमकुर्वन् । शताधिकग्रन्थप्रणेतारः एते माध्वानां काव्यरसाभिज्ञता नास्तीति अपवादं तिर-स्कुर्वन्तः श्रेष्ठानि रसमयकाव्यानि विरचय्य, सुजनानन्वगृह्णन् ।

एते भगवद्गीतायाः व्याख्यानं चिकीर्षवः महाभारतलक्षालङ्कारावयवत्वेन गीताव्याख्यानं व्यरचयन् । साक्षात् गीतायाः व्याख्यानं कृत्वा, गीतार्थस्य अनायासेन बोधनं एषां वैशिष्ट्यम् । अनेकेषु स्थलेषु केषाञ्चित् पदानां विशिष्टार्थलेखनं एतद्व्याख्याने दृश्यते । तत्र तत्र परमत-व्याख्यानक्रमं निराकृत्य श्रीमदाचार्याणां व्याख्यानपद्धतिसमर्थनम् एतेषां अपरं वैशिष्ट्यम् ।

प्रकृते, एतद्ग्रन्थोऽपि अस्माकं एतत्प्रकटने संयोजितः ।

**श्रीगुरुसार्वभौमानां गीताव्याख्यानानि**

वाय्वावेशसम्भूताः श्रीप्रह्लादा एव बाह्लीकरूपेण, व्यासराजरूपेण, श्रीराघवेन्द्रतीर्थरूपेण अवतारं कृतवन्तः । श्रीसुधीन्द्रतीर्थश्रीमच्चरणैः चतुर्थाश्रमं स्वीकृतवन्तः श्रीराघवेन्द्रतीर्थाः जातिमत-मविगणय्य सर्वान् उद्धृत्य सर्वेष्वपि धर्मजागृतिमुत्पाद्य, अनेकमहिम्नः प्रदर्श्य, अष्टचत्वारिंश-दधिकग्रन्थान् विरचय्य, आबालगोपालं सर्वेभ्यः प्रियगुरवः भूत्वा, समस्तभारते सञ्चार्य, अवसाने सशरीरमेव मन्त्रालये वृन्दावनप्रवेशं कृतवन्तः । एषां सान्निध्येन अल्पग्रामतयी स्थिता 'मञ्चाला' मन्त्रालयक्षेत्रमिति नाम्ना प्रथिता सती सर्वसज्जनान् आकर्षति । श्रीराघवेन्द्रतीर्थाः स्ववाङ्मयद्वारा समस्तविद्वद्भ्यः अनुग्राहका अभूवन् । एते गीतायाः आहत्य त्रीणि व्याख्यानानि रचितवन्तः ।

**गीताविवृतिः अथवा गीतार्थसङ्ग्रहः**

एतत् गुरुराजैः कृतं साक्षात् गीताव्याख्यानम् । एते भाष्यटीकादिग्रन्थेषु अभिहितविचारान् सङ्गृह्य, विशिष्टशैल्या ग्रन्थमिमं लिखितवन्तः । प्रतिश्लोकं अर्थं वदन्तः तत्र तत्र आचार्याणां सिद्धान्तस्य वैशिष्ट्यं बोधितवन्तः । मध्ये क्वचिच्छ्लोकेषु पदानां शास्त्रोक्तं निर्वचनं दत्त्वा, व्याक-रणविचारान् बोधयित्वा अध्येतृणां उत्तममार्गदर्शनं कृतवन्तः । श्रीजयतीर्थाणां गीताभाष्यतात्पर्य-टीकयोरपि टिप्पण्यौ कृतवन्तः । अन्वपि साक्षात् गीतायाः व्याख्यानावश्यकतां वर्णयन्तः 'गुरुगुणस्तवन'काराः श्रीवादीन्द्रतीर्थाः

गीतामत्यर्थधूतश्रितजनदुरितामिन्दुवंशप्रसूतौ
व्याचक्षाणे मुरद्विष्यभिजनमभजद्भद्रमिन्दोरनिद्रम् ।
धीर श्रीराघवेन्द्र त्वयि पुनरनघे हंसवंशोदिते तां
व्याकुर्वत्यद्य भव्यं कथमिव न भजेदाशु मित्रान्ववायः ॥

इति श्लोके अतिसुन्दरतया वर्णितवन्तः ।

टीकायाः व्याख्यानसमये श्रीगुरुसार्वभौमाः श्रीजयतीर्थकृतटीकास्थपदानां उत्तमव्याख्यानं कृत्वा टीकाया अभिप्रायं सहृदयहृदयाह्लादकत्वेन अभिव्यक्तीकृतवन्तः । एतद्ग्रन्थद्वयं अस्मत्प्रकाशने संयोजितम् । तयोरपि टिप्पण्योः ''गीताभाष्यप्रमेयदीपिकाटिप्पणीभावदीपं'' इदंप्रथमतया मुद्राप्य अध्येतृभ्यः उपायनीकुर्मः इत्यमुं विषयं ससन्तोषं उद्घोषयामः ।

**श्रीसुमतीन्द्रतीर्थानां गीताभावरत्नकोशः**

श्रीमन्मध्वाचार्याणां मूलमहासंस्थाने श्रीगुरुराजानन्तरं प्रसिद्धाः यतिश्रेष्ठाः श्रीसुमतीन्द्रतीर्थाः । श्रीसूरीन्द्रतीर्थैः एतत्पीठं लब्ध्वा श्रीमदाचार्यसिद्धान्तप्रकाशने दक्षाः आसन् । एते श्रीगुरुसार्वभौमानां अत्यन्तं प्रीत्यास्पदाः आसन् । श्रीराघवेन्द्रतीर्थविरचितग्रन्थाः श्रीसुमतीन्द्रतीर्थानां कृते इत्येव इति उक्तवन्तः । श्रीसुमतीन्द्रतीर्थाः स्वलिखितानामनेकग्रन्थानां 'भावरत्नकोश' इति नामकरणं अकुर्वन् इत्ययं विषयः प्रथितः । गीतायाः अतिविस्तरं व्याख्यानमेतद्, स्वतः तैरेव उक्तरीत्या श्रीराघवेन्द्र-तीर्थटिप्पण्याः अनुरूपम् अस्तीत्यवगम्यते ।

एतादृशभावरत्नकोशाख्यग्रन्थोऽपि अस्माकं प्रकाशने अन्तर्गतो भवति ।

**पांगरी श्रीनिवासाचार्यविरचिता त्रिविधार्थविवृतिः**

''पांगरी श्रीनिवासाचार्य'' इति एते उत्तमतत्त्वज्ञानिनः । अनेकग्रन्थान् अरचयन् इति प्रसिद्धिरस्ति । एते गीतायाः 'त्रिविधार्थविवृति'नाम्ना आध्यात्मिक-आधिभौतिक-आधिदैविक इति क्रमे त्रिविधमर्थं वर्णितम् । एषां व्याख्यानमपि अत्र मुद्रणं क्रियते ।

**श्रीमद्भगवद्गीतायाः सम्बन्धिनः माध्ववाङ्मयग्रन्थाः**

(१) श्रीमन्मध्वाचार्यकृतं – गीताभाष्यम् ।

(२) श्रीमन्मध्वाचार्यकृतं – गीतातात्पर्यम् ।

(३) श्रीपद्मनाभतीर्थकृता – गीताभाष्यप्रकाशिका ।

(४) श्रीपद्मनाभतीर्थकृता – गीतातात्पर्यप्रकाशिका ।

(५) श्रीनरहरितीर्थकृता – गीताभाष्यभावदीपिका ।

(६) श्रीजयतीर्थकृता – गीताभाष्यप्रमेयदीपिका ।

(७) श्रीजयतीर्थकृता – गीतातात्पर्यन्यायदीपिका ।

(८) श्रीविद्याधिराजतीर्थकृता – गीताविवृतिः ।

(९) श्रीविजयीन्द्रतीर्थकृता – गीताविवृतिः ।

(१०) श्रीविजयीन्द्रतीर्थकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(११) श्रीविजयीन्द्रतीर्थकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(१२) श्रीराघवेन्द्रतीर्थकृता – गीताभाष्यप्रमेयदीपिकाव्याख्याभावदीपः ।

(१३) श्रीराघवेन्द्रतीर्थकृता – गीताविवृतिः ।

(१४) श्रीराघवेन्द्रतीर्थकृता – गीतातात्पर्यन्यायदीपिकाभावदीपः ।

(१५) श्रीसमुतीन्द्रतीर्थकृत – गीताक्षरार्थः

(१६) श्रीसुमतीन्द्रतीर्थकृत – गीताभाष्यप्रमेयदीपिकाभावरत्नकोशः ।

(१७) सातारीराघवेन्द्राचार्यकृता – गीताभाष्यविवृतिः ।

(१८) श्रीसत्यसन्धतीर्थकृतं – गीताव्याख्यानम् ।

(१९) श्रीरघोत्तमतीर्थकृतः – गीताभाष्यप्रमेयदीपिकाव्याख्या भावबोधः ।

(२०) श्रीसत्याभिनवतीर्थकृता – गीताभाष्यप्रमेयदीपिका टिप्पणी ।

(२१) वंशषल्लिआचार्यकृता – गीताभाष्यभावप्रदीपिका ।

(२२) केशवाचार्यपाण्डुरङ्गिकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२३) उमर्जीप्रह्लादकृष्णाचार्यकृतटिप्पणी – प्रमेयदीपिकाभावप्रकाशः ।

(२४) श्रीताम्रपर्णी श्रीनिवासाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी किरणावली ।

(२५) कट्टे तिम्मण्णाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२६) वरदाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२७) वासुदेवाचार्यकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२८) नृसिंहमूर्तिकृता – गीताभाष्यप्रमेयदीपिकाटिप्पणी ।

(२९) गूढकर्तृक – गीताभाष्यबृहद्भावबोधि ।

(३०) श्रीसत्यनाथतीर्थकृतः – गीतातात्पर्यन्यायदीपिकावाक्यविवेकः ।

(३१) श्रीसत्यप्रज्ञतीर्थकृतः – गीतातात्पर्यन्यायदीपिकाटिप्पणी भावप्रकाशः ।

(३२) यदुपत्याचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३३) ताम्रपर्णीविठलाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी ।

(३४) ताम्रपर्णीश्रीनिवासाचार्यकृता – गीतातात्पर्यन्यायदीपिकाटिप्पणी किरणावलिः ।

(३५) वंशपल्लि आचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३६) वेदगर्भपुट्टाचार्यकृता – गीतातात्पर्यन्यायदीपिका टिप्पणी ।

(३७) हुलिगि नरसप्पाचार्यकृतः – गीताभाष्यार्थानुवादः ।

(३८) वरखेडि तिम्मण्णाचार्यकृतः – गीतापञ्चानन ।

(३९) पांगरी आचार्यकृतम् – त्रिविधार्थविवृतिः ।

(४०) आयी नरहरि आचार्यकृतम् – गीताविवृतिव्याख्यानम् ।

(४१) करवीर अनन्ताचार्यकृतम् – गीताव्याख्यानम् ।

(४२) वनमालिमिश्रकृतम् – गीताव्याख्यानम् ।

(४३) गूढकर्तृक – गीताविवृतिः

(४४) शतावधानि लक्ष्मणाचार्यकृतं – भगवद्गीतोपन्यासदर्पणम् ।

(४५) सि. एम्. पद्मनाभाचार्यकृता – गीताभावचन्द्रिका ।

(४६) गूढकर्तृक – मध्वमतानुसारि गीताविवरणम् ।

(४७) गूढकर्तृकः – गीताभाष्य-गीतातात्पर्य-विरोधोद्धारः ।

(४८) गूढकर्तृका – गीताभाष्यविरोधोद्धारः ।

(४९) रत्नगर्भवडेय – गीताव्याख्यानम् ।

इत्याद्यनेकमुद्रितव्याख्यानानि अमुद्रितानि च उपलब्धानि सन्ति ॥

# कृतज्ञताऽऽविष्कारः

एतादृशमहत्तरग्रन्थं सम्यक् शोधयित्वा प्रकाशनार्थं गुरुतरभारं अस्माकमुपरि स्थापयित्वा परमानुग्रहं कृतवतां परमपूज्य श्री श्री सुबुधेन्द्रतीर्थश्रीपादानां चरणपङ्कजयोः साष्टाङ्गपूर्वकान् अनेकानेकान् नमस्सुमाञ्जलीन् समर्पयामः ।

अस्मदीय एतत्संशोधनकार्ये उत्तममार्गदर्शनं आचरितवतां अस्मद् विद्यागुरूणां श्री विद्वान् राजा. एस्. गिरियाचार्याणां कृते अनेकप्रणामान् कार्तज्ञ्यं अर्पयामः ।

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीयकुलपतिस्थानं अलङ्कृताः डॉ. वा. रा. पञ्चमुखि आचार्याः अस्मिन् संशोधनकार्ये प्रोत्साहितवन्तः । तेषां कृतेऽपि अस्माकं कृतज्ञतां आविष्कुर्मः ।

एतादृशमहत्तरसम्पुटस्य संशोधनाकार्ये विशेषतया सहकृतवतां (श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयाध्यापकानां) तत्रापि सर्वश्री एन्. राघवेन्द्राचार्याणां, तथा डॉ. डि. आर्. माधवाचार्याणां विशिष्टसेवां स्मृत्वा अभिनन्दयामः ।

एतत्संशोधनकार्ये अस्माभिः अनेकहस्तप्रतीन् तथा अनेकमुद्रितपुस्तकानि च सहायत्वेन स्वीकृतानि ।

श्रीमठीय श्रीगुरुसार्वभौमसंस्कृतविद्यापीठीय समग्रहस्तप्रतयः तथा श्रीगुरुसार्वभौमानां पूर्वाश्रमवंशस्थानां विद्वत्तल्लजानां श्रीराजा. एस्. गिरियाचार्याणां आध्यात्मिककेन्द्रीयसमग्रहस्तप्रतयः एवं डॉ. वा. रा. पञ्चमुखीमहोदयानां श्रीसुमतीन्द्रतीर्थीय भावरत्नकोशहस्तप्रतिः । पांगरीव्याख्यानं मुद्रितपुस्तकं, अखिलभारतमाध्वमहामण्डलतः प्रकाशितं डि. प्रह्लादाचार्यैः सम्पादितं मुद्रितगीता-भाष्यतात्पर्यपुस्तकं तथा विद्वान् व्यासनकेरि प्रभञ्जनाचार्यैः दत्ता श्रीसुमतीन्द्रतीर्थीय भावरत्नकोश-हस्तप्रतिः तथा तैः प्रकाशिताः पुस्तकाश्च, पण्ढरपुरस्थ वरखेडी भीमसेनाचार्यैः दत्ता गीताअन्वय-प्रकाशिकायाः हस्तप्रतिश्च ।

उपरिनिर्दिष्टसमग्रग्रन्थान् प्रदत्तवतः महात्मानः स्मारं स्मारं स्मरणपूर्वकं तेषां धन्यवादान् समर्पयामः ॥

एतद्ग्रन्थमुद्रणकाले त्वरितगत्या मुद्रायितानां 'सुधामुद्रण' अधिकारिणां श्री धनंजय वरखेडकर महोदयानां कार्यम् अभिनन्द्य ग्रन्थमिमं लोकार्पणं कुर्मः ।

इति शम् ।

*प्रधानसम्पादकाः*

*विद्वान् राजा. एस्. गिरि आचार्याः*

*राष्ट्रपतिप्रशस्तिभाजः*

*विद्वान् कडप राघवेन्द्राचार्यः*

*विद्वान् डॉ. एन्. वादिराजाचार्यः*

*विद्वान् पुराणिक सुब्रह्मण्याचार्यः*

*22.11.2016*

***श्रीरघुनन्दनतीर्थानामाराधना***

*मन्त्रालयः*





श्रीमन्मध्वकरार्चित-श्रीदिग्विजयरामदेवः　　चतुर्युगमूर्तिब्रह्मकरार्चित-श्रीमन्मूलरामदेवः　　श्रीजयतीर्थकरार्चित-श्रीजयरामदेवः

# ॥ श्रीमदानन्दतीर्थभगवत्पादाचार्याः ॥



व्याप्तिर्यस्य निजे निजेन महसा पक्षे सपक्षे स्थिति-
व्यावृत्तिश्च विपक्षतोऽथ विषये सक्तिर्न वै बाधिते ।
नैवास्ति प्रतिपक्षयुक्तिरतुलं शुद्धं प्रमाणं स मे
भूयात्तत्त्वविनिर्णयाय भगवानानन्दतीर्थो मुनिः ॥

# ॥ श्रीमज्जयतीर्थाः ॥



सत्पद्मबन्धवो यस्य गावो विश्वतमोनुदः ।
स स्यात् तत्त्वप्रकाशाय जयतीर्थरविर्मम ॥



# ॥ श्रीविजयीन्द्रतीर्थाः ॥

धर्मः सत्ये च धीमानहिरिव वचसा भूसुराणां सभायां
जेता भीमैव वादे पवन इव गतौ सम्पदि श्रीरिवाढ्यः ।
धाता ज्ञाता च सर्वानहिपतिशयनं पूजयंस्तोषयंश्च
लोकैः सर्वैश्च पूज्यो भुवि मनुजवरैर्मानितोऽभून्मुनीन्द्रः ॥

## ॥ श्रीराघवेन्द्रतीर्थाः ॥



चित्ते चेन्मृदुता शिरीषसदृशो हय्यङ्गवीनं शिला
गाम्भीर्यं यदि यस्य सोऽन्धुरुदधिः शास्त्रेषु चेत्पाण्डिती ।
आचार्यो विबुधेशितुः कलयते विद्यार्थितामादरात्
औदार्यं यदि कल्पपादपमुखाः सम्भावयन्तेऽर्थिताम् ॥



प्राक्तनपीठाधिपतयः

**परमपूज्याः श्री श्री १००८ श्रीसुजयीन्द्रतीर्थश्रीपादाः**



प्राक्तनपीठाधिपतयः

**परमपूज्याः श्री श्री १००८ सुयतीन्द्रतीर्थाः**

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ नवमोऽध्यायः

**गीता**

**श्रीभगवानुवाच—**

**इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥**

*वि०वि०*— सप्तमाध्यायोक्तमेव भगवन्महिमानम् अष्टमे प्रसङ्गादागतं प्रश्नपरिहारं समाप्य नवमे प्रपञ्चयति । अतिविचित्रं भगवन्महिमानं वक्तुं प्रतिज्ञाय प्रशंसति **इदं त्वित्यादिना** । अतिशयेन गोप्यम् । अनसूयवे दोषदृष्टिरहिताय । अशुभात् संसारात् ॥ १ ॥

*सा०सं०*— सप्तमेऽध्याये 'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः' (७-३०) इत्यादिनोक्तं भगवन्माहात्म्यमत्राध्याये प्रपञ्च्यते । न चैवं तदानन्तर्यमेवास्य शङ्क्यम् । अध्यात्मादिपदानां निरूपणेन परिहारोक्त्यनन्तरमेवात्र साधिभूतादिवाक्यार्थभूतभगवन्माहात्म्यवर्णनस्यावसरादिति ध्येयम् । अतिचित्रमहिमानं वक्तुं तत्रादरजननाय प्रतिज्ञापूर्वं वक्ष्यमाणं प्रशंसति **इदं त्विति** । **गुह्यतमम्** अतिगोप्यम् । **इदं** वक्ष्यमाणं ज्ञानम् । कर्मणि ल्युट् । ज्ञातव्यं विशेषेण ज्ञातव्यसहितम् । **अनसूयवे** असूयादिदोषहीनाय । एवंरूप एवाधिकारीति ज्ञापनाय एतद्विशेषणोक्तिः । **ते** तुभ्यं **प्रवक्ष्यामि** । **यज्ज्ञात्वा अशुभान्मोक्ष्यसे** । यच्छब्दस्येदं त्वित्यनेनान्वयः ॥ १ ॥

*अ०प्र०*— *अ०प्र०*— सप्तमे 'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः' इत्यादिनोक्तभगवन्माहात्म्यं अत्राध्याये प्रपञ्चयति । न चैवं तदानन्तर्यमेवास्य शङ्क्यम् । आध्यात्मादिपदार्थानां

किमध्यात्ममित्यादिना पार्थेन कृतप्रश्नस्य अष्टमे स्वभावोऽध्यात्म उच्यते इत्यादिना अध्यात्मादि-पदार्थानां निरूपणेन परिहारोत्तयनन्तरमेव अत्र साधिभूतार्थभूतभगवन्माहात्म्यवर्णनस्यावसरादिति ध्येयम् । अतिचित्रमहिमानं वक्तुं तत्रादरजननाय प्रतिज्ञापूर्वं वक्ष्यमाणं प्रशंसति । एवं तावत्सप्त-माष्टमयोः स्वीयं पारमेश्वरं तत्त्वं भक्त्यैव सुलभं नान्यथेत्युक्त्वा इदानीं अचिन्त्यस्वकीयमैश्वर्यं भक्तेश्च साधारणप्रभावं प्रपञ्चयिष्यन् **श्रीभगवानुवाच – इदं त्विति** ।

हे पार्थ ![१], अहं अनसूयवे[२], ते[२], तु, पुनश्च[३], विज्ञानसहितं[४], गुह्यतमं[५], इदं[६], ज्ञानं[७], प्रवक्ष्यामि[८], यत् ज्ञात्वा[९], अशुभात्[१०] मोक्षसे इत्यन्वयः ।

हे पार्थ ! = अहं अनसूयवे श्रद्धायुक्ताय सुमनत्व-शुद्धमतित्व- अनिन्दकत्व-अनन्यगतित्व–एतच्चतुर्गुणा श्रद्धा । यद्वा, पुनः पुनः स्वमाहात्म्यमेवोपदिशति इत्येवं परमकारुणिके मयि दोषदृष्टिरहिताय[१], ते = तुभ्यं[२], तु = पुनश्च[३], विज्ञानसहितं = विशेषेण ज्ञायतेऽनेनेति विज्ञानं उपासनं तत्सहितं यद्वा, विज्ञानं मायाकार्यं प्रपञ्चस्तेन सहितं[४], गुह्यतमं = अतिगोप्यं सकलगोप्यानां वरिष्ठं यद्वा, गुह्यं = धर्मज्ञानं ततो देहादिव्यतिरिक्तमात्मज्ञानं गुह्यतरं ततोऽपि परमात्मज्ञानमतिरहस्यत्वात् गुह्यतमं[५], इदं यत् वक्ष्यमाणं तु यच्छब्दस्य इदं तु इत्यनेनान्वयः । इत्यनेन इदं तु वक्ष्यमाणं तु[६], ज्ञानं = ईश्वरविषयं[७], प्रवक्ष्यामि = प्रकर्षेण उपदिशामि[८], तदेवाऽऽहं यज्ज्ञानं ज्ञात्वा सर्वसृष्ट्यादिकर्ता सर्वतन्त्रस्वतन्त्रः परमात्मा अहं जीवस्तदधीन इति ज्ञात्वा[९], अभ्युपगमात् मायारूपसंसारबन्धनात्[१०] मोक्षसे सद्य एव मुक्तो भविष्यसि ॥ १ ॥

भाष्यम्

**सप्तमाध्यायोक्तं स्पष्टयत्यस्मिन्नध्याये ॥ १ ॥**

***प०टी०***— एतदध्यायार्थं दर्शयति **सप्तमेति** । यद्यप्यस्य सप्तमानन्तर्यं युक्तम्, तथाप्यर्जु-नेनास्याष्टमे पृष्टत्वान्नवमत्वम् ॥ १ ॥

***प्र०दी०***— पूर्वसङ्गतत्वेन अध्यायार्थमाह **सप्तमेति** । 'भगवन्माहात्म्यम्' इति शेषः । पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमिति सप्तमोक्तपदार्थान् अष्टमे व्याख्याय नवमे तद्वाक्यार्थं स्पष्टीकरोतीत्यर्थः ॥ १ ॥

***भा०दी०***— **पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमिति** । इतिशब्दो हेत्वर्थः । **सप्तमोक्त-पदार्थानिति** । अध्यात्मादिपदार्थानित्यर्थः । **तद्वाक्यार्थमिति** । 'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः' इत्यादिवाक्यार्थमित्यर्थः । तेन सप्तमानन्तर्यशङ्का परास्ता ॥ १ ॥

*भा०र०*— 'पूर्वसङ्गतत्वेन' इत्यनन्तरं 'एतद्' इत्युपस्कर्तव्यम् । नन्वस्याध्यायस्य सप्तमोक्तार्थस्य स्पष्टनार्थत्वेन तदानन्तर्यं स्यादित्यत आह **पदार्थेति** । **पदार्थान्** ब्रह्म-अध्यात्म-कर्मादि-पदार्थान्, **व्याख्याय** 'अक्षरं ब्रह्म परमं' इत्यादिना । **तद्वाक्यार्थं** 'ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् । साधिभूताधिदैवं मां साधियज्ञं च ये विदुः' इत्यादिवाक्यार्थम् । **स्पष्टीकरोतीति** । यद्यपि 'स्पष्टयति' इति भाष्यं 'स्पष्टं करोति' इत्येव व्याख्यातव्यम् । स्पष्टशब्दात् 'तत्करोति' इति णिचि 'स्पष्टयति' इति निष्पत्तेः । तथा च द्वितीयाध्यायटीकायां 'स्पष्टयति' इत्येतत् 'स्पष्टं करोति' इति व्याख्यातम् । तथापि पूर्वमेव स्पष्टस्य पुनः स्पष्टनं व्यर्थमिति शङ्कां परिहर्तुं अभूततद्भावार्थकच्विप्रत्ययप्रयोगो भाष्यभावस्फोरणार्थः ॥ १ ॥

**गीता**

## राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
## प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

*वि०वि०*— राजविद्या प्रधानविद्या, राजगुह्यं प्रधानगोप्यम् । 'अक्षेष्विन्द्रियेषु प्रति प्रति स्थित इति प्रत्यक्षो भगवान् । स प्रत्यक्षः प्रति हि सोऽक्षेषु' इति श्रुतेः । सोऽवगम्यते येन तत् प्रत्यक्षावगमम् । अनेन अपरोक्षज्ञानसाधनत्वमुक्तम् । सर्वजगतो धारक इति धर्मो भगवान् । 'पृथिवी धर्ममूर्धनी' इति प्रयोगात् । तद्विषयं धर्म्यम् । परोक्षज्ञानसाधनम् । सुसुखं सुखेन कर्तुं शक्यम् ॥ २ ॥

*वा०ल०*— 'राजविद्या राजगुह्यम्' इत्यत्र विद्यासु राजा राजविद्या गुह्येषु राजा राजगुह्यम्, विद्याश्रेष्ठं गुह्यश्रेष्ठञ्चेत्यर्थः। प्रत्यक्षावगमं योगिनां प्रत्यक्षेणावगमो यस्य तत् ॥ २ ॥

*सा०सं०*— पुनः प्रशंसति **राजेति** । **इदं** वक्ष्यमाणं **राजविद्या** । राज्ञी चासौ विद्या च राजविद्या । विद्यानां प्रधानविद्येत्यर्थः । **राजगुह्यं** गुह्यानां गोप्यानां मध्ये प्रधानगोप्यम् । **पवित्रं** पावित्र्यहेतुम् । अत एव **उत्तमम्** । **प्रत्यक्षावगमम्** अक्षेषु प्रति प्रति स्थितः प्रत्यक्षो भगवान् । 'कुगतिप्रादयः' (२-२-१८) इति प्रादिसमासो नाव्ययीभावः । अवगम्यते साक्षात् क्रियते येन तत् अवगमम् । 'ग्रहवृदृनिश्चिगमश्च' (३-३-५८) इति करणे गमेरप्प्रत्ययः । प्रत्यक्षस्य हरेरवगमं प्रत्यक्षावगमं सर्वेन्द्रियप्रेरकभगवदपरोक्षज्ञानसाधनम् । **धर्म्यं** सर्वधारकत्वाद्धर्मो भगवान् । 'धृञ् धारणे' इत्यतः औणादिको मन् प्रत्ययः । धर्मादनपेतं तद्विषयं धर्म्यम् । सर्वधारकभगवद्विषय-

परोक्षज्ञानं भगवदपरोक्षज्ञप्तिसाधनम् । **अव्ययम्** अक्षयमोक्षफलकम् । **कर्तुं** सम्पादयितुम् । **सुसुखम्** अत्यन्तसुलभमित्यर्थः । 'प्रवक्ष्यामि' इति पूर्वेणान्वयः ॥ २ ॥

***अ०प्र०***— किञ्च, **राजविद्येति** ।

किञ्च, हे पार्थ ! इदं वक्ष्यमाणं ज्ञानं[१], राजविद्या[२], राजगुह्यं[३], पवित्रं[४], उत्तमं[५], प्रत्यक्षावगमं[६], धर्म्यं[७], अव्ययं[८], कर्तुं[९], सुसुखं वक्ष्यामीति पूर्वेण अन्वयः[१०] ।

इदं वक्ष्यमाणं ज्ञानं[१], राजविद्या राज्ञि चासौ विद्या च राजविद्या प्रधानविद्येत्यर्थः । यद्वा, विद्यते ज्ञायते इति विद्यापरमवेद्य इत्यर्थः[२], राजगुह्यं = राजगुह्यानां गोप्यानां मध्ये प्रधानगोप्यम् । यद्वा, राजगुह्यानां राजा तथा[३], यद्वा, राजविद्यानां = गुह्यानां च राजविद्यासु गोप्येषु च अतिश्रेष्ठ-मित्यर्थः । राजदन्तादित्वात् उपसर्जनस्य परत्वं[३], पवित्रं = अत्यन्तं पावनं पवित्राणां राजा परमपवित्रमित्यर्थः[४], अत एव उत्तमं उत्तमानामुत्तममित्यर्थः[५], प्रत्यक्षावगमं दृष्टफलं यद्वा, अक्षेषु प्रतिस्थितः प्रत्यक्षो भगवान् साक्षात् क्रियते येन तत् प्रत्यक्षस्य हरेः अवगमं प्रत्यक्षावगमं यद्वा, प्रत्यक्षेण अवगमः प्रत्ययः यस्य तत्तथा अनेकजन्मान्तरसाधनैः संशुद्धान्तःकरणस्य श्रीहरेः दासो-ऽहमिति प्रत्ययो भवति[६], धर्म्यं = सर्वधारकत्वात् धर्मो भगवान् धर्मार्पितं तद्विषयं धर्म्यं यद्वा, सर्वेन्द्रियप्रेरकभगवदपरोक्षज्ञानसाधनं धर्म्यं सर्वधारकभगवद्विषयं परोक्षज्ञानं[७], अव्ययं कर्तुं = अक्षयफलत्वात् अक्षयमोक्षफलं कर्तुं सम्पादयितुं[९], सुसुखं = अत्यन्तसुलभमित्यर्थः[१०] एतादृशं वक्ष्यामीति पूर्वेणान्वयः ॥ २ ॥

भाष्यम्

## राजविद्या प्रधानविद्या ।

***प०टी०***— 'राजविद्या'पदं राज्ञां विद्येति प्रतीतिनिरासाय व्याचष्टे **राजेति** ।

***प्र०दी०***— 'राज्ञामश्वपतिजनकादीनां विद्या राजविद्या' इति कश्चित् । तदसत् । ब्राह्मणादीनामनधिकारप्रसङ्गादिति भावेनाह **राजेति** । राजेव राजा, राजा चासौ विद्या चेति राजविद्येत्यर्थः ।

***भा०दी०***— **राजा चासाविति** । स्त्रियाः पुंवद्भाषितपुंस्कात् (६-३-३४) इति पुंवद्भाव इति भावः । क्वचिद्राजा चासौ विद्या च इति पाठः । किल तत्र स्त्रीत्वमविवक्षितम् । किं तु प्राधान्यमेव विवक्षितम् । अतो न स्त्रीप्रत्ययः । 'टापं चैव तलन्तानाम्' इत्युक्तेः राजन्शब्दात् शच्प्रत्यये टिलोपे

'राजा' इति रूपम् । 'राजा चासौ विद्या च' इति विग्रहे समासे च पुंवद्भावे राजविद्येति साध्विति। राट्शब्दात् हलन्ताद्वा इति टापि कृते राजा चासाविति विग्रहेन 'ङ्यापोः संज्ञाछन्दसोः बहुलम्' इति बहुलग्रहणाद् ह्रस्वत्वे राजविद्येति साध्विति ज्ञेयम् । लेखकदोषमूलोऽयं क्वचित् पाठ इत्येके ।

*भा०र०*— **कश्चिदिति** । रामानुज इत्यर्थः । 'राज्ञां विद्या राजविद्या' इति हि तेन भाषितम्। राजशब्दस्य क्षत्रियत्वजातिनिमित्तस्य कथं प्रधानार्थत्वेन भाषणमित्याशङ्क्य, नात्र राजशब्दो जातिवचनः । किन्तु राजगतप्रधानत्वलक्षणगुणयोगेन चैत्रे सिंहशब्द इव विद्यायां गौण इत्याह **राजेवेति** । 'घन इव श्यामो घनश्यामः' इत्यादौ घनशब्द एव गौण्या वृत्त्या अन्यत्र वर्तते, इवशब्दस्तु न वृत्तावन्तर्गत इतिवत्, राजशब्द एव गौणो विद्यायां वर्तत इति भावः । 'प्रधानानां विद्या' इति न भ्रमितव्यमिति भावेन स्वपक्षे विग्रहं दर्शयति **राजा चासौ विद्या चेति** । ननु राजशब्दस्य विद्याविशेषणत्वे 'ऋन्नेभ्यो ङीप्' इति ङीपि 'राज्ञी चासौ विद्या' इत्येव विग्रहः प्रदर्शयितुमुचित इति चेन्न । 'स्त्रियाम्' इत्यधिकृत्य ङीपो विहितत्वेन प्रकृते प्राधान्यमात्रस्य विवक्षितत्वेन, स्त्रीत्वविवक्षाऽभावात् । राजपत्नीत्वरूपराज्ञीशब्दार्थस्य विद्यायामसम्भवेन प्राधान्यस्यैव वक्तव्यतया राजशब्देन पुल्लिङ्गेनैव तदुपस्थापनौचित्याच्च । 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्' इत्यभिधानसिद्धं च क्षत्रियाद्यर्थस्य पुल्लिङ्गत्वम् ।

'विद्यानां राजा राजविद्या' इति भाषमाणः **शङ्करोऽपि** पुल्लिङ्गमेव राजशब्दं निरदिशत् । किञ्च 'राजा नृपे लताभेदे प्रत्यौ क्षत्रियचन्द्रयोः' इति नानार्थरत्नमालायां राजशब्दः सोमलतायां पुल्लिङ्ग एवाभिहित इति 'राजलता' इति समासे 'राजा चासौ लता च' इत्येव विग्रहः प्रदर्शनीय इति, अत्रापि पुल्लिङ्ग एव विद्यायां प्रयोक्तुमुचितः । एतावांस्तु विशेषः— 'यद्राजशब्दो लतायामभिधावृत्त्या वर्तते, विद्यायां तु गौण्या वृत्त्या' इति ।

भाष्यम्

**प्रत्यक्षं ब्रह्म अवगम्यते येन तत् प्रत्यक्षावगमम् । अक्षेषु इन्द्रियेषु प्रति प्रति स्थित इति प्रत्यक्षः ।**

*प०टी०*— 'प्रत्यक्षावगम'पदस्यापूर्वार्थमाह **प्रत्यक्षेति** । ब्रह्मणः प्रत्यक्षशब्दार्थत्वं कथम् ? इत्यत आह **अक्षेष्विति** ।

*प्र०दी०*— 'प्रत्यक्षेणावगमो यस्य' इति व्याख्यानमसत् । भगवन्माहात्म्यस्य शास्त्रैकसमधिगम्यत्वात् । अद्वैतोद्वारस्य च प्रमाणविरुद्धत्वादिति भावेनाह— **प्रत्यक्षमिति** । शास्त्रैकवेद्यं ब्रह्म

कथं प्रत्यक्षम् ? इत्यत आह— **अक्षेष्विति** । **प्रत्यक्षः** परमात्मा । प्रादिसमासोऽयं नाव्ययीभाव इति ज्ञापनाय नपुंसके प्रकृतेऽपि पुल्लिङ्गनिर्देशः । अन्यथा षष्ठी न श्रूयेत ।

***भा०दी०***— नन्वहं धीविषयप्रत्यगात्मन एव ब्रह्मत्वादस्ति तस्यापि प्रत्यक्षगम्यता इत्यत आह **अद्वैतोद्गारस्येति** । अद्वैतोक्तेरित्यर्थः । **प्रमाणेति** । साक्षिप्रत्यक्षादिप्रमाणेत्यर्थः । 'ब्रह्म' इत्यस्यानन्वयाद् विशेष्याकाङ्क्षां पूरयति **परमात्मेति** । **प्रादिसमासोऽयमिति** । 'कुगतिप्रादयः' इति सूत्रे 'कुशब्दो गतिसंज्ञकाः प्रादयश्च समर्थेन समस्यन्ते' इति द्वितीयाध्यायोक्तेः प्राद्युपसर्गेषु पठितप्रतिशब्दस्याक्षपदेन तत्पुरुषसमासो न तु 'अक्षं प्रति प्रत्यक्षम्' इत्यव्ययीभावः । 'अव्ययीभावत्वे प्रत्यक्षम्' इत्येव निर्दिशेत् । 'अव्ययीभावश्च' इति सूत्रे 'अव्ययीभावो नपुंसकं स्यात्' इत्युक्तेरिति भावः । अव्ययीभाव एव कुतो नाश्रितो भाष्यकृता ? इत्यत आह **अन्यथेति** । अव्ययीभावत्वे 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति सूत्रेण विभक्तीनां सुपो अम्भावे 'जगत्सत्यत्वग्राहिप्रत्यक्षस्य' इत्यादिनिर्देशो भगवत्पादीयप्रमाणलक्षणादौ उपपन्नः स्यादिति भावः इत्येके ॥ प्राज्ञास्तु प्रत्यक्षागम इत्यत्र षष्ठीसमासो नान्यः ॥ अवगम्यते अनेनेति अवगमम्, 'प्रत्यक्षस्य अवगमम् इति षष्ठी न श्रूयत इत्यर्थः' इत्याहुः ॥

***भा०र०***— 'प्रत्यक्षेण सुखादेरिवावगमो यस्य तत् प्रत्यक्षावगमम्' इति शाङ्करभाष्यं सङ्क्षेपतोऽनुवदति **प्रत्यक्षेणेति** । 'श्रुतेस्तु शब्दमूलत्वात्' इत्यधिकरणादौ भगवन्माहात्म्यस्य शास्त्रैकगम्यत्वोक्तेराह **शास्त्रैकसमधिगम्यत्वादिति** । अहं वित्तिवेद्यजीवाभिन्नब्रह्मणोऽपि प्रत्यक्षावगमत्वमस्तीत्यत आह **अद्वैतोद्गारस्येति** । अद्वैताभिधानस्येत्यर्थः । **प्रमाणेति** । 'अहं संसारी दुःखी' इत्यादि साक्षिप्रत्यक्षादिप्रमाणगोचरप्रत्यक्चैतन्यस्य ब्रह्माभेदोक्तेः तद्विरुद्धत्वादित्यर्थः ।

वक्ष्यमाणश्रुतिषु आत्मशब्दः परमात्मवाची । स एव च भाष्ये विशेषाकाङ्क्षापूरक इति भावेन आह **परमात्मेति** । प्रतिशब्दस्य अव्ययत्वेन तस्य अक्षरशब्देन समासे अव्ययीभावत्वेन अनुशासनेन 'अव्ययीभावश्च' इति नपुंसकत्वप्राप्तेः कथं पुल्लिङ्गत्वमित्यत आह **प्रादीति** । 'कुगतिप्रादय' इति शास्त्रादिति भावः । नन्वत्र सूत्रे 'प्रादयो गताद्यर्थे प्रथमया', 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया', 'अवादयः क्रुष्टाद्यर्थे तृतीयया', 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या', 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति वाक्यैः प्रथमादिविभक्तियुक्तपदैरेव समासस्य नियमितत्वेन, सप्तम्यन्तेन कथं प्रतिशब्दस्य समास इति चेन्न । भाष्ये उक्तसौनागवचनानां 'प्रादयः क्तार्थे समस्यन्त इति वक्तव्यम्' इति वार्तिकविवरणरूपत्वस्योक्तत्वेन 'कुगतिप्रादयः' इति सूत्रेणैव 'प्रतिस्थित' इत्य-

र्थकस्य प्रतेः सप्तम्यन्तेनापि समाससम्भवात् । अत एव 'प्रायिकं चैतदुपाधिवचनम्, अन्यत्रापि समासो दृश्यते' इति वृत्तिकारः । कैयटोऽपि 'पूजादीनां प्रयोगविषयोपलक्षणार्थत्वात् अन्यत्रापि समासो भवति' इत्याह ।

केचित्तु 'प्रतिस्थितोऽक्षाणि' इति विगृह्य 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासो विधेयः । अत एव 'अनुप्रतस्य' इत्यृग्भाष्ये 'महान् प्रति प्रतिस्थितश्च' इत्यत्र 'सर्वान् वैरिणः प्रतितिष्ठतीति प्रतिः' इत्युक्तं टीकायाम् । भाष्यं तु फलितप्रदर्शनमिति तत्र सप्तमीश्रवणं नानुचितमित्याहुः । अव्ययीभावसमासत्वे बाधकमाह **अन्यथेति** । अव्ययीभावाश्रयणे । 'प्रत्यक्षस्यैव मानत्वम्' 'जगत्सत्यत्वग्राहिप्रत्यक्षस्य वर्तमानमात्रग्राहित्वे' इत्यादिभगवत्पादीयप्रयोगे, 'प्रत्यक्षस्य लक्षणमाह' इत्याद्यभियुक्तप्रयोगे च षष्ठीश्रवणं न स्यात् । श्रूयते च सा । तेन ज्ञायते प्रादिसमास एवायमिति भावः । 'प्रत्यक्षं इति प्रथमैकवचनम्, द्वितीयैकवचनं वा न श्रूयेत' इत्यवचनं अव्ययीभावत्वे नाव्ययीभावत्वे च रूपविशेषाभावात् । 'प्रत्यक्षे दर्शने, प्रत्यक्षाणि दर्शनानि इत्यादौ द्विवचनबहुवचने न श्रूयेत', 'प्रत्यक्षाय इति चतुर्थी न श्रूयेत' इत्यवचनमपि उक्तप्रयोगप्राचुर्याभावात् । तृतीया पञ्चमी सप्तमी वा न श्रूयेत' इत्यवचनमपि 'अपञ्चम्याः' इति, 'तृतीयासप्तम्योः' इति चाव्ययीभावत्वपक्षेऽपि तृतीयादिविभक्तिश्रवणोपपत्त्या तच्छ्रवणस्यानव्ययीभावत्वाज्ञापकत्वात् 'षष्ठी न श्रूयेत' इत्येवोक्तं इत्यभियुक्ताः ।

भाष्यम्

**तथा च श्रुतिः— "यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरम् । यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः", "यो वाचि तिष्ठन्", "यश्चक्षुषि तिष्ठन्" इत्यादिः । "य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इति च । "अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः" इति च । "त्वं मनस्त्वं चन्द्रमास्त्वं चक्षुरादित्यः" इत्यादेश्च मोक्षधर्मे ।**

*प०टी०*— भगवतोऽक्षस्थितिः कुतः ? इत्यत आह **तथा चेति** ।

*प्र०दी०*— परमात्मनोऽक्षेषु स्थितत्वे किं मानमित्यत आह **तथा चेति** । **प्राण** इति प्राणाभिमानिनी देवतोच्यते । **प्राणादन्तरः** भिन्नः । अङ्गुष्ठेति कर्मेन्द्रियाधिष्ठातृत्वमुच्यते । मन इत्यादेः मनआदिस्थ इत्यर्थः ॥ २ ॥

*भा०दी०*— 'यं प्राणो न वेद' इति वाक्यं शेषोक्तिसार्थक्यायाह **प्राण इतीति** । प्राणादेः जडत्वेन 'वेद' इत्यस्य अप्रसक्तनिषेधतापत्तेः 'अधिदैवादिषु' इति सूत्रकृता दैवपदोक्तेश्चेति भावः । एतेन वागादिकमप्यभिमानिदेवतापरं प्रायपाठाद् ज्ञातव्यमित्युक्तं भवति ।

*भा०र०*— ननु भगवतोऽक्षशब्दितेन्द्रियस्थितत्वे 'यः प्राणे तिष्ठन्' इति श्रुतिर्न प्रमाणम् । वायुवृत्तिविशेषस्य प्राणस्येन्द्रियत्वायोगात् । प्राणस्य जडविशेषस्य 'न वेद' इत्युक्तवेदननिषेधस्य अप्रसक्तप्रतिषेधायोगेन अयुक्तत्वाच्च, इत्यत आह **प्राण इति प्राणाभिमानी देवतेति** । तथा च उक्तदोषद्वयं अलग्नकमिति भावः । एवमेव वागादिशब्दोऽपि तदभिमानिदेवतापर इति 'यं वाङ् न वेद' इत्यादि युज्यत इति ज्ञातव्यम् । *भावप्रदीपिकायां तु*— सर्वेन्द्रियगतत्वान्मुख्यप्राणस्य तज्ज्ञातत्वोक्त्या हरेः सर्वेन्द्रियस्थितत्वसिद्धिरिति 'यः प्राणे तिष्ठन्' इति श्रुतिगतप्राणशब्दो मुख्यप्राणार्थको व्याख्यातः ।

'अन्तरं अवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यभिधानादिसिद्धनानार्थस्यापि अन्तर-शब्दस्य प्रकृते बहिर्योग-उपसंव्यान-अन्तर्ध्याद्यर्थग्रहणे प्राणशब्दात् पञ्चम्यनुपपत्तेर्भेदार्थत्वमभ्युप-गम्य तं व्याचष्टे **अन्तरो भिन्न इति** । 'अन्यारात्' इति शास्त्रात् तस्य तत्र पञ्चमी युक्तेति भावः। अन्तर्याम्यधिकरणचन्द्रिकायामपि 'अन्तरशब्दस्य विविक्तत्वमर्थः' इत्युक्त्वा 'पञ्चम्युपपत्तिश्च' इत्यु-क्तम् । 'प्राणमन्तरो यमयती'त्यत्रान्तरशब्दस्तु अन्तः स्थित्वा रमणकृदन्तरः इति, 'बाह्यापेक्षां विना यस्तु रमते सोऽन्तरः स्मृतः' इत्यनुभाष्यबृहद्भाष्यादौ व्याख्यातः । तथा च 'अन्तरः सन् प्राणं यमयति' इति श्रुतिखण्डार्थः स्पष्ट इति न व्याख्यातः । 'अक्षण्यन्तः पुरुषो दृश्यत इति दिव्य-दृष्टिभिः' इति छन्दोगश्रुत्याऽपि चक्षुःस्थितिरुच्यते ।

**अङ्गुष्ठेतीति** । इति = श्रुतौ 'अङ्गुष्ठं समाश्रितः' इत्यनेन कर्मेन्द्रियाधिष्ठातृत्वमुच्यते । तथाहि अङ्गुष्ठशब्दो अङ्गवाची । अङ्गौ = पाणिपादावयवे तिष्ठति इति अङ्गुष्ठः । 'सुपि स्थः' इति कः । 'अम्बाम्ब' इत्यादिना षत्वम् । अङ्गे = पाणिपादे तिष्ठतीति अङ्गस्थः । स एव पृषोदरादिभावात् अकारस्योकारे विकारे षत्वे च वा 'अङ्गुष्ठः' इत्यङ्गुष्ठशब्दो आभिधानिकैर्व्युत्पादित इति । तेन तदधिष्ठानं पाणिपादं लक्षयित्वा तदितरवाक्-पायु-उपस्थाख्यकर्मेन्द्रियलक्षणाभ्युपगमे तं समाश्रितः = तदधिष्ठित इत्युक्तार्थलाभ इति भावः । अथवा अङ्गुष्ठमात्रः पाण्याद्यङ्गे तिष्ठतीत्यङ्गुष्ठः, तत्त्वेन मीयते = ज्ञायत इति बाहुलकात् कर्मणि 'हू-या-मा-श्रु-भसिभ्यस्त्रन्' इति मातेः त्रन्प्रत्यये 'मात्रः' इति रूपे च, 'अङ्गुष्ठश्चासौ मात्रः' इति बाहुलकादेव विशेषणयोः समासे 'कर्मेन्द्रियाधि-

ष्टातृतया प्रमाणसिद्धो भगवान् पुरुषः' इत्यर्थाद् उक्तार्थलाभ इति । अत्र पक्षे 'अङ्गुष्ठम् = तत्परिमाणावच्छिन्नहृदयदेशं समाश्रितः' इति श्रुतिशेषार्थः ।

**मन इत्यादेरिति** । *मोक्षधर्मे नारायणीये*— 'प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः । भूत्वैकाग्रमना विप्र ऊर्ध्वबाहुः समाश्रितः । स्तोत्रं जगौ स विश्वाय निर्गुणाय गुणात्मने' इत्युपक्रम्य 'त्वमोङ्कारस्त्वं तपस्त्वं मनस्त्वं च ज्ञानस्त्वं चक्षुराद्यः' इत्यादि नारदस्तुतिवाक्यं पठितम् । तत्र मनसि स्थितो मनः, चन्द्रमसि स्थितश्चन्द्रमाः, चक्षुषि स्थितश्चक्षुरित्यर्थ इत्याद्यर्थ इत्यर्थः । अत्रान्तरिन्द्रियस्य सर्वेन्द्रियप्रधानत्वात्, चक्षुषश्च 'सर्वेन्द्रियाणां नयनं प्रधानम्' इति प्रसिद्ध्या स्वेतरप्रधानत्वात्, तदुभयग्रहणमेव सर्वेन्द्रियोपलक्षणमिति ज्ञानकर्मेन्द्रियस्थितत्वं लभते । 'ब्राह्मणो वै सर्वा देवताः' इत्यादिवत् तत्स्थत्वात् ताच्छब्द्यम् । तथाचोक्तं वैयाकरणैः— 'अग्नीधः शरणे रण् भत्वं च' इत्यत्र 'अग्निं इन्द्धे अग्नीत्, तस्य स्थानमाग्नीध्रम्, तात्स्थ्यात् सोऽप्याग्नीध्रः' इति । 'गेहे कः' इत्यत्र 'तात्स्थ्याद् दारा गृहा इति च' इति भावः ।

भाष्यम्

**"स प्रत्यक्षः । प्रति प्रति हि सोऽक्षेष्वक्षवान् हि, स भवति य एवं विद्वान् प्रत्यक्षं वेद" इति सामवेदे बाभ्रव्यशाखायाम् । धर्मो भगवान् । तद्विषयं धर्म्यम् । सर्वं जगत् धत्त इति धर्मः । "पृथिवी धर्ममूर्धनि" इति च प्रयोगात् मोक्षधर्मे । "भारभृत् कथितो योगी" इति च । "भर्ता सन् भ्रियमाणो बिभर्ति" इति च श्रुतिः । "धर्मो वा इदमग्र आसीन्न पृथिवी न वायुर्नाकाशो न ब्रह्मा न रुद्रो नेन्द्रो न देवा न ऋषयः सोऽध्यायत्" इति च सामवेदे बाभ्रव्यशाखायाम् ॥ २ ॥**

***प०टी०***— सर्वेन्द्रियगतत्वात् मुख्यप्राणस्य तदन्तर्गतत्वोक्त्या हरेस्तत्सिद्धिः । अनेन योगेन प्रत्यक्षशब्दवाच्यत्वं हरेः कुतः ? इत्यत आह **स इति** । 'धर्म्य'शब्दस्यापूर्वार्थमाह **धर्म इति** । भगवद्विषयत्वात् न ज्ञानकरणमित्यर्थः । कथं धर्मत्वं हरेः ? इत्यत आह **सर्वमिति** । धारणयोगात् 'धर्म'शब्दप्रयोगः क्व दृष्टः ? इत्यत आह **पृथिवीति** । जगद्धारकत्वं कुतो हरेः ? इत्यत आह **भारभृदिति** । न केवलं योगेन, धर्मशब्दो भगवति रूढश्चेत्याह **धर्म इति** । 'धर्म'शब्देनात्र जीवदृष्टमेव किं न स्यात् ? इत्यत आह **सोऽध्यायत् इति** ॥ २ ॥

***प्र०दी०***— प्रत्यक्षशब्दस्यायमर्थ इत्यत्र श्रुतिमाह **स इति** । **प्रति** स्थितः । **अक्षवान्** प्रशस्तेन्द्रियः । **यः** विद्वान् **एवं** प्रत्यक्षशब्दार्थं **वेद** । धर्मादनपेतं धर्म्यमिति निर्वचनेऽपि न प्रसिद्धधर्मा-

विरुद्धत्वमर्थः । निवृत्तधर्मस्य ब्रह्मज्ञानाविरुद्धतायाः प्रसिद्धत्वात् । प्रवृत्तिलक्षणस्य तु तद्विरुद्धत्वादिति भावेनाह **धर्म इति** । तस्मादनपेतमित्यर्थः **तद्विपयमिति** । कथं भगवान् धर्मः ? इत्यत आह **सर्वमिति** । धृञो मनूप्रत्यय औणादिकः ।

धारके धर्मशब्दप्रवृत्तिः कुत इत्यत आह **पृथिवीति** । पर्वतोपरीत्यर्थः । भगवतः सर्वधारकत्वे किं मानम् ? इत्यत आह **भारभृदिति** । सर्वत्र स्थितो भगवान् सर्वेण ध्रियते । स कथं सर्वस्य धारक इत्यत आह **भर्तेति** । **भर्ता सन्नेव ध्रियमाणः** । न स्वकीयस्थित्यै । धर्मशब्दस्य भगवद्वाचित्वं कुतः ? इत्यत आह **धर्मो वेति** । **इदमग्रे** अस्याग्रे । अत्र पुण्यं धर्मः किं न स्यात् ? इति शङ्कानिरासार्थं **'सोऽध्यायत्'** इति वाक्यशेषोदाहरणम् ॥ २ ॥

*भा०दी०*— 'अक्षेषु प्रति' इत्यन्वयमुपेत्य शेषमाह **स्थित इति** । प्रशंसायां मतुप् इत्युपेत्याह **प्रशस्तेति** । अपौनरुक्त्यर्थं 'विद्वान्' इत्यनुवाद इति भावेनाह **विद्वानिति** । व्याख्यानान्तरं निन्दन्नवतारयति **धर्मादिति** । **प्रसिद्धत्वादिति** । प्रसिद्धस्य अवक्तव्यत्वान्नायं तस्यार्थ इति भावः। 'धृयो मन्' इति 'धृञ् धारणे' इत्यतो मन्प्रत्यये सार्वधातुकार्धधातुकयोः इति गुणे रपरत्वे च धर्म इति सिद्धेरिति भावः । 'धर्ममूर्धनि' इत्यत्र धर्मस्य धारकस्य पर्वतस्यैवेत्यर्थमुपेत्याह **पर्वतोपरीत्यर्थ इति** ॥ २ ॥

*भा०र०*— परमात्मनोऽक्षेषु स्थितत्वे प्रमाणानामुदाहरणादाह **इत्यत्रेति** । 'प्रादयः क्तार्थे समस्यन्ते' इति वक्तव्यात् 'प्रत्यक्षः' इति समासनिष्पत्त्यर्थं 'प्रति' इति श्रुतिपदमनूद्य तत्र संयोज्यमाह **प्रति स्थित इति** । प्राणभृन्मात्रस्य नित्यसिद्धमक्षवत्त्वम्, तत्कथं फलमित्यत आह **प्रशस्तेति** । 'भूमनिन्दाप्रशंसासु' इति प्रशंसायां मतुब्विधानाद्युक्तं तस्य फलत्वमिति भावः । 'विद्वान् वेद' इति पुनरुक्तिः इत्यतः, नात्र 'एवम्' इत्यस्य 'विद्वान्' इत्यनेनान्वयः, अपितु 'एवम् = इन्द्रियनियामकत्वेन प्रकारेण वेद' इत्यनेनेति भावेनाह **यो विद्वानिति** । 'सुधीः' इत्यर्थः ।

'धर्म्यम् = धर्मादनपेतम्' इत्यत्र धर्मशब्देन प्रसिद्धधर्मग्रहणेन यत् परभाष्यं तद्दूषयितुमनुवदति **धर्मादिति** । **प्रसिद्धेति** । सददृष्टरूपेत्यर्थः । 'अनपेतं' इत्यस्य तात्पर्यं 'अविरुद्धत्वं' इत्यर्थः, 'धर्मादनपेतं' इत्यस्य । **प्रसिद्धत्वादिति** । 'कर्मणा ज्ञानमातनोति', 'अतो ज्ञानफलान्येव कर्माणि', 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्यादिप्रमाणेषु इति शेषः । तथाच प्राप्तत्वान्न तत्र शास्त्रमर्थवदिति भावः । **तद्विरुद्धत्वात्** ब्रह्मज्ञानविरुद्धत्वात् । तस्य ब्रह्मज्ञानसाध्यमोक्षेतरफलकत्वादिति भावः । **तस्मादनपेतमितीति** । 'धर्म-पथि-अर्थ-न्यायाद् अनपेते' इति सूत्रात् धर्मशब्दाद् 'अनपेतं' इत्यर्थे यत्प्रत्यय इति भावः । 'तद्विषयं' इति भाष्यस्य 'तस्मादनपेतमित्यर्थः'

इति टीकायां योजना । 'तस्मादनपेतमित्यत्र तद्विषयमिति' पाठे तु 'तस्मादनपेतं' इत्यर्थे 'तद्विषयं' इति भाष्यं तात्पर्यपरमिति व्याख्येयं इत्यर्थः ।

**धृञ इति** । 'अर्ति-स्तु-सु-हु-सृ-धृ-क्षि-क्षु-भा-या-वा-पदि-यक्षि-नीभ्यो मन्' इत्युणादिसूत्रात् 'धृञ् = धारणे' इति धातोः कर्तरि मन्प्रत्यये सार्वधातुकलक्षणे गुणे, रपरत्वे 'धर्मः' इति रूपमिति भावः । 'धरतीति धर्मः' इति भाषणीये 'धत्ते' इति भाषणं धात्वोरेकार्थ्याशयम् । 'सर्वं जगत्' इति तु धरणकर्मत्वेन योग्यतयाऽन्वितमिति भाष्यशेषः सुगमार्थत्वादव्याख्यातः । 'प्रयोगात्' इति पञ्चम्याः श्रवणात् उक्तं **कृत इति** ॥ **मोक्षधर्म इति** । 'क्षीरोदस्य समुद्रस्य मध्ये हाटकसप्रभः । वैजयन्त इति ख्यातः पर्वतप्रवरो नृप' इत्युपक्रमे वैजयन्तनामकपर्वतमुक्त्वा 'ततोऽहं पर्वतं प्राप्तस्त्विमं त्वत्पादसेवितम्' इत्युपरि पर्वतपदं प्रयुज्य च, 'ततः खान्निपपातासौ पृथिवीधर्ममूर्धनि' इति प्रयोगः कृतः । तत्र पृथिवीधर्मशब्दस्य पर्वतोऽर्थः । धरतीति धर्मः, पृथिव्या धर्मः पृथिवीधर्मः, तन्मूर्धनि इति व्युत्पत्तेः । अत एव 'पृथिवीधरः' इति प्रसिद्धिरिति भावेन अर्थमाह **पर्वतोपरीति**। 'पूरणगुण' इत्यत्र सदंशात् कृदव्ययग्रहणमिति शाब्दिकैरुक्तेरत्र **समासः** साधुः ।

'भारभृत्' इत्यत्र 'सर्वं भारं बिभर्ति' इति व्युत्पत्त्या सर्वधारकत्वमवगम्यते विष्णुसहस्रनामसु इति भाष्यार्थः । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति श्रुतिं मनसि निधायाह **सर्वत्रेति** । **भर्ता** सर्वस्य । 'सर्वं वाक्यं सावधारणम्' इति न्यायप्राप्तावधारणव्यावर्त्यं **नेति** । **धर्मशब्दस्येति** । तथाच गीतास्थधर्म्यशब्दान्तर्गतधर्मशब्दो न भगवद्वाचक इति शङ्कितुर्हृदयम् । *भावप्रदीपिकायां तु*— 'सर्वं जगत्' इत्यत्र योग उक्तः भगवति । अत्र तु रूढिरप्यस्तीति वक्तुं 'धर्मो वा' इति श्रुत्युदाहरणमित्ययुक्तम् । श्रुतिगतधर्मशब्दस्य पुलिङ्गत्वात् 'इदं' इति कथं नपुंसकलिङ्गनिर्देशः इति शङ्कां परिहर्तुमाह **इदमग्रे अस्याग्र इति** । ऐकपद्याश्रयणान्नोक्तशङ्कावकाश इति भावः । **किं न स्यादिति** । तत्रैव प्रसिद्धेरिति भावः । **अध्यायदितीति** । ध्यानस्य ज्ञानरूपत्वेन पुण्ये जडे तदयोगात्, न प्रकृते धर्मशब्दः पुण्यार्थ इति भावेन वाक्यशेषमुदाजहार भाष्यकार इत्यर्थः ॥ २ ॥

**गीता**

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि॥ ३ ॥**

***वि०वि०***— सुकरत्वे न कोऽपि संसारयोग्य इत्यत्राह **अश्रद्दधाना इति** । श्रद्धाऽऽस्तिक्यम्। 'श्रन्नामास्तिक्यमुच्यते' इत्यभिधानात् । श्रद्धधाना नेत्यश्रद्दधानाः । **अस्य धर्मस्य** । इमं धर्ममास्तिक्येनास्वीकुर्वन्तो मृत्युरूपसंसारमार्गे नितरां वर्तन्ते ॥ ३ ॥

***वा०ल०***— 'धर्मस्यास्य' इत्यत्र अस्य वक्ष्यमाणस्य ॥ ३ ॥

***सा०सं०***— ननु त्वयोच्यमानं भगवदपरोक्षज्ञप्तिसाधनं तद्विषयपरोक्षज्ञानम् उक्तगुणकं सुकरं चेन्न कोऽपि संसारी स्यादित्यतो वा, अकुर्वतां किमनिष्टमित्यतो वाऽऽह **अश्रद्दधाना इति** । **धर्मस्य** भगवद्विषयस्य । **अस्य** ज्ञानस्य । **अश्रद्दधानाः** पुमर्थहेतुत्वरूपश्रद्धाविहीनाः । **पुरुषाः मामप्राप्य मृत्युसंसारवर्त्मनि निवर्तन्ते** नितरां वर्तन्ते । पतन्तीत्यर्थः ॥ ३ ॥

***अ०प्र०***— ननु त्वयोच्यमानभगवज्ज्ञप्तिसाधनं तद्विषयं परोक्षज्ञानमुक्तगुणकं सुकरं चेत् न कोऽपि संसारी स्यादित्यतो वा कुर्वतो किमनिष्टमित्यतो वाऽऽह । यद्वा, नत्वेवमस्यातिसुकरत्वे के नाम संसारिणः स्युस्तत्राह **अश्रद्धेति** ।

हे परन्तप ![१], अस्य[२], धर्मस्य[३], अश्रद्धधाना[४], पुरुषाः[५], मां[६], अप्राप्य[७], मृत्युसंसारवर्त्मनि[८], निवर्तन्ते[९] ॥

हे परन्तप ![१], अस्य = भगवद्भक्तिसहितज्ञानलक्षणस्य[२], धर्मस्य[३], अश्रद्धधानाः = पुमर्थहेतुत्वश्रद्धाहीनाः केवलविषयाऽऽसक्ता इत्यर्थः । यद्वा, अस्ति नास्ति कुर्वतः[४], पुरुषाः[५], उपायान्तरेण मत्प्राप्तये कृतप्रयत्नापि । यद्वा, कामवशगाः सम्भ्रान्ता इति भावः[५], मां[६], अप्राप्य[७], मृत्युसंसारवर्त्मनि = जन्ममरणरूपसंसारो मृत्युः तद्युक्तसंसारे वर्त्मनि मार्गे[८], निवर्तते = नितरां वर्तन्ते पुनः पुनः प्रवर्तन्त इत्यर्थः । यद्वा, पतन्ति परिभ्रमन्तीत्यर्थः॥ ३ ॥

***भा०र०— गीताश्लोकत्रयाक्षरार्थस्तु—***

सप्तमाध्यायोक्तं भगवन्माहात्म्यं स्पष्टीक्रियते अस्मिन्नध्याये । अतिविचित्रभगवन्महिमानं वक्तुं श्रोतुरादरजननाय सप्रतिज्ञं वक्ष्यमाणं प्रशस्यते **इदम्** इति द्वाभ्याम् । 'ते' इति श्रवणात् 'पार्थ' इति लभ्यते । **अनसूयवे** असूयापदोपलक्षितश्रोतृदोषशून्याय **ते** तुभ्यम् । 'क्रियाग्रहणं कर्तव्यम्' इति वचनाच्चतुर्थी । **इदं** वक्ष्यमाणं **गुह्यतमम्** अतिशयेन संवरणीयम् । ज्ञानविज्ञानशब्दौ कर्मणि ल्युडन्तौ । विशेषज्ञातव्येन सहितं ज्ञातव्यं वक्ष्यामि । **यज्ज्ञात्वा अशुभात्** संसारात् मोक्ष्यसे ॥ ॥ १ ॥

राजेव राजा प्रधानम्, राजा चासौ विद्या चेति राजविद्या । विद्यानां प्रधानमितिवत् यावत् । **राजगुह्यम्** गूहनीयेषु प्रधानं **पवित्रं** पावनम् । अत एव **उत्तमम्** । **धर्म्यं** सर्वस्य जगतो धारको भगवान् **धर्मः**, 'तस्मादनपेतं = तद्विषयम्' इत्यर्थे धर्मशब्दात् यत्प्रत्ययः । सर्वजगद्धारकभगवद्विषयकं **प्रत्यक्षावगमम्** अक्षेषु = इन्द्रियेषु नियमनाय प्रतिस्थितं ब्रह्म प्रत्यक्षम्, अवगम्यते = साक्षात्क्रियते अनेनेत्यवगमम् । साक्षात्कारानुकूलशास्त्रजनितपरोक्षज्ञानम् । ग्रह-वृ-दृ-निश्चिगमश्च इति गमेः करणे अप्प्रत्ययः । अप्प्रत्ययान्तस्य 'घञबन्तः' इति पुलिङ्गत्वानुशासनेऽपि, इह 'लिङ्गमशिष्यम्' इति वचनात् तन्नाश्रितम् । वस्तुतस्तु 'घञबन्तः' इति सूत्रे ''भावार्थ एवेदम् । नपुंसकत्वविशिष्टे भावे क्तल्युड्भ्याम्, स्त्रीत्वविशिष्टे तु भावे क्तिन्नादिभिः बाधेन परिशेषात् । कर्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गम् । 'सम्बन्धमनुवर्तिष्यते' इति भाष्यात्'' इत्याधुनिकवचनात् करणे अप्प्रत्ययान्तोऽप्यवगमशब्दः नपुंसकलिङ्ग एव युक्त इति ।

प्रत्यक्षस्य = ब्रह्मणोऽवगमम् । एवं च 'धर्म्यम्' इत्यनेन न पौनरुक्त्यम् । 'धर्म्यम्' इत्यस्य 'भगवद्विषयकम्' इत्यर्थात्, 'प्रत्यक्षावगमम्' इत्यस्य च 'ब्रह्मापरोक्षज्ञानसाधनपरोक्षज्ञानम्' इत्यर्थकत्वात् । **कर्तुं सुसुखं** सुकरं **अव्ययं** अव्ययमोक्षफलकम् । 'इदं ज्ञानं 'प्रवक्ष्यामि' इति प्रस्तुतं ज्ञानं इह भावे ल्युटि प्रथमान्तं संयोज्यम् । 'एवं प्रशस्तं' इति स्तुतिमात्रपरत्वात् अस्य श्लोकस्य क्रियाभिसन्धाभावो न दोषाय ॥ २ ॥

उक्तज्ञानस्यातिसुकरत्वेन कोऽपि संसारी स्यादित्यत उच्यते **अश्रद्दधाना इति** । **अस्य** उपदिश्यमानस्य **धर्मस्य** जीवोद्धारकत्वेन धर्मशब्दार्थस्य ज्ञानस्य । 'न लोक' इति निषेधः कारकषष्ठीविषय इति, नेह सम्बन्धसामान्यषष्ठीविषये प्रवर्तते । अत एव 'ब्राह्मणस्य कुर्वन्', 'नरकस्य जिष्णुः' इत्यादिप्रयोगः । **अश्रद्दधानाः** अविश्वसन्तः = इमं धर्ममास्तिक्येन अस्वीकुर्वन्त इत्यर्थः । धर्मस्य स्वरूपे फले च श्रद्धारहिता इत्यपि **केचित्** । **मामप्राप्य मृत्युसंसारवर्त्मनि** मृत्युरूपसंसारमार्गे **निवर्तन्ते** नितरां वर्तन्ते । अप्राप्य मां निवर्तन्ते । न तूर्ध्वं गच्छति । निवर्तमानाश्च न क्वापि जोषमासते । किन्तु 'मृत्यु....' इत्युक्तसंसारमार्गे परिभ्रमन्तीत्यपि आहुः । तस्मात् ज्ञानं श्रद्धेयमिति विभावितमिति ॥ ३ ॥

**गीतातात्पर्यनिर्णयः**

**सप्तमोक्तं प्रपञ्चयति ॥ १-३ ॥**

*प्रका०*— एतदध्यायप्रतिपाद्यं दर्शयति **सप्तमोक्तमिति** ।

***न्या०दी०*— एतदध्यायप्रतिपाद्यमर्थं दर्शयति सप्तमेति** ॥ भगवन्महिमानमिति शेषः । **न चैवमस्याष्टमत्वेन भवितव्यमिति वाच्यम् । अर्जुनप्रश्नपरिहारेणान्तरितत्वात्** ।

***भा०दी०***— षट्कान्तर्भावसिद्ध्यर्थमाह **इति शेष इति** । सप्तमानन्तर्यमस्य शङ्कते **न चैव-मिति** । अन्तरितत्वादष्टमेन व्यवहितत्वादित्यर्थः ॥

**गीता**

## मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
## मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

***वि०वि०***— प्रतिज्ञातं ज्ञानमाह **मया ततमिति** । सर्वव्यापी चेत्किमिति तथा न दृश्यत इत्यत आह **अव्यक्तमूर्तिनेति** ॥ ४ ॥

***सा०सं०***— यस्य धर्म्यपदेन प्रत्यक्षावगमपदोक्तभगवज्ज्ञान-साधनत्वमुक्तम्, यच्च प्रवक्ष्यामीति प्रतिज्ञातम्, यच्च 'ज्ञात्वा' इत्यादिना प्रशंसितम्, यदकरणे च निन्दाकृता तज्ज्ञानविज्ञानयोर्मध्ये ज्ञानशब्दितं ज्ञातव्यं तावदाह '**मया**' इत्यादिना '**अहं क्रतुः**' (९-१६) इति पर्यन्तेन । **इदं सर्वं** चराचरात्मकम् । **जगदव्यक्तमूर्तिना** । बहुव्रीहिः । **मया ततं** व्याप्तम् । व्याप्तत्वे सर्वत्र कुतो न दृश्यत इत्यतोऽव्यक्तेति विशेषणम् । 'ततम्' इत्युक्त्या जगत आधारता स्वस्याधेयता घटादेरिव प्राप्ता । तां निराह **मत्स्थानीति** । मदाधारतयैव **सर्वभूतानि** सजडजीवजातानि । **तेषु चाहं नावस्थितः** । तदाधारतया तदुपजीवनेन न वर्त इत्यर्थः ॥ ४ ॥

***अ०प्र०***— यस्य धर्म्यपदेन प्रत्यक्षावगमपदोक्तापरोक्षज्ञानसाधनत्वमुक्तं यच्च प्रवक्ष्यामीति प्रतिज्ञातं यच्च ज्ञात्वेत्यादिना प्रशंसितं यदकरणे निन्दा च कृता तज्ज्ञानविज्ञानयोर्मध्ये ज्ञानशब्दित-ज्ञातव्यम् । तावदाह तदेवं वक्तव्यतया श्रोतारमभिमुखीकृत्य कथयति **मयेति** द्वाभ्याम् ।

अव्यक्तमूर्तिना[१], मया[२], इदं[३], सर्वं[४], जगत्[५], ततं[६], सर्वभूतानि[७], मत्स्थानि[८], अहं[९], तेषु[१०] न अवस्थितः[११] अव्यक्तमूर्तिना व्यक्ता न भवतीत्यव्यक्ता । अव्यक्ता अतीन्द्रिया मूर्तिः रूपं यस्य स तथा । एतादृशेन कारणभूतेन मया[२], इदं सर्वं जगत् ततं = व्याप्तं[६], ततमित्युक्त्या जगतः आधारता स्वस्याधेयता, अत एव कारणभूते मयि तिष्ठन्तीति[६], सर्वभूतानि = सजडजीव-महदादिदेहान्तानि सर्वभूतानि[७], मत्स्थानि = मदाधारतयैव तिष्ठन्तीति मत्स्थानि[८], अहं एव मय्यहं तेषु घटपटादिसर्वकार्येषु मृत्तिकेव तेषु तदाधारतया तदुपजीवनेन[१०] तावत्स्थितः = न वर्त्ते इत्यर्थः ॥ ४ ॥

भाष्यम्

**प्रत्यक्षावगमशब्देन अपरोक्षज्ञानसाधनत्वमुक्तम् । तज्ज्ञानाद्याह मयेति । तर्हि किमिति न दृश्यत इत्यत आह अव्यक्तमूर्तिनेति ॥ ४ ॥**

*प०टी०*— 'मया ततम्' इत्येतं श्लोकमवतारयति **प्रत्यक्षेति** । उक्तं 'यस्य' इति शेषः । यदि सर्वगतस्तर्हि कुतो न दृश्यते ? इत्यतोऽन्त्यपदमवतार्य व्याचष्टे **तर्हीति** ॥ ४ ॥

*प्र०दी०*— एवं तर्हि पुनरुक्तिः स्यात् । 'ब्रह्मविषयं ज्ञानम्' इत्यस्य 'ब्रह्मावगम्यते विषयीक्रियत अनेन ज्ञानेन' इत्यस्य च भेदाभावादित्यत आह **प्रत्यक्षेति** । नावगमशब्देन विषयीकरणमुच्यते । किन्त्ववगतिसाधनत्वम् । न च ज्ञानस्य तद्विरुद्धम् । परोक्षज्ञानस्य परोक्षज्ञानसाधनत्वोपपत्तेरिति भावः । 'ज्ञानं विज्ञानसहितं प्रवक्ष्यामि' इति प्रतिज्ञाय 'यज्ज्ञात्वा' इत्यादिना तत्प्रशंसादिकमुक्तम् । अतो 'मया ततं' इत्यादिकमपि तथाभूतमेव किञ्चित् ? उत प्रतिज्ञातमुच्यते ? इति शङ्कायामाह **तदिति** । प्रतिज्ञातमित्यर्थः । यस्य अपरोक्षज्ञानसाधनत्वमुक्तं तदिति वा । कृत्स्नाध्यायप्रतिपाद्योक्तिरियम् । विशेषणवैयर्थ्यमाशङ्क्याह **तर्हीति** । सर्वव्यापी चेदित्यर्थः । **न दृश्यते** 'सर्वत्र' इति शेषः ॥ ४ ॥

*भा०दी०*— **एवं तर्हीति** । प्रत्यक्षावगमधर्म्यपदयोः भाष्योक्तव्याख्यानपक्षे पुनरुक्तिः धर्म्यपदस्य प्रत्यक्षावगमपदेनेत्यर्थः । क्रमेण द्वयोरेकार्थ्यं व्यनक्ति **ब्रह्मेत्यादिना** । **तथाभूतमेवेति** । प्रशंसाभूतमेवेत्यर्थः । यच्छब्दाध्याहारेण भाष्यं योजयति **यस्येति** । आदिपदोक्तेराह **कृत्स्नेति** । **विशेषणेति** । गीतायां 'अव्यक्तमूर्तिना' इति विशेषणेत्यर्थः ॥ ४ ॥

*भा०र०*— **पुनरुक्तिरिति** । 'धर्म्यम्' इत्यस्य 'भगवद्विषयम्' इति व्याख्याने प्रत्यक्षावगमधर्म्यशब्दयोरेकार्थत्वेन पुनरुक्तिप्रसङ्ग इत्यर्थः । तामुपपादयति **ब्रह्मेति** । भाष्यानुसारेण 'भगवद्विषयम्' इत्यनुवादे कार्येऽपि 'ब्रह्मविषयम्' इत्यनुवादो ब्रह्मभगवत्पदयोः ऐकार्थ्यस्फोरणाय । तच्च प्रत्यक्षावगमशब्देन पौनरुक्त्यं स्फोटयितुं 'अवगतिसाधनत्वम्' इति वदन् गमेः करणे अप्प्रत्यये अवगमशब्दनिष्पत्तिरित्यभिप्रैति । **तत्** अवगतिसाधनत्वम् । स्वस्यैव स्वसाधनत्वस्य आत्माश्रयदोषेण अयोगादिति भावः ।

'तत्प्रशंसादिकम्' इत्यत्र आदिपदेन 'अश्रद्दधानाः' इति श्लोकोक्तनिन्दासङ्ग्रहः । **तथाभूतं** प्रशंसादिरूपं एव । **किञ्चित्** 'उच्यते' इत्याकृष्यते । परामर्शसौकर्याय 'प्रत्यक्ष' इत्यादि पूर्ववाक्यं

'यस्य' इत्यध्याहृत्य उत्तरवाक्येन सह प्रकारान्तरेण योजयति **यस्यापरोक्षेति** । 'मया ततम्' इत्यादेः 'अहं क्रतुः' इत्यन्तस्य ज्ञानप्रतिपादकत्वात् 'ज्ञानमाह' इत्येव वक्तव्ये किमिति आदिपद-मित्यत आह **कृत्स्नेति** । 'अहं क्रतुः' इत्यन्तं ज्ञानप्रतिपादकम्, तत उत्तरं विज्ञानप्रतिपादकम् । यद्वक्ष्यति 'प्रतिज्ञातं विज्ञानमाह' इति । अतोऽत्र आदिपदं सर्वाध्यायार्थसङ्ग्रहार्थं प्रयुक्तमिति भावः। **विशेषणेति** । अस्मच्छब्दार्थस्य भगवतः 'अव्यक्तमूर्तिना' इति यद्विशेषणं तद्वैयर्थ्यमिति भावः । 'न दृश्यते' इत्यत्र 'भवान्' इति शेषः । ननु 'किमिति न दृश्यते' इति प्रश्नोऽनुपपन्नः ? पुरतो दृश्यमानत्वात्, इत्यतः शेषोक्त्या भाष्यं घटयति **सर्वत्रेतीति** ॥ ४ ॥

**गीता**

## न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
## भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥

***वि०वि०***— मत्स्थान्यपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह **न चेति** । तत्र हेतुः– ऐश्वरम् ईश्वरस्वभावं योगं सामर्थ्यं पश्येति । अचिन्त्यशक्तित्वादसङ्गत्वादिति भावः । युज्यतेऽनेन योगोऽसौ उपायः शक्तिरेव च इत्यभिधानम् । अव्यक्तमूर्तिनेति । भगवतो मूर्तिरुक्ता सा अस्मदादीनामिव भिन्नेति भ्रान्तिनिरासाय स्वदेहस्यापि लक्षणमाह **भूतभृदिति** । ममात्मा देह एव भूतभावनः । तदनन्यत्वाद्देहस्याचेतनत्वशङ्कानिवृत्तये ममात्मेत्याह ॥ ५ ॥

***वा०ल०***— 'पश्य मे योगमैश्वरम्' इत्यत्र योगम् असङ्गाख्योपायम् । योगशक्त्यैवेदमुक्तं न तु मिथ्यात्वादिति भावः ॥ ५ ॥

***सा०सं०***— त्वयि चेद्भूतानि तिष्ठन्ति भूतले वर्तामहे भूतलशैत्यादिनाऽहं शीतो भवामीति ज्ञानमिव भगवति वयं वर्तामह इति धीः स्यात् । तथा वह्न्याद्यौष्णशैत्याभ्यां भूतलादेरौष्ण्य-शैत्यवत् अन्योन्यधर्मसङ्क्रान्तिश्च स्यादित्यत आह **न च मत्स्थानीति** । त्वगिन्द्रियेण तं ज्ञात्वा-ऽन्योन्यधर्मसङ्क्रान्तिं चासाद्य न तिष्ठन्ति । भगवतः प्राकृतस्पर्शरहितत्वात् । 'अशब्दमस्पर्शमरूपम्' (कठ. ३-१५) इत्यादि श्रुतेः । 'न दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन च' (मोक्षधर्मे) इति स्मृतेः । भूताधारोऽपि कथं तदनाधार इत्यत उक्तम् **पश्येत्यादि** । **ऐश्वरम्** ईश्वरसम्बन्धिनम् । **मे योगं** सामर्थ्यम् । 'योगोऽसावुपायः शक्तिरेव च' इति वचनात् । **पश्य** मम तादृशी शक्तिमित्यर्थः। पूर्वत्र 'अव्यक्तमूर्तिना' इति मूर्तावुक्तायां साऽस्मदादीनामिव भिन्नेति भ्रान्तिनिरासाय स्वलक्षणं

भूताधारत्वादिकं स्वदेहस्याप्याह **भूतभृदिति** । **भूतभावनः** भूतानामुत्पत्तिकर्ता । **ममात्मा** मम देहः, अहमिव । **भूतभृत् भूतस्थश्च न** भवति, इत्यर्थः । अत्र 'मम देह' इति वक्तव्ये 'ममात्मा' इत्युक्तिः अचेतनस्य देहस्य कथं भगवल्लक्षणं स्यादिति शङ्का स्यात्, तन्निवृत्तये तस्य चेतनत्वं पृथग्वाच्यं स्यात् । आत्मपदप्रयोगे तु देहत्वं चेतनत्वं द्वयमप्युक्तं स्यात् । आत्मपदस्य देहचेतन-रूपोभयार्थत्वादिति ॥ ५ ॥

***अ०प्र०***— भूताधारोऽपि तदनाधार इत्यत उक्तं **न च मत्स्थानीति** ।

भूतानि[१], मत्स्थानि[२], न च[३], मे ऐश्वरं[५], योगं[६], पश्य[७], किञ्च भूतभृत्[८], भूतभावनः[९], ममात्मा[१०] भूतस्थो न च[११] भूतानि = चराचराणि[१], मत्स्थानि = मयि स्थितानि[२], न च असङ्गत्वादेव मम । ननु तर्हि व्यापकत्वमाश्रयत्वं च पूर्वोक्तविरुद्धमित्याशङ्क्याह मे = मम[४], ऐश्वरं = आसाधारणं[५], योगं = अघटितघटनाचातुर्यं इदं[६], पश्य[७], मदीययोगमायावैभवस्य अवितर्क्य-त्वान्न किञ्चिद्विरुद्धमित्यर्थः । अन्यदपि आश्चर्यं पश्येत्याह । किञ्च भूतभृत् = भूतानि बिभर्ति धारयतीति भूतभृत्[८], भूतभावनः = भूतानि भावयति उत्पन्नकर्ता पालयतीति भूतभावनः[९], एवंभूतोऽपि ममात्मा परं स्वरूपं मम देहः[१०] भूतस्थो न च भवति । अयं भावः— अहमिव भूतभृत् भूतस्थश्च न भवतीत्यर्थः । यथा जीवो देहविभ्रमात् (देहाभिमानात् इति यावत् ।) पालयंश्चाहङ्कारेण तत्संश्लिष्टस्तिष्ठति एवमहं भूतानि धारयन् पालयन्नपि न तेषु तिष्ठामि निरहङ्का-रत्वादिति ॥ ५ ॥

भाष्यम्

**मत्स्थत्वेऽपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह न चेति । "न दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन च" इति हि मोक्षधर्मे । 'संज्ञासंज्ञ' इति च । ममात्मा देह एव भूतभावनः । 'महाविभूते माहात्म्यशरीर' इति हि मोक्षधर्मे ॥ ५ ॥**

***प०टी०***— 'मत्स्थानि सर्वभूतानि' इत्युक्त्वा, कथं 'न च मत्स्थानि' इत्युच्यते ? इत्यत आह **मदिति** । भगवतः स्पर्शाद्यभावे प्रमाणमाह **नेति** । तर्हि तज्ज्ञानं कथम् ? इत्यत आह **संज्ञेति** । संज्ञा वेदः, तेन ज्ञानं यस्य, तत्सम्बोधनम् । 'अहं भूतभावनः' इत्युक्त्वा, 'मम' इति कथमुच्यते ? इत्यत आह **ममेति** । अत्रैव प्रमाणमाह **महाविभूत इति** ॥ ५ ॥

*प्र०दी०*— 'मत्स्थानि सर्वभूतानि' इत्युक्त्वा पुनः कथं 'न च मत्स्थानि' इति व्याहतमुच्यते ? इत्यत आह **मत्स्थत्वेऽपीति** । **स्पृष्ट्वेति** । स्पर्शनेन्द्रियेण तां ज्ञात्वा अन्योन्यधर्मसङ्क्रान्तिमासाद्य चेत्यर्थः । परमेश्वरस्य स्पर्शनाद्यवेद्यत्वे प्रमाणमाह **नेति** । संज्ञया शब्देनैव संज्ञा सम्यक् ज्ञानं यस्यासौ तथोक्तः । 'मत्स्थानि' इत्यादेरुक्तत्वाद् भूतभृत्त्वादिकं पुनरुक्तमित्यत आह— **ममेति** । प्राग् भूताधारत्वादिकं स्वस्योक्तम् । अत्र पुनः 'अव्यक्तमूर्तिना' इति मूर्तावुक्तायां सा अस्मदादीनामिव भिन्नेति भ्रान्तिनिरासार्थं स्वलक्षणं स्वदेहस्योच्यत इत्यर्थः । भूतभावनत्वस्याधिकस्योक्तेश्च न पुनरुक्तिरिति भावेनोक्तं **भूतेति** । स्यादिदं व्याख्यानं यदि भगवद्देहस्येदं भवेत् । तदेव कुतः ? इत्यत आह **महाविभूते इति** । माहात्म्यमेव शरीरं यस्यासौ तथोक्तः ॥ ५ ॥

*भा०दी०*— 'यथा आकाश' इत्यग्रेतनदृष्टान्तानुरोधेनाह **अन्योन्येति** । औष्ण्यशैत्यादिधर्मसम्बन्धमित्यर्थः । **स्वलक्षणमिति** । स्वकीयमसाधारणधर्ममित्यर्थः ॥ ५ ॥

*भा०र०*— ननु पृथिवी-तद्गतभूतानां सम्बन्ध इव भगवत्-तद्गतभूतानामपि सम्बन्धः अवर्जनीय एवेति कथं 'न तथा मयि' इत्युक्तिः ? इत्यत आह **स्पर्शनेन्द्रियेणेति** । **तां** पृथिवीम् इति योग्यकर्मसंयोजनम्, '....ज्ञात्वा' इत्यन्तं 'सृष्ट्वा' इत्यस्य व्याख्यानम् । '....आसाद्य' इत्यन्तं तु तत्तात्पर्यरूपम् । **धर्मसङ्क्रान्तिं** पृथिवी-तद्गतभूतशरीरयोः गन्धादिधर्मसमाश्लेषम् । नन्वाधाराधेयभावे सति अन्योन्यधर्मसङ्क्रान्तिरवर्जनीयैव । किञ्चास्माकं स्पर्शनेन्द्रियेण तदज्ञानेऽपि केषाञ्चित् स्यात् । तेषामपि तदभावे न प्रमाणमित्यतो 'न दृश्यः' इत्यादि प्रमाणोदाहरणमिति भावेन तदवतारयति **परमेश्वरस्येति** । 'न दृश्यश्चक्षुषा' इति श्रवणादित्युक्तम् **स्पर्शनाद्यवेद्यत्व इति** । अदृश्यत्वस्यादित्वेऽपि प्रस्तुतत्वात् स्पर्शनं स्पर्शशब्देनोपात्तम् । अदृश्यत्वं त्वादिपदेनेति ज्ञातव्यम् ।

इन्द्रियादिप्रमाणगोचरस्य कथं प्रमाणत्वं स्यादित्यत आह **संज्ञासंज्ञेति इति भावप्रदीपिका**। तद्वाक्यं अप्रतीतेः व्याचष्टे **संज्ञयेति** । 'संज्ञायते अनेन शब्देन' इति व्युत्पत्त्या संज्ञाशब्दो वेदलक्षणशब्दपरः । सावधारणश्च । द्वितीयसंज्ञाशब्दोऽपि सम्पूर्वाज्जानातेः 'आतश्चोपसर्गे' इत्यङ्प्रत्यये रूपम् । 'यस्य' इति कर्मणि षष्ठी । 'तथोक्तः' इत्यतःपरं 'तत्सम्बुद्धिः' इति योज्यम् । तथा च *भावप्रदीपिका* 'तत्सम्बोधनम्' इति । *मोक्षधर्मे च*– 'नमस्ते देवदेवेश' इत्युपक्रम्य 'सप्तमहाभागयाम्य-संज्ञासंज्ञ-तुषित-महातुषित' इत्यादिना सम्बोधनरूपं भगवत्कर्मकं नारदस्तवनं आम्नायते ।

'इत्यादेः' इत्यत्र आदिपदेन 'न चाहं तेष्ववस्थितः' इत्यस्य ग्रहः । 'इत्यादिकम्' इत्यत्र आदिशब्देन 'न च भूतस्थः' इत्यस्य ग्रहणम् । कृतचोद्यं परिहर्तुं भाष्यतात्पर्यमाह **प्रागिति** । **सा**

मूर्तिः । **स्वलक्षणं** स्वस्य भगवतः असाधारणो धर्मः, भूताधारत्वादिकं स्वलक्षणम् । मूर्ताबुक्तेः स्वाभेदसिद्धेर्न भेदभ्रान्तिर्भवितुमर्हतीति भावः । **भूतभावनत्वस्य** सर्वभूतोत्पादनस्य । अत्र पक्षे न भगवत्परत्वेऽपि पुनरुक्तिशङ्का । 'ममात्मा = मम स्वरूपमहमिति यावत्' इत्युक्तं भवतीति आहुः । **माहात्म्यं** भूताधारत्वादिरूपं भूतभावनत्वादिरूपं च । उक्तमाहात्म्यसम्पन्नशरीरकत्वस्यात्र विवक्षितत्वात् प्रमाणेन प्रकृतार्थसिद्धिरिति हृदयम् । स्पष्टं चैतत् उत्तरप्रस्थाने । 'तथोक्तः' इत्यनन्तरं 'तत्सम्बुद्धिः' इति शेषः । महाविभूते माहात्म्यशरीर इति मोक्षधर्मे सम्बुद्ध्यन्तस्यैव पाठात् ॥५॥

**गीता**

## यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
## तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

***वि०वि०***— असङ्गत्वेन परमात्मनो भूताधारत्वं दृष्टान्तेनोपपादयति **यथेति** । आकाशस्थितोऽपि वायुः यथा स्पर्शादि न आप्नोति तथा मयि स्थितमपि जगदित्यर्थः ॥ ६ ॥

***सा०सं०***— भगवतः सर्वाधारत्वेऽप्यन्योन्यधर्मासङ्क्रान्त्यादि-सम्भावित इत्यतो दृष्टान्तेन तदुपपायति **यथेति** । अवकाशं विनाऽवस्थित्ययोगात् नित्यमाकाशे **स्थितो महान्** वायुः **सर्वत्रगो**ऽपि तत्तद्धर्मान्न आप्नोति । शैत्यसौरभादिकं तु वायुसम्बद्धजलाद्यवयवगतमेव, न वायुगतम् । तथा **सर्वाणि भूतानि मत्स्थानि** नान्योन्यधर्मसङ्क्रान्तिमन्तीत्युपधारयेति ॥ ६ ॥

***अ०प्र०***— यथा[१], नित्यं[२], आकाशस्थितः[३], वायुः[४], सर्वत्रगोऽपि[५], महानपि[६], नाकाशे संश्लिष्यते तथा; शेषं क्रमेणैवान्वयः ।

हे परन्तप ! यथा नित्यं आकाशे स्थितः धोधूयमाणः[१], वायुः[४], सर्वत्रगोऽपि = सर्वत्र गच्छत्यपि[५], महानपि नाकाशे संश्लिष्यते = निरवयवत्वात्तद्धर्मानाप्नोति शैत्यसौरभ्यादिकं तु वायुसम्बन्ध जलाद्यवयवगतमेव भासते न वायुगतं[६], तथा[७], सर्वाणि[८], भूतानि[९], मत्स्थानि = मयि स्थितानि[१०], इति नान्योन्यसङ्क्रान्तमिति[११] उपधारय = जानीहि ॥ ६ ॥

भाष्यम्

**'मत्स्थानि', 'न च मत्स्थानि' इत्यत्र दृष्टान्तमाह यथाऽऽकाशस्थित इति । न हि आकाशस्थितोऽपि वायुः स्पर्शाद्याप्नोति ॥ ६ ॥**

*प०टी०*— भगवदाश्रयत्वेऽप्यस्य स्वस्थितत्वं कथम् ? इत्याशङ्क्य, उत्तरश्लोकमवतार्य व्याचष्टे **मदिति** ॥ ६ ॥

*प्र०दी०*— एकमेकत्राश्रितमित्यत्र असम्भावनाऽभावात् किं तद्दृष्टान्तत्वोक्त्या ? इत्यत आह **मत्स्थानीति** । तत्र स्थितत्वेऽप्यन्योन्यधर्मासङ्क्रान्त्यादावित्यर्थः । तदत्र न प्रतीयत इत्यतो व्याचष्टे **न हीति** । **स्पर्शादि** इति तद्धर्मोपलक्षणम् ॥ ६ ॥

*भा०दी०*— 'इत्यत्र' इत्यन्तस्य तात्पर्यार्थमाह **तत्र स्थितत्वेऽपीत्यादि** । **तदिति** । अन्योन्यधर्मसङ्क्रान्त्यादौ दृष्टान्तत्वमित्यर्थः ॥ ६ ॥

*भा०र०*— " 'मत्स्थानि', 'न च मत्स्थानि' इत्युभयस्य दृष्टान्तमाह" इति भाषणमयुक्तम्? गीतायां 'मत्स्थानि' इत्यस्यैव दृष्टान्ताभिधानात्, इत्याशङ्क्य 'न च मत्स्थानि' इत्यंशोक्ति-तात्पर्यमाह **तत्र स्थितत्वेऽपीति** । 'मत्स्थानि' इत्यनेन तत्र स्थितत्वम्, 'न च मत्स्थानि' इत्यनेन तु तद्धर्मासङ्क्रान्तिरभिसंहिता । तत्र चासम्भावितत्वशङ्कायां तद्व्युदासाय 'दृष्टान्तमाह' इति भाषणं युक्तमेवेति भावः । **तत्** अन्योन्यधर्मासङ्क्रात्यादि । ननु स्पर्शस्याकाशवृत्तित्वाभावात् तद्गतधर्मा-सङ्क्रान्त्युपपादनाय कथं भाष्ये स्पर्शग्रहणमित्यत आह **स्पर्शादीति** । **तद्धर्मोपलक्षणमिति** । विपरीतलक्षणया **स्पर्शशब्देन** निःस्पर्शत्वं ग्राह्यम् । 'आदिशब्देन च शब्दगुणकत्वविवरादिरूपा-काशधर्मग्रह इत्यर्थः । अन्योन्यधर्मासङ्क्रान्तेः प्रस्तुतत्वात् 'वायुधर्मस्पर्शं आकाशो नाप्नोति' इति प्रतिपादनाय भाष्ये 'स्पर्शादि' इत्युक्तमिति नासम्भवदुक्तिकत्वं तस्येति **केचित्** ॥ ६ ॥

*गीताश्लोकत्रयार्थस्तु*—

प्रतिज्ञातं ज्ञानमुच्यते **मयेत्यादिना** । अव्यक्ता = अतीन्द्रिया मूर्तिः = देहो यस्य स तथा तेन, **मया इदं** चराचरात्मकं **सर्वं जगत् ततम्** व्याप्तम् । जगद्व्यापी चेत् त्वं तर्हि सर्वत्र किं न दृश्यसे ? इत्याशङ्कापनोदाय 'अव्यक्तमूर्तिना' इत्युक्तम् । **मत्स्थानि** मयि उपजीवनेन स्थितानि । चशब्दः तुशब्दार्थः । **अहं तेषु** भूतेषु उपजीवनेन नावस्थितः । 'ततम्' इत्युक्त्या जगत आधारत्वं स्वस्याधेयत्वं च प्रतीतम् । तत्प्रतीतिं निरसितुं 'मत्स्थानि' इत्युक्तमिति *स्वामिनः* ॥ ४ ॥

'भूतानि मयि स्थितानि' इत्युक्तौ अर्जुनस्य हृदये काचन शङ्का प्राप्ता— 'यथा पृथिव्यां स्थितानि भूतानि स्पर्शनेन्द्रियेण तां ज्ञात्वा, अन्योन्यधर्मसङ्क्रान्तिमासाद्य च वर्तन्ते, तथा वर्तन्ते चेत्, अनुपलम्भबाधः' इति, तामिमां शङ्कां परिहर्तुमुच्यते **न च मत्स्थानीति** । मयि स्थितत्वे-ऽप्यन्योन्यधर्मसङ्क्रान्तिमासाद्य न तिष्ठन्ति । मम स्पर्शनाद्यवेद्यत्वादेर्न स्पृश्यः । 'स्पर्शनेन' इत्यादि-

मानसिद्धतया अचिन्त्यशक्तेरसङ्गतत्वात्, इति भावेनोक्तम् **ऐश्वरम्** । ईश्वरस्यायं स्वरूपभूत ऐश्वरः, तं **योगं** सामर्थ्यं मम **पश्य** इति । 'अव्यक्तमूर्तिना' इति मूर्ताविक्तायां सा अस्मदादीनामिव भिन्ना, इति भ्रमनिरासार्थं स्वलक्षणं भूताधारत्वादिकं स्वदेहस्याप्युच्यते **भूतभृदिति** । **ममात्मा** देहः **भूतभावनः** भूतानि भावयति = उत्पादयतीति व्युत्पत्त्या सर्वभूतानां उत्पादयिता । प्राग्भूताधारत्वादिकं स्वस्योक्तम् । अत्र पुनः, उक्तभेदभ्रमनिरासार्थं देहस्योच्यत इति न पुनरुक्तिः । किञ्च भगवत उक्तभूताधारत्वानुवादेन भूतोत्पादकत्वस्याधिकस्यात्र निरूपणं क्रियत इति न पुनरुक्तिः । अथं चार्थो भूतभावनत्वस्याधिकस्योक्तेश्च न पुनरुक्तिरिति टीकातोऽवगम्यते ॥ ५ ॥

'तत्र स्थितत्वेऽप्यन्योन्यधर्मसङ्क्रातिः' इत्येतद् दृष्टान्तेनोपपाद्यते **यथेति** । **नित्यं** सदा **आकाशे स्थितः** । तत्रावस्थानं च नैकदेशेन, किन्तु **सर्वत्र गतः** । 'सर्वत्रापन्नयोरुपसङ्ख्यानम्' इति वार्तिकात् सर्वत्रशब्द उपपदे गमेर्डः । एवंविधोऽपि **महान् वायुः** नाकाशधर्मं निःस्पर्शत्वादिकं आप्नोति । **तथा सर्वाणि भूतानि मत्स्थानि** अपि अन्योन्यधर्मसङ्क्रातिरहितान्येव तिष्ठन्ति **इति उपधारय** अवधारयेति ॥ ६ ॥

**गीता**

## सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
## कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥

***वि०वि०—*** ज्ञानप्रदर्शनार्थं प्रलयादिकारणत्वं प्रपञ्चयति **सर्वभूतानीत्यादिना** । कल्पक्षये प्रलयकाले सर्वभूतानि, मदीयां त्रिगुणात्मिकां प्रकृतिम् इति, तानि पुनः कल्पादौ विशेषेण सृजामि ॥ ७ ॥

***वा०ल०—*** 'प्रकृतिं यान्ति मामिकाम्' इत्यत्र मयाऽध्यक्षेण इति वक्ष्यमाणत्वात् मामिकां मदधीनाम् ॥ ७ ॥

***सा०सं०—*** प्रतिज्ञातज्ञानप्रदर्शनाय 'मया' इत्यादिना हरेर्व्याप्तत्वसर्वाधारत्वाद्युक्त्वा, 'न च' इत्यादिश्लोकद्वयेन तदुपपाद्याधुना पुनः प्रतिज्ञातप्रदर्शनार्थं प्रलयादिकारणत्वमाह **सर्वेति** । **कल्पक्षये** प्रलयकाले । **सर्वाणि भूतानि** सजडजीवजातानि । **मामिकां** मदधीनां त्रिगुणात्मिकाम् । **प्रकृतिं यान्ति** तत्र लीयन्ते । **पुनस्तानि** भूतानि । **कल्पादौ** । विशेषेण विविधतया चाहं **सृजामि** ॥ ॥ ७ ॥

*अ०प्र०*— इति प्रतिज्ञातं तत्प्रदर्शनाय मयेत्यादिना हरेर्व्याप्तत्वसर्वाधारत्वादि उक्त्वा न च इत्यादिश्लोकद्वयेन तदुपपाद्य अधुना पुनः प्रज्ञातज्ञानप्रदर्शनार्थं प्रलयादिकारणत्वमाह **सर्वेति** । यद्वा, अङ्गस्यैव योगमायया स्थितिहेतुत्वमुक्तं तथैव सृष्टिप्रलयहेतुत्वं चाह **सर्वभूतानीति** ।

हे कौन्तेय ![1], कल्पादौ[2], सर्वभूतानि[3], मामिकां[4], प्रकृतिं[5], यान्ति[6], पुनस्तानि[7], कल्पक्षये[8], अहं[10] विसृजामीत्यन्वयः ।

हे कौन्तेय ![1], कल्पादौ = सृष्टिकाले[2], सर्वभूतानि = सजडजीवजातानि[3], मामिकां = मदधीनां[4], प्रकृतिं = त्रिगुणात्मिकां यद्वा, अव्यक्ताख्यां जीवरूपां[5], यान्ति मायायां लीयन्ते[6], तानि पूर्वोक्तानि भूतानि पुनः कल्पक्षये प्रलयकाले[8], अहं = अघटनघटनासामर्थ्यवान् लीलाविग्रहोऽहं[10] विसृजामि = विविधतया सृजामि इति लोके प्रवदन्ति ॥ ७ ॥

भाष्यम्

**ज्ञानप्रदर्शनार्थं प्रलयादि प्रपञ्चयति— सर्वभूतानीत्यादिना ॥ ७ ॥**

*प०टी०*— उत्तरश्लोकमवतारयति **ज्ञानमिति** ॥ ७ ॥

*प्र०दी०*— यथा 'मया ततं' इत्याद्युक्तोपपादनार्थान्युत्तरवाक्यानि, न तथा **'सर्वभूतानि'** इत्यादि । किं तु स्वतन्त्रमेव ज्ञानप्रतिपादकमिति भावेन आह **ज्ञानेति** । **प्रलयादीति** । तत्कारणत्वम् 'प्रकृतिं स्वामवष्टभ्य' इति वचनात् ॥ ७ ॥

*भा०दी०*— आदिपदार्थमाह **तत्कारणत्वमिति** ॥ ७ ॥

*भा०र०*— **उक्तोपपादनार्थानीति** । 'मया ततम् इदम्' इति 'मत्स्थानि भूतानि' इति । 'न च मत्स्थानि' इति चोक्तार्थानां 'पश्य मे योगमैश्वरम्' इति हेतुकथनेन, 'यथाऽऽकाशस्थितः' इति दृष्टान्ताभिधानेन चोपपादनादिति भावः । **ज्ञानप्रतिपादनं** ज्ञातव्यार्थोपदेशः । जगद्धर्मस्य प्रलयादेः भगवन्माहात्म्यत्वाभावात् अस्याध्यायस्य च भगवन्माहात्म्यस्पष्टनार्थत्वात् कथं 'प्रलयादि प्रपञ्चयति' इति भाषणमित्यत आह **तत्कारणत्वमिति** । अत एव 'विसृजामि' इति असकृत्सर्जन-कर्तृत्वमुच्यत इति । 'सर्वभूतानि प्रकृतिं यान्ति' इत्यत्रापि 'मया' इति संयोजने प्रलयकारणत्वमेव भाष्याभिमतमिति भावः ॥ ७ ॥

**गीता**

# प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
# भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥

***वि०वि०***— न च प्रकृतिं विना सामर्थ्याभाव इत्युक्तम् । **स्वामिति** । तदुक्तम्— 'साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते । तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत्' इति । प्रकृतेर्वशात् । मायावशत्वादेवावशम् ॥ ८ ॥

***सा०सं०***— सृष्टौ प्रकृतेरनुक्तेः साधनानि विनैव सृष्टिं करोतीति प्रतीतिनिरासायोक्तं विवृणोति **प्रकृतिम् इति** । **स्वां** स्वाधीनाम् । **प्रकृतिं** त्रिगुणात्मिकाम् । **अवष्टभ्य** उपादानतया आश्रित्य । **प्रकृतेर्वशात्** तदधीनत्वाद**वशं** स्वानधीनम् ।

यद्वा, मदधीनप्रकृतिवशत्वादेव अकारवाच्यब्रह्मरूपमदधीनम् । **इमं कृत्स्नं भूतग्रामं पुनः पुनः विसृजामि** । प्रकृत्यादिसाधनावष्टम्भो, न तेन विना स्रष्टुमसामर्थ्यात् । किन्तु लीलयैव । प्रकृत्यादेः साधनताशक्तेर्मदायत्तत्वादिति ज्ञापनाय 'स्वाम्' इति विशेषणोक्तिः । तदुक्तं तदनन्यत्वनये "ॐ युक्तेः शब्दान्तराच्च ॐ" (२-१-१९) इति सूत्रे ॥ ८ ॥

***अ०प्र०***— ननु असङ्गो निर्विकारश्च त्वं कथं सृजसीत्यपेक्षायामाह **प्रकृतिमिति** ।

अथान्वयः— हे कौन्तेय ! अहं प्रकृतेर्वशात्[१], अवशं[२], कृत्स्नं[३], इमं[४], भूतग्रामं[५], स्वां[६], प्रकृतिं[७], अवष्टभ्य[८], पुनः पुनः विसृजामीत्यन्वयः ॥

हे कौन्तेय ! अहं = प्रकृतेर्वशात् प्राचीनकर्मनिमित्ततत्स्वभावबलात् तदधीनत्वाद्वा[१], अवशं = स्वाधीनं यद्वा मदधीनप्रकृतिवशत्वादेव अकार-वाच्यब्रह्मरूपमदधीनमिव यद्वा, कर्मादिपरवशं[२], कृत्स्नं = समग्रं[३], इमं = प्रलये लीनं सन्तं चतुर्विधं इमं[४], भूतग्रामं = समूहं स्थावरजङ्गमात्मकं भूतसमूहं[५], स्वां = स्वीयां स्वाधीनां[६], प्रकृतिं = त्रिगुणात्मिकां[७], अवष्टभ्य अधिष्ठाय = उपादानतयाऽऽश्रित्य[८], पुनःपुनः = प्रतिकल्पादौ[९], विसृजामि = विशेषेण उत्पादयामि । यद्वा, पुनर्विविधं सृजामि प्रकृत्यादिसाधनावष्टम्भो न तेन विना स्रष्टुमसामर्थ्यात् किन्तु लीलयैव प्रकृत्यादेः मदायत्तत्वादिति ज्ञापनाय स्वां इति विशेषणोक्तिः । तदुक्तम्— तदनन्यत्वे इत्युक्तेः शब्दान्तराच्चेति सूत्रेण ॥ ८ ॥

भाष्यम्

**प्रकृत्यवष्टम्भस्तु यथा कश्चित् समर्थोऽपि पादेन गन्तुं लीलया दण्डमवष्टभ्य गच्छति । "सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि" इति मोक्षधर्मे । "सर्वभूतगुणैर्युक्तं दैवं त्वं ज्ञातुमर्हसि" इति च । "विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम् । प्रधानविनियोगस्थः परं ब्रह्माधिगच्छति" इति च । "न कुत्रचिच्छक्तिरनन्तरूपा विहन्यते सस्य महेश्वरस्य । तथाऽपि मायामधिरुह्य देवः प्रवर्तते सृष्टिविलापनेषु ॥" इति ऋग्वेदखिलेषु । "मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे" इति भागवते । "अथ कस्मादुच्यते परं ब्रह्मेति । बृहति बृंहयति च" इत्याथर्वणे । "पराऽस्य शक्तिर्विविधैव श्रूयते" इति च ।**

*प०टी०*— ज्ञानं नाम ज्ञेयम् । प्रकृत्यवष्टम्भेन हरिः सृजति चेदस्वतन्त्र इत्यत आह **प्रकृतीति** । 'तथा' इति शेषः । अस्वातन्त्र्यादेव प्रकृत्यवष्टम्भः किं न स्यात् ? इत्यत आह **सर्वेति** । सर्वभूतगुणास्तदधीना यतोऽतस्तं सर्वभूतविलक्षणं जानीहीत्यर्थः । पञ्चभूततन्मात्रा जीवेश्वराख्याऽपि सप्तसूक्ष्माणि, अवशे षडङ्गभूतानि यस्यासौ तथोक्तः । एवं सुषुप्त्यादौ सकलगुणपूर्णत्वाद्भगवतो नास्वातन्त्र्यमित्यर्थः ।

*प्र०दी०*— तद्विकलस्य भगवतो न सामर्थ्यमिति प्रतीतिनिरासार्थमाह **प्रकृतीति** । 'तथा लीलयैव, न तु केवलस्य सामर्थ्याभावात्' इति शेषः । कुत एतत् ? भगवतः सर्वसामर्थ्यसम्पूर्णत्वस्य प्रमितत्वादित्याह **सर्वेति** । सर्ववस्तुसामर्थ्यैः । **एवं** भूतवत् पारतन्त्र्याद्युपेतम् । किन्तु दैवं देवोत्तमम् । पञ्च महाभूतानि महदहङ्कारौ च **सप्त सूक्ष्माणि** । 'सर्वज्ञता तृप्तिः' इत्युक्तप्रकारेण षडङ्गम् । **प्रधानस्य** मूलप्रकृतेः **विनियोगः** कार्येषु यो व्यापारः । **तत्स्थः** तज्ज्ञानी । **मायामधिरुह्य** प्रकृतिमवष्टभ्य ।

*भा०दी०*— **'एवम्'** इत्यनुवादः । **'भूतवत्'** इति व्याख्या । सर्वज्ञता तृप्तिरित्युक्तप्रकारेणेति । फलितार्थमाह **तज्ज्ञानीति** । प्रधानविनियोगज्ञानीत्यर्थः ।

*भा०र०*— 'प्रकृत्यवष्टम्भस्तु' इति भाष्यान्वयाय शेषमपेक्षितं अनुवर्तयन्नाह **तथा लीलयैवेति** । कृतचोद्यं परिहर्तुं न्यायप्राप्तैवकारव्यावर्त्यमाह **न त्विति** । **एतत्** 'लीलयैव प्रकृत्यवष्टम्भः, न तु सामर्थ्याभावेन' इत्येतत् । सर्वसामर्थ्यसम्पूर्णत्वे नेदं प्रमाणम् ? इत्यतो

भूतशब्दो वस्तुमात्रोपलक्षणमिति व्याचष्टे **सर्ववस्तुसामर्थ्यैरिति** । 'नैवम्' इति प्रमाणे 'एवम्' इत्यस्यार्थः **भूतवदिति** । तत्तात्पर्यं **पारतन्त्र्याद्युपेतमिति** । 'सर्वभूतगुणैर्युक्तं दैवं (त्वं) मां ज्ञातुमर्हसि' इति अर्धगतपञ्चादिशब्दान् व्याख्यास्यन् 'भूतवत् पारतन्त्र्याद्युपेततया ज्ञातुं नार्हसि' इत्युक्तौ पुनः कथं ज्ञातव्यः ? इति पृच्छति **किन्त्विति** । उत्तरमाह **दैवमिति** । देवशब्दात् 'तत्रोत्तमः' इत्यर्थे 'शेषे' इति प्राग्दाणप्रत्ययापवादेन 'देवात् यञञौ' इत्यञ्प्रत्यये 'दैवम्' इति रूपम् । 'अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः' इति पूर्वत्र पुरुषशब्देन भगवतः प्रस्तुतत्वात् सर्वभूतगुणैः = सर्ववस्तुसामर्थ्यैः युक्तं देवोत्तमं मां ज्ञातुमर्हसि' इति श्लोकार्थात् तेन सर्वसामर्थ्य-सम्पूर्णत्वं आवेद्यत इति भावः । 'इति च' इति भाष्ये 'मोक्षधर्मे' इत्यस्यानुकर्षणार्थश्चकारः ।

**इत्युक्तेति** । 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अनन्तशक्तिश्च विभो-र्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य' इति वचनोक्तप्रकारेण षडङ्गं महेश्वरं च विदित्वेत्यर्थः । तत्स्थः = तत्रावस्थितिमानित्यस्य तात्पर्यं **तज्ज्ञानीति** । प्रमाणे 'अलुप्तशक्तिः' इति 'अनन्तशक्तिः' इति च उक्तशक्तेः षडङ्गेष्वङ्गत्वेन प्रविष्टतया सर्वसामर्थ्यसम्पूर्तिर्लभ्येति भावः । 'मायामधिरुह्य प्रवर्तते' इत्युक्ते मायिकं भगवतः कर्तृत्वमिति प्रतीतिः स्यात् । तां निरस्यन् व्याचष्टे **मायामधिरुह्य = प्रकृतिमवष्टभ्येति** । 'सृष्टिविलापनेषु' इत्यत्र प्रतिकल्पं सृष्टिविनाशभावात् बहुवचनम् । आद्यर्थे वा तदिति भाष्यशेषार्थः । अत्रानन्तशक्तित्वं स्फुटं प्रतीयते ।

*भा०र०*— 'मय्यनन्तगुणे' इत्यस्य अनन्ताः = असङ्ख्याता गुणा यस्यासौ अनन्तगुणः, तस्मिन् । '' 'गुणतोऽनन्ते' इति गुणानां प्रत्येकं प्रत्येकं अनवधिकत्वं अनन्तावान्तरविशेषवत्त्वं चाभिप्रेयते'' इति सुधातोऽर्थोऽवगन्तव्यः । अनन्ता विग्रहाः = देहा यस्यासौ अनन्तविग्रहः, तस्मिन्, इति अनन्तगुणत्वादेव सकलसामर्थ्यसम्पूर्णत्वलाभः ।

भाष्यम्

**''विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि'', ''न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप'' इत्यादेश्च । प्रकृतेर्वशादवशम् । ''त्वमेवैतत्सर्जने सर्वकर्मण्यनन्तशक्तोऽपि स्वमाययैव । मायावशं चावशं लोकमेतत्तस्मात्स्रक्ष्यस्यत्सि पासीश विष्णो ॥'' इति गौतमखिलेषु ॥ ८ ॥**

*प०टी०*— प्रकृतेर्वशादवशत्वं हरेरुच्यते, ततस्तस्यास्वातन्त्र्यमेव विवक्षितमित्यत आह **प्रकृतेरिति** । प्रकृतेर्वशादवशत्वम् इत्येतच्छ्रुत्युक्तप्रकारेण ज्ञेयमित्यर्थः ॥ ८ ॥

*प्र०दी०*— कं कः. प्रवोचं प्रावोचत् । 'प्रकृतेर्वशात् विसृजामीति आविद्यकमेवेश्वरस्य कर्तृत्वम् । वस्तुतस्तु निष्क्रियत्वमित्युच्यते' इत्यन्यथाप्रतीतिनिरासाय अन्यथाऽन्वयमाह **प्रकृतेरिति** । कुत एतत् ? इत्यतः पूर्वोक्तार्थसहितेऽत्र प्रमाणमाह **त्वमेवेति** । **एतत्सर्जने** एतस्य लोकस्य सृष्ट्याम् । अन्यस्मिन्नपि पालनादौ सर्वकर्मणि । **तस्मात्** मायावशत्वादेव अवशम् । **एतत्** एतम् । **स्रक्ष्यसि** सृजसि ॥ ८ ॥

*भा०दी०*— **'कम्'** इति अनुवादः, **'क'**ः इति व्याख्या । **पूर्वोक्तार्थसहित इति** । 'प्रकृत्यवष्टम्भस्तु' इत्यादिना उक्तार्थसहित इत्यर्थः । **अत्र इति** । 'अर्थः' इत्यनुषङ्गः । अंशतः अपौनरुक्त्याय आह **अन्यस्मिन्नपि पालनादौ सर्वकर्मणीति** । 'तस्मात्' इत्यस्य अर्थोक्तिपूर्वकं अन्वयमाह **तस्मादिति** । **अत्सि** इत्यादिप्रायपाठादाह **सृजसीति** ॥ ८ ॥

*भा०र०*— 'विष्णोर्वीर्याणि = सामर्थ्यानि' इत्यत्र 'कम्' इत्यनन्वितम् ? अतो व्याचष्टे **कं क इति** । विभक्तिव्यत्ययः छान्दस इति भावः। **'प्रवोचम्'** इत्यत्र 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः, **पुरुषव्यत्ययश्च** छान्दस इति भावेनाह **प्रावोचदिति** । योऽपि पार्थिवपरमाणून् गणयतीति श्रुतिशेषार्थः । 'न ते' इत्यस्य हे विष्णो देव! ते महिम्नः = जगत्सर्जनादिशक्तिरूपस्य परं अन्तं = सीमानं जायमानो न प्राप्नोति, जातो नाप, जनिष्यमाणो नाप्स्यतीत्यर्थश्च तत्त्वप्रकाशिकातोऽवसेयः ।

'प्रकृतेर्वशादवशम्' इति भाष्यस्य प्रकृत्यधीनत्वात् अस्वतन्त्रमित्यर्थः । 'वशः प्रभुत्वाधीनत्ववाञ्छास्तु' इति ह्यभिधानम् । सर्वकर्मशब्देन सर्जनातिरिक्तपालनादिकर्मग्रहणमित्याह **अन्यस्मिन्नपीति** । अपिपदमाकृष्य योजितम् । इदं भगवतः सर्वसामर्थ्यसम्पूर्णत्वे पूर्वोक्तार्थे प्रमाणम् । 'प्रकृतेर्वशादवशम्' इत्येतत् प्रमापयितुं 'मायावशं चावशं लोकमेतत् तस्मात्' इति प्रमाणशेषः । तदन्वयं प्रदर्शयन् व्याचष्टे **तस्मादिति** । 'व्यत्ययो बहुलम्' इति लिङ्गव्यत्यय इति भावेन उक्तम् **एतद् एतमिति** । लकारव्यत्ययोऽप्युक्तशास्त्रादिति भावेनाह **स्रक्ष्यसि सृजतीति** । 'अत्सि', 'पासि' इति साहचर्याल्लडर्थ एव युक्त इति भावः ॥ ८ ॥

**गीता**

**न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**

***वि०वि०***— सकलजगत्कर्तारमपि मां न निबध्नन्ति । कुतः उदासीनवदवस्थितं वस्तुतस्त्वनुदासीनम् । वस्त्वर्थं सादृश्यं विवृणोति **असक्तमिति** । यस्याशक्त्यैव सर्वकर्मशक्तिः कुतस्तस्य कर्मबन्ध इति भावः ॥ ९ ॥

***सा०सं०***— ननु नानाविधां सृष्टिं कुर्वतस्तव जीवस्येव कर्मबन्धोऽस्ति किम् ? इत्यतो नेत्याह **न चेति** । **तानि** सृष्ट्यादीनि । **कर्माणि मां न निबध्नन्ति** । कुतः ? **उदासीनवदासीनम्** । स्वत एव कर्तृत्वं न मायिकं चेत् कथमुदासीनतया वर्तनमित्यत उदासीनतयाऽऽसीनमित्यनुक्त्वा उदासीनवदित्युक्तम् । वस्तुतोऽनुदासीनोऽप्युदासीनसदृशतया वर्तमानमित्यर्थः । किं तत्सादृश्यमित्यत उक्तम् **असक्तं तेषु कर्मस्विति** । उदासीनस्य यथा सक्तिर्नास्ति तथा ममापि तत्र सृष्ट्यादिकर्मणि सक्तिशब्दितस्यादरस्य आयासस्य वाऽभावान्न निबध्नन्ति इत्यर्थः ॥ ९ ॥

***अ०प्र०***— ननु नानाविधसृष्टिकुर्वतः तव जीवस्येव कर्मबन्धोऽस्ति किमित्यतो नेत्याह **न चेति** ।

हे धनञ्जय ![१], तानि[२], कर्माणि[३], उदासीनवत्[४], आसीनं[५], तेषु[६], कर्मसु[७], असक्तं[८], मां[९], न च निबध्नन्तीत्यन्वयः ॥

हे धनञ्जय ! तानि = कर्माणि सृष्ट्यादिकर्माणि[३], तेषु = प्रकृतिकारेषु[६], कर्मसु तत्र सृष्ट्यादिकर्मणि[७], असक्तं सक्तिशब्दितस्य आदरस्य आयासस्य अभावात् असक्तं[८], कर्मासक्तिं बन्धहेतुः स चाप्तकामत्वात् मम नास्ति अत एव उदासीनवत्[४], आसीनं = वर्तमानं[५], एतादृशं मां[९], उदासीनस्य यथा आसक्तिर्नास्ति तथा मामपि[९], न निबध्नन्ति = बन्धं नापादयन्ति[१०] स्वत एव कर्तृत्वं न मायिकं चेत् कथमुदासीनतया वर्तते इति उदासीनतया आसीनवत् इत्युक्तं वस्तुतो न उदासीनोऽप्युदासीनसदृशं तथा वर्तमानं इत्यर्थः ॥ ९ ॥

भाष्यम्

**उदासीनवत्** न तु उदासीनः । तदर्थमाह **असक्तमिति** । "अवाक्यनादरः" इति हि श्रुतिः । "द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥" इति भागवते । यस्यासक्त्यैव सर्वकर्मशक्तिः कुतस्तस्य सर्वकर्मबन्ध इति भावः । "न कर्मणा वर्धते नो कनीयान्" इति हि श्रुतिः । यः कर्माणि नियामयति कथं च तं बध्नाति ? ॥ ९ ॥

*प०टी०*— **उदासीनवदिति** । किं तत्सादृश्यम् ? इत्यतश्चतुर्थपादं सप्रमाणकमवतारयति **तदिति** । साक्षादौदासीन्यमेवार्थः किं न स्यात् ? इत्यत आह **द्रव्यमिति** । अत्र यद्यकर्तृत्वं नाभिप्रायः, तर्हि कथं पूर्वोक्तकर्मालेपेनास्य सङ्गतिः इत्यत आह **यस्येति** । भगवतोऽपि रामकृष्णादिरूपेण बन्धदर्शनात् कथं तस्य न कर्मबन्धः ? इत्येतच्छ्रुत्युपपत्तिभ्यां दूषयति **नेति** ॥ ९ ॥

*प्र०दी०*— स्वतः कर्तृत्वे कथमुदासीनत्वमुच्यते ? इति चेन्न । वतिना तस्य निषिद्धत्वादिति भावेनाह **उदासीनवदिति** । अनुदासीनत्वेऽपि वतिर्व्यर्थः स्यात् । अन्यस्य तदर्थस्याभावादित्यत आह **तदर्थमिति** । वत्यर्थं सादृश्यं स्वयमेव विवृणोतीत्यर्थः । परमेश्वरस्य कर्मसु सक्त्यभावे प्रमाणमाह **अवाक्येति** । सर्वथोदासीन एव किं न स्यात् ? इति चेन्न । तथा सति प्रकृत्यादीनामसत्त्वप्रसङ्गादिति भावेनाह **द्रव्यमिति** ।

यदीश्वरस्य स्वतःकर्तृत्वं स्यात् तदा 'उदासीनम्' इत्येतत् 'न तु मां तानि कर्माणि निबध्नन्ति' इत्यत्र कथं हेतुः स्यात् ? इत्यत आह **यस्येति** । **असक्त्या** अनादरेण । अनायासेनेति यावत् । भगवतोऽपि कर्मबन्धोऽस्ति इति केषाञ्चित् प्रलापो यथा 'विष्णुर्येन' इत्यादि । तन्निरासाय श्रुत्युपपत्ती प्राह **न कर्मणेति** । **नियामयति** नियच्छति ॥ ९ ॥

*भा०दी०*— **अवाक्येतीति** । तदर्थस्तु सप्तमाध्याये उक्त इति भावः । **यथा विष्णुर्येनेत्यादिरिति** । "ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे, विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे । रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः, सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥" (भर्तृहरिः – नीतिशतके) इत्याह इत्यर्थः । 'स्वार्थे णिज्' इति भावेनाह **नियच्छतीति** ॥ ९ ॥

*भा०र०*— **स्वतः** मायां विना । **वतिना** वतिप्रत्ययेन । **तस्य** उदासीनत्वस्य । 'न तु उदासीनः' इति भाष्यभावोक्तिः **निषिद्धत्वादिति** । **अनुदासीनत्वेऽपीति** । यथा स्वतो निष्क्रियत्वावेदनाय उदासीनशब्द इति पक्षे वतिर्व्यर्थ इत्यभिसंहितं, तथा 'अनुदासीनत्वमेवेश्वरस्येति सिद्धान्तेऽपि' इत्यपेरर्थः । **अन्यस्य** प्रकृत्यर्थोदासीनत्वव्यतिरिक्तस्य । 'तदर्हम्' इत्यर्हार्थेऽपि वतिस्मरणात्, तस्य च 'असक्तं' इत्यनेन अप्रतिपादनात् कथमेतदित्यत उक्तं **सादृश्यमिति** । सादृश्यस्य वतिप्रत्ययार्थत्वात् 'असक्तम्' इत्यनेन सादृश्योक्तौ पुनरुक्तिरित्यत उक्तं **विवृणोतीति** । न विद्यते वाक्यम् = अनुग्रहमन्तरेण यस्यासौ अवाक्यः । न विद्यते आदरः = आसक्तिः यस्यासौ नादरः । अवाक्यश्चासौ नादरश्चेत्यवाक्यनादर इति भाष्ये श्रुत्यर्थः । 'द्रव्यम्' इति वचने द्रव्यं = प्रकृत्यादि, स्वभावः = प्रकृत्यादेः परिणामादिरित्यर्थः ।

**कथं हेतुरिति** । उदासीनवदासीनत्वं नाम कर्मस्वसक्तत्वमिति विवृतम् । कर्तृत्वस्य च स्वाभाविकत्वे सर्जनपालनादिकर्मण्यसक्तिशब्दितं अकर्तृत्वं कथमेष्टव्यम् ? तथा च उदासीनत्वस्यासिद्ध्यापात इति भावः । कार्यकर्तृभावसम्बन्धस्यावर्जनीयत्वात् कथमसक्तिरित्यत उक्तम् **असक्त्या अनादरेणेति** । ननु अनादरः तिरस्कारः कर्मसु त्वरणाभावो वा । पक्षद्वयेऽपि भृत्यानुग्रहकातरत्वम् 'जगद्रक्षाकेवलोद्योगिनः' इत्यादिशास्त्रावेदितं परमेश्वरस्य सर्जनपालनादिव्यापारशालित्वं अमङ्गुलं स्यादित्यत आह **अनायासेनेति** । **यावदिति** । आयासमन्तरा सर्जनपालनादिकर्मसमर्थत्वस्य उदासीनवदासीनमित्यनेन बोध्यस्य हेतुत्वेन विवक्षितत्वान्नोक्तचोद्यावकाश इति 'यस्य' इति भाष्यहृदयमिति भावः । **विष्णुर्येनेति** । 'ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे । रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे' इति भर्तृहरिश्लोके प्रकृतोपयुक्तप्रतीकग्रहणमिदम् । **कनीयान्** 'भवति' इति श्रुतौ शेषः । हेतुमण्ण्यन्तत्वेनास्य नियमनकर्तुरभावेन तन्निबन्धनकारयितृत्वायोग इत्यतः स्वार्थिकोऽत्र णिजिति भावेनाह **नियच्छतीति** । 'द्रव्यं कर्म च कालश्च' इति शास्त्रादिति भावः । **तं** कर्मनियन्तारमिति भाष्येऽर्थः । न कर्म भगवतो बन्धकं तन्नियम्यत्वात् । यत् स्वसत्ताप्रवृत्त्यादौ अन्याधीनम्, न तद्बन्धकम्, यथा भृत्यो राजाधीनो न राजबन्धक इत्युपपत्तिर्भाष्योक्तेति भावेन 'श्रुत्युपपत्ती प्राह' इति प्रागुक्तम् ॥ ९ ॥

**गीतातात्पर्यनिर्णयः**

**"विष्णुगान्यप्यतस्थानि भूतान्येष ह्यसङ्गतः ॥" इति च ।**

**ममात्मा मम देह एव । तदनन्यत्वात् । देहस्य अचेतनत्वाशङ्कानिवृत्तये "ममात्मा" इत्याह ॥ ४-९ ॥**

*प्रका०*— मत्स्थानीत्यस्यार्थमाह **विष्णुगानीति** । "भूतभृन्न च भूतस्थो भूतात्मा भूतभावन" इत्यस्यार्थमाह **मम देह इति** । भगवदनन्यत्वाद्देहस्य तल्लक्षणं देहेऽप्यस्ति । द्व्यर्थोऽन्यमात्मशब्दो देहमभिदधाति । तस्य भगवत्स्वरूपत्वेन चेतनत्वं चाभिदधाति इत्यर्थः ॥

***न्या०दी०*— प्रतिज्ञातं ज्ञानमुच्यते 'मया' इति । तत्र "मत्स्थानि सर्वभूतानि", "न च मत्स्थानि भूतानि" इति व्याहतमित्याशङ्कां स्मृत्यैव परिहरति विष्णुगानीति । विष्णोः स्पर्शरहितत्वात् स्पृष्ट्वा तत्रस्थत्वाभावादविरोध इत्यर्थः । ननु "मत्स्थानि**

सर्वभूतानि न चाहं तेष्ववस्थितः" इत्युक्तत्वात् "भूतभृन्न च भूतस्थो ममात्मा" इति पुनरुक्तिरित्यत आह **ममेति** ॥ पूर्वं स्वस्य भूताधारत्वाद्युक्तम् । इदानीं स्वदेहस्येत्यपौनरुक्त्यमिति भावः । ननु भगवल्लक्षणं भूताधारत्वादिकं कथं तद्देहे सम्भवतीत्यत आह **तदिति** ॥ भगवदनन्यत्वाद्देहस्य तत्र भगवल्लक्षणं युक्तमित्यर्थः । नन्वेवं भगवतस्तद्देहस्य चाभेदे पुनः पुनरुक्तिरापन्नेत्यत आह **देहस्येति** ॥ भगवतस्तद्देहस्य च भेदमङ्गीकृत्य देहत्वेन या लोकस्य भगवद्देहेऽप्यचेतनत्वशङ्का जायते तन्निवृत्तयेऽत्र भगवल्लक्षणयुक्ततया तदैक्येन चेतनत्वमुच्यते । अतो न पुनरुक्तिरिति भावः । यद्यत्र देहो विवक्षितस्तर्हि मम देह इति प्रसिद्धशब्दं विहायात्मशब्दप्रयोगे को हेतुरित्यतो वाऽह **देहस्येति** । यद्यत्र मम देह इत्येवोच्येत तर्हि कथमचेतनस्य देहस्य भगवल्लक्षणं स्यादित्याशङ्का स्यात् । तत्परिहाराय तस्य चेतनत्वं च पृथग्वक्तव्यं स्यात् । आत्मशब्दप्रयोगे तूभयमुक्तं स्यात् । द्व्यर्थो ह्ययमात्मशब्दो देहार्थस्तस्य चेतनत्वार्थश्च । अतो ममात्मेत्युक्तमिति भावः ॥ ४-९ ॥

*भा०दी०*— **ज्ञानमिति** । ज्ञातव्यं प्रमेयमुच्यत इत्यर्थः ॥ **स्पर्शरहितत्वादिति** । स्पर्शस्य शक्त्यात्मकत्वेन रामकृष्णाद्यवतारेष्विवाभिव्यक्त्यभावादित्यर्थः ॥ **स्पृष्ट्वेति** । भूतलादौ चैत्रादेरिव स्पर्शनेन्द्रियेण तं ज्ञात्वा शैत्यौष्ण्याद्यन्योन्यधर्मसङ्क्रान्तिमापाद्य ......ति भावः । भूताधारत्वादीत्यादिपदेन भूतस्थत्वाभावग्रहः ॥ **देहत्वेनेति** । हेतुनेति योज्यम् । भगवद्देहोऽचेतनो देहत्वाद्देवदत्तदेहवत् इत्यचेतनत्वशङ्केत्यर्थः ॥ **उभयमिति** । देहत्वं भगवल्लक्षणघटकचेतनत्वं चेत्यर्थः । कथमित्यत आह **द्व्यर्थो हीति** ॥ ४-९ ॥

**गीता**

## मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
## हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥

*वि०वि०*— जगत् प्रकृतिवशम् । त्वमुदासीनश्चेत् तर्हि प्रकृतेरेव स्वातन्त्र्यं प्राप्तमित्यत आह **मयेति** । अध्यक्षो द्रष्टाऽधिपतिर्वा । 'अध्यक्षोऽधिपतिः प्रोक्तो यदक्षाण्यस्य चोपरि ।' इत्यभिधानात् । अध्यक्षेण मया प्रयोजकेन । प्रकृतिः सचराचरम् । सूयते जनयति । न केवलं प्रकृतिप्रसूतिद्रष्टृत्वम् । किन्तु, अनेन हेतुना कर्त्रा जगद्विपरिवर्तते पुनःपुनर्जायते ॥ १० ॥

*वा०ल०*— 'जंगद्विपरिवर्तते' इत्यत्र वि विशेषेण परिवर्तते अनाद्यनन्तकालेऽपि परिवर्तते इत्यर्थः । कर्तुर्ममापि नित्यत्वात्, उपादानप्रकृतेरपि नित्यत्वादिति भावः ॥ १० ॥

*सा०सं०*— ननु पूर्वं 'प्रकृतिं स्वामवष्टभ्य विसृजामि' इत्युक्त्या 'उदासीनवदासीनम्' इत्युक्त्या च निष्क्रियत्वं प्रतीयते । एवं तर्हि प्रकृतिरेव स्वातन्त्र्येण जगत् प्रसूयते, त्वयि तु प्रकृतिसन्निधानात् कर्तृत्वोपचारमात्रमित्यापन्नमित्यत आह **मयेति** । यद्यप्येषा शङ्का 'मामिकाम्' इति 'स्वाम्' इति 'असक्तं तेषु कर्मसु' इत्युक्त्या निरस्ता । तथाऽपि स्वस्वातन्त्र्यं स्पष्टं वक्तुं प्रागुक्तपरिहाराच्छादनेनोक्तां शङ्कां हृदि कृत्वा 'मया' इति श्लोकेन पर्यहार्षीदिति ज्ञेयम् । अध्यक्षेणेति प्रतिपादकेन साक्षात्कारः, तृतीयया च कर्तृत्वमुच्यते । प्रकृतिहेतुकप्रसवं साक्षात्कुर्वता तत्प्रयोजनकर्त्रा च **'मया'** इति दर्शनपूर्वकत्वात् प्रयोजकत्वस्यैवमुक्तिः । यद्वा, अध्यक्षेणाधिपतिना मया प्रकृतिः सचराचरं जगत् प्रसूयते जनयति । अनेन मत्प्रयोजितप्रकृतिरूप**हेतुना** दर्शनपूर्वकं मद्रूपप्रयोजककर्तृरूपहेतुना च । **जगत्** विशेषेण परिवर्तते पुनः पुनर्जायते ॥ १० ॥

*अ०प्र०*— ननु पूर्वं प्रकृतिं स्वामवष्टभ्य विसृजामीत्युक्त्या उदासीनवदासीनमित्युक्त्या च निष्क्रियत्वं प्रतीयते एवं तर्हि प्रकृतिरेव स्वातन्त्र्येण जगत्प्रसूयते त्वयि तु प्रकृतिसन्निधानात्कर्तृत्वं उपचारमात्रं उदासीनत्वे कर्तृत्वानुपपत्तेः कर्तृत्वे चौदासीनत्वानुपपत्तेर्विरोध इत्यापन्नमित्यत आह **मयेति** ।

हे कौन्तेय ![१], अध्यक्षेण[२], मया[३], प्रकृतिः[४], सचराचरं जगत्[५], सूयते[६], अनेन हेतुना[७], जगत्[८], विपरिवर्तते[१०] इत्यन्वयः ।

हे कौन्तेय ![१], अध्यक्षेण = निमित्तभूतेन[२], मया अधिष्ठात्रा[३], प्रकृतिः = माया[४], सचराचरं विश्वं[५], सूयते = जनयति प्रसूयते वा[६], अनेन मदधिष्ठानेन[७], हेतुना = निमित्तेन[८], जगत् = इदं जगत्[९], विपरिवर्तते = विशेषेण प्रभवति पुनःपुनर्जायते[१०] सन्निधिमात्रेणाधिष्ठातृत्वात् कर्तृत्व-मुदासीनत्वं चाविरुद्धमिति भावः । यद्वा, यद्यप्येषा शङ्का असक्तं तेषु कर्मसु इत्युक्त्या च निरस्ता । तथापि स्वस्वातन्त्र्यं स्पष्टं वक्तुं प्रागुक्तपरिहारायार्जुनेनोक्तां शङ्कां हृदि कृत्वा ममेति श्लोकेन परिहारादिति ज्ञेयम् । अध्यक्षेणेति प्रातिपादिकेन साक्षात्कारस्तृतीयया च कर्तृत्वमुच्यते । प्रकृतिहेतुकप्रसवं साक्षात्कुर्वता तत्तत्प्रयोजकता च मयेति प्रदर्शनपूर्वकत्वात्प्रयोजनकस्यैव भुक्तिः । यद्वा, अध्यक्षेण अधिपतिना मया प्रकृतिः सचराचरं जगत् प्रसूयते जनयति । अनेन मत्प्रयोजित-प्रकृतिरूपहेतुना दर्शनपूर्वकं मद्रूपप्रयोजककर्तृरूपहेतुना च जगत् विशेषेण पुनःपुनर्जायते ॥ १० ॥

भाष्यम्

**उदासीनवदिति चेत् स्वयमेव प्रकृतिः सूयत इत्यत आह मयेति । प्रकृतिसूतिद्रष्टा कर्ता अहमेवेत्यर्थः । तथा च श्रुतिः "यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्" इति ॥ १० ॥**

*प०टी०*— 'असक्तम्' इति 'उदासीन'शब्दार्थे कथितेऽपि तदविवेकेन आक्षेपसमाधानाय उत्तरश्लोकमवतार्य सप्रमाणकं व्याचष्टे **उदासीनवदिति** ॥ १० ॥

*प्र०दी०*— कथं तर्हि, 'अहं केवलं द्रष्टैव; प्रकृतिरेव चराचरं सूयते' इत्युत्तरवाक्यमित्यतः तन्निवर्त्याशङ्कां प्रदर्श्य व्याचष्टे **उदासीनवदिति** । भगवतोदासीनसादृश्यं स्वयमेव व्याख्यातम् । तदज्ञात्वा क्रियाऽभाव एवोक्त इति मत्त्वा शङ्कितम् । पुरा 'प्रकृतिं स्वामवष्टभ्य विसृजामि' इत्युक्तम् । इदानीं तु 'उदासीनवत्' इति निष्क्रियत्वमुच्यते ।

एवं तर्हि प्रकृतिरेव सूयते । त्वयि तु तत्सन्निधानात् कर्तृत्वोपचारमात्रमित्यापन्नम् इति तन्निवृत्त्यर्थमिदं वाक्यम् । तत्र 'अध्यक्षेण' इत्यनेन प्रकृतिसूतेः द्रष्टाऽहमेवेत्युच्यते । तृतीयया च तत्प्रयोजककर्ता चाहमेव । न तु तस्याः स्वातन्त्र्यमिति । दर्शनपूर्वकत्वात् प्रयोजकत्वस्य तदुक्तिः। अन्यथा तृतीया व्यर्था स्यादिति भावः । प्रकृतिप्रयोजकत्वं परमेश्वरस्य कुतः ? इत्यत आह **यत** इति । **प्रसूता** सृष्टावभिमुखीभूता । **प्रसूती** प्रसूतिः । **तोयेन** कर्मणा । **व्यससर्ज** विससर्ज । बहुलग्रहणात् ॥ १० ॥

*भा०दी०*— शङ्कानुदयमाशङ्क्य अज्ञानमूलतया तामुज्जीवयति **भगवतेत्यादिना** । **व्याख्यातमिति** । असक्तपदेनेत्यर्थः । अधुना शङ्कापरभाष्यार्थमाह **पुरेत्यादिना** । **इति शङ्कितमिति** । इतिपदस्य पूर्वेणान्वयः । **इत्यनेनेति** । प्रातिपदिकेनेत्यर्थः ।

'मया' इति तृतीययैव प्रयोजककर्तृत्वलाभात् 'तत्र अध्यक्षेण' इति किमर्थम् ? इत्यत आह **दर्शनेति** । **अन्यथेति** । द्रष्टृत्वमात्रस्याभिमतत्वे 'अहम् अध्यक्ष' इत्येव ब्रूयादित्यर्थः । **बहुलग्रहणादिति** । षष्ठान्त्यपादे अडागम-तन्निषेधप्रकरणे 'बहुलं छन्दस्यमाङ्योगेऽपि' इति बहुलग्रहणं तु लुङ्,लङ्,लृङ्भ्योऽन्यत्रापि लकारे अडागम इत्यर्थः । अडागमाभावमात्राभिप्राये 'छन्दस्यमाङ्योगेऽपि' इत्येव ब्रूयादित्यर्थः ॥ १० ॥

*भा०र०*— **तर्हि** यदीश्वरस्य स्वतःकर्तृत्वं स्यात् तर्हीत्यर्थः । 'मयाऽध्यक्षेण' इत्यस्य तात्पर्यं **अहं केवलं द्रष्टैवेति** । **सूयते** जनयति । **सादृश्यं** कर्मसु व्यासक्त्यभावलक्षणं व्याख्यातम् । 'असक्तं तेषु कर्मसु' इति विवृतम् । **तदज्ञात्वा** स्वकृतव्याख्यानं आच्छाद्य इति । **इति मत्त्वेति** । उदासीनशब्दस्य क्रियामात्राभाववत् बोधकत्वस्य आपाततोऽवगमादिति भावः । 'शङ्कितम्' इत्येतदेव विशदयति **पुरा प्रकृतिमिति** । विसर्गशब्दितजगत्सृष्टिलक्षणक्रियाकर्तृत्वं आख्यातेनाभिहितमित्यर्थः ।

**इत्यापन्नमितीति** । इतिशब्दस्य 'शङ्कितमिति' इति पूर्वेण सम्बन्धः । कर्तृतृतीयातात्पर्यं **द्रष्टाऽहमेवेति** । **तृतीयया** 'अध्यक्षेण मया' इत्यत्रत्यतृतीयया । अन्यत्र तृतीयाऽयोगात् 'कर्तृकरणयोस्तृतीया' इति शास्त्रादत्र कर्तर्येव तृतीयेति भावेनोक्तं **कर्ता चाहमेवेति** । **स्वातन्त्र्यमिति** । 'उच्यते' इत्यनुवर्तते । ननु 'त्वयि कर्तृत्वोपचारमात्रम्' इत्याक्षेपे 'अहमेव स्वतन्त्रः कर्ता, नान्यः' इति परिहारसमर्पकं 'मया' इत्येतदेव वक्तुमुचितम्, नतु 'अध्यक्षेण' इत्येतदपि ? प्रयोजनादर्शनात्, इत्यत आह **दर्शनेति** । **तदुक्तिः** 'अध्यक्षेण' इति विशेषणोक्तिः । 'अहं केवलं द्रष्टैव, प्रकृतिरेव चराचरं सूयते' इति प्रागुक्तापातप्रतीतार्थाङ्गीकारे बाधकमाह **अन्यथेति** । द्रष्टृत्वमात्रस्याभिमतत्वे 'अहमध्यक्षः, प्रकृतिस्तु सूयते' इत्येवावक्ष्यत् तृतीयाविभक्तिर्न तत्र प्रयोक्तव्येत्यर्थः । **प्रकृतिप्रयोजकत्वं** प्रकृतिकर्तृकसृष्टौ प्रयोजककर्तृत्वम् । नन्वत्र श्रुतौ परमेश्वरस्य प्रकृतिं प्रति प्रयोजकत्वं न प्रतीयते, प्रकृतेर्भगवत्प्रसूतत्वं प्रकृतावनुपयुक्तमेव च प्रतीयते ? इत्यत आह **प्रसूता सृष्टावभिमुखीभूतेति** । 'कृदिकारात्' इत्यत्र 'अक्तिनः' इति पर्युदासादाह **प्रसूती प्रसूतिरिति** । विसर्गस्य ईकारश्छान्दस इति भावः । तथा च द्वादशे 'यतः प्रिया सा जगतः प्रसूतिः' इति भाष्ये । 'तोयेन' इत्यनुवादः, 'कर्मणा' इति व्याख्यानम् । तन्नामसु पाठादिति भावः । लिट्यडागमच्छान्दसत्वादिति तदर्थमाह **विससर्जेति** । छन्दस्यडागमे प्रमाणोक्तिः **बहुलग्रहणादिति** । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति सूत्रे ॥ १० ॥

**गीतातात्पर्यनिर्णयः**

**"अध्यक्षोऽधिपतिः प्रोक्तो यदक्षाण्यस्य चोपरि ॥"**

**—इति शब्दनिर्णये ॥ १० ॥**

*प्रका०*— 'मयाध्यक्षेणे'त्यत्र अध्यक्षपदार्थमाह **अध्यक्षोऽधिपतिरिति** । अधिविश्वमधिकृत्याक्षाणि चक्षूंषि वर्तन्ते यस्यासावध्यक्ष इत्यर्थः ॥

***न्या०दी०***— जगत्प्रकृतिवशं त्वमुदासीनश्चेत् तर्हि प्रकृतेरेव स्वातन्त्र्यं प्राप्तमित्यत उच्यते 'मया' इति । तत्रापि अध्यक्षपदेन औदासीन्यमेवोच्यत इत्यन्यथाप्रतीतिनिरासाय तत्स्मृत्यैव व्याचष्टे **अध्यक्ष इति** ॥ एतदधिकृत्याक्षाणि यस्यासावध्यक्ष इत्यर्थः ॥ १० ॥

***भा०दी०***— अस्य चोपरीत्यनेन लब्धं विग्रहं दर्शयति **एतदधिकृत्येति** । एतत् विश्वमित्यर्थः । अक्षाणि इत्यस्यार्थः **अक्षाणि यस्यासाविति** । **अक्षाणि** चक्षूंषि ।

**गीता**

## अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
## परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥

***वि०वि०***— यद्येवंविधो भगवान् तर्हि कथं केचित्त्वामवजानन्ति, का च तेषां गतिरित्यत आह **अवजानन्तीत्यादिना** । मानुषीं मनुष्यसदृशीम् । मूढैर्मनुष्यसदृशत्त्वेन प्रतीयमानां न तु मनुष्यरूपाम् । तनुमाश्रितम् । अनन्यत्वेऽपि विशेषशक्त्या व्यञ्जयन्तं मामवजानन्ति । मूढाः तामसाः । भूतं सर्वदा विद्यमानम् । महान्तं व्यापिनमीश्वरम् अनन्तगुणम् । भावं याथार्थ्यम् अजानन्तः । **अवज्ञानस्वरूपं प्रोक्तम्**—

'ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता ।
प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता ॥

धर्मदेहावतारादेर्भेददृष्टिश्च सङ्करः ।
अवतारेष्विति ज्ञेयमवज्ञानं जनार्दने ॥' इत्यादिना ॥ ११ ॥

***बा०ल०***— 'मानुषीं तनुम्' इत्यत्र मानुषीं मानुषशरीरवद्दृश्यमानाम् । परं भावं स्वभावम्, अनुभावं वा ॥ ११ ॥

***सा०सं०***— यद्येवं भवान् जगतः सृष्टिस्थितिसंहाराणां कर्ता तर्हि कुतः केचित् त्वामवजानन्ति । अवज्ञानेऽपि तेषामनर्थाभावात् सर्वकर्ता अहमिति प्रागुक्तमयुक्तमत आह **अवजानन्ति** इत्यादिद्वयेन ॥ **मानुषीं तनुमाश्रितं** मानुषदेहमधिष्ठितोऽयमिति मूढलोकभ्रान्तिविषयं **मामिति** वा । अज्ञानामवज्ञानकारणतया मानुषीं मनुष्यदेहसादृश्येन प्रतीयमानां तनुम्, आश्रितमिति वाऽर्थः । एतेनात्र हरेः मानुषदेहोक्तेस्तस्य चाधारेणान्योन्यधर्मसङ्क्रान्त्यादेरवश्यम्भावात् 'भूतभृन्न च भूतस्थः' इति प्रागुक्तिरयुक्तेति निरस्तम् । तथा तनुतनुमतोरभेदेऽपि 'आश्रितम्' इत्युक्तिश्च चैत्रदेहश्चैत्राधीनो

यथा तथा भगवद्देहोऽपि स्वाधीन इति स्वाधीनत्वगुणयोगाद्गौणीति 'ममात्मा' इत्यत्रत्याभेदोक्तिर्न विरुद्धेति ज्ञेयम् । एतादृशं **माम्** । **मूढाः** तामसाः । **भूतमहेश्वरं** भूतं सदा विद्यमानं महान्तमीश्वरं गुणपरिपूर्णम् । **परं** उत्तमम्। मम **भावं** याथार्थ्यम्। **अजानन्तोऽवजानन्ति** अवमतया जानन्ति । 'ब्रह्मरुद्ररमादीनां साम्यदृष्टिः' इत्यादितात्पर्योक्तदिशा अन्यदप्यवज्ञानं ज्ञेयम् ॥ ११ ॥

*अ०प्र०*— यद्येवं भगवान् जगतः सृष्टिस्थितिसंहाराणां कर्ता तर्हि कुतः ? केचित्त्वां अवजानन्ति अवज्ञानेऽपि तेषां अनर्थाभावात् सर्वकर्ताऽहमिति प्रागुक्तं अयुक्तमित्यत आह **अवजानन्ती**त्यादिश्लोकद्वयेन ।

ननु एवम्भूतं परमेश्वरं किमिति केचिन्नाद्रियन्ते तत्राह द्वाभ्याम् । हे कौन्तेय !, मूढाः[१], मम[२], परं[३], भावं[४], अजानन्तः[५], भूतमहेश्वरं[६], मां[७], मानुषीम्[८], तनुं आश्रितमिति[९], अवजानन्ति[१०] इत्यन्वयः ।

मूढाः = तामसाः यद्वा, स्थूलदृष्ट्या यः[१], मम परमात्मनः[२], परं = उत्तमं[३], भावं याथार्थ्यं तत्त्वं वा अजानन्तः एवमजानन्तः सन्तो[५], भूतमहेश्वरं = भूतानां महांश्चासौ ईश्वरश्च । यद्वा, भूतं सदा विद्यमानं महान्तं ईश्वरं गुणपूर्णं पूर्णं[६], मां[७], मानुषीं = अज्ञानां अवज्ञानकरणतया मनुष्यदेहे सादृश्येन प्रतीयमानां[८], तनुं = देहं आश्रितमिति[९], शुद्धसत्त्वमयीं तनुं भक्तेच्छावशात् मानवाकारमाश्रितवतं मनुष्यदेहमधिष्ठितोऽयमिति[९], अवजानन्ति = अवमतया जानन्ति अवमन्यते वा स्थूलदृष्ट्या अयथावद्विजानन्ति अत एव पूर्वोक्तमजानन्तीत्यर्थः ॥ ११ ॥

भाष्यम्

**तर्हि केचित् कथं त्वामवजानन्ति ? का च तेषां गतिः ? इत्यतः आह अवजानन्तीत्यादिना । मानुषीं तनुं मूढानां मानुषवत् प्रतीतां तनुम् । न तु मनुष्यरूपाम् । उक्तं च मोक्षधर्मे– "यत्किञ्चिदिह लोके वै देहबद्धं विशाम्पते । सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः । ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट्। भूतान्तरात्मा वरदः सगुणो निर्गुणोऽपि च । भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम" इति ।**

*प०टी०*— ननु 'यदि त्वं सर्वकर्ता निर्दोषः, तर्हि कथं त्वां केचिद्द्विषन्ति ? निर्दोषद्वेषेण तेषां कथं नाशो गतिः स्यात् ? अतः सदोष एव त्वम्' इत्याशङ्कोत्तरत्वेनोत्तरश्लोकद्वयमवतारयति

**तर्हीति** । ननु मानुषीं तनुमाश्रितं द्विषन्तः कथं मूढाः ? इत्यत आह **मानुषीमिति** । मनुष्यरूपैव किं न स्यात् ? इत्यत आह **उक्तं चेति** ।

*प्र०दी०*— उत्तरवाक्यस्य सङ्गत्यप्रतीतेस्तामाह **तर्हीति** । यदि त्वमेव जगतः सृष्टिस्थिति-संहाराणां कर्ता । कैश्चिदवज्ञानात् । तेषां च अनर्थाभावादुक्तमसदिति शङ्काभिप्रायः । 'मानुषीं तनुमाश्रितं' इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे **मानुषीमिति** । भ्रान्त्यनुवाद एवायमिति भावः । कुतो न ? इत्यत आह **उक्तं चेति** । **चः** हेतौ । शरीराणि हि भौतिकानि भवन्ति । भूतानि च ईश्वरस्य बुद्धिजानि । तत्कथं तानि बध्नीयुरित्यर्थः ।

अत्रैव **'ईश्वरो हि'** इत्यादिना अन्ये हेतवोऽभिधीयन्ते । **विराट्** नित्याभिव्यक्तरूपः । **वरदः** मोक्षप्रदः । **सगुणः** स्वातन्त्र्यादिगुणवान् । भूतानि प्रलीयन्ते यस्मिन् तत् । **अव्यक्तं** तदभिमानिनी देवता । तस्य **शुश्रूषुः** । लिङ्गव्यत्ययश्छान्दसः ।

*भा०दी०*— तर्हि इत्यस्य आकाङ्क्षितमाह **यदीत्यादि** । अध्याहारेण योजनामाह **तस्य शुश्रूषुरिति** । नञा निर्दिष्टस्य नित्यत्वात् उप्रत्यययोगेऽपि 'न लोकाव्ययनिष्ठा' इति षष्ठीनिषेधो नेत्यर्थः ।

*भा०र०*— 'का च' इति भाष्यभावं सपरिकरमाह **कैश्चिदिति** । तनुश्चेद् अमानुषी तर्हि 'मानुषीम्' इति कथं भगवतोऽभिलापः ? इत्यतो 'मूढानाम्' इति भाष्यभावमाह **भ्रान्तीति** । मनुष्यशब्दात् सम्बन्धार्थेऽणि, ङीपि 'हलस्तद्धितस्य' इति यकारलोपे 'मानुषीम्' इति रूपमिति भावः ॥ **कुत इति** । मानुष्यरूपमिति कुतो नेत्यर्थः । 'न' इति साध्ये हेतुसम्पत्तय आह **चो हेताविति** । 'उक्तं च' इत्यत्र चशब्दो हेतुसमर्पको व्याख्येय इत्यर्थः । 'यत्किञ्चित्' इत्यादि-त्रिपादीतात्पर्यमाह **शरीराणीति** । **तानि** भूतानि, 'तम्' इति शेषः ।

**अत्रैव** ईश्वरस्य देहसम्बन्धाभाव एव । ईश्वरत्वं बन्धकदेहजिहासुत्वे सति तत्र शक्तत्वमत्र विवक्षितम् । 'बाहुजः क्षत्रियो विराट्' इत्यभिधानात् 'विराट्'शब्दः क्षत्रियवचन इति कथं तस्य देहाबद्धत्वे हेतुसमर्पकत्वमित्यतो व्याचष्टे **विराट् नित्याभिव्यक्तरूप इति** । विशेषेण राजन्नि-त्याभिव्यक्तरूपात् निमित्तात् विराट्शब्दो भगवति वर्तते । नित्यव्यक्तविग्रहस्य च प्रत्यग्रशरीर-ग्रहणमनुचितमिति भावः । वरदत्वं रुद्रादिसाधारणम् ? इत्यतो विवक्षितमर्थमाह **मोक्षप्रद इति** । निर्विशेषणवरशब्देन वरणीयमुख्यो मोक्षो ग्राह्यः । सर्वमोक्षप्रदानसमर्थस्य च स्वबन्धकदेहयोगो

न युक्त इति भावः । सगुणत्वं = गुणत्रयवत्त्वं बन्धानुकूलमेवेति साध्यविपरीतव्याप्तम्, 'सगुणो निर्गुणः' इति विप्रतिषिद्धं च ? इत्यतो व्याचष्टे **सगुणः स्वातन्त्र्यादीति** । निर्गुणोऽपि = सत्त्वादिगुणहीनोऽपीति भाष्यार्थः । 'प्रलीयन्तेऽस्मिन्' इति प्रपूर्वात् लीङ् = श्लेषणे इति धातोरधिकरणे 'एरच्' इत्यच्प्रत्यये, अधिकरणे अच्प्रत्ययान्तस्य च विशेष्यनिघ्नत्वात् नपुंसकत्वमिति भावः । शुश्रूषत्वमचेतने अव्यक्ते घटयितुमुक्तं **तदभिमानिनीति** । **तस्य** प्रस्तुतनारायणस्य जिज्ञासुरपि योगस्य इत्यत्रेवात्रापि षष्ठी निर्वाह्या । अव्यक्तविशेषणत्वात् 'शुश्रूषु' इति वाच्ये कथं लिङ्गान्तरमित्यत आह **लिङ्गव्यत्यय इति** । 'सुप्तिङुपग्रहलिङ्गनराणाम्' इति शास्त्रादिति भावः । 'अंशो नानाव्यपदेशात्' इत्यधिकरणे *चन्द्रिकायां तु*— " 'शुश्रूषुः' इत्यत्र जीवनिष्ठशुश्रूषां प्रति प्रकृतो नारायण एव विषयत्वेन सम्बध्यत इत्याह **शुश्रूषुस्तस्येति** । एवं च भूतसम्बन्धाधीनप्रलयादिमत्त्व-अकार्यत्वप्रवृत्तिनिमित्तकाभ्यां भूतप्रलय-अव्यक्तशब्दाभ्यां उक्तो जीवसमूहः, तस्य नारायणस्य शुश्रूषुर्मोक्षार्थं जिज्ञासुरिति योजनेति भाव इति व्याख्याय, *तत्त्वप्रदीपे तु*— "भूतप्रलयस्थानभूता अव्यक्तशब्दिता श्रीः प्रकृतस्य नारायणस्य शुश्रूषुः, 'ये चाप्यक्षरमव्यक्तम्' इति स्मृतेः' इति प्रकारान्तरेण योजितम्" इत्युक्तम् ।

भाष्यम्

**अवतारप्रसङ्गे चैतदुक्तम् । अतो नावताराः पृथक् शङ्क्याः । "रूपाण्यनेकान्यसृजत् प्रादुर्भावभवाय सः । वाराहं नारसिंहं च वामनं मानुषं तथा" इति ।**

*प०टी०*— ननु मूलरूपस्य नारायणस्यामनुष्यत्वेऽपि कृष्णाद्यवताराणां तत्किं न स्यात् ? इत्यत आह **अवतारेति** । मनुष्यादिजन्युत्पत्तेः पूर्वमेव कृष्णाद्यवतारविभागोक्तेश्च न तेषां मानुषत्वमित्याह **रूपाणीति** ।

*प्र०दी०*— अस्त्वेतत् मूलरूपविषयम् । अवतारस्य तु कृष्णस्य मानुषत्वं भवत्वित्यत आह **अवतारेति** । 'यत् तत् ददर्शिवान् ब्रह्मा रूपं हयशिरोधरम्' इति हयग्रीवावतारप्रसङ्गेऽस्तु हयग्रीवस्यैवम् । कृष्णस्तु मानुषशरीर एव किं न स्यात् ? इति चेन्न । युक्तिसाम्यात् ।

विशेषप्रमाणाच्चेत्याह **रूपाणीति** । असृजत् व्यभजत् । **प्रादुर्भावभवाय** उत्तरत्र ; **सः** नारायणः । **मानुषं** कृष्णादिकम् ।

*भा०दी०*— 'प्रादुर्भावभवाय' इत्यत्र शेषमाह **उत्तरत्रेति** ।

*भा०र०*— **एतत्** मोक्षधर्मवचनम् । नावताराः पृथक् शङ्क्या इति भाष्यं विवृण्वन्नेव उत्तर-ग्रन्थमवतारयति **अस्त्विति** । **एवं** मूलरूपस्येवाबन्धकत्वरूपत्वम् । वराहनरसिंहादेरुत्पत्त्यभावादाह **असृजद् व्यभजदिति** । **प्रादुर्भावभवाय** प्रादुर्भावसम्भवाय, 'उत्तरत्र' = रूपविभागोत्तरकाले, इति विशेषोक्तिः । 'देवमानुषरूपं = वराहादि देवम्, रूपम् = वामनाख्यम्' इति स्थिते, मानुषं मनुष्यवत् प्रतीयमानं परिशेषाद् रामकृष्णादिरूपमिति भावेनोक्तम् **मानुषं कृष्णादिकमिति** ।

भाष्यम्

**तत्रैव प्रथमसर्गकाल एव अवताररूपविभक्त्युक्तेश्च । अतो न तेषां मानुषत्वादिर्विना भ्रान्तिम् । भूतं महदीश्वरं चेति भूतमहेश्वरम् । तथा हि बाभ्रव्यशाखायाम्– "अनाद्यनन्तं परिपूर्णरूपमीशं वराणामपि देववीर्यम्" इति । "अस्य महतो भूतस्य निश्वसितम्" इति च । "ब्रह्मपुरोहित ब्रह्मकायिक महाराजिक" इति च मोक्षधर्मे ॥ ११ ॥**

*प०टी०*— उपसंहरति **अत इति** । भूतानां महेश्वर इत्येतावानेवार्थो न 'भूतमहेश्वर'पदस्येत्याह **भूतमिति** । तत्रैव प्रमाणमाह **तथा हीति** । ब्रह्मकायिकेति देवनिकायनियामकत्वेन ईश्वरमुच्यते ॥ ११ ॥

*प्र०दी०*— **तत्रैव** मोक्षधर्म एव । प्रथमसर्गकाल एव । मानुषादिजात्युत्पत्तेः प्रागेवेत्यर्थः । उपसंहरति **अत इति** । **तेषाम्** अवताराणाम् । उत्तरपदविरोधश्चान्यथेति भावेन तद्व्याचष्टे **भूतमिति** । **भूतं** सर्वदा विद्यमानमिति कालानन्त्यमाचष्टे । **महदिति** देशात्यनन्त्यम् । **ईश्वरमिति** गुणानन्त्यम् । **भावं** याथार्थ्यमिति व्याख्यानापेक्षया नपुंसकम् ।

अत्र श्रुतिं पठति **तथा हीति** । ईशं वराणामिति **ईश्वरम्** । षष्ठ्याः परनिपातः । देवाः वीर्यं पुत्रा यस्यासौ तथोक्तः । 'महतो भूतस्य' इति देशकालानन्त्यमुच्यते । वराणां देवानां ईशत्वे 'ब्रह्म' इति मोक्षधर्मवाक्यं प्रमाणम् । पुरोहितादिदेवनिकायास्त्वदधीना इत्यर्थः । 'ब्रह्म' इति द्विरुक्तिरादरार्था ॥ ११ ॥

*भा०दी०*— ननु 'परं भावम्' इत्यत्र भावशब्दस्य पुलिङ्गत्वात् तद्विशेषणीभूत'भूतमहेश्वर'-पदव्याख्यानपर इति भाष्ये 'महान्तम्' इत्यनुवादो युक्तो न तु महदिति शङ्कां निराह **भावमिति** । अत्र भावपदस्य भाष्यकृदव्याख्यानेऽपि 'परंभावमजानन्तो ममाव्ययमनुत्तमम्' इत्यत्र सप्तमे

व्याख्यातत्वात् तद्व्याख्यानमत्राप्यनुसन्धास्यन्ति शिष्या इति भावेन तदपेक्षया महदित्यनुवाद इत्यर्थः । **'ईश्वरम्'** इत्यस्य 'ईशं वराणाम्' इति विग्रहोक्तौ 'वरेशम्' इति स्यात् । 'उपसर्जनं पूर्वम्' इति षष्ठ्यन्तस्य पूर्वनिपातेन भाव्यत्वादित्यत आह **षष्ठ्या इति** । श्रौतनिरुक्तिबलादेव परनिपात इति भावः । का च तेषां गतिरित्यस्यार्थतोऽनुवादः ॥ ११ ॥

*भा०र०*— ननु मोक्षधर्मे पाद्मसृष्ट्यनन्तरं भूभारोद्धाराय भगवदवतारविभागोक्तेः कथं 'प्रथमसर्गकाले' इत्युच्यते ? इत्यत आह **मानुषादिजातीति** । अत्र **प्रथमसर्ग**शब्देन मानुषादिजात्युत्पत्तिप्राक्कालाधिकरणकसर्ग एव ग्राह्य इति न मोक्षधर्मविसंवाद इति भावः । भ्रान्तिं विना तेषां = अवताराणां मानुषदेहयोगादिर्नास्तीति भाष्यार्थः । **अन्यथा** अवताराणां मानुषशरीरादिभावाभ्युपगमे । 'जीवभूतां महाबाहो' इत्यत्र सप्तमे 'भूता = सर्वदा स्थिता' इति व्याख्यातत्वादाह **सर्वदा विद्यमानमिति** । **गुणानन्त्यमिति** । न हि देश-काल-गुणैरनन्तस्य कृष्णस्य मनुष्यतन्वाश्रयणं युक्तमिति भावः । ननु गीतागतभावशब्दस्य पुल्लिङ्गत्वात् तद्विशेषणे 'भूतमहेश्वरम्' इत्येतत्पदेऽपि पुल्लिङ्ग एव वक्तव्ये, 'भूतं महान्तं ईश्वरम्' इत्येव भाषणीयम् । 'महत्' इति तु क्लीबत्वं कथमित्यत आह **भावमिति** । 'परं भावमजानन्तो ममाव्ययमनुत्तमम्' इति सप्तमे 'भावं = याथार्थ्यम्' इति व्याख्यानात् तदपेक्षया इहापि नपुंसकलिङ्गं प्रयुक्तमित्यर्थः । बहुलग्रहणात्तु विशेषणानामपि समास इति भावः ।

अत्र = भगवतो भूतत्त्वे, महत्त्वे, ईश्वरत्वे चेति वदता 'अनाद्यनन्तम्' इति कालानन्त्यम्, 'परिपूर्णरूपम्' इति देशानन्त्यम्, 'वराणां = देवानाम्' इति च गुणानन्त्यं ग्राह्यमिति श्रुतिर्व्याख्याता भवति । ननु 'वराणामीशम्' इति विग्रहाभ्युपगमे 'वरेशम्' इत्येव समासः स्यात्, न तु 'ईश्वरम्' इति ? इत्यत आह **षष्ठ्याः परनिपात इति** । 'दन्तानां राजा राजदन्तः' इत्यत्र यथा षष्ठ्यन्तमुपसर्जनमपि परतो निपात्यते, तथा 'वराणामीशम्' इत्यत्रापि 'वराणाम्' इति षष्ठ्यन्तस्य परनिपातो वक्तव्यः । निरुक्तत्वात् ईशशब्दाकारलोपश्च । सति चैवम् 'ईश्वरम्' इति रूपमिति, 'वरेशम्' इति स्यादिति चोद्यमनवकाशमिति भावः । चतुर्थे तु ईशेभ्योऽपि वर ईश्वरः' इति प्रकारान्तरमुक्तम् । उपादानोपादेययोरभेदादेव वीर्यपदं पुत्रपरमिति भावेनाह **वीर्यं पुत्रा इति** ॥ **देशकालेति** । 'महतः' इति देशानन्त्यम्, भूतस्य = सदा विद्यमानस्य' इति कालानन्त्यमुच्यत इत्यर्थः । 'निश्वसितं ऋग्वेदादिविद्याजातं अनायासेनादिकाले तेनोच्चारितम्' इति श्रुतिशेषार्थः ऋग्भाष्यटीकायां उक्तः । प्रकृतार्थे प्रामाण्याय, ब्रह्मणः पुरोहितादितादात्म्यानुपपत्तिपरिहाराय च आह **पुरोहितादीति** । **देवनिकायाः** देवगणाः ।

ननु पुरोहितादीनां कथं गणदेवतात्वम् ? इत्यतो भाष्ये 'महाराजिक' इत्युक्तम् । तस्य अयमभिप्रायः— महाराजिकशब्दस्तावत् गणदेवतावचनः । 'महाराजिकसाध्याश्च रुद्राश्च गणदेवताः' इत्यभिधानात् । ततः पूर्वं पठितस्य पुरोहितादिशब्दस्यापि गणदेवतार्थत्वमेव । ततःपरं 'आभास्वर-महाभास्वर-सप्तमहाभाग-याम्य-संज्ञासंज्ञ-तुषित' इति आभास्वर-तुषितशब्दौ पठ्येते । तावपि 'आदित्य-विश्ववसवः तुषिताभास्वरानिलाः' इत्यभिधानात् गणदेवतावचनाविति तत्सहपठितपुरोहितादिशब्दोऽपि देवनिकायार्थ एव इति सम्बोधनस्य तात्पर्यम् । **त्वदधीना इति** । 'नपुंसकानां नलोपो वाच्यः' इति शास्त्रात् 'ब्रह्म' इति सम्बुद्धौ रूपम् । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते इति वचनादिति भावः । **आदरेति** । अभ्यासाच्च तत्र तात्पर्यं ज्ञायत इति भावः ॥ ११ ॥

**गीता**

# मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
# राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥

***वि०वि०***— अवजानतां फलमाह **मोघाशा इति** । वृथाशाः भगवद्द्वेषिभिराशासितमामुष्मिकं न किञ्चिदाप्यते । यज्ञादिकर्माणि च तेषां वृथेति मोघकर्माणः । मोघज्ञानाः— अन्येषामविद्यमानं मौढ्यमेव तेषां कुतो मौढ्येऽपि मिथ्याज्ञानं भवतु । प्रज्वलनात्मको द्वेषस्तु तेषां कुत इत्याशङ्क्य तत्र मूलकारणमाह **राक्षसीमिति** । मोहिनीं बुद्धिभ्रंशकरीं राक्षसीमासुरीं च प्रकृतिं स्वभावमाश्रितास्तमोयोग्या मामवजानन्ति इति सम्बन्धः । 'तानहं द्विषतः क्रूरान्' इत्यादिना वक्ष्यमाणत्वात् । उक्तं च— 'सर्वं मोघं शुभं तस्य योऽवजानाति केशवम् । अधरं याति च तमः प्रादुर्भावगतोऽप्यतः ॥ ज्ञेयः केवलचिद्देहो विदोषः पूर्णसद्गुणः ॥' इति । तथा— 'कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ॥' तथाच— 'यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् । कथं स न भवेद्द्वेष्य आलोकान्तस्य कस्यचित् ॥' इत्यादि । 'द्वेषाच्चैद्यादयो नृपाः' इत्यादि भगवतो भक्तप्रियत्वज्ञापनार्थं नित्यध्यानस्तुत्यर्थं चेत्यवगन्तव्यम् ॥ १२ ॥

***वा०ल०***— राक्षसीं प्रकृतिं दैवीं प्रकृतिम् इति वदन् देवः । स्वभावादेव जीवानां द्वैविध्यमाह ॥ १२ ॥

***सा०सं०***— अवजानतामनर्थाभावादिति हेतुरसिद्ध इति भावेन फलमाह **मोघेति** । **मोघाशाः** वृथाशाः भगवद्द्वेषिभिराशासितस्य सम्पदादेः प्राप्तावपि आमुष्मिकस्य न कस्यचिदाप्तिरित्यर्थः ।

**मोघकर्माणः** यज्ञादिकर्माणि च तेषां वृथैव । तत्त्वविषयकज्ञानं च तेषां वृथैवेति **मोघज्ञानाः** । ज्ञानस्य मोघत्वं नाम केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेनानुत्पत्तिरेव । 'ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ' (३-४-३४) इति सूत्रात् । **विचेतसो** विरुद्धमनस्काः । किं बहुना । कोऽप्यामुष्मिकः पुमर्थो नास्त्यत एवेति ज्ञेयम् । 'द्वेषाच्चैद्यादयो नृपाः' (भागवत ७-१-३२) इत्यादि नित्यध्यानस्तुत्याद्यर्थमिति भावः । ननु मौढ्यान्मिथ्याज्ञानमस्तु । प्रज्वलनात्मको द्वेषः कुत इत्यतो वा, अन्येषामविद्यमानं मौढ्यमेव तेषां कुत इत्यतो वा तस्य मूलकारणमाह **राक्षसीमिति** । **मोहिनीं** बुद्धिभ्रंशकरीम् । **आसुरीम्** असुरसम्बन्धिनीम् । **प्रकृतिं** स्वभावम् । **आश्रिताः** तमोयोग्याः मामवजानन्तीति पूर्वेणान्वयः ॥ १२ ॥

*अ०प्र०*— किञ्च फलमाह **मोघाशा इति** ।

मोघाशाः[१], अत एव मोघकर्माणः[२], मोघज्ञानाः[३], अत एव विचेतसः[४], शेषान्वयो श्लोकक्रमेण ॥

मोघाशाः = वृथाशाः वृथा जन्म जीविताः मत्तोऽन्यदेवतान्तरं क्षिप्रं फलं दास्यतीत्येवं भूतामाप्य निष्फलैव आशा येषां ते तथा[१], अत एव मोघकर्माणः = मद्विमुखत्वात् मोघानि व्यर्थानि कर्माणि येषां ते तथा। तेषां कर्मणां विहितफलाभावात्[२], मोघज्ञानाः = व्यर्थानि शास्त्रजन्यज्ञानानि येषां ते तथा । यद्वा, नानाकुतर्काश्रितं शास्त्रज्ञानं येषां ते तथा[३], अत एव विचेतसः = चित्तहीनाः विक्षिप्तचित्ताः विरुद्धमनस्का इत्यर्थः । सर्वत्र हेतुः[४], आसुरीं = कामदर्पादिबहुलां[५], राक्षसीं = हिंसादिप्रचुरां[६], मोहिनीं = व्यामोहकरीं बुद्धि-भ्रंशकरीं[७], प्रकृतिं = स्वभावं[८], आश्रिताः सन्तो[९], माम् अवजानन्तीति पूर्वेणान्वयः ॥ १२ ॥

भाष्यम्

**तेषां फलमाह मोघाशा इति । वृथाऽऽशाः । भगवद्द्वेषिभिः आशासितं आमुष्मिकं न किञ्चिदाप्यते । यज्ञादिकर्माणि च वृथैव तेषाम् । ज्ञानं च । केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित् पुरुषार्थः आमुष्मिकः तैः आप्यत इत्यर्थः । वक्ष्यति च "तानहं द्विषतः क्रूरान् संसारेषु" इत्यादि ।**

*प०टी०*— नन्वेवं निर्दोषं चेत्, कथं तेषां न दुर्गतिरित्युक्तम् ? इत्यत उत्तरश्लोकार्धमवतारयति **तेषामिति** । भगवद्द्वेषिकंसादीनां सम्पदादिदर्शनात् कथं मोघाशत्वम् ? इत्यत आह

**भगवदिति** । 'मोघकर्माणः' इत्येतद्व्याचष्टे **यज्ञादीति** । एतदेव प्रमाणैः साधयति **वक्ष्यति चेत्यादिना** ।

*प्र०दी०*— किं च 'तेषां फलम्' इत्यस्य परिहारो न दृश्यते । अत आह **तेषामिति** । अनर्थत्वप्रदर्शनाय व्याचष्टे **वृथेति** । सम्पदादिप्राप्तिदर्शनात् कथमित्यत आह **भगवदिति** । युद्धादिकर्मणां साफल्यदर्शनात् कथं मोघकर्माण इत्यत आह **यज्ञादीति** । ज्ञानं तत्त्वविषयं तेषां नास्त्येव । अतः कथं मोघत्वमुच्यते ? इत्यत आह **ज्ञानं चेति** । 'ज्ञानं च तेषां वृथैव' इत्यस्य 'केनापीत्यर्थः' इति सम्बन्धः । अनेन ज्ञानपदमुपलक्षणमिति चोक्तं भवति । न केवलं पुरुषार्थानवाप्तिः । अपि तु दुःखावाप्तिश्चेति भावेन तत्र प्रमाणान्याह **वक्ष्यति चेति** ।

*भा०दी०*— किञ्च 'तेषां फलम्' इति चशब्दबलाद् 'यथा'पदमाकृष्यत इति भावेनोक्तं **ज्ञानं च तेषां वृथैवेत्यस्येति** । **अनेनेति** । 'भक्त्याद्युपायेन' इति कथनेन मोघज्ञानमोघभक्तिमोघवैराग्यादिमन्तः' इत्युक्तं भवतीत्यर्थः । न केवलं पुमर्थहेतुत्वरूपं मोक्षपदतात्पर्यभूतमिति चार्थः ।

*भा०र०*— 'का च तेषां गतिः' इति भाष्यमर्थतोऽनुवदति **किञ्च तेषां फलमितीति** । विषयज्ञानस्य फलदर्शनात् कथं मोघत्वमित्यतो 'ज्ञानं तत्त्वविषयम्' इति वक्तव्यम् । तत्तु तेषां नास्त्येव । 'सर्वथापि तु त एवोभयलिङ्गात्' इत्यधिकरणे अयोग्यानां तत्त्वज्ञानाभावस्य स्थितिरिति भावेनोक्तं **ज्ञानं तत्त्वविषयं तेषां नास्त्येवेति** । भाष्ये चशब्दः 'तेषां वृथैव' इत्यस्यानुकर्षणार्थ इति भावेनाह **ज्ञानं च तेषां वृथैवेत्यस्येति** । तस्यैव विवरणं 'केनापि' इति योज्यम् । **अनेन** 'भक्त्याद्युपायेन न कश्चित्पुरुषार्थ आमुष्मिकः' इति च कथनेन । न केवलं 'ज्ञानं भक्तिः विरक्तिश्च मोघा' इत्युपलक्षितम् । किन्तु 'ज्ञानसाध्यं आमुष्मिकफलं न किमपि तेषाम्' इति च । ज्ञानपदेनैव ज्ञानपदमुपलक्षितमिति चार्थः । स्थितस्य ज्ञानस्य फलनिष्पादकत्वमिह ज्ञानशब्दार्थो न विवक्षितः। किन्तु तत्त्वज्ञानस्यानवाप्तिः, ज्ञानफलत्वेन प्रसिद्धं यद् आमुष्मिकफलं तस्यालाभश्चेति भावः ।

भाष्यम्

**मोक्षधर्मे च— "कर्मणा मनसा वाचा यो द्विष्याद् विष्णुमव्ययम् । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः । यो द्विष्याद् विबुधश्रेष्ठं देवं नारायणं हरिम् । कथं स न भवेद् द्वेष्य आलोकान्तस्य कस्यचित् ॥" इति ।**

*प्र०दी०*— **आ** सम्यक् । **लोकान्तस्य** चण्डालादेः ।

*भा०दी०*— आङो द्वेष्यपदेनान्वय इति भावेन तदर्थमाह **आ सम्यगिति** ।

*भा०र०*— 'शाश्वतीः समाः' इति भाष्ये । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । शाश्वतेषु वर्षेष्वित्यर्थः । आङो द्वेष्यपदेनान्वय इति भावेन तदर्थमाह **आ सम्यगिति** । लोकः = जनः, तदन्तस्य इत्यस्यार्थः **चण्डालादेरिति** । *सुधायां तु*— 'लोको जनः, तस्यान्तः = चाण्डालादिः, तत्पर्यन्तस्य' इति 'आलोकान्तस्य' इत्येतद् ऐकपद्येन व्याख्यातम् ।

भाष्यम्

**"सर्वोत्कृष्टे ज्ञानभक्ती हि यस्य नारायणे पुष्करविष्टराद्ये । सर्वावमे द्वेषयुतश्च तस्मिन् भ्रूणानन्तघ्नोऽप्यस्य समो न चैव ॥" इति सामवेदे शाण्डिल्यशाखायाम् । "द्वेषाच्चैद्यादयो नृपाः ।" "वैरेण यन्नृपतयः शिशुपालपौण्ड्रसाल्वादयो गतिविलासविलोकनाद्यैः । ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमीयुरनुरक्तधियः पुनः किम् ॥" इति भागवते भक्तप्रियत्वज्ञापनार्थम्, नित्यध्यानस्तुत्यर्थं च स्वभक्तस्य कदाचित् शापबलाद् द्वेषिणोऽपि भक्तिफलमेव भगवान् ददातीति ।**

*प०टी०*— ननु कथं न भगवद्द्वेषिणां दुर्गतिर्भागवते 'द्वेषात्' इत्युक्तेः ? इत्यत आह **द्वेषादिति** । कथं भक्तप्रियत्वज्ञापनमनेन ? इत्यत आह **स्वेति** ।

*प्र०दी०*— **पुष्करविष्टराद्ये** पद्मासनस्य पितरि । **भ्रूणानन्तघ्नः** अनन्तभ्रूणघ्नः । यद्येवं कथं तर्हि भागवतादौ भगवद्द्वेषस्य मोक्षसाधनत्ववचनम् ? इत्यत आह **द्वेषादिति** । 'तद्गतिं गताः' इति सम्बन्धः । **वैरेण ध्यायन्तः** यदीयगत्यादिभिः **आकृतधियः** आकृष्टबुद्धयः । ये पूर्वं भक्ताः शिशुपालादयः तद्विषये भवत्येषा गतिः । न तु पौण्ड्रसाल्वादिविषये । अत आह **नित्येति** । भक्तप्रियत्वज्ञापनार्थमित्युक्तं विवृणोति **स्वभक्तस्येति** । **इति** भक्तप्रियत्वज्ञापनार्थमिति योजना ।

*भा०दी०*— 'द्वेषम्' इत्यादिपादस्य प्रकृतोपयोगाय भागवतस्थवाक्यशेषेणान्वयो ध्येय इति भावेनाह **इति सम्बन्ध** इति । **न तु पौण्ड्रसाल्वादीति** । तेषामासुरस्वभावत्वेन तेषु भगवद्भक्तेरागन्तुकसजीवानुप्रवेशनिमित्तकत्वेन शिशुपालादिभक्तेरिव अनादित्वाभावात् । अत एव भाष्ये 'भक्ता एव हि ते पूर्वम्' इत्युक्तमिति भावः ।

*भा०र०*— **'सर्वोत्कृष्टः** रमाब्रह्मादिदेवताविषयकज्ञानभक्तिसम्पत्तिमद्भ्योऽप्यतिशयितः । सः' इति शेषः । 'ह' इत्यव्ययम्, न तु 'इह' इति छेदः, प्रगृह्यत्वापत्तेरिति स्फुटत्वाद् दुर्गमार्थं पदमनूद्य व्याख्याति **पुष्करेति** । **पद्मासनस्य** विरिञ्चस्य अनन्तशब्दस्य विशेषणस्यापि 'विशेषणं विशेष्येण बहुलम्' इति बहुलग्रहणात् परनिपात इति भावेन व्याचष्टे **अनन्तभ्रूणघ्न इति** । 'कृतघ्नः', 'शत्रुघ्नः' इत्यादौ 'मूलविभुजादित्वात् कः' इति हरदत्तवचनात् 'भ्रूणघ्नः' इत्यत्रापि हन्तेः कप्रत्ययः।

**यद्येवमिति** । 'भगवद्द्वेषिण आमुष्मिकं फलं नास्ति' इति यदि मतमित्यर्थः । 'गोप्यः कामात् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः । सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो' इत्यत्र सहश्रुतपदानां क्रियान्वयाभावादबोधकत्वमित्यत आह **इति सम्बन्ध इति** । एतच्छ्लोकात्पूर्वश्लोके 'कामाद् द्वेषाद् भयात् स्नेहाद् यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः' इति श्रुतक्रियापदेन अन्वय इत्यर्थः । व्यवहितत्वादन्वयं दर्शयति **वैरेण ध्यायन्त इति** । **न तु पौण्ड्रसाल्वादीति** । यद्यपि 'पूतनाकंसनरकशिशुपालादिषु द्विधा । जीवाः सन्तस्त्वसन्तश्च ...' इति शिशुपालादिषु जीवद्वैविध्यमिव, 'पौण्ड्रके नरके चैव साल्वे कंसे च रुक्मिणि । आविष्टास्तु हरेर्भक्ताः ...' इति शास्त्रेण पौण्ड्रसाल्वादिष्वपि जीवद्वैविध्यं आवेद्यत इति शिशुपालादिभ्यस्तेषां वैलक्षण्येनोक्तगत्यविषयत्वकथनमित्ययुक्तमिव । तथापि शिशुपालादिदेहानां जयादिसजीवकर्मनिर्मितत्वेन तत्र शापवशेन द्वेष्यसुरजीवप्रवेशनिबन्धनतात्कालिकद्वेषमनिरूप्य पूर्वतनीं भक्तिमेवापेक्ष्य भगवता मोचिताः शिशुपालादयः । पौण्ड्रकसाल्वादयस्तु सज्जीवावेशमात्रशालित्वेऽपि सजीवसम्बन्धात् पूर्वमभक्ताः, प्रत्युत द्वेषिण इति तदा भक्तिफलायोग्यतया तमःप्राप्तियोग्यतया च भगवतो भक्तप्रियत्वज्ञापनं तत्र तात्पर्यविषयतया नावकल्पयितुमुचितं इति शिशुपालादिवैलक्षण्यमस्ति । अत एव भाष्ये— 'भक्ता एव हि ते' इति 'पौण्ड्रके नरके चैव' इति प्रमाणे च 'आविष्टास्तु हरेर्भक्ताः' इति सज्जीवावेशमात्रमुक्तमिति भावेन इयमुक्तिरिति ज्ञातव्यम् ।

तदेतन्निपुणतरमुपपादितम् । 'स्मर्तव्यो भगवान्नित्यमित्यर्थेनैव हि क्वचित् । द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवत्' इत्याद्यनुव्याख्यानव्याख्यावसरे " 'द्विविधानि वाक्यानि', 'वैरेण यन्नृपतयः' इत्यादीनि स्मरणप्रधानानि" इत्यादि सुधायाम् । 'नित्यध्यानस्तुत्यर्थं च' इति भाष्यं यद्यपि पुराणवाक्यं द्वेषस्यापि मुक्तिसाधनत्वं प्रतिपादयतीव प्रतीयते । तथापि न तदभिप्रायकं तद्वाक्यम् । किन्तु 'मुमुक्षुणा भगवान् सर्वदा स्मर्तव्यः' इत्येतदभिप्रायकमेव । यथा 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' इत्यत्र न कार्यकारणे तात्पर्यम्,

किन्तु सर्वथा भर्तव्यत्वे । तथेहापि सुधारीत्या नित्यं भगवदनुस्मरणं प्रशस्तमिति ध्यानप्राशस्त्य-तात्पर्यकं न पुनर्द्वेषस्यापि मुक्त्युपायत्वे तात्पर्यवदिति व्याख्येयम् ।

भाष्यम्

**भक्ता एव हि ते पूर्वं शिशुपालादयः । शापबलाद् द्वेषिणः । तत्प्रश्नपूर्वं पार्षदत्वशापादिकथनाच्चैतज्ज्ञायते । अन्यथा किमिति तदप्रस्तुतमुच्यते ?**

*प०टी०*— भवेत्स्तुतिश्चैद्यादीनां भक्तत्वे । तदेव कुतः ? इत्यत आह **भक्ता इति** । **हि** इति प्रसिद्धमित्यर्थः । इतश्च न द्वेषिणां मोक्ष इत्याह **तत्प्रश्न इति** । पार्षदत्वकथने कथं न द्वेषिणां मुक्तिः ? इत्यत आह **अन्यथेति** । यदि द्वेषिणां मोक्षः, तर्हि 'अहो अत्यद्भुतं ह्येतत्' इति कथं द्वेषिणो मोक्षः ? इति युधिष्ठिरप्रश्ने, अस्त्येव द्वेषिणां मोक्ष इत्युत्तरं स्यात् । पार्षदत्वकथनं व्यर्थमेवेत्यर्थः ।

*प्र०दी०*— स्यादेतत् । यदि तेषां स्वतो भक्तत्वं, शापबलादेव द्वेषित्वमित्येतत् प्रमितं स्यात् । तदेव कुतः ? इत्यत आह **भक्ता एव हीति** । प्रसिद्धमेवैतत् भागवतादावित्यर्थः । कुतो वचनानामर्थान्तरकल्पना इति चेत् 'यो द्विष्यात्' इत्याद्युदाहृतवाक्याविरोधात् । हेत्वन्तरं चाह **तत्प्रश्न इति** । 'अहो अत्यद्भुतं ह्येतत् दुर्लभैकान्तिनामपि । वासुदेवे भगवति गतिश्चैद्यस्य विद्विषः' इति युधिष्ठिरेण द्वेषिणः कथं मुक्तिर्जातेत्येवंरूपे तद्विषये प्रश्ने कृते सति, नारदेन 'मातृष्वसेयो वश्चैद्यो दन्तवक्रश्च पाण्डव । पार्षदप्रवरौ विष्णोर्विप्रशापात् पदच्युतौ' इति तदुत्तरत्वेन पूर्व-पार्षदत्वादिकं कथ्यते । ततोऽपि द्वेषो न मोक्षसाधनमित्येतज्ज्ञायते । कथम् ? इत्यत आह **अन्यथेति** । यदि द्वेषोऽपि मोक्षसाधनं स्यात् तदा किमत्राद्भुतम् ? यतो द्वेषोऽप्येको मुक्तिमार्ग इत्युत्तरं वक्तव्यम् । पूर्वपार्षदत्वादिकं तु अप्रस्तुतं अनुपयुक्तं न वक्तव्यं स्यादित्यर्थः ।

*भा०र०*— तत्प्रश्ने पूर्वपार्श्वदत्वादि न कथ्यते ? इत्यतो भाष्यं घटयितुमाह **इत्येवंरूपे तद्विषये प्रश्ने कृते सतीत्यादि** । **विप्रशापात्** सनकादिशापात् । **मुक्तिमार्गः** मुक्त्युपायः । 'अप्रस्तुतम्' इत्यनूद्य 'अनुपयुक्तम्' इति व्याख्यातम् ।

भाष्यम्

**भगवतः साम्यकथनं तु द्वेषिणामपि द्वेषमनिरूप्य पूर्वतनभक्तिफलमेव ददातीति ज्ञापयितुम् । "न मे भक्तः प्रणश्यति" इति वक्ष्यति ।**

*प०टी०*— ननु यदि द्वेषिणां मोक्षो न नारदाभिप्रेतस्तर्हि किमिति 'निन्दनस्तव' इति भगवतो निन्दादौ साम्यप्रस्तुते वक्ता (?) इत्यत आह **भगवत इति** ।

*प्र०दी०*— ननु नारदेन 'निन्दनस्तव सत्कारः' इत्यादिना भगवतो निन्दादौ साम्यमपि तदुत्तरत्वेन कथ्यते । यदि स्तुतेरिव निन्दाया न मोक्षसाधनत्वं स्यात् तदा तदनुपयुक्तं न वक्तव्यमिति सत्प्रतिपक्षार्थापत्तिरित्यतोऽस्यान्यथोपपत्तिमाह **भगवत इति** । **साम्यं** निर्विकारत्वम् । भक्तानामपराधं भगवान् न गणयतीत्येतत् कुत इत्यत आह **नेति** ।

*भा०दी०*— **साम्यमपीति** । स्तुतिनिन्दयोर्भगवतो निर्विकारत्वमित्यर्थः । **अर्थापत्तिरिति** । पूर्वपार्षदत्वोक्त्यन्यथानुपपत्तिरूपसाम्योक्त्यन्यथानुपपत्तिरूपार्थापत्त्या सत्प्रतिपक्षेत्यर्थः ।

*भा०र०*— 'निन्दनस्तवसत्कार' इत्यत्र आदिशब्देन 'न्यक्कारार्थं कलेवरम् । प्रधानपरयो राजन्नविवेकेन कल्पितम् । हिंसा तदभिमानेन दण्डपारुष्ययोरपि । वैषम्यमिह भूतानां ममाहमिति पार्थिव । यन्निबन्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः ॥ तथा न यस्य कैवल्याद् अभिमानोऽखिलात्मनः । परस्येदमकर्तुर्हि हिंसा केनास्य कल्प्यते' इत्यन्तस्य ग्रहः । तत्र निन्दादीनामर्थः = विषयः, छान्दसम् अर्थशब्दस्य कलेवरविशेषणतया नपुंसकत्वम् । प्रधानकार्यदेहजीवयोः प्रकृति-पुरुषयोर्वा याथार्थ्यज्ञानेन कल्पितं निन्दनादिना प्राप्तदुःखसुखबोधार्थं समर्थितम् । 'मम', 'अहम्' इति 'मदीयमिदम्', 'अहं कर्ता' इत्येवंरूपेण, तदभिमानेन = कलेवराभिमानेन, भूतानामिहदेहे हिंसादण्डपारुष्ययोश्च निपतितयोः वैषम्यं च भवति । अयं चाभिमानो यन्निबन्धनः = यस्मिन् देहे निरूढः, तद्वधः तस्य देहस्य वधः । स्वाभिमन्यमानदेहवधमेव स्वात्मवधमिव मन्यमानमिति यावत्। श्रीकृष्णस्तु एवंविधमिथ्याभिमानविषयशून्यत्वान्न निन्दादिप्राप्तदेहवान् । किन्तु तत्तद्योग्यतानुसारेण तत्तत्फलदाता सम एवेति भावेनोक्तं **तथा न यस्येति** । अखिलात्मनः = अखण्डस्वामिनः यस्य हरेः तथा जीवस्येवाभिमानो नास्ति । कुतः ? कैवल्यात् = प्रकृतदेहहानित्वात् । तदपि कुतः ? परस्य = प्रकृत्यादिकमतीतस्य अस्य = श्रीकृष्णस्य हिंसानिन्दनादिप्राप्तखेदाद्युपलक्षणम् । केन कल्प्यते ? न केनापि । तत्र निमित्तान्तरम्— अकर्तुर्न विद्यते । प्राकृतदेहतन्निमित्तदुःखादि-संयोजनकर्ता यस्य तस्य स्वतन्त्रस्येत्येषोऽर्थः प्रतिपाद्यत इति । तथा च निन्दनस्तवनादौ भगवतः साम्यमपि **तदुत्तरत्वेन** द्वेषिणः कथं मुक्तिर्जातेत्येवंरूपप्रश्नोत्तरत्वेन कथ्यत इत्यर्थः सम्पद्यते ।

किं ततः ? इत्यत आह **यदि स्तुतेरिति** । **तत्** साम्यम् । **अर्थापत्तिरिति** । पूर्वपार्षद-त्वाद्युक्त्यन्यथानुपपत्तिरूपार्थापत्तिरित्यर्थः । भाष्ये साम्यशब्देन सादृश्यस्यापि प्रतीतेः । 'निन्दन'

इत्यादौ च सादृश्यस्यानुक्तेः, अनुपयोगाच्चाह **साम्यं निर्विकारत्वमिति** । भाष्ये— 'द्वेषिणामपि' इत्यनन्तरं 'भक्तानाम्' इति योज्यमिति हृदि निधायोत्तरं भाष्यमवतारयति **भक्तानामिति** ।

भाष्यम्

**न च "भावो हि भवकारणम्" इत्यादिविरोधः द्वेषभाविनां द्वेष एव भवति इति हि युक्तम् । अन्यथा गुरुद्वेषिणोऽपि गुरुत्वं भवतीत्याद्यनिष्टम् आपद्येत । न च अकृतधीत्वे अविशेषः । तेषामेव हिरण्यकशिप्वादीनां पापप्रतीतेः ।**

***प०टी०***— ननु यदि तेषामाकृतधियामपि न मोक्षः, तर्हि न्यायविरोध इत्यत आह **न च इति** । किमित्येवमर्थान्तरकल्पना ? इत्यत आह **अन्यथेति** । ननु आकृतधियामपि द्वेषिणां मोक्षाभावे, न भक्तानामपि स्यात्, आकृतधीत्वाविशेषादित्यत आह **न चेति** ।

***प्र०दी०***— द्वेषस्य मुक्तिसाधनत्वाभावे **भावः** यथाकथञ्चिच्चिन्तनं **भवस्य** मोक्षस्य **कारणं** इत्यादिवचनविरोधः स्यादित्यत आह **न चेति** । कुतो नेत्यत आह— **द्वेषेति** । **हि** यस्माद् एतत् वचनं **इति युक्तं** घटनोपेतं तस्मादित्यर्थः । यथोक्तम्— 'यादृशी भावना ज्ञेया सिद्धिर्भवति तादृशी' इति । प्रतीत एवार्थः किं न स्यात् ? इत्यत आह **अन्यथेति** । भगवद्द्वेषिणो मुक्तिभाजः तदाकृतधीत्वात् भगवद्भक्तवदित्यनुमानविरोध इत्यत आह **न चेति** । उभयोराकृतधीत्वे सति फलेऽपि **अविशेषः** इति **च न** इत्यर्थः । कुतः ? इत्यतः कालातीतत्वादित्याह **तेषामेवेति** । आकृतधीनामेव ।

***भा०दी०***— 'इति हि युक्तम्' इति भाष्ये 'इति युक्तम्' इत्युक्तं नित्यत्वमेव अनूद्य विशेष्याकाङ्क्षायाम् 'एतद्वचनम्' इत्यध्याहारेण पूरयन् युक्तपदार्थमाह **एतद्वचनमिति** ।

**युक्तं घटनोपेतमिति** । द्वेषभाविनां द्वेष एव भवति, न तु भगवद्भाव इत्यर्थतया उपपन्नं तद्वचनम् । तस्मान्न विरोध इति योजनेत्यर्थः । **प्रतीत एवेति** । मोक्षरूप एवार्थ इतीत्यर्थः ।

***भा०र०***— 'भावः' इत्यनूद्य तदर्थमाह **भाव इति** । **यथाकथञ्चित्** वैरभयादियुक्तत्वेनापि **इत्यादिवचनेति** । 'जन्मत्रयानुगुणितवैरसंरब्धया धिया । ध्यायंस्तन्मयतां यातो भावो हि भवकारणम्' इत्यादि भागवतादिवचनेत्यर्थः । 'हि' इत्यनुवादः । 'यस्मात्' इति व्याख्या । **प्रतीत एव** यथाकथञ्चित् चिन्तनमपि मोक्षकारणमिति प्रतीत एव । भाष्यं योजयति **उभयोरिति** । द्वेषिभक्तयोरित्यर्थः । **फले** मोहलक्षणे । 'इति च न' इत्यत्र चशब्दः 'न च भावो हि भवकारण-

*प०टी०*— ननु यदि द्वेषिणां मोक्षो न नारदाभिप्रेतस्तर्हि किमिति 'निन्दनस्तव' इति भगवतो निन्दादौ साम्यप्रस्तुते वक्ता (?) इत्यत आह **भगवत इति** ।

*प्र०दी०*— ननु नारदेन 'निन्दनस्तव सत्कारः' इत्यादिना भगवतो निन्दादौ साम्यमपि तदुत्तरत्वेन कथ्यते । यदि स्तुतेरिव निन्दाया न मोक्षसाधनत्वं स्यात् तदा तदनुपयुक्तं न वक्तव्यमिति सत्प्रतिपक्षार्थापत्तिरित्यतोऽस्यान्यथोपपत्तिमाह **भगवत इति** । **साम्यं** निर्विकारत्वम् । भक्तानामपराधं भगवान् न गणयतीत्येतत् कुत इत्यत आह **नेति** ।

*भा०दी०*— **साम्यमपीति** । स्तुतिनिन्दयोर्भगवतो निर्विकारत्वमित्यर्थः । **अर्थापत्तिरिति** । पूर्वपार्षदत्वोत्त्यन्यथानुपपत्तिरूपसाम्योत्त्यन्यथानुपपत्तिरूपार्थापत्त्या सत्प्रतिपक्षेत्यर्थः ।

*भा०र०*— 'निन्दनस्तवसत्कार' इत्यत्र आदिशब्देन 'न्यक्कारार्थं कलेवरम् । प्रधानपरयो राजन्नविवेकेन कल्पितम् । हिंसा तदभिमानेन दण्डपारुष्ययोरपि । वैषम्यमिह भूतानां ममाहमिति पार्थिव । यन्निबन्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः ॥ तथा न यस्य कैवल्याद् अभिमानोऽखिलात्मनः । परस्येदमकर्तुर्हि हिंसा केनास्य कल्प्यते' इत्यन्तस्य ग्रहः । तत्र निन्दादीनामर्थः = विषयः, छान्दसम् अर्थशब्दस्य कलेवरविशेषणतया नपुंसकत्वम् । प्रधानकार्यदेहजीवयोः प्रकृतिपुरुषयोर्वा याथार्थ्यज्ञानेन कल्पितं निन्दनादिना प्राप्तदुःखसुखबोधार्थं समर्थितम् । 'मम', 'अहम्' इति 'मदीयमिदम्', 'अहं कर्ता' इत्येवंरूपेण, तदभिमानेन = कलेवराभिमानेन, भूतानामिहदेहे हिंसादण्डपारुष्ययोश्च निपतितयोः वैषम्यं च भवति । अयं चाभिमानो यन्निबन्धनः = यस्मिन् देहे निरूढः, तद्वधः तस्य देहस्य वधः । स्वाभिमन्यमानदेहवधमेव स्वात्मवधमिव मन्यमानमिति यावत्। श्रीकृष्णस्तु एवंविधमिथ्याभिमानविषयशून्यत्वान्न निन्दादिप्राप्तदेहवान् । किन्तु तत्तद्योग्यतानुसारेण तत्तत्फलदाता सम एवेति भावेनोक्तं **तथा न यस्येति** । अखिलात्मनः = अखण्डस्वामिनः यस्य हरेः तथा जीवस्येवाभिमानो नास्ति । कुतः ? कैवल्यात् = प्रकृतदेहहानित्वात् । तदपि कुतः ? परस्य = प्रकृत्यादिकमतीतस्य अस्य = श्रीकृष्णस्य हिंसानिन्दनादिप्राप्तखेदाद्युपलक्षणम् । केन कल्प्यते ? न केनापि । तत्र निमित्तान्तरम्— अकर्तुर्न विद्यते । प्राकृतदेहतन्निमित्तदुःखादिसंयोजनकर्ता यस्य तस्य स्वतन्त्रस्येत्येषोऽर्थः प्रतिपाद्यत इति । तथा च निन्दनस्तवनादौ भगवतः साम्यमपि **तदुत्तरत्वेन** द्वेषिणः कथं मुक्तिर्जातेत्येवंरूपप्रश्नोत्तरत्वेन कथ्यत इत्यर्थः सम्पद्यते ।

किं ततः ? इत्यत आह **यदि स्तुतेरिति** । **तत्** साम्यम् । **अर्थापत्तिरिति** । **पूर्वपार्षद**त्वाद्युत्त्यन्यथानुपपत्तिरूपार्थापत्तिरित्यर्थः । भाष्ये साम्यशब्देन सादृश्यस्यापि प्रतीतेः । 'निन्दन'

इत्यादौ च सादृश्यस्यानुक्तेः, अनुपयोगाच्चाह **साम्यं निर्विकारत्वमिति** । भाष्ये— 'द्वेषिणामपि' इत्यनन्तरं 'भक्तानाम्' इति योज्यमिति हृदि निधायोत्तरं भाष्यमवतारयति **भक्तानामिति** ।

भाष्यम्

**न च "भावो हि भवकारणम्" इत्यादिविरोधः द्वेषभाविनां द्वेष एव भवति इति हि युक्तम् । अन्यथा गुरुद्वेषिणोऽपि गुरुत्वं भवतीत्याद्यनिष्टम् आपद्येत । न च अकृतधीत्वे अविशेषः । तेषामेव हिरण्यकशिप्वादीनां पापप्रतीतेः ।**

***प०टी०***— ननु यदि तेषामाकृतधियामपि न मोक्षः, तर्हि न्यायविरोध इत्यत आह **न च इति** । किमित्येवमर्थान्तरकल्पना ? इत्यत आह **अन्यथेति** । ननु आकृतधियामपि द्वेषिणां मोक्षाभावे, न भक्तानामपि स्यात्, आकृतधीत्वाविशेषादित्यत आह **न चेति** ।

***प्र०दी०***— द्वेषस्य मुक्तिसाधनत्वाभावे **भावः** यथाकथञ्चिच्चिन्तनं **भवस्य** मोक्षस्य **कारणं** इत्यादिवचनविरोधः स्यादित्यत आह **न चेति** । कुतो नेत्यत आह— **द्वेषेति** । **हि** यस्माद् एतत् वचनं **इति युक्तं** घटनोपेतं तस्मादित्यर्थः । यथोक्तम्— 'यादृशी भावना ज्ञेया सिद्धिर्भवति तादृशी' इति । प्रतीत एवार्थः किं न स्यात् ? इत्यत आह **अन्यथेति** । भगवद्द्वेषिणो मुक्तिभाजः तदाकृतधीत्वात् भगवद्भक्तवदित्यनुमानविरोध इत्यत आह **न चेति** । उभयोराकृतधीत्वे सति फलेऽपि **अविशेषः** इति **च न** इत्यर्थः । कुतः ? इत्यतः कालातीतत्वादित्याह **तेषामेवेति** । आकृतधीनामेव । '

***भा०दी०***— 'इति हि युक्तम्' इति भाष्ये 'इति युक्तम्' इत्युक्तं नित्यत्वमेव अनूद्य विशेष्याकाङ्क्षायाम् 'एतद्वचनम्' इत्यध्याहारेण पूरयन् युक्तपदार्थमाह **एतद्वचनमिति** ।

**युक्तं घटनोपेतमिति** । द्वेषभाविनां द्वेष एव भवति, न तु भगवद्भाव इत्यर्थतया उपपन्नं तद्वचनम् । तस्मान्न विरोध इति योजनेत्यर्थः । **प्रतीत एवेति** । मोक्षरूप एवार्थ इतीत्यर्थः ।

***भा०र०***— 'भावः' इत्यनूद्य तदर्थमाह **भाव इति** । **यथाकथञ्चित्** वैरभयादियुक्तत्वेनापि **इत्यादिवचनेति** । 'जन्मत्रयानुगुणितवैरसंरब्धया धिया । ध्यायंस्तन्मयतां यातो भावो हि भवकारणम्' इत्यादि भागवतादिवचनेत्यर्थः । 'हि' इत्यनुवादः । 'यस्मात्' इति व्याख्या । **प्रतीत एव** यथाकथञ्चित् चिन्तनमपि मोक्षकारणमिति प्रतीत एव । भाष्यं योजयति **उभयोरिति** । द्वेषिभक्तयोरित्यर्थः । **फले** मोहलक्षणे । 'इति च न' इत्यत्र चशब्दः 'न च भावो हि भवकारण-

मित्यादिविरोधः' इत्यनेन समुच्चयार्थः । **कालातीतत्वात्** बाधितविषयत्वात् । 'तेषामेव' इत्यस्यार्थः **आकृतधीनामेवेति** ।

यद्यपि 'यू स्त्र्याख्यौ नदी' इति स्त्रीवाचकत्व एव नदीसंज्ञा विहिता । आकृतधीशब्दश्च उपसर्जनत्वेन पुमर्थक इति षष्ठीबहुवचने नुडागमानवकाशे इयङादेशे च 'आकृतधियाम्' इत्येव स्यात् । तथापि 'पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वमेष्टव्यम्' इत्यर्थकेन 'प्रथमलिङ्गग्रहणं च' इति वार्तिकेन नदीसंज्ञायां 'ह्रस्वनद्यापो नुट्' इति नुडागमो भविष्यतीति 'आकृतधीनाम्' इति साधुः । अत एव 'बहुश्रेयसीनां ब्राह्मणानाम्' इत्याधुनिक उदाहरत् । न च नेदमुदाहरणमिति । इयङ्स्थानं प्रकृतं तु तथाविधमिति, तत्र नेयङुवङ्स्थानावस्त्री' इति प्रतिषेधः प्रसरतीति वाच्यम् । 'वाऽमि' इति सूत्रे उक्तवार्तिके नदीसंज्ञाया विकल्पितत्वात् ।

भाष्यम्

**''हिरण्यकशिपुश्चापि भगवन्निन्दया तमः । विविक्षुरत्यगात् सूनोः प्रह्लादस्यानुभावतः ॥'' इति । ''यदानिन्दत् पिता मह्यम्'', ''त्वद्भक्ते मयि चाघवान्'' इत्यारभ्य ''तस्मात् पिता मे पूयेत दुरन्ताद् दुस्तरादघात्'' इति प्रह्लादेन भगवतो वरयाचनाच्च । बहुषु ग्रन्थेषु च निषेधः कुत्रचिदेव तदुक्तिरिति विशेषः । यस्मिन् तदुच्यते तत्रैव च निषेध उक्तः ।**

***प०टी०***— ननु भागवतवचनानामन्यवचनैरन्यार्थत्वे, विपरीतं किं न स्यात् ? इत्यत आह **बह्विति** । ततश्च भागवतवचनस्यैवार्थान्तरमिति युक्तिद्वयमाह **यस्मिन्निति** ।

***प्र०दी०***— विविक्षुः वेक्ष्यतीति सम्भावनाविषयः । आशङ्कायामचेतनेषूपसङ्ख्यानात् । **मह्यं** मम । ननु वचनत्वाविशेषात् 'यो द्विष्यात्' इत्यादिभिः 'द्वेषाच्चैद्य' इत्यादीनां कथं बाधनम् ? इत्यत आह **बह्विति** । **निषेधः** द्वेषस्य मुक्तिसाधनतायाः । न केवलं बहुत्वाबहुत्वरूपोऽनयोर्विशेषः । किं तु स्वव्याहतत्वास्वव्याहतत्वरूपोऽपीत्याह **यस्मिन्निति** । भागवतादौ ग्रन्थे **भगवन्निन्दया** इत्यादि **निषेधः** ।

***भा०द्वी०***— **सम्भावनाविषय इति** । तमःप्रवेशेच्छयाः अयुक्तत्वादिति भावः । **अचेतनेष्विति**। अचेतनशब्देनेच्छाराहित्यस्य विवक्षितत्वात् 'विविक्षुः' इत्यत्र सन्प्रत्ययः साधुरिति भावः ।

*भा०र०*— ननु हिरण्यकशिपोस्तमःप्रवेशेच्छाऽभावात् । कथं विवक्षुः = वेष्टुं इच्छुः इतीच्छार्थकप्रत्ययः ? इत्यत आह **वेक्ष्यतीति सम्भावनाविषय इति** । अत्रार्थे शास्त्रम् **आशङ्कायामिति** । सम्भावनाविषयतायामित्यर्थः । **अचेतनेषु** इच्छारहितेषु । अत्र च हिरण्यकशिपोस्तदिच्छाभावेऽपि सम्भावनाविषयत्वमात्रेण सन्प्रत्यये, 'सनाशंसभिक्ष उः' (३-२-१६८) इति उःप्रत्यय इति भावः । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति शास्त्रादाह **मह्यं ममेति** । **बाधनं** प्रतीतार्थप्रच्यावनम् । निषेधस्य विषयं दर्शयन्नाह **निषेधो द्वेषस्य मुक्तिसाधनताया इति** । **निषेधः** 'भगवन्निन्दया वेनो द्विजैस्तमसि पातितः' इति, 'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः' इत्यादिवचनैर्भगवत एव द्वेषस्य मुक्तिसाधनताया निषेधः कृत इत्यर्थः ।

भाष्यम्

**महातात्पर्यविरोधश्चोक्तः पुरस्तात् । अयुक्तिमद्भ्यो युक्तिमन्त्येव बलवन्ति वाक्यानि । युक्तयश्चोक्ता अन्येषाम् । न चैषां काचिद् गतिः ।**

*प०टी०*— युक्तिमत्त्वायुक्तिमत्त्वन्यायाच्चेयं व्यवस्थेत्याह **अयुक्तिमद्भ्य इति** । सावकाशनिरवकाशन्यायाच्चैवमित्याह **न चेति** ।

*प्र०दी०*— भगवद्गुणोत्कर्ष एव सर्ववेदानां यन्महातात्पर्यं तद्विरोधो द्वेषान्मुक्तिवाचिनाम् । इतरेषां तु तदानुकूल्यमिति च विशेष इति भावेनाह **महातात्पर्येति** । **उक्तः** उक्तप्रायः । इतोऽपि बाध्यबाधकभावो युक्त इति भावेन व्याप्तिं तावदाह **अयुक्तिमद्भ्य इति** । सप्तम्यर्थे मतुप् । ततः किमित्यत आह **युक्तयश्चेति** । 'महातात्पर्यविरोधश्च' इत्यपेक्षया । अन्येषामनुकूलाः युक्तयः । 'अव्ययं विबुधश्रेष्ठम् । पुष्करविष्टराद्ये' इति । सावकाशत्वनिरवकाशत्वविशेषाच्चैवमित्याह **न चेति**। 'इतरेषां तूक्तैव' इति शेषः ।

*भा०दी०*— **उक्तप्राय इति** । द्वितीयाध्याये 'गुणोत्कर्षज्ञानान्मुक्तिः' इत्युक्त्या द्वेषान्नेति प्राप्तत्वादिति भावः । **सप्तम्यर्थे इति** । 'तदस्यास्त्यस्मिन्निति मतुप्' इत्युक्तेरिति भावः । **युक्तयश्चेति** चशब्दसमुच्चेयमाह **महातात्पर्यविरोधश्चेत्यपेक्षयेति** । न केवलं महातात्पर्यविरोध उक्त इति चार्थ इति भावः । 'अन्येषाम्' इत्यस्य प्रतियोगिसूचनायैतद् इत्येके । महातात्पर्यविरुद्धस्मृतीनां प्रतियोगित्वादिति 'अन्येषाम्' इत्यस्यान्वयाय आह **अनुकूला इति** । 'यो द्विष्यात्' इत्यादिवचनानामित्यर्थः । युक्तीर्व्यनक्ति **अव्ययमित्यादिना** । 'कर्मणा मनसा' इति श्लोके अव्ययत्वादेः प्रतीतेरिति भावः । **उक्तैवेति** । 'द्वेषाच्चैद्यादयः' इत्यादिवाक्यानां भक्तिप्रियत्वादिज्ञापनादिरूपा गतिरुक्तयैक्तैवेत्यर्थः ।

***भा०र०***— भगवद्गुणोत्कर्ष एव वेदानां महातात्पर्यस्यैव द्वितीयाध्याये उक्त्या 'द्वेषान्न मुक्तिः' इत्यत्र तदनुक्तेराह **उक्तप्राय इति** । 'मोक्षो हि महापुरुषार्थः । स च विष्णुप्रसादादेव सिद्ध्यति । विष्णुप्रसादश्च गुणोत्कर्षज्ञानात् भवति । अतो भगवद्गुणोत्कर्षज्ञान एव सर्वागमानां महातात्पर्यम्' इत्युक्तौ गुणोत्कर्षज्ञानापादितभक्तिरेव मोक्षसाधनम्, न तु द्वेषोऽप्यर्थाल्लभ्यत इति महातात्पर्यविरोधो द्वेषान्मुक्तिवाचिवाक्यानाम् । भक्तेर्मुक्तिहेतुत्ववाचिनां 'यो द्विष्याद्विबुधश्रेष्ठम्' इत्यादिवचनानां तु महातात्पर्यानुकूल्यमेवेति भावः ।

**व्याप्तिम्** 'यानि युक्तिमन्ति तानि अयुक्तिमद्भ्यो बलवन्ति, यथा सम्मतानि' इति व्याप्तिम् । ननु 'युक्तिरेषामस्ति' इति षष्ठ्यर्थे मतुबिति पक्षे वाक्यानां युक्तिं प्रति धर्मित्वम्, युक्तीनां च वाक्यधर्मत्वं प्रतीतमयुक्तम् ? युक्तीनां परामर्शविशेषरूपाणां आत्मधर्मत्वेन वाक्यधर्मत्वाभावात्, इत्यत आह **सप्तम्यर्थ इति** । 'युक्तय एषु = वाक्येषु प्रतिपाद्यतया सन्ति इति युक्तिमन्ति' इति स्वप्रतिपाद्ययुक्त्युपोद्बलितानि वाक्यानि अत्र युक्तिमच्छब्देन विवक्षितानि । 'तदस्यास्मिन्निति मतुब्' इति शास्त्रादिति भावः । अन्यत्वं सप्रतियोगिकम् इत्यतः प्रतियोगि दर्शयितुमाह **महातात्पर्येति** । येषां 'द्वेषाच्चैद्यादयः' इत्यादीनां महातात्पर्यविरोध उक्तः, तेभ्यः **अन्येषां** 'कर्मणा मनसा वाचा', 'यो द्विष्यात्' इत्यादिरूपाणां द्वेषस्य मोक्षसाधनत्वनिषेधपराणामित्यर्थः । 'अनुकूलाः' इति भाष्य-शेषोक्तिः । 'युक्तयश्च' इत्यत्र चशब्दः महातात्पर्यविरोधश्चेत्येवं समुच्चयार्थ इत्यपि **आहुः** । **केचित्तु** अनुकूलयुक्तीनाम् एतदध्यायात् पूर्वं क्वाप्यनुक्तत्वात् कथम् 'उक्ताः' इति भाषणम् ? इत्याशङ्क्य महातात्पर्यविरोधश्चेत्यपेक्षया 'उक्ताः' इति वचनं तत्सन्नियोगाद् अव्ययत्वादियुक्तीनाम् उच्यमाना-नामपि उक्तत्वमुपचारादिति भावेन महातात्पर्यविरोधश्चेत्यपेक्षया' इत्युक्तमिति वदन्ति ।

अन्येषामनुकूला एव युक्तीर्दर्शयति **अव्ययमित्यादिना** । भगवान् न द्वेष्यो भवितुमर्हति उत्तमपुरुषत्वात्, सद्गुरुवत् । भगवद्द्वेषो वा न मुक्तिहेतुः उत्तमपुरुषद्वेषत्वात्, राजद्वेषवत् । भगव-द्द्वेषिणो वा न मुक्तिभाजः । उत्तमपुरुषद्वेषित्वात् राजद्वेषिवत् । न चासिद्धिः । भगवान् उत्तमपुरुषः अव्ययपदोपलक्षितसर्वदोषशून्यत्वात्, विबुधश्रेष्ठत्वात्, पद्मासनपितृत्वाच्च, व्यतिरेकेण चैत्रवदिति युक्तिभिस्तत्सिद्धेः । एवं चैतद्युक्त्युपोद्बलितैः 'कर्मणा मनसा वाचा', 'यो द्विष्याद्विबुधश्रेष्ठम्', 'सर्वाधमो द्वेषयुतश्च' इति वचनैः 'द्वेषाच्चैद्यादयः' इत्यादीनां बाधनं युक्तमेवेति भावः । **निरव-काशत्वेति** । 'यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात्' इत्यत्र निरवकाश-प्राबल्यस्य पूर्वतन्त्रे स्थितेरिति भावः । **इतरेषां** 'द्वेषाच्चैद्यादयः' इत्यादीनाम् । **उक्तैव** भक्तिप्रियत्व-ज्ञापनादिरूपा गतिरुक्तैव ।

भाष्यम्

**साम्येऽपि वाक्ययोः लोकानुकूलाननुकूलयोरनुकूलमेव बलवत् । लोकानुकूलं च भक्तप्रियत्वं नेतरत् । उक्तं च तेषां पूर्वभक्तत्वम्— "मन्येऽसुरान् भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान् ॥" इत्यादि । अतो न भगवद्वेषिणां काचिद् गतिरिति सिद्धम् । द्वेषकारणमाह— राक्षसीमिति ॥ १२ ॥**

***प०टी०***— अन्यगुणैर्वाक्ययोः साम्येऽपि लोकानुकूलत्वादेषां प्राबल्यं किमुतासाम्ये इत्याह **साम्येऽपीति** । प्रसिद्धं तेषां भक्तत्वमित्युक्तम् । कुत्र ? इत्यत आह **उक्तं चेति** । उपसंहरति **अत इति** । त्वयि दोषाभावे किमिति द्विषन्ति ? इत्यत्र उत्तरार्धमवतारयति **द्वेषेति** ॥ १२ ॥

***प्र०दी०***— इतश्च बाध्यबाधकभावो युक्त इत्यभिप्रेत्य व्याप्तिं तावदाह— **साम्येऽपीति** । गुणान्तरेण । 'साम्येऽपि' इति कैमुत्यार्थम् । 'लोकानुकूल'शब्देन लोकदृष्टव्याप्तिकानुमानानुकूलत्वमुच्यते । ततः किम् ? इत्यत आह **लोकेति** । **इतरत्** द्वेषिप्रियत्वम् । भगवत्प्रीत्यैव मोक्ष इति तु प्रसिद्धमेव । शिशुपालादीनां पूर्वभक्तत्वं प्रसिद्धमित्युक्तम् । तत् कथम् ? इति चेत् पार्षदत्वात् । वचनाच्चेत्याह **उक्तं चेति** । त्रयाणां लोकानामधीशे संरम्भेण मार्गमात्रेण अभिनिविष्टचित्तान् ।

उपसंहरति **अत इति** । **गतिः** सद्गतिः । स्वमौढ्यादेव मामवजानन्ति । न मद्दोषात् । तेषां च महाननर्थ इति सर्वं समाहितम् ।

'राक्षसीं' इत्यादि तु किमर्थम् ? इत्यत आह **द्वेषेति** । 'मौढ्यान्मिथ्याज्ञानं भवतु । प्रज्वलनात्मको द्वेषस्तु तेषां कुत इत्याशङ्कानिवृत्त्यर्थम्' इति शेषः । 'अन्येषामविद्यमानं मौढ्यमेव तेषां कुतः ? इत्याशङ्कानिवृत्त्यर्थम्' इति वा । अत्र **कारणं** इति मूलकारणम् ॥ १२ ॥

***भा०दी०***— **इतश्चेति** । लोकानुकूलाननुकूलाभ्यां वेत्यर्थः । **कैमुत्यार्थमिति** । प्रकृते निरवकाशत्वादिना प्रबलदुर्बलयोः 'किमु' इत्यर्थसूचनायेत्यर्थः । इति द्वेषवाक्यानां गत्युक्तिः ॥ १२ ॥

***भा०र०***— **इतश्च** लोकानुकूलत्व-अननुकूलत्वरूपविशेषाच्चेत्यर्थः । **कैमुत्यार्थमिति** । प्रकृतानां च 'द्वेषात्' इत्यादिवाक्यानां बहुत्व-निरवकाशत्वादिगुणान्तरेणापि साम्याभावाद् बाधकत्वं नास्तीति किमु वक्तव्यमिति द्योतनाय 'साम्येऽपि' इत्युक्तमित्यर्थः । प्रत्यक्षादिप्रमाणागोचरार्थावबोधकोदाहृतवचनानां किं नाम लोकानुकूलत्वम् ? इत्यतो विवक्षितमर्थं दर्शयति **लोकानुकूलशब्देनेति** । 'यो यत्र स्नेहवान् स तत्प्रियः । यथा राज्ञि स्नेहवान् राजप्रियोऽमात्यः' इति लोक-

दृष्टव्याप्तिमदनुमानेत्यर्थः । **केचित्तु**— 'नभो नीरूपम्' इत्यस्मात् 'नभो नीलम्' इत्यस्य प्राबल्यं स्यात् । सर्वलोकानुकूलत्वादित्यत आह— 'लोकानुकूलशब्देन' इति अवातारयन् । भक्तिः प्रिया यस्यासौ भक्तिप्रियः तत् त्वमिति भाष्ये, 'द्वेषप्रियत्वम्' इति टीकायां च, भक्तिद्वेषशब्दाभ्यां तद्वन्तो ग्राह्याः । ननु भगवतो द्वेषिप्रियत्वाभावेऽपि 'द्वेषो मुक्तिहेतुर्न भवति' इत्यत्र किमायातम् ? इत्यत आह **भगवत्प्रीत्यैवेति** । 'तत्प्रीणनान्मोक्षमाप्नोति सर्वः', 'तत्प्रीत्यैव च मोक्षः' इत्यादिशास्त्र-प्रसिद्धमेवेत्यतो न **द्वेषेण** मुक्तिरिति भावः । 'ब्रह्मविष्णुरुद्राणामधीशो तुरीयशिवे' इति प्रतीतिं निरसितुमाह **त्रयाणामिति** । वैराभिनिविष्टचित्तानां भागवतशब्दोक्तं **भगवद्भक्तत्वमयुक्तमित्यत** आह **संरम्भेण मार्गमात्रेणेति** । 'शाखाग्रे चन्द्रमाः' इत्यादाविव द्वारमात्रेणेत्यर्थः । न तु फलसाधनं संरम्भशब्दितो द्वेष इति मात्रशब्दः । 'परिचायकमात्रेण' इत्यर्थ इत्यपि **आहुः** । संरम्भश्चासौ मार्गश्चेति व्युत्पत्तिरिति भावः ।

**उपसंहरति** द्वेषस्य मुक्तिसाधनत्वाभावम् । विष्णौ द्वेषो विवर्धितः तमस्यन्धे पातयति' इति द्वेषिणः तमःप्राप्त्यावेदनात् काऽपि गतिर्नेति कथमित्यत आह **गतिः सद्गतिरिति** । 'अवजानन्ति मां मूढाः' इत्यादेरुक्तमर्थं सङ्क्षिप्यानुवदन् उत्तरभाष्यमवतारयति **स्वमौढ्यादेवेति** । 'मूढाः' इति हेत्वर्थगर्भं विशेषणमिति स्फोरयितुमिदम् । **सर्वम्** । तर्हि कथं केचित् त्वामवजानन्ति ? किञ्च तेषां फलम् ? इति कृतचोद्यम् ।

'अधिष्ठानयाथात्म्यज्ञानं मौढ्यम्' इह विवक्षितमिति भावेनाह **मौढ्यान्मिथ्याज्ञानमिति** । 'मौढ्यं मिथ्याज्ञानम्' इत्यङ्गीकृत्याप्याह **अन्येषामिति** । **अत्र** 'द्वेषकारणमाह' इति भाष्ये । नन्ववज्ञानं नाम द्वेषः । तत्र च कारणं 'मूढाः' इत्युक्तमेवेति, 'कारणमाह' इति कथं भाष्यते ? इत्यत आह **मूलकारणमिति** ॥ १२ ॥

**गीता**

## महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
## भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥

*वि०वि०*— भगवतो द्वेष्यत्वादेवावजानन्तीति किं न स्यादित्यतस्तथात्वे देवप्रकृतयोऽप्यवज्ञां कुर्युः । नच तदस्तीत्याह **महात्मान इति** । महापुरुषाः दैवं स्वभावमाश्रिताः अनन्यचित्ताः मां भूतादिमव्ययं ज्ञात्वा भजन्ति ॥ १३ ॥

*वा०ल०*— 'अनन्यमनसः' इत्यत्र, अन्येषु मनो येषां न विद्यते ते अनन्यमनसः, एकान्तभक्ता इत्यर्थः ॥ १३ ॥

*सा०सं०*— ननु भगवतो दोषित्वादेवावजानन्तीति किं न स्यात् । तथात्वे दैवप्रकृतयोऽप्यवज्ञां कुर्युः । न चैवमस्तीत्याह **महात्मानस्त्विति** । **दैवीं** मुक्तियोग्योत्तमजीवसम्बन्धिनीम् । **प्रकृतिं** स्वभावम् । **आश्रिताः महात्मानो** महामनस्कास्तु **भूतादिं** भूतानां कारणम् । **अव्ययं** चतुर्विधनाशहीनम् । **मां ज्ञात्वाऽनन्यमनसो**ऽन्यविषयकमनोहीना मदेकमनस्काः सन्तः । **मां** भजन्ति सेवन्ते ॥ १३ ॥

*अ०प्र०*— के तर्हि त्वां आराधयन्तीत्यत आह **महात्मान इति** ।

हे पार्थ ![१], महात्मानस्तु[२], यतः दैवीं[३], प्रकृतिं[४], आश्रिताः[५], अत एव अनन्यमनसः सन्तो[६], भूतादिं[७], अव्ययं च[८], मां[९], ज्ञात्वा[१०] भजन्ति[११] ॥

हे पार्थ[१], महात्मानस्तु कामाद्यनभिभूतचित्ताः महामनस्कास्तु[२], यत अभयं सत्त्वशुद्धिः इत्यादि वक्ष्यमाणां दैवीं = दैवसम्बन्धिनीं[३], प्रकृतिं[४], आश्रिताः = अनुसरन्तः[५], अत एव अनन्यमनसस्सन्तो नास्ति अन्यस्मिन् मनो येषां ते तथा । अन्यविषयमनोहीनाः मदेकमनस्काः सन्तो[६], भूतादिं = भूतानां कारणं[७], अव्ययं = चतुर्विधनाशरहितं नित्यं च[८], मां ज्ञात्वा[९], भजति = सेवन्त इत्यर्थः ॥ १३ ॥

भाष्यम्

**नेतरे द्विषन्तीति दर्शयितुं देवानाह महात्मान इति ॥ १३ ॥**

*प०टी०*— न त्वद्दोषेण द्वेषः, किन्त्वात्मदोषेणैवेति कुतो ज्ञायते ? इत्युत्तरश्लोकमवतारयति **नेतर इति** ॥ १३ ॥

*प्र०दी०*— ननु कुतोऽयं विवेक इत्याकाङ्क्षायां राक्षसादिभ्य इतरे न द्विषन्तीत्येतावदेव वक्तव्यम् । 'भजन्ति' इत्यादि तु व्यर्थमित्यत आह **नेतर इति** । सत्यमेतत् । तथापि देवानां स्वरूपकथनार्थमेतत् । तच्च द्वेषाभावोपपादनार्थमिति भावः । **देवान्** इत्युत्तमजीवोपलक्षणम् ॥१३॥

*भा०दी०*— **अयं विवेक इति** । राक्षसादिस्वभावाः प्रद्विषन्तीत्येवंरूप इत्यर्थः ॥ १३ ॥

*भा०र०*— **अयं** 'राक्षसादिस्वभावा एव द्विषन्ति' इत्येवंरूपः । **एतत्** 'न द्विषन्ति इत्येतावदेव वक्तव्यम्' इत्येतत् । **एतत्** 'भजन्त्यनन्यमनसः' इत्येतत् । वैय्यर्थ्यपरिहारायाह **तच्चेति** । ननु

'भजन्ति' इत्यादिकं कथं देवस्वरूपकथनरूपम् ? ऋषिगन्धर्वादिषु अतिप्रसङ्गात्, इत्यतो 'देव-मानुषदानवाः' इत्यादाविवात्र देवशब्दो मुक्तियोग्यजीवमात्रपर इत्याह **देवानिति** ॥ १३ ॥

**गीता**

## सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
## नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥

*वि०वि०*— भजनप्रकारमाह **सततमित्यादिना** । केचिद्दृढनियमा नामोच्चारणं कुर्वन्तो भक्त्या मामुपासते ॥ १४ ॥

*सा०सं०*— भजनप्रकारमाह **सततमिति** । **मां सततं** 'कृष्ण कृष्ण' इत्यादिरूपेण **कीर्तयन्तः यतन्तः** मत्पूजादौ यत्नं कुर्वन्तः । दृढानि उपवासादिनियमव्रतानि येषां ते **दृढव्रताः** । **नित्ययुक्ताः** नित्यं मयि मनोयोगवन्तः । नित्यं कर्मज्ञानोपायवन्त इति वा । **भक्त्या नमस्यन्तश्च मामुपासते** ॥ १४ ॥

*अ०प्र०*— तेषां भजनप्रकारानाह **सततमिति** द्वाभ्याम् ।

हे पार्थ !, केचित् सततं[१], कीर्तयन्तः[२], मां[३], उपासते[४], केचित् दृढव्रताः सन्तो[५], यतन्तः मां उपासते[६], केचित् भक्त्या[७], मां नमस्यन्तः[८], उपासते केचित् नित्ययुक्ताः सन्तो[९], मां उपासते इत्यन्वयः[१०] ।

हे पार्थ !, केचित् सततं = सर्वदा[१], कीर्तयन्तः = कृष्णकृष्णेति स्तोत्रमन्त्रादिभिः मदीयं कीर्तनं कुर्वन्तः[२], मां[३], उपासते = सेवन्ते[४], केचित् दृढव्रताः सन्तो = व्रतानि दृढोपासादिव्रतानि नियमाः येषां ते तथा सन्तो[५], यतन्तः = इन्द्रियोपसंहारादिषु प्रयत्नं कुर्वतः सन्तो मां सेवन्ते[६], केचित् भक्त्या[७], मां नमस्यन्तः = प्रणमन्तश्च सेवन्ते[८], केचिदन्ये नित्ययुक्ताः सन्तो = नित्यं मयि मनोयोगवन्तः यद्वा, कर्मणोपायवन्तः अवहिताः मय्यात्मनि निरन्तरं सर्वावस्थासु संयुक्ताः सन्तो उपासन्ते दासोऽहमिति बुद्ध्या सेवन्ते वा[९], इति वा सेवन्ते भक्त्येति नित्ययुक्ता इति च कीर्तनादिष्वपि च द्रष्टव्यम् । यद्वा, यतन्तश्च दृढव्रताः अस्यार्थः योगसाधने दृढानि सुस्थिरानि यमनियमादिव्रतानि येषां ते तथा मनःप्राणोपसंहरणार्थं यमनियमासनप्राणायामप्रत्याहारधारणा-ध्यानसमाधिभिः केचिन्मां भजन्तः सन्तो विहरन्ति । अत्र धारणासमाधिरिति केचिद्वदन्ति । तर्हि अयं साधनमार्गः यमनियमासनैः प्राणायामेन च प्राणसंयमो भवति । ततः मूलाधारस्वाधिष्ठान-

मणिपूरकानाहतविशुद्धिमार्गेण यः प्राणस्य प्रत्याहारस्तस्य धारणा कर्तव्या अनन्तरं अज्ञातं यदा प्राणो नीयते तदा तत्र ध्यानं ध्यानस्य चर्या ॥ १४ ॥

**गीतातात्पर्यनिर्णयः**

**मानुषीं मनुष्यसदृशीम् । "तन्वा विष्णुरनन्योऽपि स्वाधीनत्वात् तदाश्रितः" इति च ।**

*प्रका०*— "अवजानन्ति" इत्यादेरर्थमाह **मानुषीमित्यादिना** ।

***न्या०दी०*— यद्येवंविधो भवांस्तर्हि कथं केचित्त्वामवजानन्ति, का च तेषां गतिरित्यत उच्यते 'अवजानन्ति' इति । तत्र भगवतो मानुषशरीरोक्तेः "भूतभृन्न च भूतस्थः" इत्युक्तिविरोध इत्यत आह मानुषीमिति ॥ नात्र भगवद्देहस्य मानुषत्वमुच्यते, येन विरोधः स्यात् । किन्तु मूढानामवज्ञानकारणतया मानुषसादृश्येन प्रतीयमानत्वमेवेत्यर्थः । तथाऽप्यत्र 'तनुमाश्रितम्' इति भगवतस्तद्देहस्य च भेदोक्तेः पूर्वोक्तविरोध इत्याशङ्कां स्मृत्यैव परिहरति तन्वेति ॥ यथा देवदत्तशरीरं तदधीनमेवं भगवद्देहस्यापि तदधीनत्वात् भगवतस्तदाश्रितत्वप्रयोगो गौण इत्यर्थः ।**

*भा०दी०*— **इत्युक्तिविरोध इति** । तत्र देहस्य भगवल्लक्षणोत्त्याऽप्राकृतत्वप्राप्तेरिति भावः । **पूर्वोक्तेति** । भूतभृदित्यादौ देहस्य तत्स्वरूपत्वोक्तेः तद्विरोध इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता ।<br>
प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता ॥<br>
धर्मदेहावतारादेर्भेददृष्टिश्च सङ्करः ।<br>
अवतारेष्विति ज्ञेयमवज्ञानं जनार्दने ॥<br>
सर्वं मोघं शुभं तस्य योऽवजानाति केशवम् ।<br>
अवरं याति च तमः प्रादुर्भावगतोऽप्यतः ॥<br>
ज्ञेयः केवलचिद्देहो विदोषः पूर्णसद्गुणः ॥"**

**—इति भविष्यत्पर्वणि ॥ ११-१४ ॥**

*प्रका०*— **अनन्यता** दृष्टिरपूर्णतादृष्टिरिति दृष्टिपदमध्याहर्तव्यम् । अवतारेषु सङ्करस्तु जीवविशेषस्य पृथ्वादेर्विष्णववतारवद् दृष्टिः ॥

***न्या०दी०*— अवज्ञानं च न केवलमवरतया ज्ञानं किन्त्वन्यदप्यस्तीति भावेन श्लोकं स्मृत्यैव व्याचष्टे ब्रह्मेति । 'अनन्यता', 'अपूर्णता' इत्यत्र दृष्टिरिति संयोज्यम् । अवतारेषु सङ्करो नाम अनवताराणामवतारत्वेन, अवताराणामनवतारत्वेन ज्ञानम् । सर्वस्माद्भिन्नः सर्वोत्तमः स्वगतभेदविवर्जितो यथावदिति च ज्ञातव्यम् ॥ ११-१४ ॥**

*भा०दी०*— अनवताराणां पृथ्वादीनां अवताराणां वेदव्यासपरशुरामप्रभृतीनां अवमत्वादिना ज्ञानमवज्ञानमित्युक्तम् । महात्मानस्तु ज्ञात्वा भजन्तीत्यत्र तद्ज्ञानस्वरूपमात्रस्मृतौ तदप्यत्र ग्राह्य-मिति स्वयमाह **सर्वस्माद्भिन्न इत्यादिना** । **यथावत्** इत्यत्र ज्ञानमिति योज्यम् ॥ ११-१४ ॥

**गीता**

## ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
## एकत्वेन पृथत्त्वेन बहुधा विश्वतोमुखम्॥ १५ ॥

*वि०वि०*— अन्ये ज्ञानाख्येन यज्ञेन यजन्तः सर्वत्रैक एव नारायणः स्थित इत्येकत्वेन, पृथक्त्वेन सर्वतो वैलक्षण्येन, बहुधा शुक्लकृष्णादिबहुलत्वेन । 'दैवमेवापरे यज्ञम्' इत्युक्तप्रकारेण बहवो वा बहुधा भूत्वा विश्वतोमुखं सन्तं मामुपासते । उक्तं च— 'स एव दशधा प्रोक्तो विष्णु-र्मत्स्यादिरूपकः । शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः ॥ परादिरूपो बहुधा सोऽनन्तात्मा-ऽजितादिकः । तथा च— 'एकमूर्तिश्चतुर्मूर्तिरथवा पञ्चमूर्तिकः । द्वादशादिप्रभेदो वा पूज्यते सज्जनै-र्हरिः ॥' इत्युक्तप्रकारेणैवोपास्यते ॥ १५ ॥

*वा०ल०*— 'एकत्वेन' इत्यत्र एकत्वेन स्वावतारगुणादिष्वेकत्वेन । पृथत्त्वेन जीवजडात्म-कात् प्रपञ्चात् पृथत्त्वेन । बहुधा श्रवणमनननिदिध्यासनादिरूपेण, 'सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः । यथाक्रमं बहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः ॥' इति स्मृत्युक्तप्रकारेण बहुधा वा ॥ १५ ॥

*सा०सं०*— **अन्ये**ऽपि च महात्मानो ज्ञानाख्ययज्ञेन **मां** यजन्तः पूजयन्तः माम् उपासते । श्रवणमननध्यानादि कुर्वन्तः परेभ्यः उपदिशन्तश्च नित्यं भगवन्माहात्म्यज्ञाने रता इत्यर्थः । **विश्वतोमुखम्** । मुखशब्दोऽत्र सर्वावयवोपेतरूपपरः । विश्वस्मिन् सर्वत्र स्थितं **मामेकत्वेन पृथक्त्वेन** सर्वजगद्वैलक्षण्येन **बहुधा** च शुक्लनीलपीतादिभेदेन बहुधोपासत इति वा । बहुधा बहव

इत्यर्थः । 'दैवमेवापरे यज्ञम्' (४-२४) इत्यादिना चतुर्थोक्तदिशा बहव उपासत इति वाऽर्थः । यद्वा, 'एकमूर्तिश्चतुमूर्तिरथवा पञ्चमूर्तिकः' इति तात्पर्योक्तदिशा सर्वरूपात्मकनारायणरूपैकमूर्तित्वेन, पृथक्त्वेन वासुदेवादिचतुर्मूर्तित्वेन, बहुधा नारायणवासुदेवादिपञ्चमूर्तित्वेन, **विश्वतोमुखं** द्वादशचतुर्विंशत्यादिभेदेन स्थितम् । मामुपासत इत्यर्थः ॥ १५ ॥

*अ०प्र०*— किञ्च **ज्ञानयज्ञेन चेति** ।

हे पार्थ !, अन्येऽपि च[२], ज्ञानयज्ञेन[२], मां[३], यजन्तः[४], उपासते[५], तत्रापि केचित् विश्वतोमुखं मां[६], एकत्वेन[७], पृथक्त्वेन[८], बहुधा[९], उपासते ॥

अन्येऽपि च = महात्मानः ज्ञानयज्ञेन ज्ञानमेव यज्ञः तेन तथा ज्ञानाख्ययज्ञेन[२], मां[३], यजन्तः = पूजयन्तः[४], उपासते = श्रवणमननध्यानादि-कुर्वन्तः परेभ्यो उपदिशन्तश्च नित्यं भगवन्माहात्म्यज्ञानरता इत्यर्थः । तत्रापि केचित् विश्वतोमुखं = मुखशब्दोऽत्र सर्वावयवोपेत रूपपरम्परः विश्वस्मिन् सर्वत्र स्थितं मां[६], एकत्वेन[७], पृथक्त्वेन[८], बहुधा = सर्वजगद्वैलक्ष्यण्येन यद्वा, बहुधा च शुक्लनीलपीतादिभेदेन यद्वा, बहुधोपासत इति वा यद्वा, बहुधा बहव इत्यर्थः[९], उपासते = भजन्ति । 'दैवमेवापरे यज्ञं योगिनः पर्युपासते'त्यादिना चतुर्थोक्तदिशा सर्वे रूपात्मकनारायणरूपैकमूर्तित्वेन पृथक्त्वेन वासुदेवादिचतुर्मूर्तित्वेन बहुधा नारायणवासुदेवादिपञ्चमूर्तित्वेन विश्वतोमुखं द्वादशाचतुर्विंशत्यादिभेदेन स्थितं मां उपासत इत्यर्थः ॥ १५ ॥

भाष्यम्

**सर्वत्रैक एव नारायणः स्थित इति एकत्वेन, पृथक्त्वेन सर्वतो वैलक्षण्येन। बहुधा हि तस्य रूपम्— ''आभाति शुक्लमिव लोहितमिवाथो नीलमथार्जुनम्'' इति हि सनत्सुजाते । 'दैवमेवापरे' इत्युक्तप्रकारेण बहवो वा बहुधा ॥ १५ ॥**

*प०टी०*— 'एकत्वेन' इत्यादेरर्थं सप्रमाणकमाह **सर्वत्रेति** ॥ १५ ॥

*प्र०दी०*— 'एकत्वेनाद्वैतभावनया' इति व्याख्यानमसत् । मिथ्याभावनात्वादिति भावेनाह **सर्वत्रेति** । सर्वत्र स्थितो नारायण एक एवेति योजना । 'पृथक्त्वेनादित्यचन्द्रादिरूपेण' इत्यसदिति भावेनाह— **पृथक्त्वेनेति** । अपरस्तु 'पृथक्त्वेन' इत्येतत् सम्यक् व्याख्याय 'बहुधा' इत्येतत् 'आदित्यादिरूपेण' इति व्याख्यातवान् । अत आह **बहुधेति** । कथम् ? इत्यतः आगमेनैव दर्शयति **शुक्लमिवेति** । इवशब्दः अप्यर्थः । प्रकारान्तरेण व्याख्याति **देवमेवेति** ॥ १५ ॥

*भा०दी०*— **दैवमेवेति** । 'दैवमेवापरे यज्ञं योगिनः पर्युपासते । ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति' इत्यादिना **चतुर्थोक्तदिशेत्यर्थः** ॥ १५ ॥

*भा०र०*— "**एकत्वेन** 'एकमेव परं ब्रह्म', 'वासुदेवः सर्वम्' इत्येवंरूपपरमार्थदर्शनेन" इति शाङ्करभाष्यतात्पर्यम् **अद्वैतभावनयेति** ॥ **मिथ्याभावनात्वादिति** । सा च 'न च रमन्त्यहो असदुपासनया', 'अयोग्यानि अनुपास्यानि, अफलत्वविपर्ययाभ्याम्' इत्यादौ अनर्थहेतुरावेदितेति भावः । 'एक एव नारायणः स्थितः' इति कथम् ? अव्याकृताकाशादेरपि सर्वत्रावस्थितत्वाद्, इति शङ्कां परिहर्तुं अन्वयं दर्शयति **सर्वत्र स्थित इति** । 'आदित्यचन्द्रादिभेदेन स एव भगवान् विष्णुरवस्थित इत्युपासते' इति शाङ्करभाष्यं सङ्क्षिप्यानुवदति **पृथक्त्वेनादित्येति** ॥ **इत्यसदिति** । मिथ्योपासनत्वापातादिति भावः । **सम्यक्** 'सर्वतो वैलक्षण्येन' इति भाष्यरीत्या । 'शुक्लादिरूपतयेवोपासते' इति प्रतीतिः मिथ्योपासनात्वापातादयुक्तमिति भावेनेवशब्दार्थमाह **इवशब्द इति** । **'इत्युक्तप्रकारेण'** इति भाष्ये 'दैवमेवापरे यज्ञं योगिनः पर्युपासते' इत्यादिना चतुर्थे यज्ञभेदोक्तिप्रस्तावोक्तप्रकारेण 'बहव उपासका बहुभिः प्रकारैरुपासते' इति वा 'बहुधोपासते' इति वचनार्थः । तत्र 'एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे' इति सर्वयज्ञैर्भगवत उपास्यत्वावेदनादिति व्याख्यानं द्रष्टव्यम् ॥ १५ ॥

*'सर्वभूतानि' इत्यादेः 'बहुधा विश्वतोमुखम्' इत्यन्ताया नवश्लोक्या अक्षरार्थस्तु*—

प्रतिज्ञातज्ञानप्रदर्शनाय 'मया' इत्यादिना भगवतो व्याप्तत्वसर्वाधारत्वाद्युक्त्वा 'न च' इत्यादिश्लोकद्वयेनोपपाद्य च, अधुना प्रतिज्ञातज्ञानप्रदर्शनार्थं भगवतः प्रलयादिकारणत्वं प्रपञ्च्यते **सर्वभूतानीति** । **सर्वाणि भूतानि** = सशरीरजीवजातानि, **कल्पक्षये** = प्रलयकाले, **मामिकां** = मदधीनां, **प्रकृतिं** = त्रिगुणात्मिकां, **यान्ति** = तत्र लीनानि भवन्ति । **पुनः** च **तानि कल्पादौ** = सृष्टिकाले विशेषेण विविधतया च **सृजामि** इत्युक्तमेव ॥ ७ ॥

सृष्टौ साधनत्वेन प्रकृतेरनुक्तेर्विनैव साधनं सृजति किम् ? इति शङ्कां निरसितुं विशदीक्रियते **प्रकृतिमिति** । **प्रकृतिमवष्टभ्य** उपादानतयोपादाय **कृत्स्नं भूतग्रामं विसृजामि** । तस्यापि चेतनाचेतनत्वेनासृज्यत्वमेव किं न स्यादित्यत उक्तम् **अवशम्** अस्वतन्त्रमिति । कुतः अस्वातन्त्र्यम् ? **प्रकृतेर्वशात्** प्रकृत्यधीनत्वादिति । तर्हि प्रकृतिविकल्पस्य सृष्ट्यादावसामर्थ्यमेव किम् ? इति प्रतीतिं निरसितुं **स्वां** स्वाधीनाम्' इत्युक्तम् । यथा कश्चित्पादेन गन्तुं समर्थोऽपि लीलया दण्डमवष्टभ्य गच्छति, तथा लीलयैव प्रकृत्यवष्टम्भः, न तु केवलस्य सामर्थ्याभावात् । तथा चाहुः

'साधनानां साधनत्वं यदात्माधीनमिष्यते । तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत्' इति भावः ॥ ॥ ८ ॥

सकलजगत्सर्जनादिकर्मणि व्यावृत्तिमतस्तव देवदत्तस्येव कर्मलोपः प्रसज्येत ? इत्यत उच्यते **न चेति** । **तानि कर्माणि** जगत्सर्जनोपसंहरणादीनि **न निबध्नन्ति** । अत्र हेतुः **उदासीनवदासीनमिति** । वस्तुतोऽनुदासीनोऽप्यहम् उदासीनसदृश आसे, तमित्यर्थः । किन्नामोदासीनसादृश्यं वतिना बोध्यं तव ? इत्यत उक्तम् **असक्तमिति** । उदासीनस्य कर्मसु यथा सक्तिः = आदर आयासो नास्ति तथा मम सर्वकर्म कुर्वतोऽपि तत्र सक्तिशब्दतात्पर्यगोचरायासो नास्ति । यस्य असत्त्यैव सर्वकर्मशक्तिः, कुतस्तस्य कर्मबन्ध इति भावः ॥ ९ ॥

भगवतोदासीनसादृश्यं स्वयमेव व्याख्यातम् । तदज्ञात्वा 'क्रियाऽभाव एवोक्तः' इति मत्वा शङ्कितम् । पुरा 'प्रकृतिं स्वामवष्टभ्य विसृजामि' इत्युक्तम् । इदानीं तु 'उदासीनवत्' इति निष्क्रियत्वमुच्यते । एवं तर्हि प्रकृतिरेव सूयते । त्वयि तु तत्सन्निधानात् कर्तृत्वोपचारमात्रमित्यापन्नमिति । तदेतन्निवृत्त्यर्थमुच्यते **मयेति** । कार्यमधिकृत्य अक्षाणि यस्य सोऽध्यक्ष इत्यध्यक्षशब्देन प्रकृतिसूतेर्द्रष्टा अहमेवेत्युच्यते । तृतीयया च तत्प्रयोजककर्ता चाहमेव, न तु तस्याः स्वातन्त्र्यमिति प्रकृतिसूतेर्द्रष्टा तत्प्रयोजककर्ता च । **मया प्रकृतिः सचराचरं जगत् सूयते** उत्पादयति । न केवलं प्रकृतिसूतेर्द्रष्टा प्रयोजककर्ता चाहम्, किन्तु जगत्कर्ता चास्मि इत्युच्यते **हेतुनेति** । कर्तृरूपकारणभूतेनानेन मया जगत् **विविधतया परिवर्तते** । पुनःपुनर्जायते ॥ १० ॥

यदि त्वमेव जगतः सृष्टिस्थितिसंहाराणां कर्ता, तर्हि केचित् कथं त्वामवजानन्ति ? किञ्च ते फलं प्राप्नुवन्ति ? न किमप्यनिष्टं तेषाम् । अतोऽहमेव कृत्स्नजगतः कर्ता' इति प्रागुक्तमयुक्तम् ? इत्यत उच्यते **अवजानन्तीति** । **मूढा मानुषीं तनुमाश्रितम्** 'मनुष्यदेहमधिष्ठाय स्थितम्' इति भ्रान्त्यनुवाद एवायम् । **मामवजानन्ति** अवमतया जानन्ति मूढत्वस्यैव विवरणम् । **भूतं** सर्वदा विद्यमानं **महत्** देशतो व्याप्तिमन्तम् **ईश्वरं** गुणपूर्णं **मम भावं** याथार्थ्यम् अजानन्त इति । अन्यथा योजनं तु 'भूतं महदीश्वरं च' इति भाष्याद्यननुगुणम् । *भावप्रदीपिकायाम्*— 'भूतानां महेश्वरम्' इत्यप्यर्थान्तरमुक्तम् ॥ ११ ॥

'किञ्च तेषां फलम्' इति प्रश्नस्योत्तरमुच्यते **मोघाशा इति** । वृथाशाः भगवद्द्वेषिभिराशासितम् आमुष्मिकं न किञ्चिदाप्यत इति भावः । मोघानि = व्यर्थानि कर्माणि = यज्ञादीनि येषां ते तथोक्ताः । युद्धादिकर्मणां साफल्यदर्शनेऽपि यज्ञादिकर्माणि न तेषां फलमावहन्तीत्यर्थः । मोघं ज्ञानं तत्त्वविषयं येषां ते **मोघज्ञानाः** । तत्त्वज्ञानमेव तेषां नास्तीति कथं तस्य मोघत्वमुच्यत इति चेन्न।

केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन तेषां ज्ञानमेव नोत्पद्यते । 'सर्वथाऽपि तु त एवोभयलिङ्गात्' इति हि सूत्रमिति । ज्ञानपदोपलक्षित आमुष्मिकः पुरुषार्थो न कश्चित्तैराप्यत इति च तात्पर्यात् । कुतोऽज्ञानं तेषाम् ? यतः **विचेतसः** विपरीतज्ञानाः ।

ननु भगवन्तमवजानतामपि चैद्यादीनां 'द्वेषाच्चैद्यादयो नृपाः', 'तद्गतिं गताः' इति भागवतादौ महापुरुषार्थो मुक्तिरुच्यत इति चेन्न । उक्तवचनानां भक्तप्रियत्वज्ञापनार्थत्वस्य नित्यध्यानस्तुत्यर्थत्वस्य च भाष्यादौ स्थापितत्वादिति । ननु मौढ्यान्मिथ्याज्ञानं भवतु । प्रज्वलनात्मको द्वेषस्तु तेषां कुतः ? इति शङ्कां परिहर्तुम्, अन्येषामविद्यमानमौढ्यमेव तेषां कुतः ? इति शङ्कानिरासार्थं वा द्वेषे मूलकारणमुच्यते **राक्षसीमिति** । मोहोऽस्याः कार्यत्वेन अस्तीति **मोहिनी, तां** बुद्धिभ्रंशकरीं **राक्षसीम्** आसुरीं **प्रकृतिं** स्वभावं **श्रिताः** आश्रिताः दैत्याः, रक्षांसि, पिशाचकाः, मर्त्याधमाश्चेति चतुर्विधास्तमोयोग्याः मामवजानन्तीति सम्बन्धः ॥ १२ ॥

ननु 'राक्षसादिस्वभावा एव द्विषन्ति, नेतरे' इत्येवं विवेकः कुतः ? इत्याकाङ्क्षायां यतो राक्षसादिभ्य इतरे न द्विषन्तीति वक्तुं उत्तमजीवानां स्वरूपं कथ्यते द्वेषाभावोपपादनार्थं **महात्मानस्त्विति** । **दैवीं प्रकृतिं** मुक्तियोग्यस्वभावं महान् आत्मा = मनो येषां ते **महात्मानः** महापुरुषाः **तु भूतादिं** भूतानां कारणम् **अव्ययं मां** ज्ञात्वा निश्चितपरोक्षतत्त्वा इति यावत् । **अनन्यमनसः** मदेकचित्ताः सन्तो **मां भजन्ति** ॥ १३ ॥

इतिकर्तव्यताविशेषोक्त्या भजनमेवोच्यते **सततमिति** । **यतन्तः** भगवज्ज्ञानाय प्रयतमानाः **व्रतं** नियमः **नित्ययुक्ताः** सदा मय्येव मनोयोगसम्पन्नाः **सन्तो** मामुपासते ॥ १४ ॥

**अन्येऽपि च** महात्मानः **ज्ञानयज्ञेन यजन्तः** पूजयन्तो **मामुपासते** श्रवणमननध्यानानि नित्यमनुतिष्ठन्तः सन्तः **एकत्वेन** 'सर्वत्र स्थितो नारायण एक एव' इति भावनया **पृथक्त्वेन** सर्वतो वैलक्षण्येन **बहुधा** शुक्लनीलपीतादिरूपत्वेन च **मामुपासते** । यद्वा **बहुधा** 'दैवमेवापरे यज्ञम्' इत्यादिचतुर्थाध्यायोक्तदिशा बहवः उपासकाः **विश्वतोमुखं** सन्तं भगवन्तम् **उपासते** । अत्र पक्षे धाप्रत्ययो न विधार्थे, किन्तु स्वार्थ इति ॥ १५ ॥

**गीतातात्पर्यनिर्णयः**

**एकमूर्तिश्चतुर्मूर्तिरथवा पञ्चमूर्तिकः ।**
**द्वादशादिप्रभेदो वा पूज्यते सज्जनैर्हरिः ॥" इति च ॥ १५ ॥**

*प्रका०*— "नित्ययुक्ता उपासते । एकत्वेन" इत्यस्यार्थमाह **एकमूर्तिरिति** । अस्यार्थः तन्त्रसारसङ्ग्रहे द्रष्टव्यः ॥

***न्या०दी०***— भगवतो दोषित्वादेवावजानन्तीति किं न स्यादित्यतः तथात्वे देवप्रकृतयोऽप्यवज्ञां कुर्युः, न च तदस्तीत्युच्यते 'महात्मानः' इति । तत्रैकत्वेनेत्येतदन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे **एकेति** । एकत्वेनेत्यादिपदचतुष्टयस्य एकमूर्तिरित्यादि यथाक्रमं व्याख्यानम् ॥ १५ ॥

*भा०दी०*— **तदस्तीति** । यत्प्रामाणिकमित्यर्थः ॥

**गीता**

**अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् ।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥**

*वि०वि०*— प्रतिज्ञातं विज्ञानमाह **अहं क्रतुरित्यादिना** । दीक्षाद्यवभृथान्ताः क्रतवोऽग्निष्टोमादयः । यज्ञो देवतोद्देशेन द्रव्यत्यागः ॥ १६ ॥

*सा०सं०*— 'ज्ञानं विज्ञानसहितं वक्ष्यामि' इति प्रतिज्ञातज्ञानविषयं निरूप्य अधुना विज्ञानप्रदर्शनाय तद्विषयमाह **अहं क्रतुरित्यादिचतुष्टयेन** । क्रतवः दीक्षाद्यवभृथान्तकर्मकलापाः ज्योतिष्टोमादयः । यज्ञस्तु देवतोद्देशेन द्रव्यत्यागरूपं प्रधानं कर्म । कुरुपाण्डववत् सामान्यविशेषभावेन भेदो ज्ञेयः । **स्वधा** पितॄणां तिलोदकादिदानम् । 'अहं क्रतुः' इत्याद्यभेदोक्तिः 'रसोऽहमप्सु कौन्तेय' इत्यादाविव क्रत्वादेः क्रतुत्वादिनियन्तृत्वेन क्रत्वङ्गहविरादिभोक्तृत्वादिना ध्येया ॥ १६ ॥

*अ०प्र०*— ज्ञानं विज्ञानसहितं प्रवक्ष्यामीति प्रतिज्ञातम् । ज्ञानविषयं निरूप्याधुना विज्ञानप्रदर्शनाय तद्विषयमाह **अहं क्रतुरित्यादिना** ।

क्रतुः[1], अहं[2], क्रतुः कर्मेत्यर्थः । अग्रे अहं यज्ञ इति प्रोच्यमानत्वात् वेदो यद्विधानं प्रतिपादयति तत् क्रत्वाख्यकर्म यद्वा, क्रतवः दीक्षाद्यवभृतान्तकर्मकलापरूपज्योतिष्टोमादयः[3], अहं इत्युक्ते क्रतुत्वादि नियन्तृत्वेन क्रत्वङ्गहविरादिभोक्तृत्वादिना ध्येयम्[4], यज्ञस्तु देवतोद्देशेन द्रव्यत्यागरूपं प्रधानं कर्म कुरुते यावत्सामान्यविशेषभावेनैवं भेदो यज्ञः स्मार्तपञ्चयज्ञादि वा यज्ञः[5], स्वधा = पितॄणां श्राद्धतिलोदकादिदानं[3], औषधं = औषधिप्रभवमन्नं भेषजं वा[2], मन्त्रो = याज्या

पुरोनुवाक्यादिः[१], आज्यं = होमादिसाधनं[६], अग्निः = आहवनीयादिः[७], हुतं = होमः अहं[८], अहं क्रतुरित्यादिभेदोक्तिः 'रसोऽहमप्सु कौन्तेय' इत्यादि विवेकत्वादेव क्रतुत्वादि नियन्तृत्वेन क्रत्वङ्ग-हविरादिभोक्तृत्वादिना ध्येयम् ॥ १६ ॥

भाष्यम्

**प्रतिज्ञातं विज्ञानमाह— अहं क्रतुरित्यादिना । क्रतवः** **अग्निष्टोमादयः । यज्ञः देवतामुद्दिश्य द्रव्यपरित्यागः । "उद्दिश्य देवान् द्रव्याणां त्यागो यज्ञ इतीरितः" इत्यभिधानात् ॥ १६ ॥**

*प०टी०*— उत्तरप्रघट्टकमवतारयति **प्रतिज्ञातमिति** । क्रत्वादिभोक्तृत्वकर्तृत्वादिनैक्यव्यपदेश इत्युक्तम् । क्रतुयज्ञयोर्भेदं सप्रमाणकमाह **क्रतव इति** ॥ १६ ॥

*प्र०दी०*— 'विश्वतोमुखम्' इत्युक्तं 'सर्वात्मकत्वं प्रपञ्चयत्युत्तरेण' इत्यन्यथाव्याख्यान-निरासार्थमाह **प्रतिज्ञातमिति** । अन्यथा प्रतिज्ञाताऽनुक्तिप्रसङ्ग इति भावः । व्याख्यानं तु 'रसोऽहं' इत्यादेरिव द्रष्टव्यम् । क्रतुयज्ञशब्दयोरर्थभेदमाह **क्रतव इति** । सामान्यविशेषभावेन भेद इत्यर्थः ॥ ॥ १६ ॥

*भा०दी०*— **इत्यादेरिवेति** । सप्तमे 'रसोऽहमप्सु कौन्तेय' इत्यादौ यथा रसादीनां रसादित्वनियन्तृत्वेन रसादिभोक्तृत्वेन च 'रसोऽहम्' इत्यादि उच्यत इति व्याख्या तथा इहापि क्रतुत्वादिनियन्तृत्वेन क्रत्वादिभोक्तृत्वेन 'अहं क्रतुः' इत्याद्युच्यत इति व्याख्या ज्ञेयेत्यर्थः । **सामान्येति** । पूर्वोत्तराङ्गकलापविशिष्टक्रियाविशेषोऽग्निष्टोमादयः क्रतुपदोक्ताः, द्रव्यत्यागमात्रं यज्ञशब्दार्थ इति भावः ॥ १६ ॥

*भा०र०*— 'विश्वतोमुखं विश्वरूपम्' इति शङ्करभाष्यस्य 'सर्वात्मकं माम्' इति *श्रीधरेण* व्याख्यातत्वादाह **विश्वतोमुखमित्युक्तं सर्वात्मकत्वमिति** । परव्याख्याने दूषणमाह **अन्यथेति** । **प्रतिज्ञातेति** । 'ज्ञानं विज्ञानसहितम्' इत्यत्र प्रतिज्ञातेत्यर्थः । **क्रतुयज्ञशब्दयोरिति** । 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इति पर्यायत्वाभिधानात् इति भावः । **सामान्यविशेष-भावेनेति** । यज्ञशब्दः 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि, पशुः सोमः' इति सोमशब्दितज्योतिष्टोमदर्शपूर्णमासादिसर्वकर्मसाधारणः । क्रतुशब्दस्तु अग्निष्टोमादिसंस्थाक-ज्योतिष्टोमाश्वमेधादियज्ञविशेषवचन इति कुरुपाण्डवन्यायेन भेद इत्यर्थः । भाष्ये 'ज्योतिष्टोमादयः'

इति वक्तव्ये 'अग्निष्टोमादयः' इति वचनम् अग्निष्टोम-अत्यग्निष्टोम-उक्थ्यादिसंस्थाम् अन्तरा केवलं ज्योतिष्टोमस्यानुष्ठानाद् अग्निष्टोमादिसंस्थाकस्यैव अनुष्ठेयत्वात् तदभिप्रायम् । तथा च यजुर्वेदे 'प्रजापतिर्यज्ञानसृजताग्निहोत्रं च अग्निष्टोमं च पौर्णमासीं चोक्थ्यं च' इत्यादि ।

एतेन 'ज्योतिष्टोमादिकमेव यज्ञं गृहीत्वा' इत्यष्टादशाध्यायटीकावाक्यमपि समाहितं वेदितव्यम् । एकवचनं च जात्यभिप्रायकमिति भाष्ये । **क्रतवः** इति बहुवचनमिति वदन्ति ॥ १६ ॥

**गीता**

## पिताऽहमस्य जगतो माता धाता पितामहः ।
## वेद्यं पवित्रमोङ्कारः ऋक्साम यजुरेव च ॥ १७ ॥

***वि०वि०***— पितामहः पूज्यः ॥ १७ ॥

***सा०सं०***— किञ्च **अस्य जगतः पिता** जनकः **अहम्** । **माता धाता** पोषकोऽहमिति सर्वत्रानुवृत्तिः । **पितामहः** पूज्यः । **वेद्यं** ज्ञेयं वस्तु **पवित्रं** चाहमेव । यद्वा, वेद्यपवित्रवस्तुनोर्वेद्यत्वपवित्रप्रदत्वात् तथोच्यते । ॐकारादावोङ्कारत्वऋक्त्वादिनियन्तृत्वात् तद्वेद्यत्वादिना तदभेदो ध्येयः । यद्वा, 'अर्च्यत्वादृक् समत्वाच्च' इत्यादिस्मृत्युक्तदिशा क्रत्वादिभिन्नस्य हरेर्योगवृत्त्या क्रत्वादिनामकत्वमिह ध्येयम् । तथा हि कृतिस्वरूपत्वात् **क्रतुः** । यदस्ति प्रामाणिकतया तज्जानातीति **यज्ञ**नामा । स्वं स्वात्मानं धत्त इति **स्वधा** । 'उष दाहे' कर्मणि घञ् । उषाः उष्टाः तापत्रयदग्धाः तेषां निधिरित्यौ**षध**नामा । मानाज्ज्ञानात् त्रातीति **मन्त्र**नामा । आ समन्तात् ज्यायस्त्वादा**ज्य**नामा । अगस्य स्वतो गतिहीनस्य जगतो नेतेत्य**ग्नि**नामा । यज्ञादावाहूतत्वात् **हुत**नामा । ओमित्याक्रियत इत्यो**ङ्कारः** । अर्च्यत्वात् पूज्यत्वाद् **ऋङ्**नामा । सर्वरूपेषु समत्वात् **साम**नामा । याज्यत्वाद्**यजुर्**नामा ॥ १७ ॥

***अ०प्र०***— किञ्च **पिताऽहमिति** ।

अस्य[१], जगतः[२], अहं[३], पिता[४], माता[५], धाता[६], पितामहः[७], वेद्यं[८], पवित्रं[९], ॐकारः[१०] ऋक्[११] साम[१२], यजुः[१३], एव च अहमेवेत्यर्थः ।

अस्य[१], जगतः[२], अहं पिता = जनकः[४], अहं माता[५], धाता = पोषकः[६], पितामहः = पूज्यः[७], वेद्यं = ज्ञेयम्[८], पवित्रं = शोधकं वस्तु पवित्रं चाहमेव[९], यद्वा, वेद्यं पवित्रं वस्तुनः

वेद्यत्वपवित्रत्वादिप्रदत्वात्तथोच्यते[१], ॐकारः = ॐकारादौ ॐकारत्वादिति यन्तृत्वतद्वेद्यत्वादिना तदभेदो ध्येयः । ॐकारात्मकाः वेदाः सभूतास्तस्मात् ऋक्यजुसामानि चाहं यद्वा, घोषध्वनि-नादाकारस्य ब्रह्मबीजाङ्कुरस्य यद्भवनं स ॐकारोऽहम् । यद्वा, अर्च्यत्वादृक्समुच्चेत्यादिस्मृत्युक्त-दिशा क्रत्वादिभिन्नस्येव हरेः योगवृत्या क्रत्वादिना मत्वा ध्येयम् । तथाहि प्रकृतिस्वरूपत्वात् क्रतुः यदस्ति प्रामाणिकतया तज्जानातीति यज्ञनामस्वात्मानं धत्त इति स्वधातो कर्मणि घञ् उषाः उष्णाः तापत्रयदग्धाः तेषां निधिरित्यौषधनामा ममाज्ञानात् त्रातीतिमन्त्रनामा आसमन्ताजपरस्त्वा-दाज्यनामा अद्य स्वस्वतोगतिहीनजगतो नेतेत्यग्निनामा यज्ञेन हुतत्वात् हुतनामा ओमित्याक्रियत इत्योङ्कारः अर्चत्वात्पूज्यत्वादृङ्नामा सर्वरूपेषु समत्वात्सोमनामा याज्यत्वाद्यजुर्नामा एवं शब्द-ब्रह्मणो विस्तारमहमेवेति भावः । मुमुक्षुभिः अवगम्यत्वात् हुतिः ॥ १७ ॥

**गीता**

## गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
## प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥

***वि०वि०***— गम्यतेऽवगम्यते मुमुक्षुभिः इति गतिः । भरणाद्भर्ता । प्रभुः समर्थः । साक्षा-दीक्षत इति साक्षी । निवासः आश्रयः । संसारभीतरक्षणाच्छरणं सुहृत् प्रभवत्यस्मादिति प्रभवः । प्रलयकाले प्रलीयतेऽस्मिन्निति प्रलयः । तिष्ठत्यस्मिन्निति स्थानम् । संहारकाले प्रकृत्या जगदत्र निधीयत इति निधानम् । अव्ययं बीजं जगद्व्यक्तिकारणम् ॥ १८ ॥

***वा०ल०***— जडैक्यस्य कैरप्यनङ्गीकारात् अहं क्रतुः इत्यादिस्ववचनाभिप्रायं स्वयमेवाह **गतिर्भर्ता इत्यादिना** ॥ १८ ॥

***सा०सं०***— मुमुक्षुभिरवगम्यत्वात् **गतिः** । **भर्ता** पोषकः । **प्रभुः** स्वामी । साक्षात् सर्वमीक्षत इति **साक्षी** । **निवासः** आश्रयः । **शरणं** भीतरक्षकः । मुक्ताश्रय इति यावत् । **सुहृद**निमित्तोपकारी । **प्रभवः** जगदुत्पत्तिकर्ता । प्रलयकर्तृत्वात् **प्रलयो**ऽहम् । **स्थानं** सर्वा-धारोऽहम् । नितरां धारकत्वाद्वा, प्रलयकाले प्रकृत्यादिजगदत्र निधीयत इति वा **निधानम्** । प्रकृतिं प्राप्य पश्चात्तया हरौ निधीयत इत्यर्थः । तेन 'प्रकृतिं यान्ति भूतानि' इत्युक्त्यविरोधः । जग-द्व्यञ्जकत्वाद् **बीजम्** । तथात्वेऽपि अविकारित्वप्रदर्शनायोक्त**मव्यय**मिति ॥ १८ ॥

***अ०प्र०***— किञ्च **गतिरिति** ।

श्लोकक्रमेणैवान्वयः ॥

गतिः = प्राप्यं स्थानं चराचरविश्वं यस्यां प्रलीयते साऽपि प्रकृतिः कल्पान्ते यस्मिन् प्रलीयते सा परमा गतिः । यद्वा, गम्यत इति गतिः फलं[१], भर्ता = यस्मात्प्रकृतिर्जीवति येनाधिष्ठितेन विश्वं प्रसूयते विश्वश्रियो भर्ता यद्वा, पोषणकर्ता[२], प्रभुः = सर्वेषां नियन्तृत्वात् नियन्ता स्वामी[३], साक्षी गगनमिव सर्वं व्याप्य सर्वावस्थासु अलिप्तत्वेनाहं सर्वसाक्षी यद्वा, साक्षात्सर्वं शुभाशुभं ईक्षत इति साक्षी[४], निवासः = जगद्यस्मिन्निवसति नामरूपात्मके जगति नामरूपातीतः परिपूर्णतया वर्तते । यद्वा, आश्रयः भोगस्थानं निवासः[५], शरणं = भीतरक्षकं मुक्ताश्रय इति वा अनन्यत्वेन शरणागतानां शरणं रक्षिताऽहं[६], सुहृत् = मम सर्वत्र अन्तर्यामित्वेन व्यापकत्वात् समत्वेन सुहृत् यद्वा, अनिमित्तोपकारी हितकर्ता[७], प्रभवः = प्रकर्षेण भवत्यनेनेति स्रष्टा जगदुत्पत्तिकर्ता[८], प्रलयस्थानं प्रलीयतेऽनेनेति प्रलयः प्रलयकर्तृत्वाद्वा प्रलयः संहर्ता[९], स्थानं = तिष्ठत्यस्मिन्निति स्थानं सर्वाधारः यद्वा, प्रभवः प्रलयस्थानपदत्रयाणां रूपं सृष्टिप्रलययोः उद्भवविनाशयोः स्थानमधिष्ठानं यद्बीजं जगतः कारणं[१०] निधानं = निधीयतेऽस्मिन्निति निधानं लयस्थानं नितरां आधारत्वाद्वा, प्रलयकाले प्रकृत्या जगदत्र निधीयत इति वा निधानं प्रकृतिं प्राप्य पश्चात्तया हरौ निधीयत इत्यर्थः । तेन प्रकृतिं यान्ति भूतानि इत्युक्तविरोधः[११] बीजं = कारणं यद्वा, जगत्वाद्बीजं[१२], तथात्वेऽपि = अव्ययं अविनाशी[१३], ननु व्रीह्यादिबीजवत् न नश्वरमित्यर्थः । अविकारीति प्रदर्शनार्थोक्तमव्ययमिति । किञ्च एतत्सर्वं अहमेवेति मत्वा बहुधा उपासतेत्यर्थः ॥ १८ ॥

भाष्यम्

**गम्यते मुमुक्षुभिरिति गतिः । तथा हि सामवेदे वसिष्ठशाखायाम्— "अथ कस्मादुच्यते गतिरिति ब्रह्मैव गतिरिति, तद्धि गम्यते पापविमुक्तैः" इति । साक्षादीक्षत इति साक्षी । तथा हि बाष्कलशाखायाम्— "स साक्षादिदमद्राक्षीद् यदद्राक्षीत् तत् साक्षिणः साक्षित्वम्" इति ।**

*प०टी०*— 'गति'शब्दं सप्रमाणकं व्याचष्टे **गम्यत इति** । 'किमुच्यते ?' इति च योज्यम् । 'साक्षि'शब्दस्य विशिष्टार्थं सप्रमाणकमाह **साक्षादिति** । तस्मात् **साक्षिणः साक्षित्वं** साक्षिशब्दप्रवृत्तिनिमित्तमित्यर्थः ।

*प्र०दी०*— 'गतिः कर्मफलं' इति व्याख्यानमपाकर्तुमाह **गम्यत इति** । 'शरणम्' इत्यतो भेदार्थमुक्तं **मुमुक्षुभिरिति** । अत एव 'गम्यते' इत्यस्य अवगम्यत इत्यर्थः । कुत एतद् ? इत्यत

आह **तथा हीति** । 'किमुच्यते' इत्यपि प्रश्नोऽध्याहार्यः । 'साक्षी' इत्यौदासीन्यं प्रतीयते । अत आह **साक्षादिति** । कुत एतत् ? इत्यत आह **तथा हीति** । **यदद्राक्षीत् साक्षात्** तत् **साक्षिणः** परमेश्वरस्य **साक्षित्वं** साक्षिशब्दप्रवृत्तिनिमित्तम् । तदुक्तं 'साक्षात् द्रष्टरि संज्ञायाम्' इति ।

*भा०दी०*— **अत एवेति** । शरणपदस्य आश्रयपर्यायप्राप्त्यर्थत्वेन व्याख्यानादेवेत्यर्थः । अन्यथासिद्ध-अर्थभेदासिद्धेरिति भावः । 'ब्रह्मैव गतिः' इत्युत्तरोक्त्यनुरोधादाह **इत्यपि प्रश्नोऽध्याहार्य इति** । गतिरिति पदेन किमुच्यते इति । प्रश्न इत्यर्थः । **तदुक्तमिति** । पाणिनिनोक्तमित्यर्थः । 'साक्षात्' इति सूत्रेण 'साक्षात्' इत्यव्ययाद् द्रष्टरि वाच्ये संज्ञायां इनिप्रत्यये 'अव्ययानां भमात्रे टिलोपः' इति टिलोपे 'साक्षी' इति सिद्धेरिति भावः ।

*भा०र०*— **'इति'** इति शङ्करभाष्यानुवादः । **भेदार्थम्** भेदज्ञापनार्थम् । 'शरणम्' इत्यस्य 'मुक्तप्राप्यम्' इत्यर्थस्य वक्ष्यमाणत्वात् अस्यापि प्राप्त्यर्थकत्वे पुनरुक्तिः ? इत्यतो भाष्ये 'मुमुक्षुभिः' इत्युक्तमिति भावः । ननु मुमुक्षुभिर्भगवान् ज्ञेय एव, न गम्यः । तत् कथं भाष्ये 'गम्यते' इत्युक्तम् ? इत्यत आह **अत एवेति** । अर्थभेदस्य वक्तव्यत्वादेव । 'ब्रह्मैव गतिः' इति प्रत्युत्तरानुरोधादाह **किमुच्यत इतीति** । 'अथशब्दानन्तरम्' इति शेषः । तत् 'कस्मादुच्यते गतिः ? इति । यतः **पापविमुक्तैः** ब्रह्मज्ञानप्रतिबन्धकपापशून्यैरधिगम्यते' इति श्रुतियोजनेति भावः । **साक्षादिति** । 'साक्षाच्छब्दात् द्रष्टर्यभिधेये इनिप्रत्ययः स्यात् संज्ञायाम्' इति व्याकरण-सूत्रार्थः । इनिप्रत्यये, अव्ययानां भमात्रे टिलोपे च 'साक्षी' इति रूपमिति भावः ।

भाष्यम्

**शरणं आश्रयः संसारभीतस्य । 'परं परायणम्' इत्याद्युक्तम् । "नारायणं महाज्ञेयं विश्वात्मानं परायणम्" इति च । संहारकाले प्रकृत्या जगदत्र निधीयत इति निधानम् । तथा हि ऋग्वेदखिलेषु— "अपश्यमप्यये मायया विश्वकर्मण्यदो जगन्निहितं शुभ्रचक्षुः" इति ॥ १८ ॥**

*प०टी०*— 'शरण-निधान'शब्दयोरर्थभेदं सप्रमाणकमाह **शरणमिति** ॥ १८ ॥

*प्र०दी०*— निवासशब्दार्थागतार्थतया शरणशब्दार्थमाह **शरणमिति** । 'संसारभीतस्य' इति मुक्तोपलक्षणम् । विष्णोर्मुक्ताश्रयत्वे प्रमाणमाह **परमिति** । **परायणं** मुक्तानामाश्रयः । तथाऽपि 'निधानम्' इति पुनरुक्तिरित्यत आह **संहारेति** । 'सर्वभूतानि प्रकृतिं यान्ति' इत्युक्तत्वात् कथं

भगवति निधीयन्ते ? इत्यत उक्तं **प्रकृत्येति** । प्रथमं प्रकृतिं यान्ति, पश्चात् तत्र निधीयन्त इत्यर्थः। तत्कुत इत्यत आह **तथा हीति** । **विश्वकर्मणि** ईश्वरे, **शुभ्रचक्षुः** शुद्धदृष्टिरहम् ॥ १८ ॥

***भा०दी०***— **मुक्तोपलक्षणमिति** । एतेन निवासशरणशब्दयोः सामान्यविशेषभावेनार्थभेद इति सूचितं भवति । **इत्युक्तत्वादिति** । अत्रैवाध्याये पूर्वत्रेत्यर्थः ॥ १८ ॥

***भा०र०***— प्रमाणे 'मुक्ताश्रयत्वस्याभिधानादाह **मुक्तोपलक्षणमिति** ॥ 'मुक्तस्तु स्यात् पराभासः' इति तात्पर्यमनुरुध्याह **मुक्तानामाश्रय इति** । **भाष्ये इति च** उक्तम् । 'तिष्ठन्त्यत्रेति स्थानम्' इति स्थानशब्देन 'निधानम्' इत्यस्याभिधानादाह **पुनरुक्तिरिति** । **उक्तत्वात्** प्रकृतेरेव भूतनिधानोपनिधित्वस्योक्तत्वात् । देववर्धकिप्रतीतिनिरासायोक्तम् **ईश्वर इति** । प्रसिद्धे अज्ञत्वानुपपत्तेरिति भावः । 'अपश्यम्' इत्यस्यान्वयायाह **अहमिति** ॥ १८ ॥

**गीता**

## तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
## अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥

***वि०वि०***— वृष्टिं आकर्षामि प्रलयकालादन्यत्र । मरणान्मृत्युः । सत् कार्यम् । असत् कारणम् । 'सदभिव्यक्तरूपत्वात्कार्यमित्युच्यते बुधैः । असदव्यक्तरूपत्वात्कारणं चापि शब्दितम्' इत्यभिधानात् । इतरत् प्रसिद्धम् । 'अहं क्रतुः' इत्यादि 'रसोऽहम्' इत्यादिवद् व्याख्येयम् ॥१९॥

***वा०ल०***— 'सदसच्चाहमर्जुन' इत्यत्र असत् कारणम् । सत् कार्यम् ॥ १९ ॥

***सा०सं०***— किञ्च **अहम्** आदित्यस्थस्**तपामि** तापं करोमि । मेघचक्रगतः सन् **वर्षं** वृष्टिम्। **उत्सृजामि** । **निगृह्णामि** उपसंहरामि । **अहम्** इन्द्रियेषु स्थित्वा तेषां देहधारणेन मृतिं परिहरतीति हेतोर**मृतं** अहम् । प्रलयकालादन्यकाले संहर्तृत्वात् **मृत्युरहम्** । **सत्** कार्यजातमहम् । **असच्च** कारणजातमहमेव । तन्नियन्तृत्वादेरभेदोक्तिः । अहमित्यसकृदुक्तिरुपचारनिवृत्त्यर्था । यद्वा, साधुगुणपूर्णत्वात् **सत्** इत्युक्तोऽहम् । साधुगुणपूर्णपुरुषान्तरराहित्यात् **असत्** इत्युक्तोऽहमेवेत्यर्थः ॥१९॥

***अ०प्र०***— किञ्च **तपामीति** ।

हे अर्जुन ![1], अहं[2], तपामि[3], अहं[4], वर्षं[5], निगृह्णामि उत्सृजामि च[6], अहममृतं चैव[7], मृत्युश्चाहं[8], सत्[10] असच्च[11] अहं[12] इत्यन्वयः ।

हे अर्जुन ![1], अहं[2], तपामि = आदित्यस्थोऽहं निदाघसमये जगतस्तापं करोमि[3], अहं[4], वर्षं = वृष्टिसमये मेघचक्रगतः सन् वृष्टिं[5], उत्सृजामि = मुञ्चामि[6], निगृह्णामि च = कदाचिद्वर्षं उपसंहरामि अपकर्षामीत्यर्थः[7], यद्वा, तपामि = निगृह्णामि उत्सृजामि एतत्पदत्रयाणां द्विपदं अहं सूर्यरूपेण यदा तपामि तदा पूर्वस्थितं जलं निगृह्णामि शोषयामि उत्सृजामि च । इन्द्ररूपेण यदा वर्षं उत्सृजामि तदा पूर्ववदुदकं परिपूरितं भवति । अहं अमृतं चैव = मृतं न भवतीत्यमृतं यद्वा, अहं इन्द्रियेषु स्थित्वा तेषां देहधारणेन मृतिः परिहरतीति हेतोः जीवनं चाहं[8], मृत्युश्चाहं = प्रलय-कालादन्यकाले संहर्तृत्वात् मृत्युः नाशोऽहम्[9], सत् = सत्कार्यजातं स्थूलं दृश्यं[10] असच्च = अस-त्कारणजातं सूक्ष्मं अदृश्यं[11] अहमित्यर्थः । अहमहमिति तत्तन्नियन्तृत्वात् अभेदोक्तिः । अहमिति असकृदुक्तिः नित्यार्था । यद्वा, साधुगुणपूर्णत्वात् सदित्युक्तोऽहं साधुगुणपूर्णपुरुषान्तरराहित्यात् असदित्युक्तोऽप्यहमेवेत्यर्थः । एतत्सर्वं तत्तन्नियन्तृत्वादहमेवेति मत्वा मामेव बहुधा उपासते इति पूर्वेण अन्वयः ॥ १९ ॥

भाष्यम्

**सत् कार्यम् । असत् कारणम् । "सदभिव्यक्तरूपत्वात् कार्यमित्युच्यते बुधैः । असदव्यक्तरूपत्वात् कारणं चापि शब्दितम्" इति ह्यभिधानात् । "असच्च सच्चैव च यद् विश्वं सदसतः परम्" इति च भारते ॥ १९ ॥**

*प०टी०*— 'सदसच्चाहम्' इति न भावाभावप्रेरकत्वमित्याह **सदिति** ॥ १९ ॥

*प्र०दी०*— असतो नियम्यत्वानुपपत्तेः 'सदसच्चाहं' इत्युक्तमित्यत आह **सदिति** । कार्यं सदित्युच्यते । 'अभिव्यक्तरूपत्वात्' इत्यनेन सदेः गत्यर्थस्य क्विपि कर्मणि रूपमेतद् इत्युच्यते । **कारणमपि अव्यक्तरूपत्वात्** एव **असच्छब्दितम्** । कार्यकारणयोः सदसच्छब्दप्रयोगं च दर्शयति **असच्चेति** । तस्मात् सदसतोर्विश्वस्मात् ब्रह्म **परम्** ॥ १९ ॥

*भा०दी०*— **प्रयोगं चेति** । न केवलं व्यक्तत्वादिरूपमिति चार्थः । शेषोक्त्या वाक्यं योजयति **तस्मादिति** ॥ १९ ॥

*भा०र०*— **नियम्यत्वानुपपत्तेरिति** । 'असदहम्' इत्यभेदव्यपदेशो हि 'यदधीना यस्य सत्ता तत्तदित्येव भाष्यते' इति शास्त्रात् तत्सत्तायास्तदधीनत्वनिबन्धनः । न च असतः सत्ताऽस्ति । अतस्तस्येशनियम्यत्वमनुपपन्नमिति हेतोः 'असदहम्' इत्ययुक्तमित्यर्थः । 'षद्लृ = विशरण-

गत्यवसादनेषु' इति गतेरपि धात्वर्थत्वात् उक्तम् **गत्यर्थस्येति** । **क्विपि** सम्पदादिलक्षणे, चर्चे तु 'सत्' इति रूपमित्यर्थः । 'चशब्दोऽवधारणे' इत्यभिप्रेत्योक्तम् **अव्यक्तरूपत्वादेवेति** । न केवलं व्यक्तत्वाव्यक्तत्वरूपनिमित्तम्, किन्तु 'प्रयोगे च' इति चशब्दः । यच्छब्दश्रवणात् तच्छब्दमध्याहरति **तस्मादिति** । परशब्दस्तन्त्रमिति भावेनोक्तं **ब्रह्म परमिति** ॥ १९ ॥

*'अहं क्रतुः' इत्यादिचतुःश्लोक्यक्षरार्थस्तु—*

प्रतिज्ञातं विज्ञानमुच्यते **अहं क्रतुरित्यादिना** । दीक्षा-प्रायणीय-उदयनीय-सवनत्रय-अवभृथात्मकोऽग्निष्टोमादिसंस्थाको ज्योतिष्टोमाश्वमेधादिरूपः **क्रतुः** । तत्सत्ताप्रतीत्यादिकारणत्वात्, तद्भोक्तृत्वात्, तत्रोपास्यत्वाच्च 'अहम्' इत्याद्यभेदव्यपदेश इति 'रसोऽहम्' इत्यादेरिव व्याख्यानं द्रष्टव्यमिति टीकातोऽभिदिष्टः । देवतोद्देशेन द्रव्यपरित्यागरूपो **यज्ञोऽप्यहमेव** । यज्ञक्रतुशब्दयोः सामान्यविशेषभावविवक्षया भेदः । अत्र क्रतुयज्ञशब्दौ क्रियाविशेषवाचिनौ । क्रियावांश्च यजमानः। तन्नियमनादिनैव क्रियानियमनादेः प्राप्तावपि 'रसोऽहमप्सु' इत्यादाविव क्रत्वादिगतक्रतुत्वादिधर्मनियन्तृत्वस्य, यजमानधर्मभूतक्रियान्तरापेक्षया क्रतौ श्रेष्ठत्वनियन्तृत्वस्य च विशेषतो भगवत्कर्तृकत्वं बोधयितुमुपात्तौ । **स्वधा** पित्रन्नम् ओषधम् ओषधिप्रभवमन्नम् । व्याध्युपशमनार्थभेषजं वा। **मन्त्रः** 'तच्चोदकेषु मन्त्राख्या' इत्युक्तलक्षणो वेदभागो याज्यापुरोनुवाक्यादिः । **आज्यमहमेव** । **अग्निः** आहवनीयादिः । **हुतं** हवनम्, हवनकर्म वा । आज्येतरद् **हविः** ॥ १६ ॥

**अस्य जगतः पिता** जनयिता । **माता** जनयित्री । **धाता** पोषकः । **पितामहः** पितृपिता। **वेद्यं** वेदितव्यं वस्तु । **पवित्रं** पावनं वस्तु । **ओङ्कारः** ओङ्कारत्वसर्वगुणाधारवस्तुवाचकत्वशक्तिनियन्तृतया तच्छब्दवाच्यः प्रणवोऽप्यहमेव । **ऋक्सामयजुश्च** ऋक्त्वादिनियन्ताऽपि **अहमेव** ॥ ॥ १७ ॥

गम्यते = अवगम्यते । मुमुक्षुभिरिति **गतिः** मुमुक्षुज्ञेयं वस्तु अहमेव । भरणकर्तृत्वात् **भर्ता**, **प्रभुः** = स्वामी **साक्षी** = साक्षादीक्षिता, जगतो **निवासः** आवासस्थानं **शरणम्** आश्रयः । संसारभीतस्य, मुक्ताश्रय इति यावत् । **सुहृत्** प्रत्युपकारमनमेपक्ष्योपकुर्वन्, प्रभवप्रलययोः सत्ताप्रतीत्यादिकारणत्वात् तद्भोक्तृत्वाच्च । **प्रभवः प्रलयश्च** अहमेवेत्यर्थः सप्तमे भाषितः ।

**यत्तु**— अत्र 'प्रभवप्रलयस्थानं = यस्य कस्यचित् यत्र कुत्रचित् उत्पत्तिप्रलययोर्यत्स्थानं तदप्यहमेव' इत्येकैकपद्येन **रामानुजस्य** व्याख्यानं तत् 'प्रलयकाले संहर्तृत्वात् प्रलयः' इति तात्पर्यनिर्णये 'प्रलयः' इत्यनुवादेनैव दूषितम् । 'अहं क्रतुः' इत्यादौ क्वापि समासार्थतया भगवतो-

ऽनुक्तेः अत्र तेनोक्त इत्यत्र नियामकाभावात् । अपि च *शङ्करश्रीधरादिभिः* 'प्रभवः', 'प्रलयः' इत्येव पदविभागेन व्याख्यातम् इति तथैव व्याख्यानं युक्तमिति । तिष्ठन्त्यत्रेति **स्थानम्** । संहारकाले जगदत्र निधीयत इति जगतो **निधानम्** अप्यहमेव । **अव्ययं बीजं** व्यञ्जकं वस्तु ॥ १८ ॥

**तपामि** सूर्यादौ स्थितः सन्, **वर्षं** वृष्टिम्, अमृतसत्तादिकारणत्वात् तद्भोक्तृत्वाच्च **अमृतम्** । अमृतम् = अमरणम्, मृत्युर्मरणमिति वा । इन्द्रियेषु स्थित्वा तेषां देहधारणेन मृतिं परिहरतीति **अमृतम्** । 'प्रलयकालादन्यदाऽपि संहर्तृत्वान्मृत्युः' इति तात्पर्यनिर्णये । **सत्** कार्यम्, **असत्** कारणं च अहमेवेति ॥ १९ ॥

**गीतातात्पर्यनिर्णयः**

**"अर्च्यत्वादृक् समत्वाच्च निजरूपेषु साम सः ।**
**याज्यत्वात् स यजुर्यज्ञः सार्वज्ञ्यात् पुरुषोत्तमः ॥**
**क्रतुः कृतिस्वरूपत्वात् स्वधाऽनन्यधृतो यतः ।**
**मानात् त्रातीति मन्त्रोऽयमुष्टानां निधिरौषधम् ॥**
**आ ज्यायस्त्वादाज्यनामा दर्भो दरधरो यतः ।**
**आहूतत्वाद्धुतं चायमग्निर्नेताऽगतेर्यतः ॥" इत्यादि च ।**

***प्रका०***— अहं क्रतुरित्यादेरर्थोऽर्च्यत्वादित्यादावन्वेष्टव्यः । सर्वं जानातीति यज्ञः । उष दाह इति धातोः यत्-यत्-तत् ओषाः - तापत्रयदग्धास्तेषामाश्रयत्वादौषधम् । यज्ञौषधादिसकल-पदार्थेभ्यो भिन्नोऽपि यज्ञादिशब्दप्रवृत्तिनिमित्तानन्तगुणवत्त्वाद्योगवृत्त्या यज्ञादिशब्दैर्विष्णुरुच्यते । यथा भृत्येषु जयिषु राजा जयीत्युच्यते । एवमपि तत्तत्पदार्थशब्दैर्विष्णुरभिधातुं शक्यते । स्वत-न्त्रस्य सर्वकर्तुः विष्णोः पराधीनेनाभेदविरोधात् न यज्ञादिभिरभेदोऽभिधीयते ।

**न्या०दी०— प्रतिज्ञातं विज्ञानमुच्यते "अहं क्रतुः" इति । तत्र हरेः क्रत्वादिस्वरूप-त्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे अर्च्यत्वादिति । ऋगञ्चन इति धातुः । "सर्वदा समः, तेन साम" इति हि श्रुतिः । यदस्ति तज्जानातीति यज्ञः । स्वात्मानं धत्त इति स्वधा । मानात् त्रातीति मन्त्रो, ज्ञातो रक्षतीत्यर्थः । उष प्लुष दाह इति धातोस्तापत्रयदग्धा उष्टाः । दर्भशब्दो दरं बिभर्तीत्यन्यत्रस्थो व्याक्रियते । आहूतत्वाद्यज्ञादाविति शेषः । अगतेः स्वशक्त्या गन्तुमशक्तस्य जगतः ।**

*भा०दी०*— **दरं बिभर्तीति** । शङ्खं बिभर्तीत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"तत्तत्पदार्थभिन्नोऽपि तत्तन्नामैवमच्युतः ।**
**स्वातन्त्र्यात् सर्वकर्तृत्वात् गुणानन्त्याच्च केवलम् ॥" इति च ।**

*प्रका०*— अहं क्रतुरित्यादिना इत्येतदुच्यते **तत्तत्** इत्यनेन ।

***न्या०दी०*— क्रत्वादिभिन्नस्यैव हरेर्योगवृत्त्या तत्तन्नामकत्वमित्यत्र स्मृत्यन्तरं चाह तत्तदिति । एतत्स्मृतावपि पूर्वमेवास्यार्थस्योक्तत्वं द्योतयत्येवं शब्दः । तत्तत्पदार्थभिन्नत्वे हेतुः स्वातन्त्र्यं सर्वकर्तृत्वं च । भिन्नत्वे कथं तत्तन्नामवाच्यत्वम् ? केवलं तत्तच्छब्द-प्रवृत्तिनिमित्तानन्तगुणत्वादेवेत्यर्थः ।**

*भा०दी०*— **एतत्स्मृताविति** । तत्तत्पदार्थेति स्मृतौ । **पूर्वं** पूर्वशेषे । एतस्यार्थस्यार्कादि-नामार्थस्योक्तत्वं द्योतयतीत्यर्थः । अन्यथा परामर्शविषयाभावादेवंशब्दो न युक्तः स्यात् । मूलकृता पूर्वशेषानुक्तिस्तु पूर्वस्मृत्यैकार्थत्वादिति भावः ।

**गीतातात्पर्यनिर्णयः**

**"ओमित्याक्रियते यस्मादोङ्कारो भगवान् हरिः ॥" इति च ।**
**"पातीति स पिता मानान्माता यत् स पितुर्महान् ।**
**पितामहो निधातृत्वान्निधानं भीतरक्षणात् ॥**
**शरणं व्यञ्जनाच्चैव बीजमित्युच्यते प्रभुः ॥" इति च ।**

*प्रका०*— **ओमित्याक्रियते** आहूयत इत्यर्थः ॥

*न्या०दी०*— **'तदधीनत्वादर्थवदि'ति न्यायेन स्वातन्त्र्यादिकं च तत्तच्छब्दवाच्यत्वे कारणम् । ॐकार इत्यादेरर्थं स्मृत्यन्तरेणाह ओमिति** ॥ **आक्रियते** आहूयते । **पाति** पालयति । **मानात्** ज्ञानात् ॥ **पितुर्महानिति** । जगत्पितुः विरिञ्चादपि महानित्यर्थः । **निधातृत्वात् धारकत्वात् व्यञ्जनात् जगदभिव्यञ्जकत्वात् ।**

*भा०दी०*— स्वातन्त्र्यसर्वकर्तृत्वे न केवलं भिन्नोऽपीत्यत्र हेतू । किन्तु तत्तन्नामैवमुच्यत इत्यत्रापि हेतू इत्याह **तदधीनत्वादिति** । शब्दप्रवृत्तिनिमित्तानां तदधीनत्वादीशाधीनत्वात् शब्द-

जातमर्थवत् भगवद्रूपार्थवत् तद्वाचकमिति सूत्रोक्तन्यायेनेत्यर्थः ॥ **कारणमिति** । भृत्यगतजयं प्रति राज्ञो जयिशब्दवाच्यत्व इवेति भावः ।

**गीतातात्पर्यनिर्णयः**

प्रलयकाले संहर्तृत्वात् प्रलयः । अन्यदाऽपीति मृत्युः ।

"प्राणगः प्राणधर्ता यदमृतं प्रविलापयन् ।
विश्वं प्रलय इत्युक्तो मृत्युरन्यत्र मारणात् ॥" इति च ।
"सत् साधुगुणपूर्णत्वादस्मान्नान्यो गुणाधिकः ।
यतोऽतोऽसदिति प्रोक्तं विष्णवाख्यं परमं पदम् ॥"

—इति शब्दनिर्णये ॥ १६-१९ ॥

*न्या०दी०*— प्रलयमृत्युशब्दयोरर्थभेदं सप्रमाणकमाह **प्रलयेति** ॥ प्रलयादन्यदाऽपि संहर्तृत्वादित्यर्थः । इन्द्रियेषु स्थित्वा तेषां देहधारणेन मृतिं परिहरति यस्मात्तस्मादमृतमित्यर्थः । **प्रविलापयन्** प्रलय इति शेषः । अहं क्रतुरित्यादेरशेषक्रत्वादिभोक्तृत्वं चार्थः ॥ १६-१९ ॥

*भा०दी०*— प्राणगः प्राणधर्तेत्यादेरर्थमाह **इन्द्रियेषु स्थित्वेत्यादि** ॥ कदा विश्वं प्रविलापयन्नित्याकाङ्क्षायामाह **प्रलय इति शेष इति** ॥ उत्तरत्र शङ्कोत्थानाय भाष्योक्तार्थान्तरमप्यत्र ग्राह्यमित्याह **अहं क्रतुरिति** ॥ १६-१९ ॥

**गीता**

**त्रैविद्या मां सोमपाः पूतपापा**
**यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।**
**ते पुण्यमासाद्य सुरेन्द्रलोक-**
**मश्नन्ति दिव्यान्दिवि देवभोगान्॥ २० ॥**

*वि०वि०*— तव यदशेषक्रत्वादिभोक्तृत्वं तन्नोपपद्यते । त्रैविद्यभागवतयोः फलभेदाभावप्रसङ्गादित्यत आह **त्रैविद्या इत्यादिना** । तिस्र ऋगाद्या विद्या अधीयन्त इति त्रैविद्याः । सोमं

पिबन्तीति सोमपाः । **यज्ञैर्मामिष्ट्वा** यज्ञादिकमन्ते मयि समर्प्य **स्वर्गतिं प्रार्थयन्ते** । **ते पुण्यं सुरेन्द्रस्य लोकम्, आसाद्य दिवि दिव्यानुत्तमान् देवानां भोगानश्नन्ति** ॥ २० ॥

*वा०ल०*— त्रैविद्याः इत्यत्र तिस्रोः विद्याः वेदविद्याः, तत्सम्बन्धिनः त्रैविद्याः ॥ २० ॥

*सा०सं०*— ननु सर्वयज्ञादिभोक्तृत्वादिना 'अहं क्रतुः' इत्याद्युक्तिरिति प्रथमव्याख्यानं यत् तदयुक्तम् । तथात्वे त्रैविद्यकृतयज्ञभोक्तृत्वस्यापि प्राप्त्या तेषां भागवतानां च फलभेदो न स्यात् । भगवद्भोगनिमित्तकत्वात् कर्मफलस्य । तस्य च सर्वत्र साम्यात् । अतो भगवतानुष्ठितभगवद्भजनस्य त्रैविद्यकृतयज्ञफलादप्यतिशयफलमाह **त्रैविद्या** इत्यादित्रयेण ॥ तिस्रो विद्या ऋग्यजुःसामलक्षणा येषां ते त्रैविद्याः । त एव **त्रैविद्याः** । विष्णुं सर्वोत्तमं ज्ञात्वाऽपि त्रय्यां मुखतः प्रतीयमानस्वर्गाद्युद्देश्यकान्यदेवतायजनं बुद्ध्वा तथैवानुष्ठायान्ते विष्णौ समर्पणं कुर्वन्तः त्रैविद्याः । मां यज्ञैरिष्ट्वाऽन्ते मयि समर्प्य **सोमपाः** हुतशेषसोमरसपानवन्तः । अत एव **पूतपापाः** शोधितकल्मषाः सन्तः । **स्वर्गतिं** स्वर्गमार्गम् । स्वराख्यप्राप्यं वा प्रति । **मां प्रार्थयन्ते** । **ते पुण्यं** पुण्यलभ्यम् । **सुरेन्द्रलोकं** स्वर्गम् । **आसाद्य** प्राप्य । **दिवि** स्वर्गे । **दिव्यान्** द्युलोकभवान् । अलौकिकानिति वा । **भोगान्** । **अश्नन्ति** भुञ्जते ॥ २० ॥

*अ०प्र०*— ननु सर्वयज्ञादिभोक्तृत्वादिना अहं क्रतुरित्याद्युक्तिरिति प्रथमव्याख्यानं यत्तदयुक्तं तथात्वे त्रैविध्यकृतयज्ञभोक्तृत्वस्यापि प्राप्त्या तेषां भागवतानां च फलभेदो न स्यात् भगवद्भोगनिमित्तकत्वात् कर्मफलस्य । तस्य च सर्वत्र साम्यादित्यतो भगवताऽनुष्ठितभगवद्भजनस्य त्रैविध्यकृतयज्ञफलादपि अतिशयितत्वमाह **त्रैविद्या** इत्यादित्रयेण । तत्र **त्रैविद्येति** ।

हे पार्थ ! त्रैविद्याः[१], यज्ञैः[२], मां[३], इष्ट्वा[४], सोमपाः[५], अत एव तेनैव पूतपापाः सन्तः[६], स्वर्गतिं[७], ये प्रार्थयन्ते[८], ते[९], पुण्यं[१०] सुरेन्द्रलोकं[११] आसाद्य[१२], दिवि[१३], दिव्यान्[१४], देवभोगान्[१५], अश्नन्ति इत्यन्वयः ।

हे पार्थ ! त्रैविद्याः = ऋग्यजुःसामलक्षणाः तिस्रो विद्या येषां ते त्रिविद्याः त्रिविद्या एव त्रैविद्याः तिस्रो विद्याः अधीयन्ते जानन्ति इति वा वेदत्रयोक्तकर्मफलवन्तः इत्यर्थः । विष्णुं सर्वोत्तमं ज्ञात्वापि त्र्यय्यां मुखतः प्रतीयमाणस्वर्गादि उद्देश्यकाम्यदेवतायजनं बुद्ध्वा तथैवानुष्ठीयन्ते । विष्णोः समर्पणं कुर्वन्तः त्रैविद्याः यज्ञैः वेदत्रयविहितैः ज्योतिष्टोमादिभिर्यज्ञैः[२], मां एवं देवतान्तरमित्यजानन्तो इन्द्रादिरूपेण मामेव[३], इष्ट्वा सम्पूज्य[४], सोमपाः = यज्ञशेषं सोमं पिबन्तीति हुतशेषसोमरसपानवन्तः[५], अत एव तेनैव पूतपापाः सन्तः = पूतानि पापानि येषां ते तथा शोधित-

कल्मषाः । तस्मात् स्वभावतो यज्ञस्वरूपाः एवेत्यर्थः । तथापि तेन पुण्यनाम्ना कर्मणा तैः पापमेवार्जितं अत्र सत्क्रियया पापार्जनहेतुः स्वर्गप्रार्थनं[६], स्वर्गतिं = स्वर्गं प्रति गतिर्मार्गं स्वराख्यप्राप्यं वा । यद्वा, स्वरेव गतिः स्वर्गतिस्तां[७], ये प्रार्थयन्ते ये मां प्रति प्रार्थयन्ते कामयन्ते[८], ते = दीक्षिताः[९], पुण्यं = पुण्यलेशं पुण्यलभ्यं वा । यद्वा, फलरूपं पुण्यं[१०] सुरेन्द्रलोकं = पुण्यकामनया कृतेन यज्ञेनार्जितपापरूपे पुण्येन स्वर्गं आपाद्य = प्राप्य[१२], दिवि = स्वर्गे[१३], दिव्यान् = द्युलोकभवान् अलौकिकानिति वा देवभोगान् उत्तमान् देवानां भोगान्[१५], अश्नन्ति = भुञ्जन्ते[१६], यद्वा, त्रैविद्याः सोमपाः यज्ञैरिष्ट्वा मां = यज्ञभोक्तारं विहाय स्वर्गतिं प्रार्थयन्ते ते दीक्षिताः पुण्यलेशं प्राप्य स्वर्गं भुञ्जते इत्यर्थः ॥ २० ॥

**गीता**

**ते तं भुक्त्वा स्वर्गलोकं विशालं**
**क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना**
**गतागतं कामकामा लभन्ते ॥ २१ ॥**

***वि०वि०*—** ते स्वर्गकामाः तं प्रार्थितं विपुलं स्वर्गलोकं तत्सुखं भुक्त्वा भोगप्रेरके पुण्ये क्षीणे सति मर्त्यलोके विशन्ति । पुनरप्येवमेव वेदैर्विहितं धर्ममनुसृताः कामान् भोगान् कामयमानाः गमनागमनं लभन्ते ॥ २१ ॥

***वा०ल०*—** 'कामकामा लभन्ते' इत्यत्र काम्यते इति कामो विषयः, तत्र कामो येषां ते तथोक्ताः ॥ २१ ॥

***सा०सं०*—** किञ्च **ते** स्वर्गकामेनान्यदेवतायाजिनः । **तं विशालं** विपुलम् । **स्वर्गसुखं भुक्त्वा** । **क्षीणे पुण्ये मर्त्यलोकं** भूलोकं भुक्तावशिष्टपुण्ययुक्ताः सन्तः **विशन्ति** । तदाह सूत्रे 'ॐ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॐ' (३-१-८) इति । पुनरप्येवं **त्रयीधर्मं** वेदोक्तं धर्मम् । **अनुप्रपन्ना** अनुतिष्ठन्तः । **कामकामाः** भोगेच्छवः । **गतागतम्** । द्वन्द्वैकवद्भावः । गतेन सहितं आगतमिति वा । स्वर्गं प्रति गमनं ततो मर्त्यलोकं प्रत्यागमनं च **लभन्ते** । न कदाऽप्यपुनरावृत्तिं प्राप्नुवन्तीत्यर्थः ॥ २१ ॥

*अ०प्र०*— अथान्वयः— ते[१], तं[२], विशालं[३], स्वर्गलोकं[४], भुक्त्वा[५], क्षीणे पुण्ये सति[६], मर्त्यलोकं[७], विशन्ति[८], एवं[९], त्रयीधर्मं[१०] अनुप्रपन्नाः[११] कामकामाः[१२], गतागतं[१३], लभन्ते इत्यन्वयः ।

ते = स्वर्गकामेनान्यदेवतायाजिनः[१], तं = प्रार्थितं[२], विशालं = विपुलं स्वर्गलोकं[४], भुक्त्वा = स्वर्गसुखमनुभूय[५], क्षीणे पुण्ये सति = भोगप्रापके पुण्ये क्षीणे सति[६], मर्त्यलोकं = भूलोकं[७], विशन्ति = प्राप्नुवन्ति[८], एवं यथोक्तरीत्या पुनरपि एवमेव[९], त्रयीधर्मं = वेदत्रयोक्तधर्मं[१०] अनुप्रपन्नाः = अनुसरन्तः अनुष्ठिताः[११] कामकामाः = कामान् कामयन्त इति कामकामाः स्वर्गभोगादिकामान् कामयमानाः[१२], गतागतं = द्वन्द्वैकवद्भावः गतेन सहितमागतं इति वा स्वर्गं प्रति गमनं ततो मर्त्यलोकं प्रत्यागमनं नाम जन्ममरणं च[१३], लभन्ते = प्राप्नुवन्ति[१४], न कदाऽप्यपुनरावृत्तिं प्राप्नुवन्तीत्यर्थः ॥ २१ ॥

भाष्यम्

**तथाऽपि मद्भजनमेवान्यदेवताभजनाद् वरमिति दर्शयति त्रैविद्या इत्यादिना ॥ २०-२१ ॥**

*प०टी०*— ननु यदि भवान् सर्वक्रत्वादिभोक्ता, तर्हि न भागवतत्रैविद्यादिभेद इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति **तथाऽपीति** ॥ २० -२१ ॥

*प्र०दी०*— 'सदसच्चाहमर्जुन' इति विज्ञानस्योपसंहृतत्वादुत्तरस्यासङ्गतिमाशङ्क्य आह **तथाऽपीति** । 'अहं क्रतुः' इत्यादिना सर्वक्रत्वादिभोक्तृत्वं यदुक्तं भगवतस्तदसदिति वक्ष्यामीति गूढाभिसन्धिना 'यदि सर्वत्र भोक्ता भगवान् तर्हि किं भागवतानां त्रैविद्यानां च फलसाम्यमेव ?' इति पृष्टस्य इदमुत्तरमित्याशयः । तथाऽपि सर्वत्र भगवतः भोक्तृत्वेऽपि मद्भजनं भागवतैरनुष्ठितम् । **देवताः** इति पित्राद्युपलक्षणम् । त्रैविद्याद्यनुष्ठितात् **वरं** उत्कृष्टफलम् । **इत्यादिना** श्लोकत्रयेण ॥ २० ॥ २१ ॥

*भा०दी०*— **विज्ञानस्येति** । 'अहं क्रतुः' इत्यादिना उपक्रान्तस्येति योज्यम् । **इति वक्ष्यामीति** । इत्येतच्चोद्यं 'येऽप्यन्यदेवताः' इत्येतदवतारिकायां व्यक्तीकरिष्यामि इत्यर्थः । **भागवतानां** भगवदेकचिन्तकानां **त्रैविद्यानामिति** । स्वर्गादिकामनया भगवद्याजिनाम्, आदिपदेन इतरदेवताभजकानामिति ज्ञातव्यम् । किं साम्यमेव इत्यन्वयः । सर्वत्र हरेर्भोगफलसाम्येन भाव्यत्वादिति भावः । **इदमिति** । त्रैविद्याः इत्यादि श्लोकत्रयमित्यर्थः । तत्र फलभेदस्य कीर्तनादिति

भावः । **पित्राद्युपलक्षणमिति** । 'पितॄन् यान्ति पितृव्रताः' इत्यादेरपि वक्ष्यमाणत्वादिति भावः ॥ ॥ २०-२१ ॥

*भा०र०*— **वक्ष्यामीति** । 'तर्हि अहं क्रतुरित्याद्यसत्यम् इत्यादिना' इति शेषः । **सर्वत्र** भागवतानुष्ठितेषु त्रैविद्यानुष्ठितेषु च । त्रैविद्यानुष्ठितभगवद्भजनस्य कथमन्यदेवताभजनाद् वरत्वम् ? फलान्तरोद्देश्यकत्वस्योभयत्राविशेषात्, इत्यत आह **भागवतैरनुष्ठितमिति** । 'पितॄन् यान्ति', 'भूतानि यान्ति' इति वचनादाह **पित्रादीति** । 'त्रैविद्यादि' इत्यादिपदेन ज्ञानि-मिथ्याज्ञानिनोः ग्रहणम् । वरशब्दितोत्कर्षः फलापेक्षयेति भावेनाह **वरमुत्कृष्टफलमिति** । आदिपदसङ्ग्राह्योक्तिः **श्लोकत्रयेणेति** ॥ २०-२१ ॥

**गीता**

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥**

*वि०वि०*— ये तु भागवता जनाः अनन्याः अन्यफलकामनां प्राधान्येनान्यदेवतापूजनं च तद्रहिताः । मां चिन्तयन्तः निरन्तरं ध्यायन्तः । परित उपासते 'सम्यक् गुणगणज्ञानादुपासा पर्युपासना' इत्युक्तेः । तेषां नित्यमभितः सर्वतः वाङ्मनःकायैर्भगवत्सेवायुक्तानाम् । योगक्षेममपुनरावृत्तिलक्षणं पुरुषार्थं प्रापयामि । उक्तं च—

'त्रैविद्यस्त्वपरो धर्मो नानादैवतपूजनम् ।
तत्रापि विष्णुर्ज्ञातव्यः सर्वेभ्योऽप्यधिको गुणैः ॥

समर्पयति यज्ञाद्यमन्ततस्त्वेव विष्णवे ।
त्रैविद्यधर्मा पुरुषः स्वर्गं भुक्त्वा निवर्तते ॥

सम्यक् सत्त्वापरिज्ञानादन्यकर्मकृतेरपि ।
स्वर्गादिप्रार्थनाच्चैव रागादेश्चापरिक्षयात् ॥

सदा विष्णोरस्मरणात् त्रैविद्यो नाप्नुयात्परम् ।
अनन्यदेवतायागात् भक्त्युद्रेकादकामनात् ॥

सदा योगाच्च वैशिष्ट्यं त्रैविद्याद्वैष्णवादपि ।
स्याद्धि भागवतस्यैव तेन ब्रह्मादयोऽखिलाः ॥

**अश्वमेधादिभिर्यज्ञैरपि केशवयाजिनः ।**
**वैष्णवा इति बुद्ध्यैव मानयन्त्यन्यदेवताः ॥**
**सर्वदेववरत्वेन ये न जानन्ति केशवम् ।**
**तेषां पुण्यानि मोघानि यान्ति चान्धं तमो ध्रुवम् ॥'** इत्यादि ॥ २२ ॥

***सा०सं०***— त्रैविद्यानां फलमुक्त्वा भागवतानां फलमाह **अनन्या इति** । न विद्यतेऽन्यश्चिन्त्यत्वेन येषां ते **अनन्याः**, अन्यदचिन्तयन्तो मां चिन्तयन्तः । ये **जनाः** । **पर्युपासते** भक्त्युद्रेकेणोपासते । **तेषां नित्याभियुक्तानां** नित्यमभि सर्वस्मिन् देशे शरीरेन्द्रियमनोभिर्वा युक्तानां भगवत्सेवोद्युक्तानाम् । नित्यं तत्स्मरणवतामिति वा । **योगक्षेमम्** । द्वन्द्वैकवद्भावः । योगस्य क्षेम इति वा । अप्राप्तप्राप्तिर्योगो मोक्षरूपः । तस्य क्षेमः अनन्तत्वम् । **वहामि** । अहमपुनरावृत्तिलक्षणं पुरुषार्थं ददामीत्यर्थः । भगवतः सर्वयज्ञभोक्तृत्वाविशेषेऽपि त्रैविद्यभागवतयोः फलभेदो भगवद्यजनरूपोपायभेदकृत इति द्योतनायानन्या इत्यादिविशेषणोक्तिः । तथा हि— 'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति' (७-२१) इत्यादौ पूर्वं त्रैविद्यानामन्यदेवतायाजित्वमुक्तम् । भागवतानां तद्विरोधितयाऽनन्या इत्युक्तम् ।

***सा०सं०***— 'न तु मामभिजानन्ति तत्त्वेन' इति त्रैविद्यानामतिशयभक्तिज्ञानाभाव उक्तः । तत्त्वज्ञानाभावे भक्त्यभावस्य सिद्धत्वात् । भागवतानां तत्प्रतियोगितया भक्त्युद्रेकसूचनाय **पर्युपासत** इति परिशब्दप्रयोगः । तथोपासनस्यैव पर्युपासनत्वात् । 'स्वर्गतिं प्रार्थयन्ते', 'कामकामाः' इति त्रैविद्यानां कामनमुक्तम् । तत्प्रतियोगितया भागवतानाम् । **चिन्तयन्तो मां** मामेव चिन्तयन्ति। न काममिति कामनाभाव उक्तः । 'मामिष्ट्वा' इति 'मामेव यजन्ते' इति त्रैविद्यानामन्ते समर्पणमुक्तम् । तत्प्रतियोगितया 'नित्याभियुक्तानाम्' इति सदा तत्स्मरणं तदुद्देशयुक्तत्वमुक्तम् । अतो द्वयोर्वैष्णवत्त्वेऽपि भगवद्भोग्यकर्मवत्त्वेऽपि फलहेतूपायभेदात् फलभेद इति ॥ २२ ॥

***अ०प्र०***— मद्भक्तास्तु मत्प्रसादेन कृतार्था भवन्तीत्याह **अनन्या इति** ।

ये जनाः[१], अनन्याः[२], मां[३], चिन्तयन्तः सन्तः[४], पर्युपासते[५], नित्याभियुक्तानां[६], तेषां[७], अहं[८], योगक्षेमं[९], वहामि[१०] ॥

ये जनाः = ये मानवाः[१], अनन्याः = नास्ति मद्व्यतिरेकेण अन्यत् काम्यं येषां ते तथा । यद्वा, सर्वविषयान् विहाय सर्वेन्द्रियभावानां जगदन्तर्यामी श्रीभगवानेव यैर्विषयीकृतस्ते अनन्याः अन्यदचिन्तयन्तः[२], मां[३], चिन्तयन्तः = दास्यत्वेन भजन्तः सन्तः[४], पर्युपासते = सेवन्ते

भावः । **पित्राद्युपलक्षणमिति** । 'पितॄन् यान्ति पितृव्रताः' इत्यादेरपि वक्ष्यमाणत्वादिति भावः ॥ ॥ २०-२१ ॥

*भा०र०*— **वक्ष्यामीति** । 'तर्हि अहं क्रतुरित्याद्यसत्यम् इत्यादिना' इति शेषः । **सर्वत्र** भागवतानुष्ठितेषु त्रैविद्यानुष्ठितेषु च । त्रैविद्यानुष्ठितभगवद्भजनस्य कथमन्यदेवताभजनाद् वरत्वम् ? फलान्तरोद्देश्यकत्वस्योभयत्राविशेषात्, इत्यत आह **भागवतैरनुष्ठितमिति** । 'पितॄन् यान्ति', 'भूतानि यान्ति' इति वचनादाह **पित्रादीति** । 'त्रैविद्यादि' इत्यादिपदेन ज्ञानि-मिथ्याज्ञानिनोः ग्रहणम् । वरशब्दितोत्कर्षः फलापेक्षयेति भावेनाह **वरमुत्कृष्टफलमिति** । आदिपदसङ्ग्राह्योक्तिः **श्लोकत्रयेणेति** ॥ २०-२१ ॥

**गीता**

## अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
## तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥

*वि०वि०*— ये तु भागवता जनाः अनन्याः अन्यफलकामनां प्राधान्येनान्यदेवतापूजनं च तद्रहिताः । मां चिन्तयन्तः निरन्तरं ध्यायन्तः । परित उपासते 'सम्यक् गुणगणज्ञानादुपासा पर्युपासना' इत्युक्तेः । तेषां नित्यमभितः सर्वतः वाङ्मनःकायैर्भगवत्सेवायुक्तानाम् । योगक्षेममपुनरावृत्तिलक्षणं पुरुषार्थं प्रापयामि । उक्तं च—

'त्रैविद्यस्त्वपरो धर्मो नानादैवतपूजनम् ।
तत्रापि विष्णुर्ज्ञातव्यः सर्वेभ्योऽप्यधिको गुणैः ॥

समर्पयति यज्ञाद्यमन्ततस्त्वेव विष्णवे ।
त्रैविद्यधर्मा पुरुषः स्वर्गं भुक्त्वा निवर्तते ॥

सम्यक् सत्त्वापरिज्ञानादन्यकर्मकृतेरपि ।
स्वर्गादिप्रार्थनाच्चैव रागादेश्चापरिक्षयात् ॥

सदा विष्णोरस्मरणात् त्रैविद्यो नाप्नुयात्परम् ।
अनन्यदेवतायागात् भक्त्युद्रेकादकामनात् ॥

सदा योगाच्च वैशिष्ट्यं त्रैविद्याद्वैष्णवादपि ।
स्याद्धि भागवतस्यैव तेन ब्रह्मादयोऽखिलाः ॥

अश्वमेधादिभिर्यज्ञैरपि केशवयाजिनः ।
वैष्णवा इति बुद्ध्यैव मानयन्त्यन्यदेवताः ॥
सर्वदेववरत्वेन ये न जानन्ति केशवम् ।
तेषां पुण्यानि मोघानि यान्ति चान्धं तमो ध्रुवम् ॥' इत्यादि ॥ २२ ॥

*सा०सं०*— त्रैविद्यानां फलमुक्त्वा भागवतानां फलमाह **अनन्या इति** । न विद्यतेऽन्यश्चिन्त्यत्वेन येषां ते **अनन्याः**, अन्यदचिन्तयन्तो मां चिन्तयन्तः । ये **जनाः** । **पर्युपासते** भक्त्युद्रेकेणोपासते । **तेषां नित्याभियुक्तानां** नित्यमभि सर्वस्मिन् देशे शरीरेन्द्रियमनोभिर्वा युक्तानां भगवत्सेवोद्युक्तानाम् । नित्यं तत्स्मरणवतामिति वा । **योगक्षेमम्** । द्वन्द्वैकवद्भावः । योगस्य क्षेम इति वा । अप्राप्तप्राप्तिर्योगो मोक्षरूपः । तस्य क्षेमः अनन्तत्वम् । **वहामि** । अहमपुनरावृत्तिलक्षणं पुरुषार्थं ददामीत्यर्थः । भगवतः सर्वयज्ञभोक्तृत्वाविशेषेऽपि त्रैविद्यभागवतयोः फलभेदो भगवद्यजनरूपोपायभेदकृत इति द्योतनायानन्या इत्यादिविशेषणोक्तिः । तथा हि— 'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति' (७-२१) इत्यादौ पूर्वं त्रैविद्यानामन्यदेवतायाजित्वमुक्तम् । भागवतानां तद्विरोधितयाऽनन्या इत्युक्तम् ।

*सा०सं०*— 'न तु मामभिजानन्ति तत्त्वेन' इति त्रैविद्यानामतिशयभक्तिज्ञानाभाव उक्तः । तत्त्वज्ञानाभावे भक्त्यभावस्य सिद्धत्वात् । भागवतानां तत्प्रतियोगितया भक्त्युद्रेकसूचनाय **पर्युपासत** इति परिशब्दप्रयोगः । तथोपासनस्यैव पर्युपासनत्वात् । 'स्वर्गतिं प्रार्थयन्ते', 'कामकामाः' इति त्रैविद्यानां कामनमुक्तम् । तत्प्रतियोगितया भागवतानाम् । **चिन्तयन्तो मां** मामेव चिन्तयन्ति। न काममिति कामनाभाव उक्तः । '**मामिष्ट्वा**' इति 'मामेव यजन्ते' इति त्रैविद्यानामन्ते समर्पणमुक्तम् । तत्प्रतियोगितया 'नित्याभियुक्तानाम्' इति सदा तत्स्मरणं तदुद्देशयुक्तत्वमुक्तम् । अतो द्वयोर्वैष्णवत्वेऽपि भगवद्भोग्यकर्मवत्त्वेऽपि फलहेतूपायभेदात् फलभेद इति ॥ २२ ॥

*अ०प्र०*— मद्भक्तास्तु मत्प्रसादेन कृतार्था भवन्तीत्याह **अनन्या इति** ।

ये जनाः[१], अनन्याः[२], मां[३], चिन्तयन्तः सन्तः[४], पर्युपासते[५], नित्याभियुक्तानां[६], तेषां[७], अहं[८], योगक्षेमं[९], वहामि[१०] ॥

ये जनाः = ये मानवाः[१], अनन्याः = नास्ति मद्व्यतिरेकेण अन्यत् काम्यं येषां ते तथा । यद्वा, सर्वविषयान् विहाय सर्वेन्द्रियभावानां जगदन्तर्यामी श्रीभगवानेव यैर्विषयीकृतस्ते अनन्याः अन्यदचिन्तयन्तः[२], मां[३], चिन्तयन्तः = दास्यत्वेन भजन्तः सन्तः[४], पर्युपासते = सेवन्ते

भावः । **पित्राद्युपलक्षणमिति** । 'पितॄन् यान्ति पितृव्रताः' इत्यादेरपि वक्ष्यमाणत्वादिति भावः ॥ ॥ २०-२१ ॥

***भा०र०***— **वक्ष्यामीति** । 'तर्हि अहं क्रतुरित्याद्यसत्यम् इत्यादिना' इति शेषः । **सर्वत्र** भागवतानुष्ठितेषु त्रैविद्यानुष्ठितेषु च । त्रैविद्यानुष्ठितभगवद्भजनस्य कथमन्यदेवताभजनाद् वरत्वम् ? फलान्तरोद्देश्यकत्वस्योभयत्राविशेषात्, इत्यत आह **भागवतैरनुष्ठितमिति** । 'पितॄन् यान्ति', 'भूतानि यान्ति' इति वचनादाह **पित्रादीति** । 'त्रैविद्यादि' इत्यादिपदेन ज्ञानि-मिथ्याज्ञानिनोः ग्रहणम् । वरशब्दितोत्कर्षः फलापेक्षयेति भावेनाह **वरमुत्कृष्टफलमिति** । आदिपदसङ्ग्राह्योक्तिः **श्लोकत्रयेणेति** ॥ २०-२१ ॥

**गीता**

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥**

***वि०वि०***— ये तु भागवता जनाः अनन्याः अन्यफलकामनां प्राधान्येनान्यदेवतापूजनं च तद्रहिताः । मां चिन्तयन्तः निरन्तरं ध्यायन्तः । परित उपासते 'सम्यक् गुणगणज्ञानादुपासा पर्युपासना' इत्युक्तेः । तेषां नित्यमभितः सर्वतः वाङ्मनःकायैर्भगवत्सेवायुक्तानाम् । योगक्षेममपुनरावृत्तिलक्षणं पुरुषार्थं प्रापयामि । उक्तं च—

'त्रैविद्यस्त्वपरो धर्मो नानादैवतपूजनम् ।
तत्रापि विष्णुर्ज्ञातव्यः सर्वेभ्योऽप्यधिको गुणैः ॥

समर्पयति यज्ञाद्यमन्ततस्त्वेव विष्णवे ।
त्रैविद्यधर्मा पुरुषः स्वर्गं भुक्त्वा निवर्तते ॥

सम्यक् सत्त्वापरिज्ञानादन्यकर्मकृतेरपि ।
स्वर्गादिप्रार्थनाच्चैव रागादेश्चापरिक्षयात् ॥

सदा विष्णोरस्मरणात् त्रैविद्यो नाप्नुयात्परम् ।
अनन्यदेवतायागात् भक्त्युद्रेकादकामनात् ॥

सदा योगाच्च वैशिष्ट्यं त्रैविद्याद्वैष्णवादपि ।
स्याद्धि भागवतस्यैव तेन ब्रह्मादयोऽखिलाः ॥

अश्वमेधादिभिर्यज्ञैरपि केशवयाजिनः ।
वैष्णवा इति बुद्ध्यैव मानयन्त्यन्यदेवताः ॥
सर्वदेववरत्वेन ये न जानन्ति केशवम् ।
तेषां पुण्यानि मोघानि यान्ति चान्धं तमो ध्रुवम् ॥' इत्यादि ॥ २२ ॥

*सा०सं०*— त्रैविद्यानां फलमुक्त्वा भागवतानां फलमाह **अनन्या इति** । न विद्यतेऽन्यश्चिन्त्यत्वेन येषां ते **अनन्याः**, अन्यदचिन्तयन्तो मां चिन्तयन्तः । ये **जनाः** । **पर्युपासते** भक्त्युद्रेकेणोपासते । **तेषां नित्याभियुक्तानां** नित्यमभि सर्वस्मिन् देशे शरीरेन्द्रियमनोभिर्वा युक्तानां भगवत्सेवोद्युक्तानाम् । नित्यं तत्स्मरणवतामिति वा । **योगक्षेमम्** । द्वन्द्वैकवद्भावः । योगस्य क्षेम इति वा । अप्राप्तप्राप्तिर्योगो मोक्षरूपः । तस्य क्षेमः अनन्तत्वम् । **वहामि** । अहमपुनरावृत्तिलक्षणं पुरुषार्थं ददामीत्यर्थः । भगवतः सर्वयज्ञभोक्तृत्वाविशेषेऽपि त्रैविद्यभागवतयोः फलभेदो भगवद्यजनरूपोपायभेदकृत इति द्योतनायानन्या इत्यादिविशेषणोक्तिः । तथा हि— 'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति' (७-२१) इत्यादौ पूर्वं त्रैविद्यानामन्यदेवतायाजित्वमुक्तम् । भागवतानां तद्विरोधितयाऽनन्या इत्युक्तम् ।

*सा०सं०*— 'न तु मामभिजानन्ति तत्त्वेन' इति त्रैविद्यानामतिशयभक्तिज्ञानाभाव उक्तः । तत्त्वज्ञानाभावे भक्त्यभावस्य सिद्धत्वात् । भागवतानां तत्प्रतियोगितया भक्त्युद्रेकसूचनाय **पर्युपासत** इति परिशब्दप्रयोगः । तथोपासनस्यैव पर्युपासनत्वात् । 'स्वर्गतिं प्रार्थयन्ते', 'कामकामाः' इति त्रैविद्यानां कामनमुक्तम् । तत्प्रतियोगितया भागवतानाम् । **चिन्तयन्तो मां** मामेव चिन्तयन्ति । न काममिति कामनाभाव उक्तः । 'मामिष्ट्वा' इति 'मामेव यजन्ते' इति त्रैविद्यानामन्ते समर्पणमुक्तम् । तत्प्रतियोगितया 'नित्याभियुक्तानाम्' इति सदा तत्स्मरणं तदुद्देशयुक्तत्वमुक्तम् । अतो द्वयोर्वैष्णवत्त्वेऽपि भगवद्भोग्यकर्मवत्त्वेऽपि फलहेतूपायभेदात् फलभेद इति ॥ २२ ॥

*अ०प्र०*— मद्भक्तास्तु मत्प्रसादेन कृतार्था भवन्तीत्याह **अनन्या इति** ।

ये जनाः[१], अनन्याः[२], मां[३], चिन्तयन्तः सन्तः[४], पर्युपासते[५], नित्याभियुक्तानां[६], तेषां[७], अहं[८], योगक्षेमं[९], वहामि[१०] ॥

ये जनाः = ये मानवाः[१], अनन्याः = नास्ति मद्व्यतिरेकेण अन्यत् काम्यं येषां ते तथा । यद्वा, सर्वविषयान् विहाय सर्वेन्द्रियभावानां जगदन्तर्यामी श्रीभगवानेव यैर्विषयीकृतस्ते अनन्याः अन्यदचिन्तयन्तः[२], मां[३], चिन्तयन्तः = दास्यत्वेन भजन्तः सन्तः[४], पर्युपासते = सेवन्ते

भक्त्युद्रेकेणोपासते', नित्याभियुक्तानां नित्यं सर्वदा अभि सर्वस्मिन् देशे यद्वा शरीरेन्द्रियमनोभिः युक्तानां मदेकनिष्ठानां', तेषां भक्तानां अहं', योगक्षेमं = द्वन्द्वैकवद्भावः योगस्य क्षेममिति वा अप्राप्तप्राप्तिर्योगो मोक्षरूपः तस्य क्षेममनन्तत्वं यद्वा, योगधनादिलाभं क्षेमं च तत्पालनं मोक्षाख्यं च', वहामि = अपुनरावृत्तिलक्षणपुरुषार्थं ददामि । यद्वा, तैरप्रार्थितमपि अहमेव ददामि । यद्वा, मया यद्दत्तं भक्तिज्ञानवैराग्यं तस्य क्षेमं प्रवृद्धिं करोमीत्यर्थः ॥ २२ ॥

भाष्यम्

**अनन्याः अन्यदचिन्तयित्वा । तथा हि गौतमखिलेषु— "सर्वं परित्यज्य मनोगतं यद् विना देवं केवलं शुद्धमाद्यम् । ये चिन्तयन्तीह तमेव धीरा अनन्यास्ते देवमेवाविशन्ति" इति । "कामं कालेन महतैकान्तित्वात् समाहितैः । शक्यो द्रष्टुं स भगवान् प्रभासन्दृश्यमण्डलः" —इति मोक्षधर्मे । नित्यमभितः सर्वतो युक्तानाम् ॥ २२ ॥**

*प०टी०*— 'अनन्य'पदमन्यथाप्रतीतिनिरासाय सप्रमाणकं व्याचष्टे **अनन्या इति** । 'नित्याभियुक्त'पदस्यान्यथाप्रतीतिं परिहर्तुमाह **नित्यमिति** ॥ २२ ॥

*प्र०दी०*— 'अद्वैतज्ञानिनो अनन्याः' इति प्रतीतिनिरासार्थमाह **अनन्या इति** । अविद्यमानमन्यत् येषां ते **अनन्याः** । तत्र 'अनन्याश्चिन्तयन्तो माम्' इति प्रसङ्गात् चिन्तनीयमिति लब्धे 'अन्यदचिन्तयित्वा' इति सिद्ध्यति । प्रतीत एवार्थः किं न स्यादित्यत आह **तथा हीति** । 'देवमेवाविशन्ति' इत्यनेन 'योगक्षेमं वहाम्यहं' इत्युक्तार्थं भवति । अत्रैव 'कामं' इत्यागमान्तरम्। प्रभया सन्दृश्यं मण्डलं स्वरूपं यस्यासौ तथोक्तः । दर्शनस्य योगक्षेमसाधनत्वं प्रसिद्धमेव ।

'नित्याभियुक्तानां' इत्यस्य 'अपवादविषयाणां' इत्यन्यथाप्रतीतिनिरासार्थमाह **नित्यमिति** । **सर्वतः** सर्वस्मिन् देशे । शरीरेन्द्रियमनोभिर्वा युक्तानां भगवति सेवोद्युक्तानाम् ॥ २२ ॥

*भा०दी०*— **अत्रैवेति** । भगवति अनन्यशब्दार्थ एवेत्यर्थः । अस्मिन्नपि वाक्ये 'योगक्षेमं वहामि' इत्येतदर्थो अर्थाल्लब्ध इति दर्शयति **दर्शनस्येति** ॥ २२ ॥

*भा०र०*— सर्वनामकार्याभावं निर्वहन्नेव 'अन्यदचिन्तयित्वा' इति भाष्यं घटयितुं आह **अविद्यमानमित्यादि** । **इति प्रसङ्गात्** चिन्तनीयतया भगवत उक्त्या तत्प्रसङ्गात् अन्यदपि

चिन्तनीयमेव वक्तव्यमित्यर्थः । **प्रतीत एवार्थः** 'अद्वैतज्ञानिनो अनन्याः' इति प्रतीत एवार्थः । **इत्युक्तम्** इत्येतत् उक्तार्थं भवतीत्यर्थः । 'महता कालेन समाहितैः कामं द्रष्टुं शक्यः इत्यस्य स्फुटत्वात् दुर्गमार्थं 'प्रभा' इत्यादिवाक्यं व्याख्याति **प्रभयेते** । अनेनागमेन योगक्षेमवहनं कथं लभ्यते ? इत्यत आह **दर्शनस्येति** । तृतीयार्थे वा अयं तसिरित्याह **शरीरेति** ॥ २२ ॥

*गीताश्लोकत्रयाक्षरार्थस्तु—*

'अहं क्रतुः' इत्यादिना सर्वक्रत्वादिभोक्तृत्वमपि भगवतोऽभिसंहितम् । तत्र यदि सर्वत्र भोक्ता भगवान् तर्हि किं भागवतादीनां त्रैविद्यादीनां च फलसाम्यमेव स्यात् ? भगवद्भोगनिमित्तकत्वात् फलस्य, इत्यभिप्रायेण प्रश्ने उत्तरम् **त्रैविद्या** इत्यादि । तिस्रो विद्याः ऋग्यजुःसामलक्षणाः येषां ते त्रिविद्याः । त एव प्रज्ञादित्वात् त्रैविद्याः = विष्णुं सर्वोत्तमं ज्ञात्वाऽपि त्रय्यां मुखतः प्रतीयमानं स्वर्गाद्युद्देश्यकान्यदेवतायजनं बुद्ध्वा तथैवानुष्ठाय, अन्ते विष्णौ समर्पणं कुर्वाणा इत्यर्थः । **मां यज्ञैरिष्ट्वा** अन्ते मयि समर्प्य, **सोमपाः पूतपापाः** यज्ञशिष्टसोमरसपानेन शोधितकल्मषा इति यावत् । **स्वर्गतिं** स्वर्गादिफलं **प्रार्थयन्ते** । **ते** च **पुण्यं** पुण्यप्राप्यसुरेन्द्रलोकं **आसाद्य** प्राप्य **दिवि** स्वर्गे **दिव्यान्** उत्तमान् **देवभोगान्** देवभोगसदृशान् **अश्नन्ति** भुञ्जते ॥ २० ॥

ततश्च **ते** यजमानाः तं प्रार्थितं **विशालं** विपुलं **स्वर्गलोकं** तत्र भवं भोगं **भुक्त्वा पुण्ये** भोगप्रापके **क्षीणे** सति **मर्त्यलोकं विशन्ति** । पुनरपि **एवम्** एव त्रय्या विहितं **धर्ममनुप्रपन्नाः** अनुसृताः **कामकामाः** कामान् = भोगान् कामयमानाः **गतागतं** यातायातं **लभन्ते** ॥ २१ ॥

एवं त्रैविद्यानां पुनरावृत्तिफलमभिधाय भागवतानां भगवद्भजनेन अपुनरावृत्तिपुरुषार्थलक्षण-मोक्षफलमुच्यते **अनन्या इति** । अविद्यमानम् अन्यत् चिन्तनीयं येषां ते **अनन्याः** । 'अन्य-दचिन्तयित्वा' इति यावत् । **मां चिन्तयन्तो ये जनाः पर्युपासते** सम्यक् स्वस्वयोग्यगुणगणम् उपसंहृत्योपासते **तेषामहं नित्याभियुक्तानां** नित्यम् अभितः = सर्वतः सर्वस्मिन् देशे, शरीरे-न्द्रियमनोभिर्वा युक्तानां = भगवत्सेवोद्युक्तानां **योगक्षेमं** योगेन = अप्राप्तप्राप्तिलक्षणेन सहितं क्षेमं = स्थितस्य परिपालनं अपुनरावृत्तिपुरुषार्थं **वहामि** प्रापयामि । यद्यप्यहमेव सर्वयज्ञानां भोक्ता, तथापि त्रैविद्यानुष्ठितं मद्भजनं अज्ञानसम्भिन्नमिति तत्फलं फल्गु पुनरावृत्तिमच्च । मद्भजनं मोक्ष-फलकत्वात् त्रैविद्यानुष्ठितान्यदेवताभजनात् उत्कृष्टफलकमिति 'किं फलं समम् ?' इति प्रश्नः परिहृत इति ॥ २२ ॥

**गीता**

## येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयाऽन्विताः ।
## तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥

***वि०वि०***— भगवद्भोगनिमित्तत्वात् फलस्य भगवतः सर्वत्र साम्यात्सर्वेषां फलसाम्येन भाव्यम् । तदभावे च 'अहं क्रतुः' इत्यादिनोक्तं सर्वत्र भगवतो भोक्तृत्वमपि न स्यादित्याशङ्का-मपनुदन्नुक्तमेव प्रपञ्चयति **येऽपीत्यादिना** ॥ २३ ॥

***सा०सं०***— भागवतेभ्योऽन्यदेवतायाजिनां फलभेदं सहेतुकं प्रपञ्चयति **येऽपीति** । **अन्य-देवताभक्ता येऽपि श्रद्धयाऽन्विताः** सन्तोऽन्यदेवता यजन्ते तदुद्देशेन हविस्त्यागं कुर्वन्ति । **तेऽपि मामेवाविधिपूर्वकं यजन्ति** । मदुद्देशेनैव कर्तव्येऽपि अन्योद्देशेन कृत्वा ते तत्कर्म अन्ते मय्यपर्यन्तीत्यविधिपूर्वकमासीत् मद्यजनमिति भावः ॥ २३ ॥

***अ०प्र०***— ननु त्वद्व्यतिरेकेण वस्तुतो देवतान्तरस्याभावात् इन्द्रादिसेविनोऽपि त्वद्भक्ता एवेति कथं ते गतागतं लभेरन् । तत्राह **येऽपीति** ।

हे कौन्तेय ![१], श्रद्धयान्विताः[२], येऽपि[३], अन्यदेवताभक्ताः[४], यजन्ते[५], तेऽपि[६], मां[७], एव[८], यजन्ति[९], किन्तु अविधिपूर्वकम्[१०] ॥

हे कौन्तेय ![१], श्रद्धयान्विताः = श्रद्धयोपेताः सर्वान्तर्यामिणं मां अज्ञात्वा[२], येऽपि[३], अन्य-देवताभक्ताः = अन्यदेवताऽऽराधकाः[४], यजन्ति = यज्ञेन अन्यदेवतां इन्द्रादिरूपाः यजन्ति[५], तेपि मामेव यजन्ति[६], इति सत्यम्, किन्तु अविधिपूर्वकं साक्षात् मद्भजनं विधिः विधिपूर्वकं न भवतीति अविधिपूर्वकं यो यष्टव्यस्तं मां विहायान्यान् यजन्तीति भावः । मोक्षप्रापकं विधिं विना यजन्ती-त्यर्थः[१०] अतस्ते पुनरावर्तन्ते ॥ २३ ॥

भाष्यम्

तर्हि 'अहं क्रतुः' इत्याद्यसत्यमित्यत आह— **येऽपीति** ॥ २३ ॥

***प०टी०***— ननु यदि त्रैविद्यानामल्पफलम्, तर्हि न भगवतः सर्वयज्ञभोक्तृत्वादीत्याशङ्को-त्तरत्वेनोत्तरश्लोकमवतारयति **तर्हीति** ॥ २३ ॥

*प्र०दी०*— उक्तप्रश्नस्योत्तरं जातम् । तत् किमुत्तरेण ? इत्यतः प्रश्नाभिसन्ध्युद्घाटनस्येद-मुत्तरमित्याह **तर्हीति** । भगवद्भोगनिमित्तं हि फलम् । स चेत् सर्वत्र समः, तदा सर्वेषां फलसाम्येन भाव्यम् । तदभावश्चेत् तर्हि 'अहं क्रतुः' इत्युक्तं सर्वत्र भगवतः भोक्तृत्वमपि 'असत्यम्' इत्यर्थः ॥ ॥ २३ ॥

*भा०र०*— अभिसन्ध्युद्घाटनं दर्शयति **भगवद्भोगनिमित्तं हीति** । **स चेत्** भगवांश्चेत् । **तदभावश्चेत्** फलसाम्याभावो यद्यभ्युपगत इत्यर्थः । **सर्वत्र** त्रैविद्यभागवतानुष्ठितयज्ञेषु ॥ २३ ॥

**गीतातात्पर्यनिर्णयः**

**''अनन्यदेवतायागाद् भक्त्युद्रेकादकामनात् ।**
**सदा योगाच्च वैशिष्ट्यं त्रैविद्याद् वैष्णवादपि ॥**
**स्याद्धि भागवतस्यैव तेन ब्रह्मादयोऽखिलाः ।**
**अश्वमेधादिभिर्यज्ञैरपि केशवयाजिनः ॥**
**वैष्णवा इति बुद्ध्यैव मानयन्त्यन्यदेवताः ॥'' इत्याग्नेये ।**

*प्रका०*— त्रैविद्या इत्यादेरर्थमाह **अनन्यदेवतेत्यादिना** ।

*न्या०दी०*— **तत्र भगवतः सर्वयज्ञादिभोक्तृत्वे त्रैविद्यभागवतयोः फलभेदो न स्यात् इत्याशङ्क्य परिहियते त्रैविद्याः इति । तदेव प्रपञ्चयते येऽपीति । तत्र त्रैविद्यभागवतयोः भगवद्याजित्वसाम्येऽपि फलभेदः सहेतुकमुक्तः । तस्य स्फुटमप्रतीतेः स्मृत्यैव तद्व्याचष्टे अनन्येति । अन्यदेवताभक्ता यजन्त इति त्रैविद्यानामन्यदेवतायाजित्वमुक्तम् । भागवतानां तत्प्रतियोगितयोक्तस्य 'अनन्याः' इत्यस्यार्थः 'अनन्यदेवतायागात्' इति । ''न तु मामभि-जानन्ति तत्त्वेन'' इति त्रैविद्यस्यातिशयज्ञानाभाव उक्तः । तत्त्वज्ञानाभावे भक्त्यभावात् । तत्प्रतियोगितयोक्तस्य 'पर्युपासते' इत्यस्यार्थो 'भक्त्युद्रेकात्' इति । भक्त्युद्रेकेणोपासनस्यैव पर्युपासनत्वात् । ''स्वर्गतिं प्रार्थयन्ते कामकामाः'' इति त्रैविद्यानां कामनमुक्तम् । तत्प्रति-योगितयोक्तस्य ''चिन्तयन्तो माम्'' इत्यस्यार्थः 'अकामनात्' इति । मामेव चिन्तयन्तो न तु काममित्यर्थः । ''मामिष्ट्वा मामैव यजन्ति'' इति त्रैविद्यानामन्ते समर्पणमुक्तम् । तत्प्रतियोगितयोक्तस्य 'नित्याभियुक्तानां' इत्यस्यार्थः 'सदायोगात्' इति । सर्वदा स्मरणो-द्देशादियोगादित्यर्थः । वैशिष्ट्यं फलेनाधिक्यम् । ''योगक्षेमं वहामि'' इत्यपुनरावृत्ति-**

**पुरुषार्थदानस्योक्तत्वात् । वैष्णवादपि भगवद्याजित्वेऽपीत्यर्थः । "पशून् देवताभ्यः प्रत्यौहत्" इत्यादौ ब्रह्मादीनामप्यन्यदेवतायाजित्वं श्रूयत इत्यत आह वैष्णवा इति ॥ न तु देवतात्वेनेत्यर्थः ।**

*भा०दी०*— **सहेतुकमुक्त इति** । भगवद्भजनप्रकाररूपो यः फलोपायस्तद्भेदहेतुकः फलभेद उक्त इत्यर्थः । तमेव भजनप्रकाररूपोपायभेदं फलभेदहेतुं व्यनक्ति **अन्यदेवतेत्यादिना** ॥ **उक्त-मिति** । ययेति श्लोके उक्तमित्यर्थः । तत्प्रतियोगितया तद्विरोधितयेत्यर्थः ॥ **उक्तस्येति** । गीताया-मुक्तस्येत्यर्थः ॥ **उक्त इति** । अत्रैवोपरितनश्लोके उक्त इत्यर्थः ॥ **कामनमुक्तमिति** । पूर्वश्लोके ॥ **वैष्णवादपीत्यनुवादः** । **भगवदित्यादि** व्याख्या ॥ **इत्यादाविति** । वाजसनेयादौ ॥

**गीतातात्पर्यनिर्णयः**

**"सम्यग् गुणगणज्ञानादुपासा पर्युपासना ॥"**

**—इति च ॥ २०-२३ ॥**

*प्रका०*— "अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासत" इत्यत्र पर्युपासनाशब्दार्थमाह सम्यगिति ।

***न्या०दी०*— ननु त्रैविद्यानामविधिपूर्वकत्वविवरणरूपेण "न तु मामभिजानन्ति" इति पदेन तत्त्वज्ञानाभाव उक्तः । तत्प्रतियोगितया भागवतस्य तत्त्वज्ञानं किमिति नोक्त-मित्यतः पर्युपासनपदेनैवोक्तमिति भावेन तत्स्मृत्यैव व्याचष्टे सम्यगिति ॥ २०-२३ ॥**

**गीता**

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥**

*वि०वि०*— त्रैविद्यादिकृतानामपि यज्ञानां भगवद्भोक्तृत्वादविधिपूर्वकत्वे किं कारणमित्यत आह **अहं हीति** । 'मामिष्ट्वा प्रार्थयन्ते' इत्युक्तत्वात् जानन्तोऽपि तत्त्वेन नाभितो जानन्ति । अत-श्च्यवन्ति प्रच्यवन्ते । सर्वप्रकारेणाज्ञानिनां मिथ्याज्ञानिनां चानर्थप्राप्तिरेव, न स्वर्गाच्च्यवनमात्रम् । उक्तं च 'सर्वदेववरत्वेन' इत्यादिना पूर्वोक्तत्वात् । अतःसर्वाधिक्यं विष्णोर्ज्ञात्वाऽपि ब्रह्मरुद्रादीनां तत्परिवारत्वमजानतामिदं फलम् ॥ २४ ॥

*वा०ल०*— 'तत्त्वेनातश्च्यवन्ति ते' इत्यत्र तत्त्वेन सर्वयज्ञानां भोक्तृत्वेन प्रभुत्वेन च मां नाभिजानन्ति । इदमेवाभिप्रेत्य प्राक् अविधिपूर्वकम् इत्युक्तम् । अतः शिवादिपूजानां शिवाद्यन्तर्गतो हरिरेव भोक्ता, हरिरेव प्रभुश्चेति ज्ञानाभावात् ॥ २४ ॥

*सा०सं०*— तद्यज्ञस्यापि भगवद्भोगत्वात् कथमविधिपूर्वकतेत्यतोऽविधिपूर्वकत्वे कारणमाह **अहं हीति** । **सर्वयज्ञानां भोक्ता प्रभुश्च** प्रवर्तक उद्देश्यश्च तादृशं **मां तु तत्त्वेन** अभि सम्यक् **न जानन्ति** । अभीत्यस्य सर्वोत्तमत्वेन हरिं जानन्तोऽपि यज्ञाद्युद्देश्यत्वादिना सम्यक् न जानन्तीत्यर्थः । 'तत्त्वेन' इत्यस्य तु ब्रह्माद्यन्यदेवतानां तु तत्परिवारत्वादिकं न सम्यक् जानन्तीत्यर्थः । **हि** यतोऽतस्तत् **च्यवन्ति** स्वर्गान्मर्त्यलोकं विशन्तीति ॥ २४ ॥

*अ०प्र०*— अविधिपूर्वकत्वे कारणमाह **अहं हीति** ।

हि = यस्मात्[१], अहं[२], सर्वयज्ञानां[३], भोक्ता[४], प्रभुश्च[५], एतादृशं मां तु[६], नाभिजानन्ति[७], ध्वन्यर्थेन मां अज्ञात्वा देवानेव जानन्ति अतः तस्मात् कारणात्[८], ते[९], तत्त्वेन[१०] च्यवन्ति ।

हि = यस्मात्[१], अहं = स्वामी[२], सर्वयज्ञानां = समस्तयज्ञरूपोपहाराणां[३], भोक्ता = तत्तद्देवतारूपेण भोक्ता प्रवर्तकः[४], प्रभुश्च = नियन्ता व्यापकत्वात् फलदाता उद्देश्यश्च[५], एतादृशं मां तु[६], ते कामकामाः नाभिजानन्ति = ध्वन्यर्थेन मां अज्ञात्वा देवानेव जानन्ति भजन्ति[७], अतः = कारणात्[८], ते = अन्यदेवतायाजकाः[९], तत्त्वेन = इत्यस्य तु देवतानां तु तत्परिवारकादिकं एतत्तत्त्वं तेन । यद्वा, यथावत् निश्चये न वा[१०] च्यवन्ति = प्रच्यवन्ते = पुनरावर्तन्ते स्वर्गात् मर्त्यलोकं विशन्तीति[११] न मां प्राप्नुवन्त्येव ॥ २४ ॥

भाष्यम्

## कारणमाह अविधिपूर्वकत्वे— अहं हीति ॥ २४ ॥

*प०टी०*— त्वां यजतां कथमविधिपूर्वकत्वं त्वद्यजनस्यैव विवक्षितत्वात् ? इत्याशङ्क्योत्तरत्वेन श्लोकमवतारयति **कारणमिति** ॥ २४ ॥

*प्र०दी०*— 'अहं क्रतुः' इत्यादिनोक्तत्वात् 'अहं हि' इति पुनरुक्तिरित्यत आह **कारणमिति** । 'त्रैविद्यादिकृतानां यज्ञानां भगवांश्चेत् भोक्ता, कथं तर्ह्यविधिपूर्वकत्वम् ? इति शङ्कायाम्' इति शेषः ॥ २४ ॥

*भा०र०*— **उक्तत्वात्** यज्ञभोक्तृत्वस्य 'अहं क्रतुरहं यज्ञः' इत्यत्र क्रतुयज्ञसत्ताप्रतीत्यादिकारणत्वात् तद्वोक्तृत्वाच्च क्रतुयज्ञशब्दवाच्यत्वमिति व्याख्यानस्याभिप्रेतत्वादिति भावः ॥ २४ ॥

**गीता**

**यान्ति देवव्रता देवान् पितॄन्यान्ति पितृव्रताः ।**
**भूतानि यान्ति भूतेज्या**
**यान्ति मद्याजिनोऽपि माम् ॥ २५ ॥**

*वि०वि०*— त्रैविद्यभागवतयोः 'ते पुण्यमासाद्य' इति, 'योगक्षेमं वहाम्यहम्' इति चोक्ते फलभेदं प्रपञ्चयति **यान्तीति** ॥ २५ ॥

*सा०सं०*— फलभेदं विविच्य प्रपञ्चयति **यान्तीति** । इन्द्रादिदेवेषु व्रतं नियमो येषां ते तथा, इन्द्रादियाजकाः इन्द्रादीन् यान्ति । **पितृव्रताः** श्राद्धादिक्रियापराः । **पितॄन् यान्ति** । **भूतेज्या** भूतेषु सप्तमातृकादिषु इज्या पूजा येषां ते भूतेज्याः । शिष्टं व्यक्तम् ॥ २५ ॥

*अ०प्र०*— फलभेदं विविच्य प्रपञ्चयति । ये तु सर्वदेवतासु मामेवान्तर्यामिणं पश्यन्तो यजन्ति ते तु नावर्तन्ते तदेवोपपादयति **यान्तीति** ।

अथान्वयः— देवव्रताः[१], देवान्[२], यान्ति[३], पितृव्रताः[४], पितॄन्[५], यान्ति[६], भूतेज्या[७], भूतानि यान्ति[८], मद्याजिनोऽपि[१०] मां[११] यान्ति[१२] ॥

देवव्रताः = इन्द्रादिदेवेषु नियमो येषां ते तथा । यद्वा, देवानां विषये व्रतानि येषां ते तथा[१], देवान् = अन्तवन्तो देवान्[२], यान्ति = देवत्वं प्राप्नुवन्ति[३], पितृव्रताः = पितृषु श्राद्धादिक्रियाभिः व्रतं येषां ते तथा त्रिकरणैः ये नियमव्रताः ते पितृव्रताः[४], पितॄन् यान्ति = पितृत्वं प्राप्नुवन्ति[६], भूतेज्याः = भूतेषु सप्तमातृयज्ञादिषु इज्या पूज्या येषां ते भूतेज्याः । यद्वा, भूतेषु विनायकमातृकादिषु । यद्वा, क्षुद्रदेवतादिभूतानि परदेवताभावनया अभिचारक्रियाभिः ये पूजयन्ति ते तथा[७], ते भूतानि यान्ति[८], मद्याजिनोऽपि मां यष्टुं शीलं येषां ते मद्याजिनः । यद्वा, मनोबुद्ध्यादिसर्वेन्द्रियवृत्तिभिः मामेव ये यजन्ति ते तथा तेऽपि मरणात्पूर्वमेव मासं प्राप्तास्ते देहान्तेऽन्यत्र कथं गच्छन्ति तस्मात् यैस्सर्वभावेन दारासुतप्रियप्राणान् मयि आत्मनिवेदनं कृतं ते मद्याजिनोऽपि[१०] मामेव अक्षयपरमानन्दमेव[११] यान्ति = मत्सामीप्यमुक्तिं प्राप्नुवन्ति । तदुक्तम्—

निष्किञ्चना वयं शश्वन्निष्किञ्चन जनप्रियः ।
तस्मात्प्रायेण नो आढ्या न भजन्ति सुमध्यमाः ॥ २५ ॥

भाष्यम्

**फलं विविच्य आह यान्तीति ॥ २५ ॥**

***प०टी०***— सर्वेषां त्वद्याजित्वेन त्वत्प्राप्तिमतां कथं फलभेदः ? इत्याशङ्कानिरासाय श्लोकमवतारयति **फलमिति** ॥ २५ ॥

***प्र०दी०***— 'ते पुण्यमासाद्य' इति 'योगक्षेमं वहाम्यहं' इति च फलभेदस्योक्तत्वात् किं 'यान्ति' इत्यादिना ? इत्यत आह **फलमिति** । तस्यैवायं प्रपञ्च इति भावः ॥ २५ ॥

***भा०र०***— **फलभेदस्य** स्वर्गापवर्गलक्षणभेदस्याकृतचोद्यं परिहर्तुमाह **तस्यैवेति** ॥ २५ ॥

**गीता**

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥**

***वि०वि०***— अन्यदेवताभजनस्याल्पफलत्त्वेऽपि तदेव करोमि सुशक्यत्वात् । त्वं तु दुर्बलैः पूजयितुमशक्यो महत्वादित्याशङ्क्याह **पत्रमिति** । अनिषिद्धं पत्रादि । यो भक्त्या मह्यं ददाति । तन्निर्मलचित्तस्य भक्त्या समर्पितमश्नामि । भक्त्यैवाहं तुष्ये, न द्रव्यादिना इति भावः ॥ २६ ॥

***सा०सं०***— अन्यदेवताभजनस्याल्पफलत्वेऽपि तदेव कार्यं सुशकत्वात् । त्वद्भजनं तु दुर्बलैरशक्यं कर्तुं तवातिमहिमत्वादित्यत आह **पत्रमिति** । अनिषिद्धपत्रादिकं **यो** मह्यं **भक्त्या** ददाति । **प्रयतात्मनः** । 'यम उपरमे' । प्रकर्षेणोपरतमनस्कस्य विषयविरक्तस्य । **भक्त्या** समर्पितमश्नामि । भक्त्यैवाहं तुष्टो भवामि न द्रव्यादिनेति भावः ॥ २६ ॥

***अ०प्र०***— अन्यदेवताभजनस्वाल्पफलत्वेऽपि तदेव कार्यं सुशकत्वात् । त्वद्भजनं तु दुर्बलैरशक्यं कर्तुं तवातिमहिमत्वादित्यत आह **पत्रमिति** ।

यः[१], पत्रं[२], पुष्पं[३], फलं[४], तोयं वापि[५], भक्त्या[६], मे[७], प्रयच्छति[८], तस्य प्रयतात्मनः[९], तत्[१०] भक्त्युपहृतं[११] अहं[१२], अश्नामि[१३] ॥

यः = मद्याजी भक्तः[३], अनिषिद्धपत्रं-पुष्पं-फलं-तोयादिकं वापि[४], भक्त्या = अनन्यभक्त्या प्रीत्या वा[६], मे = मह्यं[७], प्रयच्छति = निवेदयति[८], तस्य प्रयतात्मनः = प्रकर्षेण मय्यात्मनियतं नियमितं आत्मान्तःकरणं येन स प्रयतात्मा तस्य तथा । यद्वा, निष्कामत्वात् शुद्धचित्तस्य भक्तस्य[९], तत् निवेदितं पत्रादिकं[१०] भक्त्युपहृतं = तेन भक्त्या समर्पितं[११] अहं[१२], अश्नामि = भक्षयामि इति वा पाठः । यद्वा, प्रीत्या गृह्णामि = भक्त्यैवाहं तुष्टो भवामि न द्रव्यादिनेति भावः । न हि महाविभूतिपतेः परमेश्वरस्य मम क्षुद्रदेवतानामिव बहुवित्तसाध्ययागादिभिः परितोषः स्यात् । किन्तु भक्तिमात्रेण अतो भक्त्या समर्पितं यत्किञ्चित्पत्रादिमात्रमपि तदनुग्रहार्थमेवाश्नामीति भावः ॥ २६ ॥

भाष्यम्

**दुर्बलैस्त्वं पूजयितुमशक्यो महत्त्वात् इत्याशङ्क्य आह पत्रमिति । न तु अविहितपत्रादि । तस्यापराधत्वोक्तेः वाराहादौ । भक्त्यैवाहं तृप्य इति भावः । "भक्तप्रियं सकललोकनमस्कृतं च" इति भारते । "एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः । एकान्तभक्तिर्गोविन्दे यत् सर्वत्रात्मदर्शनम् ॥" इति भागवते ॥ २६ ॥**

***प०टी०—*** अस्त्वन्यद्वारा त्वद्यजनेऽल्पफलम् । तथाऽप्यन्यजनमेव वरं तव महत्त्वेन पूजयितुं साधनाभावादित्याशङ्कापरिहाराय श्लोकमवतारयति **दुर्बलैरिति** । यदि न साधने तात्पर्यम्, तर्हि यत्किञ्चित्पत्रादिनाऽपि पूजा स्यादित्यत आह **न त्विति** । यदि न साधनमपेक्षितं तर्हि कथं हरिप्रसादः ? इत्यत आह **भक्त्येति** ॥ २६ ॥

***प्र०दी०—*** 'पत्रं' इत्यस्य सङ्गत्यप्रतीतेराह **दुर्बलैरिति** । 'अतस्तद्भजनस्य महाफलत्वेऽपि तद्विहायाल्पानां देवानां भजनमल्पफलमपि सुशकत्वात् करोमि' इति प्रासङ्गिकशङ्काशेषः । साधनानादरस्योक्तत्वात् यत्किञ्चित् पत्रादिकम् इति न मन्तव्यमित्याह **न त्विति** । तत् किमपि भगवते समर्पणीयमेवेति नियमोऽत्राभिप्रेत इत्यत आह **भक्त्यैवेति** । कुत इत्यत आह **भक्तेति** । **स्वार्थः** स्वार्थसाधनोपायः । **आत्मनः** गोविन्दस्य ॥ २६ ॥

***भा०दी०—*** **प्रासङ्गिकेति** । प्रासङ्गिकी भगवत्तदितरभजनयोः अनल्पाल्पफलकत्वोक्ति-प्रसङ्गादागता या शङ्का तस्याः शेष इत्यर्थः । **साधनोपाय इति** । स्वाभीष्टसाधना इयं गोविन्दैकान्तभक्तिरुपाय इत्यर्थः ॥ २६ ॥

*भा०र०*— **आह** सङ्गतिम् । पूर्वोक्तानाक्षेपाद् इयं शङ्कैव न ? इत्यत उक्तम् **प्रासङ्गिकेति** । भागवत-त्रैविद्यभजनयोः अनल्प-अल्पफलोक्तिप्रसङ्गागतशङ्काशेष इत्यर्थः । पत्रादेर्लोकरीत्या महनीयत्वाभावादाह **साधनानादरस्येति** । 'इदं पत्रम्', 'इदं पुष्पम्' इत्येवंरूपेणानुक्तेरनादर इत्यपि आहुः । **किमपि** यत्किञ्चिदपि भगवते समर्पणीयमेव किम् ? इत्यन्वयः । भक्तेरात्मदर्शनस्य च स्वतोऽपुरुषार्थत्वादाह **साधनोपाय इति** । स्वार्थशब्देन स्वार्थनिष्पादनोपायो ग्राह्य इत्यर्थः । कोऽसौ ? इत्यत उक्तं भाष्ये— एकान्तभक्तिः आत्मदर्शनं चेति द्वयमित्येतावानेव स्वार्थ इति । अत्र आत्मशब्दार्थः– **आत्मनः = गोविन्दस्येति** । 'गोविन्दे' इति प्रस्तावादियमुक्तिः ॥ २६ ॥

**गीता**

## यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
## यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥

*वि०वि०*— सामान्यमुक्त्वा विशेषेण निगमयति **यदिति** । ब्राह्मणेभ्यो हिरण्यादि यद्ददासि ॥ २७ ॥

*वा०ल०*— 'तत्कुरुष्व मदर्पणम्' इत्यत्र मयि अर्पणं यस्य तत् मदर्पणम् ॥ २७ ॥

*सा०सं०*— यतोऽल्पमपि भक्त्याऽर्पितं मम प्रीतिकरम् । अतरस्त्वमपि तथा कुर्वित्युपसंहरति **यदिति** । हे **कौन्तेय ! यत् त्वं यत्** विहितं **करोषि** । **'विहितम्'** इति सर्वत्रान्वेतव्यम् । निषिद्धादिकरणस्य प्रत्यवायहेतुत्वात् । पात्राय च **यद्** द्रव्यादि **ददासि तत्** सर्वं **मयि** समर्पणं **कुरुष्व** ॥ २७ ॥

*अ०प्र०*— यदल्पमपि भक्त्यार्पितं मम प्रीतिकरं अतस्त्वमपि तथा कुर्वित्युपसंहरति । न च पुष्पादिकमपि यज्ञार्थपशुसोमादिद्रव्यवन्मदर्थमेवोद्यमैरापाद्य समर्पणीयम् । किं तर्हि **यदिति** ।

हे कौन्तेय ![1], यत्करोषीत्यादि पञ्चकर्माणि तत्सर्वं मदर्पणं कुरुष्व इत्यन्वयः ॥

हे कौन्तेय ![1], यत्करोषि = स्वभावतो वा शास्त्रतो वा यत्किञ्चित् कर्म करोषि[2], तथा यत्[3], अश्नासि = यद्भोगान् भुङ्क्षे तदुक्तं भागवते एकादशस्कन्धे— 'स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः । विकर्म यच्चोत्पतितं कथञ्चित् धुनोति सर्वं हृदि सन्निविष्टः' ॥ तथा प्रथमे– 'शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः । हृद्यन्तस्थो ह्यभद्राणि विधुनोति सुहृत्सताम्' ॥

यज्जुहोसि = नानाविधैर्यज्ञैर्हवनं निवर्तयति[९], यत् ददासि = सत्पात्रे यद्दानं अथवा सेवकानां यज्जीवनार्थं प्रयच्छसि[१०], यत् तपस्यसि = तपः करोषि[११] तत्[१२] कुरुष्व[१३], मदर्पणं[१४], यद्यत्स्वभावाद्यथा भवति तत्तत्क्रियाजातं मद्दासो भूत्वा मदर्पणं कुरु एवं कर्तृत्वाभिमानं कर्मफलापेक्षां च विहाय सत्कर्माणि कृतानि चेत् परिशुद्धानि भवन्ति। तानि मदर्पितानि कुर्विति भावः ॥ २७ ॥

भाष्यम्

**अतः यत् करोषि ॥ २७ ॥**

***प०टी०***— 'यत् करोषि' इति श्लोकं व्याचष्टे **अत इति** ॥ २७ ॥

***प्र०दी०***— असाधनानादरस्य पूर्वमेवोक्तत्वात् व्यर्थमुत्तरमित्यत आह **अत इति**। सामान्यमुक्त्वा विशेषे निगमनमेतदिति भावः ॥ २७ ॥

***भा०दी०***— **असाधनेति**। भक्तेरेव स्वप्रयोजकतया द्रव्यादिरूपाराधनसाधनानादरस्य 'पत्रम्' इति श्लोक एवोक्तत्वादित्यादित्यर्थः। **सामान्यमिति**। 'भक्त्युपहृतम्' इति 'उपहृतम्' इति उपहरणसामान्यमुक्त्वा करणादानादिविशेषे उपसंहारादित्यर्थः ॥ २७ ॥

***भा०र०***— **असाधनेति**। भक्तेरेव प्रयोजकत्वाभिप्रायेण भगवद्भजनसाधनानादरस्य 'पत्रं पुष्पम्' इति श्लोक एवोक्तत्वात् अत्रापि 'यत्करोषि' इत्यादिना कर्माद्यनादरस्य प्रतीयमानत्वादित्यर्थः। **उत्तरम्**— 'यत्करोषि' इत्युपरितनं वचनम्। **सामान्यमिति**। 'यो मे भक्त्या' इति पुरुषसामान्यमुक्त्वा 'कौन्तेय' इति पुरुषविशेषे उपसंहारोऽत्र क्रियत इत्यतो न वैयर्थ्यमिति भावः ॥ २७ ॥

***'येऽप्यन्यदेवताभक्ताः' इत्यादि गीताश्लोकषडक्षरार्थस्तु—***

भगवद्भोगनिमित्तं हि फलम्। स चेत् सर्वत्र समस्तदा सर्वेषां फलसाम्येन भाव्यम्। तदभावश्चेत् तर्हि 'अहं क्रतुः' इत्युक्तं सर्वत्र भगवतो भोक्तृत्वमप्यसत्यम्? इत्यत उच्यते **येऽपीति**। 'यजन्ते अन्यदेवताः' इति विभज्य संयोज्यम्। **तेऽपि मामेव यजन्ति** तद्यज्ञभोक्ताऽप्यहमेवेति फलितोऽर्थः ॥ २३ ॥

त्रैविद्यादिकृतानां यज्ञानां भगवांश्चेद्भोक्ता कथं तर्ह्यविधिपूर्वकत्वम्? इति शङ्कायाम् अविधिपूर्वकत्वे कारणमुच्यते **अहं हीति**। **सर्वेषां** त्रैविद्याद्यनुष्ठितानां **यज्ञानां अहमेव भोक्ता**। अन्यदेवतोद्देशेन त्यक्तानां हविषां त्वं कथं भोक्ता? इत्यत उक्तम् **प्रभुः स्वामीति**। चशब्दः

परस्परसमुच्चये । एवशब्दः 'अहम्' इत्यनेन सम्बध्यते । एवम्भूतमपि **मां तत्त्वेन नाभिजानन्ति** सर्वदेववरत्वेन भगवन्तं जानन्तोऽपि ब्रह्मरुद्रादीनां तत्परिवारत्वादिकं सम्यग् न जानन्ति यतः, **अतस्ते च्यवन्ति** प्रच्यवन्ति ॥ २४ ॥

त्रैविद्यभागवतयोः, 'ते पुण्यमासाद्य' इति 'योगक्षेमं वहाम्यहम्' इति च यः फलभेद उक्तः स प्रपञ्च्यते **यान्तीति** । देवेषु व्रतं = नियमो भक्तिर्येषां ते **देवव्रताः** । भूतेषु = सप्तमातृ-यक्ष-रक्षः-पिशाचादिषु । इज्या 'व्रजयजोर्भावे क्यप्' पूजा येषां ते **भूतेज्याः** । मां यष्टुं शीलमेषां ते **मद्याजिनः** । अपिशब्दस्तुशब्दार्थः ॥ २५ ॥

दुर्बलैस्त्वं पूजयितुमशक्यो महत्त्वात् । अतस्त्वद्भजनस्य महाफलत्वेऽपि तद्विहायाल्पानां देवानां भजनं अल्पफलमपि सुशकत्वात् करोमि ? इत्यत उच्यते **पत्रमिति** । अनिषिद्धं पत्रादि **यो मे** मह्यं **प्रयच्छति** ददाति, तस्य **प्रयतात्मनः** प्रकर्षेणोपरतमनस्कस्य परिशुद्धमानसस्य वा **तत्** पत्रादि **भक्त्युपहृतं** भक्त्या समर्पितम् **अहमश्नामि** प्रतिगृह्णामि । 'भक्त्यैवाहं तुष्टो भवामि, न द्रव्यादिना' इति द्विः भक्तिशब्दं प्रयुञ्जानस्य भावः ॥ २६ ॥

यतः 'भक्तैः समर्पितं यत्किमपि पत्रादिकं मम तोषहेतुः, अतः त्वमपि मय्येव सर्वं समर्पय' इति सामान्यमुक्त्वा विशेषे निगमनं क्रियते **यत्करोषीति** । **जुहोषि** हवनं निवर्तयसि **तपस्यसि** तपश्चरसि **तत् सर्वं मदर्पणं** मय्यर्पितं यथा स्यात् तथा कुरुष्व ॥ २७ ॥

**गीता**

## शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
## संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥

***वि०वि०***— ततः किमित्यत आह **शुभेति** ॥ २८ ॥

***वा०ल०***— कर्मबन्धनैः कर्मनिबन्धनैः । सम्यक् हरौ न्यासः स्वकृतकर्मणां समर्पणं संन्यासयोगः ॥ २८ ॥

***सा०सं०***— त्वदर्पणेन किमित्यत आह **शुभाशुभेति** । शुभाशुभफलैः इति बहुव्रीहिः । एवं मयि सर्वसमर्पणे सति शुभाशुभफलकैः **कर्मबन्धनैः मोक्ष्यसे** । तदेव व्यनक्ति **सन्यासेति** । फलत्यागकर्मानुष्ठानाभ्यां **युक्तात्मा विमुक्तः** सन् **मामुपैष्यसि** ॥ २८ ॥

***अ०प्र०***— एवं यत्फलं प्राप्स्यसि तच्छृणु **शुभेति** ।

एवं[1], कर्मबन्धनैः[2], शुभाशुभफलैः[3], मोक्ष्यसे[4], संन्यासयोगयुक्तात्मा तथाभूतस्त्वं[5], विमुक्तः सन्[6], मां[7], उपैष्यसि[8] इत्यन्वयः ।

एवं = मयि सर्वं समर्पणं कुर्वन्[1], कर्मबन्धनैः = कर्मनिमित्तबन्धनैः[2], शुभाशुभफलैः = पुण्यपापफलरूपैः जन्ममरणप्रदैः इष्टानिष्टफलकैः[3], मोक्षसे = मुक्तो भविष्यसि कर्मणां मयि समर्पितत्वेन तव तत्फलसम्बन्धानुपपत्तेः तैश्च मुक्तः सन् तथाभूतस्त्वं[4], संन्यासयोगयुक्तात्मा = तथाभूतस्वफलत्यागकर्मानुष्ठानाभ्यां युक्तात्मा । यद्वा, एवं भगवदर्पितकर्मणां मदर्पणं स एव योगो उपायः तेन युक्तः आत्मा चित्तं यस्य सः[5], तथा त्वं विमुक्तः सन्[6], मां[7], उपैष्यसि = एवं कर्मबन्धनैर्विमुक्तो भूत्वा मां परमात्मानं प्राप्नोषि ॥ २८ ॥

***भा०र०***— गीताक्षरार्थस्तु— विहितकरणादेः त्वय्यर्पणेन किं स्यात् ? इत्यत उच्यते **शुभाशुभफलैरिति** । **एवं** मयि समर्पयन्, सर्वसमर्पणे सतीति वा **शुभाशुभानि** इष्टानि अनिष्टानि फलानि येषां तानि **शुभाशुभफलानि तैः कर्मबन्धनैः**, कर्माख्यबन्धनैः, शुभफलकानामपि कर्मणां बन्धनत्वं मोक्षविरोधितया अनिष्टत्वाभिप्रायेण । **मोक्ष्यसे** मुक्तो भविष्यसि । तद्विशदीक्रियते **संन्यासेति** । संन्यासः कर्मफलाभिसन्धानं **योगः** भगवदर्पणपूर्वकं कर्मानुष्ठानं, **ताभ्यां युक्त आत्मा** मनो यस्य स तथा । **विमुक्तः** संसारात् **मामुपेष्यसि** इति ॥ २८ ॥

**गीतातात्पर्यनिर्णयः**

## मामिष्ट्वा प्रार्थयन्त इत्युक्तत्वाज्ज्ञानन्तोऽपि नाभिजानन्ति तत्त्वेन ।

***प्रका०***— **मामिष्ट्वेत्यादेरयमर्थः**— "न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते" इत्येतदेव व्याख्येयम् । मां किञ्चिज्जानन्तोऽपि अभितः सर्वप्रकारेण तत्त्वेनाजानन्तः स्वर्गाच्च्यवन्ति इत्यत्र "त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति पूर्वमुक्तत्वात् यज्ञादि अन्ततः समर्प्य मामिष्ट्वेति ज्ञातव्यम् । अतो यदत्र स्वर्गभोगानन्तरं च्यवनमुक्तं न तद्विष्णुमजानताम् । अन्यथा जानतां चेति ज्ञातव्यम् ।

***न्या०दी०***— **"न तु मामभिजानन्ति तत्त्वेनातः च्यवन्ति ते" इत्यत्र भगवन्तमजानतां तत्त्वेनेति विशेषणात् विपरीतं जानतां वाऽत्रैविद्यानां स्वर्गभोगानन्तरं च्यवनमुच्यत इत्यन्यथाप्रतीतिनिरासायाह मामिष्ट्वेति ॥ न चात्र "न तु मामभिजानन्ति तत्त्वेन"**

इत्युक्तत्वात् भगवन्तमजानतां मिथ्याज्ञानिनां वा त्रैविद्यानां स्वर्गात् च्यवनमुच्यत इति कल्प्यम् । "न तु मामभिजानन्ति तत्त्वेन" इत्यस्य सर्वदेववरत्वेन जानन्तोऽपि ब्रह्म-रुद्रादीनां तत्परिवारत्वादिकं सम्यङ् न जानन्तीत्यर्थोपपत्तेः । कुतोऽयमर्थः कल्प्यते ? "त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते" इति त्रैविद्यस्यान्ते सर्व-समर्पणेन भगवद्यजनप्रार्थनयोरुक्तत्वात् सर्वदेववरत्वाज्ञाने तदसम्भवात् । अभिशब्दबला-च्चेति भावः ।

*भा०दी०*— अभिशब्दबलाच्चेति । तस्य सम्यगर्थकत्वादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

"सर्वदेववरत्वेन यो न जानाति केशवम् ।
तस्य पुण्यानि मोघानि याति चान्धन्तमो ध्रुवम् ॥" इति च ।

"मोघाशा मोघकर्माणः" इत्युक्तत्वाच्च न केवलाज्ञविषयं मिथ्याज्ञानि-विषयं वा "च्यवन्ति ते" इत्यादि । अतः सर्वाधिक्यं विष्णोर्ज्ञात्वाऽपि ब्रह्मादीनां तत्परिवारत्वादिकमजानतामिदं फलम् ॥ २४-२८ ॥

*प्रका०*— "अवजानन्ति मां मूढा" "मोघाशा मोघकर्माण" इति पूर्वमुक्तत्वात् । "सर्वदेव-वरत्वेन यो न जानाति केशवम् । तस्य पुण्यानि मोघिन" इति वचनाच्चेत्युपसंहरति **अत इति** ॥

*न्या०दी०*— इतश्च स्वर्गभोगानन्तरं च्यवनं नात्र केवलाज्ञानां मिथ्याज्ञानिनां चोच्यत इत्याह **सर्वेति** ॥ सर्वदेववरत्वेनेति केवलाज्ञानां यज्ञादिकर्माणि मोघानि मिथ्या-ज्ञानिनां विपरीतफलानि भवन्तीत्युक्तत्वात् 'मोघाशा' इति विपरीतज्ञानिकर्मणां मोघत्व-स्योक्तत्वाच्च न स्वर्गभोगानन्तरं च्यवनमत्र केवलाज्ञस्य मिथ्याज्ञानिनो वोच्यत इत्यर्थः । मिथ्याज्ञानी चेद् याति चान्धन्तमो ध्रुवमिति । उक्तं विवृण्वन्नुपसंहरति ॥ २४-२८ ॥

**गीता**

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥**

*वि०वि०*— तर्हि स्नेहादिमत्वादल्पभक्तायापि कस्मैचिद्बहुफलं ददासि विपरीतायापि कस्मैचिद्विपरीतमित्यत आह **सम इति** । तर्हि न भक्त्या प्रयोजनमित्यत आह **ये इति** । मय्या-यत्तास्ते तेष्वहमायत्तः । यद्यपि मदायत्ता एते सर्वदा तथापि बुद्धिपूर्वकत्वाबुद्धिपूर्वकत्त्वेन भेदः । उद्धवादिवच्छिशुपालादिवच्च । मयि ते प्रीत्या वर्तन्ते तेष्वहं प्रीत्या वर्त इति । उक्तं च—

'नास्य भक्तोऽपि यो द्वेष्यो न चाभक्तो प्रियाप्रियः ।
किन्तु भक्त्यनुसारेण फलदोऽतः समो हरिः ॥' इति ॥ २९ ॥

*वा०ल०*— 'न मे द्वेष्यः' इत्यत्र तत्कृतपुण्यपापादिकमतिक्रम्य लौकिकजनस्य न द्वेष्यः, प्रियोऽपि न । तदेव दर्शयति **ये भजन्ति इति** । इदञ्चोपलक्षणम् । ये तु द्विषन्ति ते मयि न, अहं तेष्वपि नेत्यपि द्रष्टव्यम् । अत एव पार्थादीनां परिग्रहः, कंसादीनां वधश्चेति भावः ॥ २९ ॥

*सा०सं०*— ननु 'भक्त्युपहृतमश्नामि' इत्युक्तदिशा यदि त्वं भक्तिप्रियः । तर्हि द्वेषिणा-मप्रियश्चेति स्यात् । तथा च - भक्तेषु द्वेषिषु यथाक्रमं स्नेहद्वेषवत्त्वादल्पभक्तस्य कस्यचित् सुखरूपं बहुफलं ददासि, अल्पद्वेषिणो बहुदुःखरूपं ददासि इत्यापद्यते । राजादौ तथा दर्शनात् । एवं च वैषम्यनैर्घृण्ये प्राप्नुतस्तवेत्यत आह **समोऽहमिति** । **अहं** सर्वेषु भूतेषु **समः** न वैषम्यादिमान् । यतो मे तदीयं द्वेषमपेक्ष्याधिकं द्वेष्यो नास्ति । तदीयां भक्तिमपेक्ष्याधिकः प्रियश्च नास्ति । किन्तु तत्तदीयद्वेषभक्त्यनुसारेण तत्तत्सदृशफलद एवाहम् । अतः समोऽहम् । न हि तत्तत्कर्मानुसारेणानु-शासिता यमो विषमो भवति । तथात्वे 'समवर्ती परेतराट्' इति प्रसिद्धिविरोधात् । तथेति भावेन भक्तिमतां फलमाह **य इति** । **ये भक्ताः मां भजन्ति** सेवन्ते । ते । **मयि** मदधीनाः मद्वशाः इति ज्ञानवन्तो भवन्ति । **तेषु चाप्यहं** तेषां वशोऽहमित्यर्थः ।

यद्वा, 'समः' इति पूर्वार्धे भक्तोऽभक्त इति पदद्वयमध्याहार्यम् । सर्वभूतेषु मे **भक्तः द्वेष्यो नास्ति । अभक्तो मे प्रियो नास्ति** । अतः समोऽहम् । यदि भक्तेषु द्वेषमभक्तेषु प्रीतिं कुर्यां तर्ह्येव विषमः स्याम् । न चैवम् । किन्तु भक्त्यनुसारेण फलद इति भावेनाह **य इति** । **ये मयि** प्रीत्या वर्तन्ते **तेषु, अहं** प्रीत्या वर्त इत्यर्थः ॥ २९ ॥

*अ०प्र०*— ननु तथा चेद्भक्तस्य चित्सुखरूपं फलं ददासीत्यापद्यते । राजादौ तथा दर्शनात् । एवं च वैषम्यनैर्घृण्ये प्राप्नुतस्तवेत्यत आह **समोऽहमिति** ।

अथान्वयः— हे कौन्तेय ! अहं[२], सर्वभूतेषु[१], समः[३], अतो मे[४], द्वेष्यो नास्ति[५], प्रियश्च नास्ति[६], मां तु[७], भक्त्या[८], ये भजन्ति[१०] ते[११] मयि वर्तन्ते[१२], अहमपि[१३], तेषु अनुग्रहतया वर्ते इत्यन्वयः ।

हे कौन्तेय ! अहं सर्वभूतेषु = ब्रह्मादिस्थावरान्तेषु सर्वदा[२], समः = न वैषम्यादिमान् समत्वेनावस्थितः[३], अतो मे = द्वेष्यो नास्ति यतो मे तदीयं द्वेषं आवेक्ष्याधिकः द्वेष्यो नास्ति[७], प्रियश्च नास्ति = तदीयां भक्तिमवेक्ष्याधिकं प्रियश्च नास्ति किन्तु तदीयद्वेषभक्त्यनुसारेण तत्तत्सदृशफलमेवाह । अतः समोऽहं[६], मां तु[७], भक्त्या[८], ये[९], भजन्ति = सेवन्ते[१०] ते भक्ताः[११] मयि = मदधीनाः । यद्वा, मम देहे मद्वशा इति ज्ञानवन्तो भवन्ति । एवं ते मयि वर्तन्ते[१२], अहमपि[१३], तेषु अनुग्रहतया वर्ते । तेषां वशोऽहमित्यर्थः । अहं सर्वव्यापकोऽपि भक्तानां हृदयेषु समग्रं स्थितोऽस्मि । यद्वा, सम इति यदर्थ भक्तो भक्त इति पदद्वय इति अध्याहार्यम् । सर्वभक्तेषु मे भक्तः द्वेष्यो नास्ति अतः समोऽहम् । यदि भक्तेषु द्वेषं अभक्तेषु प्रीतिं कुर्यात् तर्ह्येव विषमः स्याम् । न चैवम् । किन्तु भक्त्यनुसारेण फलमिति भावेनाह **य इति** । ये मयि प्रीत्या वर्तन्ते तेषु च तेष्वप्यहं प्रीत्या वर्ते इत्यर्थः ॥ २९ ॥

भाष्यम्

**तर्हि स्नेहादिमत्त्वाद् अल्पभक्तस्यापि कस्यचिद् बहुफलं ददासि । विपरीतस्यापि कस्यचिद् विपरीतमित्यत आह समोऽहमिति । तर्हि न भक्तिप्रयोजनमित्यत आह ये भजन्तीति ।**

***प०टी०—*** ननु यदि भक्तप्रियः, तर्हि भक्तानां फलं ददासि द्वेषिणां दुःखमिति वैषम्यनैर्घृण्ये तव स्यातामित्याशङ्क्य, श्लोकार्धमवतारयति **तर्हीति** । यदि त्वं समः, तर्हि भक्तेरप्रयोजकत्वमित्याशङ्क्य, उत्तरार्धमवतारयति **तर्हीति** । अयमेव समत्वार्थ इत्यर्थः ।

***प्र०दी०—*** भक्तप्रियत्वमुक्त्वा तद्विरुद्धं सर्वत्र साम्यं कथमुच्यत इत्यत आह **तर्हीति** । यदि त्वं भक्तप्रियः तदा द्वेष्यप्रियश्च स्याः । ततश्च भक्तेषु द्वेषिषु यथासङ्ख्यं स्नेहद्वेषवत्त्वात् **अल्पभक्तस्यापि कस्यचित् बहुफलं** सुखरूपं **ददासि** । **विपरीतस्य** अल्पद्वेषिणः **अपि कस्यचित्** बहुफलं दुःखरूपं **ददासि** इत्याद्यापाद्यते । राजादिषु तथा दर्शनात् । तथा च वैषम्यनैर्घृण्ये तवेति शङ्कार्थः। पूर्वार्धेनैव शङ्कायाः परिहृतत्वात् किमुत्तरार्धेन ? इत्यत आह **तर्हीति** ।

अहं हि **सर्वभूतेषु समः** न वैषम्यादिमान् यतो **मे** तदीयं द्वेषमपेक्ष्याधिकं **द्वेष्यो नास्ति** । तदीयां भक्तिमपेक्ष्य अधिकं **प्रियः** च नास्तीति भगवतोक्तेऽपि विपरीतमर्थं गृहीत्वा शङ्कते । यदि ते प्रियो नास्ति **तर्हि न भक्तिः प्रयोजनं** फलस्य । तथाच उक्तविरोध इति भावः ।

*भा०दी०*— **उक्तेति**। भक्तेरेव साधनोपायत्वं यदुक्तं तद्विरोध इत्यर्थः।

*भा०र०*— **भक्तप्रियत्वं** 'भक्त्युपहृतमश्नामि' इति भक्तप्रियत्वम्। **द्वेष्यप्रियः** द्वेषिणामप्रियः। 'विपरीतस्यापि' इति भाष्यस्यार्थः **अल्पद्वेषिणोऽपीति**॥ २९॥

भाष्यम्

**मयि ते तेषु चाप्यहमिति। मम ते वशास्तेषामहं वश इति। उक्तं च पैङ्गिखिलेषु– "ये वै भजन्ते परमं पुमांसं तेषां वशः स तु ते तद्वशाश्च" इति। तद्वशा एव ते सर्वदा। तथाऽपि बुद्धिपूर्वाबुद्धिपूर्वकत्वेन भेदः। उद्धवादिवत्, शिशुपालादिवच्च। तच्चोक्तं तत्रैव– "अबुद्धिपूर्वं यो वशः तस्य ध्यानात् पुनर्वशो भवते बुद्धिपूर्वम्" इति॥ २९॥**

*प०टी०*— भगवतः सर्वगतत्वात् सर्वस्य तदाधारत्वात् को विशेषो भक्तानाम्? इत्यत आह **मयीति**। सर्वेषां भगवद्वशत्वाद्भक्तस्य को विशेषः? इत्यत आह **तद्वशा इति**॥ २९॥

*प्र०दी०*— 'मयि ते तेषु चाप्यहं' इत्येतन्न फलम्, स्वभावसिद्धत्वादित्यत आह **मयीति**। इति 'अस्य' इति, 'अर्थः' इति योजना। कुत एतत्? इत्यत आह **उक्तं चेति**। 'मम ते वशाः' इत्येतदपि तादृगेव भजनाभावेऽपि तद्वशत्वस्वाभाव्यादित्यत आह **तदिति**। 'यद्यपि' इति शेषः। अत्र दृष्टान्तं प्रमाणं चाह **उद्धवादीति**। अबुद्धिपूर्वं **यो वशः** सः॥ २९॥

*भा०दी०*— 'मयि' इति वाक्यान्ते 'अस्य' इति पदं, 'वशा इति' इत्यनन्तरं अर्थपदं चाध्याहृत्य योजनामाह **इत्यस्येत्यर्थ इति योजनेति**। **तादृगेवेति**। 'मयि ते' इति गीतावाक्योक्तं अन्योन्याश्रयत्वं यथा निष्फलं तथा 'मम' इत्यादिना व्याख्यातं तद्वशत्वमप्यफलमेव इत्यर्थः। प्रमाणे श्रुतयच्छब्दस्य अध्याहृततच्छब्देन अन्वयमाह **अबुद्धिपूर्वं यो वशः स इति**॥ ॥ २९॥

गीता

**अपि चेत्सुदुराचारो भजते मामनन्यभाक्।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥ ३०॥**

***वि०वि०***— भगवद्भक्तिं प्रशंसति **अपि चेत्यादिना** । न भवत्येव प्रायस्तद्भक्तो दुराचारः । अपि तथापि । स्वयोग्यातिरिक्तपुण्येन सुदुराचारः । अनन्यभाक् प्राधान्येनाऽन्यदेवताः न भजन् । मां भजते चेत् । तर्हि स साधुरेव मन्तव्यः । कुतः, हि यस्मात् । सम्यग्व्यवसितः समीचीन-व्यवसायवान् ॥ ३० ॥

***सा०सं०***— भक्तप्रशंसा क्रियते **अपि चेदित्यादिना** । **सुदुराचारोऽपि** भगवद्भक्तो **यः** कश्चिद्देवांशः, ऋष्यादिः स्वयोग्याधिकपुण्यापगमाय दैवादत्यन्तदुराचारोऽपि । **अनन्यभाक्** स्वात-न्त्र्येण देवतान्तरभजनहीनः सन् । **मां भजते चेत् सः साधुरेव मन्तव्यः** । कुतः, **हि** यस्मात् । **स** चन्द्रसूर्याद्यंशः **सम्यग्व्यवसितः** सञ्जातसमीचीनभगवत्तत्त्वनिश्चयवान्, अत इत्यर्थः ॥ ३० ॥

***अ०प्र०***— अपि च तद्भक्तेरवितर्क्यप्रभावं भक्तप्रशंसां च दर्शयन्नाह **अपि चेदिति** ।

अथान्वयः— यः अनन्यभाक्[१], मां[२], भजते[३], सः[४], दुराचारोऽपि सन्[५], साधुरेव[६], मन्तव्यः[७], सः[८], हि[९], सम्यक् व्यवसितः[१०] ॥

यः अनन्यभाक् = मयि अनन्यरस्सन् यद्वा, स्वातन्त्र्येण देवतान्तरभजनहीनः सन् स्वनिश्चय-वानित्यर्थः, एतादृशः सन्[१], मां भजते[२-३], सः = भक्तः[४], दुराचारोऽपि सन् = दैवात् अत्यन्तं दुराचारोऽपि भगवद्भक्तो यः कश्चिद्देवांशादिः स्वयोग्याधिकपुण्यापगमाय दैवाद्दुराचारोऽपि सन्[५], साधुरेव[६], मन्तव्यः = सभक्तः पवित्र एवेति किमाश्चर्यम् । तस्य जन्म-कुल-जात्यादि सर्वं पवित्र-मेवेति वेदितव्यमित्यर्थः[७] । सः भक्तः = हीति निश्चयेन[९], सम्यग्व्यवसितः = वेदशास्त्रादिसर्व-मधीतवान् तपांसि च तप्तवान् अष्टाङ्गयोगाभ्यासवान् किं बहुना कर्मसागरादुत्तीर्ण इत्यर्थः । तस्य मद्भक्त्याश्रयत्वात् अत्र धर्मशब्देन भक्तिरित्युच्यते । यद्वा, सम्यक् व्यवसायत्वेऽपि सुदुराचारः कुतः साधुर्मन्तव्य इत्यत आह शोभनमध्यवसायं कृतवान्[१०] इत्यर्थः ॥ ३० ॥

भाष्यम्

**न भवत्येव प्रायशस्तद्भक्तः सुदुराचारः । तथाऽपि बहुपुण्येन यदि कथञ्चिद् भवति तर्हि साधुरेव स मन्तव्यः ॥ ३० ॥**

***प०टी०***— ननु यदि भगवद्भक्ता एव दुराचाराः, तर्हि तेषां का गतिः ? इत्याशङ्क्योत्तरम् 'अपि चेत्' इति श्लोकद्वयं व्याचष्टे **नेति** ॥ ३० ॥

***प्र०दी०***— 'अपि चेत्' इत्यादिना भक्तेः प्रशंसा क्रियते । तत्र विष्णुभक्तेः सुदाराचारेणैकत्र समावेशप्रतीतौ यथावद्व्याचष्टे **न भवत्येवेति** । **बहुपुण्येन** स्वयोग्यादधिकेनार्जितेन ॥ ३० ॥

**गीता**

## क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
## कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥

***वि०वि०*— अत एव क्षिप्रं भवति। धर्मचित्तः शश्वच्छान्तिं मोक्षं गच्छति। देवदेवांशविषयमेतत्। 'नाविरतो दुश्चरितान्नाभक्तो नासमाहितः। सम्यग्भक्तो भवेत्कश्चिद्वासुदेवे मलाशयः॥ देवर्षयस्तदंशाश्च भवन्ति क्व च ज्ञानतः।' इति वचनात् देवादिभ्योऽन्यः। भक्तिलिङ्गवान्। स दुराचारश्चेत् दाम्भिक एव। अल्पभक्तिमतः दुराचारस्य सत्सङ्गात् कथञ्चिन्महत्यपि भक्तिर्युज्यत एव हि। **कौन्तेय ! मे भक्तः** दुराचारोऽपि न प्रणश्यतीति प्रतिजानीहि डिण्डिमघोषपूर्वकं बाहुमुध्दृत्य प्रतिज्ञां कुरु ॥ ३१ ॥

***वा०ल०*— दुराचारिणः कथं साधुत्वम् ? इत्यत आह **क्षिप्रं भवति इति** ॥ ३१ ॥

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे नवमोऽध्यायः ॥*

***सा०सं०*— सम्यग्व्यवसायवत्त्वेऽपि सुदुराचारः कुतः साधुर्मन्तव्यः इत्यत आह **क्षिप्रमिति**। **सम्यक्** व्यवसायवत्त्वात्। **क्षिप्रं** धर्मचित्तो **भवति**। **शश्वत् शान्तिं** शाश्वतमोक्षं च सम्यगधिगच्छति। हे **कौन्तेय ! मे भक्तः** दुराचारोऽपि **न प्रणश्यति**। नरकाद्यनर्थं न प्राप्नोति। एतच्च देवदेवांशऋष्यादिविषयं ज्ञेयम् ॥ ३१ ॥

***अ०प्र०*— ननु कथं समीचीनाध्यवसायमात्रेण साधुः मन्तव्यः। तत्राह **क्षिप्रमिति**।

अथान्वयः— हे कौन्तेय ! सः[1], क्षिप्रं[2], धर्मात्मा[3], भवति[4], ततः शश्वत्[5], शान्तिं[6], निगच्छति[7], हे कौन्तेय ! प्रतिजानीहि किमिति[8], मे भक्तः[10] न प्रणश्यति[11] अपि तु कृतार्थ एव भवतीत्यन्वयः ॥

हे कौन्तेय ! सः = भक्तः सम्यक् व्यवसायत्वात् स भक्तः[1], क्षिप्रं = शीघ्रं[2], धर्मात्मा = भवति धर्मचित्तो भवति धर्मे आत्मान्तःकरणं मनोबुद्ध्यादिकरणजातं यस्य तथा भक्तेर्भगवत्परत्वात् भगवति परमात्मनि निवेशिता मन आदीन्द्रियवृत्तय इत्यर्थः। धर्मशब्दस्य भक्तिरित्यत्र प्रमाणं भागवते सप्तमस्कन्धे— 'एतावानेव लोकेऽस्मिन् पुंसो धर्मः परः स्मृतः। एकान्तभक्तिर्गोविन्दे यत्सर्वत्र तदीक्षणम् ॥' इति ॥ तथा एकादशस्कन्धे— सत्त्वाद्धर्मो भवेद्वृद्धात्पुंसो मद्भक्तिलक्षणः।

किञ्च तथा 'धर्मो मद्भक्तिकृत् प्रोक्तो ज्ञानं चैकात्मदर्शनम् । गुणेष्वसङ्गो वैराग्यं ऐश्वर्यं चाणिमादयः ॥' इत्यादि प्रमाणैः श्रीविष्णौ भक्तिमान् भवति[४], ततः = शश्वत् नित्यं[५], शान्तिं मोक्षं[६], निगच्छति = सम्यक् अधिगच्छति नितरां प्राप्नोति[७], यद्वा, शाश्वतीं उपशान्तिं परमेश्वरनिष्ठां अतितरां गच्छति[८], हे कौन्तेय ! प्रतिजानीहि = मत्प्राप्तिं प्रति भक्तिरेव कारणमिति प्रतिजानीहि। अथवा, हे अर्जुन ! प्रतिज्ञां निश्चयः मत्प्राप्तौ भक्तिरेव कारणमिति जानीहि । यद्वा, मुख्यार्थः— हे कौन्तेय ! प्रतिजानीहि पढहकोहलादिमहाघोषपूर्वकं विवदमानानां सभां गत्वा बाहुमुत्क्षिप्य निःशङ्कं प्रतिज्ञां कुरु किमिति[९], मे = परमेश्वरस्य[९], भक्तः = दुराचारोऽपि[१०] न प्रणश्यति = प्रकर्षेण न नश्यति नाशं न गच्छतीति शब्दार्थः । यद्वा, नरकाद्यनर्थं न प्राप्नोति[११] अपि तु कृतार्थ एव भवति इति प्रतिजानीहि = प्रतिज्ञां कुरु ततश्च ते त्वत्प्रौढीविजृम्भविध्वंसितकुतर्काः निःसंशयं त्वामेव गुरुत्वेनाश्रयेरन् । पूर्वं अनेकधा भक्त्या मत्प्राप्तिरुक्ता इदानीं भक्तो न प्रणश्यतीत्युक्तं चेत् को वा विशेषः ? अभक्तः प्रणश्यतीति ध्वन्यर्थः एतच्च देवदेवांशऋष्यादिविषयं ज्ञेयम् ॥ ३१ ॥

भाष्यम्

**कुतः ? क्षिप्रं भवति धर्मात्मा । देवदेवांशादिष्वेव चैतद् भवति । उक्तं च शाण्डिल्यशाखायाम्– "नाविरतो दुश्चरितान्नाभक्तो नासमाहितः । सम्यग् भक्तो भवेत् कश्चिद् वासुदेवेऽमलाशयः । देवर्षयस्तदंशाश्च भवन्ति क्व च ज्ञानतः ॥" इति ।**

*प०टी०*— बहुपुण्यं स्वयोग्यादधिकम् । तर्हि सर्वथा सदाचारापेक्षा नास्तीत्यागतमित्यत आह **देवेति** । दुश्चरितादविरतादिः पुरुषो न सम्यग्भक्तः । देवाद्या बहुज्ञत्वाद्दुश्चरितादविरता अपि भक्ता भवन्तीत्यर्थः ।

*प्र०दी०*— 'सम्यग् व्यवसितो हि सः' इति हेतोरुक्तत्वात् 'क्षिप्रं' इत्यादि व्यर्थमित्यत आह— **कुत इति** । सम्यग् व्यवसायवत्त्वेऽपि सुदुराचारः **कुतः** साधुर्मन्तव्यः ? इति शङ्कार्थः । सम्यग्व्यवसायवत्त्वात् **क्षिप्रं भवति** धर्मचित्तः । यदेतद्भक्तेः सुदुराचारेण सहैकत्र क्वचिदवस्थान- मङ्गीकृतं तदपि न मनुष्यविषयमित्याह **देवेति** । देवाः चन्द्रादयः, तदंशाः सुग्रीवादयः । आदिपदेन विश्वामित्रादीनां ऋषीणां ग्रहणम् । एतच्च **देवदेवांशादिष्वेव** विषयेषु **भवति** इति योजना । कुतः ? इत्यत आह **उक्तं चेति** ।

**दुश्चरितात् अविरतो** यः **कश्चित्** सः **अमलाशयः** भूत्वा **वासुदेवे सम्यग्** भक्तो **न भवेत्** । तथा **अभक्तः** श्रवणकीर्तनादिभक्तिलिङ्गरहितः । एवम् **असमाहितः** विषयविक्षिप्तमनाश्च । देवादयश्च क्वचिदेवंभूता अपि सम्यग् भक्ता भवन्ति । कुतः ? ज्ञानतः सम्यग्व्यवसायवत्त्वात् ।

*भा०दी०*— **चन्द्रादय इति** । चन्द्रस्य गुरुदारपरिग्रहो दुराचारः, सुग्रीवस्य वालिदारपरिग्रहः, प्रथमादिपदेन दिक्पालकादीनां भगवता युद्धादिः दुराचारः, द्वितीयादिपदेन अश्वत्थामादिः ग्राह्यः । **विश्वामित्रादीनामिति** । मेनकादिपरिग्रहादिस्तत्र ज्ञेयः । **तथाविध इति** । भक्तलिङ्गवानित्यर्थः ।

*भा०र०*— **तदंशाः** देवांशाः **एतच्च** 'अपि चेत्' इति वाक्यम् । दुश्चरितात् = दुराचारात् । **अविरतः** अनिवृत्तः **अमलाशयः** निर्मलान्तःकरणः । 'भेदे साध्यसाधनभावायोगादाह **श्रवण-कीर्तनादीति** । 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्म-निवेदनम्' इति श्लोकोक्तस्मरणादिकम् आदिपदार्थः । विषयैर्विक्षिप्तं = व्याकुलं मनो यस्य स तथा । चशब्दस्तुशब्दार्थ इति भावेनोक्तम् **देवादयस्त्विति** । **एवम्भूता अपि** दुश्चरितादविरता अपि । 'सम्यग्भक्तः' इत्येकवचनान्तमपि बहुवचनान्ततया विपरिणम्य अनुवर्त्य इति भावेनोक्तम् **सम्य-ग्भक्ता इति** । 'इति श्रुत्यर्थः' इति शेषः ।

भाष्यम्

**अतः अन्यः कश्चिद् भवति चेत् डाम्भिकत्वेन सोऽनुमेयः । साधारण-पापानां सत्सङ्गात् महत्यपि कथञ्चिद् भक्तिः भवति। साधारणभक्तिर्वा इतरेषाम्।**

*प०टी०*— ननु दुराचारिण एव लोके भक्ता दृश्यन्तेऽतः कथं देवादिविषयमेतत् ? इत्यत आह **अत इति** । **भवति चेदिति** । महापाप इत्यर्थः । यदि साधारणपापाः, तर्ह्याह **साधारणेति** । न केवलं दाम्भिकोऽसौ, साधारणभक्तोऽपि भवतीत्याह **साधारणेति** ।

*प्र०दी०*— ननु देवादिभ्योऽन्योऽपि सुदुराचारः तद्भक्तो दृश्यते । शङ्खचक्राङ्कितबाहुमूल-त्वादिलिङ्गवत्त्वात्, तत्कथमेतत् ? इत्यत आह **अतोऽन्य इति** । **भवति चेत्** 'सुदुराचारोऽपि भक्तिलिङ्गवान्' इति शेषः ।

माभूत् सुदुराचारो भक्तः । मध्यमदुराचारस्तु तथाविधः कथम् ? इत्यत आह **साधारणेति** । 'महति' इति वक्ष्यमाणसाधारणभक्तिव्यवच्छेदार्थम् । सुदुराचाराणामपि भगवत्प्रेम्णोऽनुभवसिद्धत्वात् कथं डाम्भिकत्वानुमानम् ? इत्यत आह **साधारणेति** । अल्पेत्यर्थः । प्रेमानुभवाभावेऽनुमानमुक्तम् । महाभक्त्यभावविषयं वेति भावः ।

*भा०दी०*— **डाम्भिकत्वानुमानमिति** । विमतो डाम्भिकः भक्तिहीन इति यावत् । देवताद्यन्यत्वे सति भक्तलिङ्गत्वे सति सुदुराचारवत्त्वात् सम्मतवदित्यनुमानमित्यर्थः । **इति भाव इति** । 'येन बाधितविषयं स्यात्' इति शेषः ।

*भा०र०*— **दृश्यते** अनुमीयते । तदनुमानमाह **शङ्खचक्राङ्कितेति** । 'ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः । एवं ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥', 'ये शङ्खचक्राङ्कितबाहुमूलाः कण्ठावलम्बितसरसीरुहबीजमालाः । ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥' इति वचनेन शङ्खचक्राङ्कितबाहुमूलत्वादेः विष्णुभक्तिलिङ्गत्वावगमादिति भावः । 'अतोऽन्यः' इति भाष्यस्य 'देवतदंशादितोऽन्यः' इत्यर्थः । सुदुराचारः पुमान् भक्तोऽपि मा भूदित्यन्वयः । **सुदुराचारः** स्वोच्चदारपरिग्रहभगवद्भागवत-सच्छास्त्रनिन्दादिलक्षणः **मध्यमदुराचारः** अगम्यगमनादिरूपः **तथाविधः** भक्तिलिङ्गवान् । **साधारणभक्तीति** । महाभक्त्यभावेत्यर्थः । **कथमिति** । विष्णुभक्तलिङ्गवानपि विप्रतिपन्नो डाम्भिकः, = न भगवद्भक्तः देवाद्यन्यत्वे सति सुदुराचारात् असुरवदिति कथमनुमानम् ? अनुभवबाधितत्वादित्यर्थः । अनन्तरोक्तविरोध इत्यतः साधारणशब्दार्थमाह **अल्पेत्यर्थ इति** । उक्तं बाधितविषयत्वमुद्धरति **प्रेमेत्यादि** । 'विप्रतिपन्नो डाम्भिकः' इत्यत्र भगवति स्नेहाभाव एवानुमितः। अत्र तु महाभक्त्यभावोऽनुमीयत इति भगवत्प्रेम्णोऽल्पस्यानुभवेऽपि न बाधितविषयमनुमानमिति भावः ।

भाष्यम्

**"स शठमतिरुपयाति योऽर्थतृष्णां तमधमचेष्टमवैहि नास्य भक्तिः" इति हि श्रीविष्णुपुराणे । "सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः ॥" इति च ॥**

*प०टी०*— अत्रैव प्रमाणान्याह **स इति** ।

*प्र०दी०*— सुदुराचारोऽपि भक्तिलिङ्गान्महाभक्त एवास्तु । किं डाम्भिकत्वादिकल्पनया ? इत्यत आह **स इति** । **शठमतिः** डम्भबुद्धिः । महाभक्तेः दुराचारोपशमहेतुत्वोक्तेश्च न तयोरेकत्र समावेश इत्याह **सेति** । हरिभक्तिः ।

*भा०र०*— हेतोरप्रयोजकतां शङ्कते **सुदुराचारोऽपीति** । 'डाम्भिकत्वादि' इत्यत्र आदिपदेन महाभक्त्यभावग्रहः । प्रकृतोपयोगसिद्धये उक्तं **डम्भबुद्धिरिति** । अर्थतृष्णामुपयाति = विषय-

तृष्णावान्, अविरक्त इति भाष्यार्थः । 'न वा एकेनाक्षरेण' इति शास्त्रात् पुष्पिताग्रावृत्तेऽपि प्रथमपादे एकाक्षराधिक्यं पौराणिकं न दोषाय । **तयोः** महाभक्तिदुराचारयोः । **अन्यत्र** हरेः विषयेष्विति भाष्यार्थः ।

भाष्यम्

**"वेदास्त्वधीता मम लोकनाथ तप्तं तपो नानृतमुक्तपूर्वम् । पूजां गुरूणां सततं करोमि परस्य गुह्यं न च भिन्नपूर्वम् । गुप्तानि चत्वारि यथाऽऽगमं मे शत्रौ च मित्रे च समोऽस्मि नित्यम् । तं चापि देवं शरणं प्रपन्नमेकान्तभावेन भजाम्यजस्रम् । एतैरुपायैः परिशुद्धसत्त्वः कस्मान्न पश्येयमनन्तमेनम् ॥" इति मोक्षधर्मे ।**

*प०टी०*— **चत्वारि** उपस्थमुदरं पाणिर्वाक् ।

*प्र०दी०*— इतश्चैवमित्याह **वेदा इति** । **मम** मया । **परस्य गुह्यं न च भिन्नपूर्वं** पिशुनत्वं नाचरितम् । उपस्थम्, उदरम्, पाणिः, वाग् इति **चत्वारि** । **मे** मया । **एकान्तभावेन** नियत-मनसा । **सत्त्वम्** अन्तःकरणम् । कारणसामग्र्यां सत्यां कार्यानुदयो ह्याश्चर्यहेतुः ।

*भा०दी०*— **इतश्चैवमिति** । सदाचारस्य भक्तिहेतुत्वज्ञानसाधनत्वोक्तेश्च न भक्तिदुराचारयो-रेकत्र समावेश इत्यर्थः ।

*भा०र०*— **इतश्चैवमिति** । सदाचारस्य भक्तिहेतुज्ञानसाधनत्वोक्तेश्च न भक्तिदुराचारयोरेकत्र समावेश इत्यर्थः । 'परस्य' इत्यादेस्तात्पर्यमाह **पिशुनत्वं नाचरितमिति** । राजादिषु परमर्म-सूचकत्वमित्यर्थः । 'भिन्नपूर्वम्' इत्यत्र 'भूतपूर्वे चरट्' इत्यत्रेव समासः । 'उपस्थं उदरं बाहुः वाक् चतुर्थी भवेद्द्विजः' इति वचनादाह **उपस्थमुदरं पाणिर्वागितीति** । 'न लोक' इति क्तप्रत्यययोगे षष्ठीनिषेधादाह **मे मयेति** । छन्दस्त्वात् षष्ठीति भावः । कस्मान्न पश्येयम् ? इत्युक्तपरिवेदनं उपपादयति **कारणसामग्र्यामिति** । कारणानां सामस्त्य इत्यर्थः ।

भाष्यम्

**आचारस्य साधनत्वोक्तेश्च ज्ञानाभावे सम्यग्भक्त्यभावात् । तथाहि गौतमखिलेषु— "विना ज्ञानं कुतो भक्तिः कुतो भक्तिः विना च तत्" इति ।**

"भक्तिः परे स्वेऽनुभवो विरक्तिरन्यत्र चैतत् त्रिकमेककालम्" इति च भागवते ॥ ३१ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते*
*श्रीमद्भगवद्गीताभाष्ये नवमोऽध्यायः ॥*

***प०टी०***— अत्राचारस्य ज्ञानसाधनत्वं ज्ञायते । न भक्तिसाधनत्वमित्यत आह **ज्ञानेति** ॥ ॥ ३१ ॥

***प्र०दी०***— नन्वाचारस्य ज्ञानसाधनत्वोक्त्या दुराचाराणां ज्ञानाभावः सिद्ध्यतु । महाभक्त्यभावस्तु कुतः ? इत्यत आह **ज्ञानेति** । कुत एतत् ? इत्यत आह **तथाहीति** । भक्तिज्ञानयोरविनाभूतत्वाच्च तदभावे तदभावसिद्धिरित्याह **भक्तिरिति** ॥ ३१ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां*
*जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां नवमोऽध्यायः समाप्तः ॥ ९ ॥*

***भा०दी०***— **भक्तिज्ञानयोरिति** । भक्तिपदेनात्र प्रेमो ग्राह्यः ॥ ३१ ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां*
*राघवेन्द्रयतिकृतायां भावदीपे नवमोऽध्यायः ॥*

***भा०र०***— **एतत्** 'ज्ञानाभावे सम्यग्भक्त्यभावः' इत्येतत् । **तदभावे** ज्ञानाभावे **तदभावः** भक्त्यभावः । अत्र भक्तिपदेन प्रेमा ग्राह्यः ॥ ३१ ॥

*समोऽहमित्यादिगीताक्षरार्थस्तु—*

ननु 'भक्त्युपहृतमश्नामि' इति भक्तप्रियत्वं तवोक्तम् । यदि त्वं भक्तप्रियः तदा द्वेष्यप्रियश्च स्याः । ततश्च भक्तेषु द्वेषिषु च यथासङ्ख्यं स्नेहद्वेषवत्त्वात् अल्पभक्तस्यापि कस्यचिद्बहुफलं सुखरूपं ददासि ? अल्पद्वेषिणोऽपि कस्यचिद्बहुफलं दुःखरूपं ददासि ? इत्यापद्यते । राजादिषु तथा दर्शनात् । तथा च वैषम्यनैर्घृण्ये तव स्याताम् ? इत्यत उच्यते **समोऽहमिति** ॥ **अहं सर्वेषु भूतेषु समः** न वैषम्यादिमान् । यतो मे तदीयं द्वेषमपेक्ष्याधिकं **द्वेष्यो न** अस्ति । तदीयां भक्तिमपेक्ष्यापि अधिकं **प्रियश्च न** अस्ति । यदि ते प्रियो नास्ति तर्हि न भक्तिः प्रयोजिका फलस्य ? इत्याशङ्क्योच्यते **ये भजन्तीति** । **ये मां भक्त्या भजन्ति** सेवन्ते **मयि ते,** तेषु

**चाप्यहम्** । मम ते वशाः, तेषामहं वश इत्यर्थः । यद्यपि भजतां अभजतां च मद्वशत्वं स्वभावसिद्धम् । तथापि उद्धवादिवत् शिशुपालादिवच्च उभयेषां बुद्धिपूर्वकत्व-अबुद्धिपूर्वकत्वाभ्यामस्ति विशेषः । तथा च बुद्धिपूर्वकं भगवद्वशत्वं ज्ञात्वा भजतां भक्तिवशीकृतभगवतां महाफलमस्त्येवेति तात्पर्यम् ॥ २९ ॥

भक्तेः प्रशंसा क्रियते **अपि चेदित्यादिना** । **सुदुराचारः** अतीव कुत्सिताचारोऽपि अनन्यभाक् स्वातन्त्र्येण अन्यदेवताभजनमकुर्वन् **मां भजते चेत्** तर्हि **साधुरेव** दुराचारकृतदोषहीन एव **मन्तव्यः** । **हि** यस्मात् **सम्यग्व्यवसितः** समीचीनव्यवसायवान् ॥ ३० ॥

सम्यग्व्यवसायित्वेऽपि दुराचारः कुतः साधुर्मन्तव्यः ? इत्यत उच्यते **क्षिप्रमिति** । सम्यग्व्यवसायित्वात् **क्षिप्रं भवति धर्मचित्तः** । ततश्च **शश्वच्छान्तिं** दुराचारोपशमं **निगच्छति** नितरां प्राप्नोति । शान्तिं गच्छंश्च भगवन्निष्ठां गच्छति। तां गच्छंश्च मोक्षं निगच्छति । हे **कौन्तेय! मे भक्तः** सुदुराचारोऽपि **न प्रणश्यति** तत्कृतमनर्थं न प्राप्नोति । **इमं चार्थं प्रतिजानीहि** । यदेतद् भक्तेः सुदुराचारेण सह क्वचिदवस्थानं अङ्गीकृतम्, तदपि न मनुष्यविषयम्, किन्तु देव-देवांशा-ऋष्यादिविषयमिति ज्ञातव्यम् ॥ ३१ ॥

**गीतातात्पर्यनिर्णयः**

**"नास्य भक्तोऽपि यो द्वेष्यो न चाभक्तोऽपि यः प्रियः ।**
**किन्तु भक्त्यनुसारेण फलदोऽतः समो हरिः ॥" इति पाद्मे ।**

**प्रीत्या मयि ते ॥ २९-३१ ॥**

***प्रका०***— समोऽहमित्यस्यार्थमाह **नास्येति** । "ये भजन्ति तु मां भक्त्या मयि त" इत्यस्य अर्थमाह **प्रीत्या मयि त इति** ॥

***न्या०दी०***— **भक्त्युपहृतमश्नामीति भक्तप्रियत्वमुक्तम् । तथासत्यभक्तेष्वप्रीतिश्च स्यात् । ततश्च भगवतो वैषम्यमापन्नमित्यत उच्यते 'समोऽहं' इति । तदस्फुटार्थत्वात् स्मृत्यैव व्याचष्टे नास्येति ॥ भक्तोऽपि यो द्वेष्योऽसौ नास्ति । अभक्तोऽपि यः प्रियोऽसौ नास्तीत्यर्थः । अनेन "न मे द्वेष्योऽस्ति न प्रियः" इत्यत्रापि भक्तोऽभक्तश्चेति संयोज्यमित्युक्तं भवति । भक्त्यनुसारेण फलद इति भक्तेष्वेव प्रीतिं करोमि अभक्तेष्वेव अप्रीतिमित्यर्थः । यदि भक्तेषु द्वेषम् अभक्तेषु प्रीतिं कुर्यात् तर्ह्येव विषमः स्यात् । न चैवम् ।**

अतः सम एवेति भावः । ये भजन्ति तु मां भक्त्या तेषु प्रीतिं करोमीति वक्तव्यम् । किमेतदभक्तसाधारणं 'मयि त' इत्याद्युच्यत इत्यत आह **प्रीत्येति** । वर्तन्त इत्यादि शेषः । तदेवोच्यत इति भावः ॥ २९-३१ ॥

*भा०दी०*— **इत्यादि शेष इति** । तेष्वहं प्रीत्या वर्त इत्यादिपदार्थः ॥ **तदेवेति** । भक्तेष्वेव प्रीतिं करोमीत्येतदेवार्थः ॥ २९-३१ ॥

**गीता**

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रा-**
**स्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥**

*वि०वि०*— ये पापादियोनयोऽस्वाभाविकाः स्त्रियो वैश्यास्तथा शूद्राः ब्राह्मणा राजर्षयश्च ममातिभक्ताः स्युः । तेऽपि यान्ति परां गतिम् ॥ ३२ ॥

*सा०सं०*— कैमुत्येन च भक्तेर्महिमानमाह **मां हीत्यादिना** । हे **पार्थ** ! **पापयोनयः** स्वयमुत्तमवर्णा अपि । पापहेतुका योनिर्जन्म येषां ते **पापयोनयः** । ते क इत्यत उक्तम् **स्त्रिय** इत्यादिना । स्वतः पुमांसोऽपि पापात् सुद्युम्नस्य इलात्वमिव स्त्रीत्वं प्राप्ताः, ये च स्वतो ब्राह्मणादिरपि पापाद्वैश्यादिहीनवर्णतां प्राप्ताः शूद्रत्वं वा प्राप्ताः । **मामाश्रित्य स्युः** वर्तेरन् । मयि भक्तिमन्तो भवेयुः । **तेऽपि परां गतिं यान्ति** ॥ ३२ ॥

*अ०प्र०*— कैमुत्यन्यायेन भक्तेर्महिमानं आचारभ्रष्टं मद्भक्तिः पवित्रीकरोतीति किमत्र चित्रम् ? यतो मद्भक्तिः दुष्कुलानपि अनधिकारिणोऽपि संसारान्मोचयतीत्याह **मामिति** ।

हे पार्थ ![१], हि[२], येऽपि[३], पापयोनयः[४], स्युः[५], तथा येऽपि[६], वैश्याः[७], स्त्रियः[८], शूद्रादयश्च स्युः[९], मां[१०] व्यपाश्रित्य[११] अतस्तेऽपि[१२], परां[१३], गतिं[१४], यान्तीत्यन्वयः ॥

हे पार्थ ! हि = यस्मात् कुलजातिवर्णाश्रमादयो संसृतेरेव कारणानि भवन्ति तस्मात् कुलजात्यादि सर्वं प्रारब्धवशात् कथञ्चित् भवतु भक्त्यैव श्रीभगवत्प्राप्तिरिति[२], येऽपि[३], पापयोनयः = पापहेतुका योनिः जन्म येषां ते तथा निकृष्टजन्मनोन्त्यजादयोऽपि[४], स्युः = भवेयुः[५], तथा येऽपि[६], वैश्याः = केवलं कृष्यादिनिरताः[७], तथा स्त्रियः[८], तथा शूद्रादयश्च अध्ययनादिरहिताः[९],

सर्वधर्मेषु = पापयोनिषु सञ्जाता अपि मां = परमात्मानं[१०] व्यपाश्रित्य = भक्त्या मन आदि सर्वेन्द्रियभावैः संसेव्य[११] यस्मात् मां व्यपाश्रिताः तस्मात् तेऽपि[१२], भगवत्प्रसादेन परां उत्कृष्टां[१३], गतिं = मोक्षं[१४], यान्तीति = निश्चितं[१५], प्रमाणं भागवते—

नालं द्विजत्वं देवत्वं ऋषित्वं वा सुरात्मजाः ।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥

न दानं न तपो नेज्या न शौचं न व्रतानि च ।
प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥

विप्रा द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनो वचने हितार्थ-
प्राणं पुनाति सकलं न तु भूरिमानः ॥

तथा एकादशस्कन्धे—

भक्त्याऽहं ये कथाग्राह्यः श्रद्धयात्माप्रियः सताम् ।
भक्तिः पुनाति मन्निष्ठां श्वपाकानपि सम्भवत् ॥ इति ॥

धर्मः सत्यं दयोपेतो विद्यावान् तपसा वृतः ।
मद्भक्तये तमात्मानं न सम्यक् प्रापुनाति हि ॥ ३२ ॥

**गीता**

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३ ॥**

*वि०वि०*— किं पुनः पुण्याः स्वाभाविका एते स्त्र्यादयो ब्राह्मणादयश्च । अत्र पापयोनयः स्त्रिय इतिवत् पुमांस इत्यनुक्तिः । पापादिकारितपुंसामभावात् । तदुक्तम्—

'पापादिकारिताश्चैव पुंसां स्वाभाविका अपि ।
विप्रत्वाद्यास्तत्र पुण्याः स्वाभाव्या एव मुक्तिगाः ॥

यान्ति स्त्रीत्वं पुमांसोऽपि पापतः कामतोऽपि वा ।
न स्त्रियो यान्ति पुंस्त्वं तु स्वभावादेव याः स्त्रियः ॥

पुंसा सहैव पुंदेहे स्थितिः स्याद्वरदानतः ।
तज्जन्मनि वराः पापजाताभ्यो निजसत्स्त्रियः ॥

सर्वेषामपि जीवानामन्त्यदेहो यथा निजः ।
मुक्तौ च निजभावः स्यात्कर्मभोगान्ततोऽपि च ॥'

इति । अतो भक्तेः साधनोत्तमत्वादनित्यं नश्वरम् । असुखं सुखरहितम् । इमं भक्त्यादिसाधनलोकं देहं प्राप्याविलम्बेन मां भजस्व ॥ ३३ ॥

***सा०सं०***— **पुण्याः** पुण्यहेतुकाः । **ब्राह्मणाः** शूद्रादिहीनवर्णा अपि स्वयं यदि पुण्यवशेन ब्राह्मणत्वं प्राप्ताः । तथा राजत्वं ऋषित्वं वा प्राप्ताः परां गतिं यान्ति । **किं पुनः** स्वाभाविकाः । **एते** स्त्रीवैश्यादयः । परां गतिं यान्तीति वाच्यमित्यर्थः । अत्र **नैमित्तिकस्त्रीवैश्यादिग्रहणमध्ये** नैमित्तिकपुंसां स्त्रियः पुमांसो वैश्याः शूद्राः इत्यनुक्तिस्तु स्वभावतः स्त्रीणां केनापि हेतुना पुंस्त्वाभावेन नैमित्तिकपुंसामभावादेव,

'यान्ति स्त्रीत्वं पुमांसोऽपि पापतः कामतोऽपि वा ।
न स्त्रियो यान्ति पुंस्त्वं तु स्वभावादेव याः स्त्रियः ॥'

इत्युक्तेरिति । अतो भक्तेः साधनोत्तमत्वादेव । **अनित्यम् असुखं** सुखहीनम् । **इमं** भक्त्यादि-साधनभूतम् । **लोकं** देहं भूलोकं वा । **प्राप्य** । अविलम्बेन **मां भजस्व** ॥ ३३ ॥

***अ०प्र०***— यद्येवं तद्दासकुलाः सदाचाराश्च मद्भक्ताः । परां गतिं यातीति किं वक्तव्यं इत्याह **किमिति** ।

हे पार्थ ! पुण्याः[२], भक्ताश्च[२], ब्राह्मणाः[३], तथा राजर्षयश्च[४], किं पुनः इत्युक्ते परां गतिं यातीति किं पुनराश्चर्यं[५], अतस्त्वं अनित्यं[६], असुखं[७], इमं[८], लोकं[९], प्राप्य[१०] मां[१], भजस्व इत्यन्वयः ॥

हे पार्थ ! पुण्याः = पुण्यस्वाभाविकाः[२], सुकृतिनः = भक्ताश्च[२], ब्राह्मणाः = ब्रह्म अणति जानातीति तथा ब्रह्मवेत्तारः[३], तथा पूर्वोक्तभक्ति-सुकृतिनः[४], राजर्षयः = राजानश्च ते ऋषयश्च तथा ऋषयः क्षत्रियाश्च एवंभूताः सन्तो[५], किं पुनः = मद्व्यपाश्रयात् पापयोनयोऽपि परां गतिं

प्राप्ताः । तत्र ब्राह्मणादयः पूर्वोक्ता पुण्याः परां गतिं प्राप्नुवन्तीति प्रतिपादनं किमाश्चर्यम् । यद्वा, एवं भूताः परां गतिं यान्तीति किं पुनर्वक्तव्यम्[६], अतस्त्वं भक्तेः साधनोत्तमत्वादेव त्वं अनित्यं अध्रुवं अशाश्वतं[६], असुखं = सुखरहितं[७], इमं = भक्त्यादिसाधनभूतं[८], लोकं = देहं भूलोकं वा[९], प्राप्य[१०] अनित्यत्वात् = विलम्बमकुर्वन् सुखत्वाच्च सुखार्थोद्यमं हित्वा[१०] मां लीलाविग्रहं[११] भजस्व = भक्त्या आराधय तेन अचञ्चलभक्तिज्ञानवैराग्यादिमान् भूत्वा भगवद्भक्तिविरोधिनिग्रहरूपसाधनेन परां गतिं प्राप्स्यसीत्यर्थः ॥ ३३ ॥

**गीता**

## मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
## मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः॥ ३४ ॥

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥*

***वि०वि०***— भजनप्रकारं दर्शयंस्तस्य फलमाह— **मन्मना इति** । मन्मनस्त्वादिप्रकारैः मत्परायणः सन् मय्यात्मानं मनो युङ्क्त्वा मामेवैष्यसि ॥ ३४ ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां नवमोऽध्यायः ॥*

***सा०सं०***— भजनप्रकारं दर्शयन् तस्य फलमाह **मन्मना इति** । **एवं** मन्मनस्त्वादिप्रकारेण **मत्परायणः** सन् । **आत्मानं** मनः । **मयि** युङ्क्त्वा **मामेवैष्यसि** प्राप्स्यसीति ॥ ३४ ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे नवमोऽध्यायः ॥*

***अ०प्र०***— भजनप्रकारं दर्शयन् तस्य फलमाह **मन्मना इति** । आत्मानं मत्परायण इति चतुस्त्रिंशत्श्लोकस्य टीका लिख्यते **मन्मना इति** ।

अन्वयः— हे कौन्तेय ![१], मन्मना भव[२], मद्भक्तो भव[३], मद्याजी भव[४], मां च[५], नमस्कुरु[६], एवं[७], मत्परायणः सन् = आत्मानं मयि[८], युक्तः[१०] मां[११] एव[१२], एष्यसीत्यन्वयः[१३] ॥

हे कौन्तेय ![1], मन्मना भव = मयि निवेशितं चित्तं यस्य स त्वं यद्वा, मय्येव मनो यस्य सः मन्मनाः त्वं भव[2], मद्भक्तो भव तया भक्त्या ममैव भक्तः मत्सेवको भव[3], मद्याजी भव = मत्पूजनशीलो भव = यद्वा, यजनं नाम भजनं तच्छीलो भव[4], मां च[5], नमस्कुरु = ब्रह्मादि पिपीलिकादि जीवे तथा जङ्गमादिषु च सर्वभूतान्तर्यामित्वेन स्थितं मां च[5], सर्वत्र एकमिति मत्वा नमस्कुरु[6], एवं = एभिः प्रकारैः एवमुक्तरीत्या[7], मत्परायणः सन् = अहमेव परं अयनं मार्गो यस्य तव सत्त्वं तथा सन्[8], आत्मानं = मनः मयि[9], युक्तः = युंत्क्वा समाधाय[10] मां परमानन्दरूपमेव[11] एष्यसि = प्राप्स्यसीत्यर्थः ।

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥*

*भा०र०— गीताक्षरार्थस्तु—*

भक्तेर्महिमा कैमुत्येनोच्यते **मां हीति** । हे **पार्थ ! मां व्यपाश्रित्य** संसेव्य **ये पापादियोनयः** अस्वाभाविकाः **स्त्रियो वैश्याः तथा** शूद्रा ब्राह्मणा राजर्षयश्च भक्ताः **स्युः** भवेयुः, **तेऽपि परां गतिं यान्ति** ॥ ३२ ॥

**किं पुनः पुण्याः** स्वाभाविका एते स्त्रीवैश्यादयः । अत्र 'पापयोनयः स्त्रियः' इतिवत् 'पुमांसः' इत्यनुक्तिः । पापादिकारितपुंसां अभावादिति *न्यायदीपिका* । यतो भक्तेरेवंविधो महामहिमा अतः **अनित्यं** नश्वरम् **असुखं** दुःखासम्भिन्नसुखरहितं **इमं** दैवोपनतं भक्त्यादिसाधनानुकूलं वा लोकं देहं प्राप्य **मां भजस्व** मयि भक्तिमापादय ॥ ३३ ॥

भजने प्रकारः, सप्रकारकभजनस्य फलं चोच्यते **मन्मना इति** । मयि मनो यस्यासौ **मन्मना भव मद्याजी** मद्यजनशीलः मन्मनस्तवादिप्रकारेण **मत्परायणः** मदेकशरण **आत्मानं** मनो मयि **युक्त्वा** समाधाय भजस्व । सति चैवं **मामेव एष्यसि** गमिष्यसि । अतो महापुरुषार्थसाधनं मद्भजनं अवश्यमनुष्ठेयमिति ॥

श्रीमद्गीताभाष्यटीकानवमाध्यायसेवया ।
परितुष्यन्ति विबुधा गुणग्रहणभूषणाः ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित-श्रीमद्भगवद्गीताभाष्यटीकाव्याख्यायां भावरत्नकोशसमाख्यायां श्रीसूरीन्द्रतीर्थश्रीपादशिष्यसुमतीन्द्रयतिविरचितायां नवमोऽध्यायः ॥*

**गीतातात्पर्यनिर्णयः**

''पापादिकारिताश्चैव पुंसां स्वाभाविका अपि ।
विप्रत्वाद्यास्तत्र पुण्याः स्वाभाव्या एव मुक्तिगाः ।।

*प्रका०*— ''मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् । किं पुनर्ब्राह्मणाः पुण्या'' इति विशेषणात् स्वाभाविकाश्च प्रतीयन्ते । तदेतद्विविच्य प्रमाणेन दर्शयति **पापेत्यादिना** ।

**न्या०दी०— ननु भगवदाश्रिताः सर्वेऽपि पुण्या एव । ''सत्त्वाधिकः पुल्कसोऽपि यस्तु भागवतः सदा'' इत्यादेः । अतः कथं ''मां हि पार्थ'' इति स्त्रीवैश्यशूद्राणां पापयोनय इति विशेषणम्, ब्राह्मणराजर्षीणां पुण्या इति विशेषणमुच्यत इत्यत आह पापादि इति ।।`स्वतो विप्राद्युत्तमवर्णानां क्षत्रियाद्यधमवर्णित्वं पापकारितम् । स्वतः शूद्राद्यधमवर्णानां वैश्याद्युत्तमवर्णित्वं पुण्यकारितमित्यर्थः । अत्रादिपदेन कामश्च भवति । स्वाभाविकविप्रत्वाद्याः पुण्या इत्युच्यन्त इत्यर्थः । तल्लक्षणमाह मुक्तिगा इति ।। मुक्ताववशिष्यमाणविप्रत्वाद्याः स्वाभाविका इत्यर्थः ।**

*भा०दी०*— **यस्तु भागवतः सदेत्यादेरिति** । अष्टादशे वक्ष्यमाणस्मृतेरित्यर्थः ।। **आदिपदेनेति** । पापादीत्यादिपदेनेत्यर्थः ।।

**गीतातात्पर्यनिर्णयः**

यान्ति स्त्रीत्वं पुमांसोऽपि पापतः कामतोऽपि वा ।
न स्त्रियो यान्ति पुंस्त्वं तु स्वभावादेव याः स्त्रियः ।।

*प्रका०*— ब्राह्मणस्य शूद्रत्ववत् पुरुषाणां स्त्रीत्वं कारणेन भवति । न तु स्वभावस्त्रीणां पुरुषत्वम् । परं तु ''पुंसा सहैव पुंदेहे स्थितिः स्याद्वरदानतः तज्जन्मनि'' । यथा अम्बायाः स्थूणाकर्णांशेन सह स्थूणाकर्णवरदानतः स्थूणाकर्णदेहे स्थितिः तस्मिन्नेव जन्मनि नाभूत् । सत्स्त्रिय इत्यासुर्यादिव्यावृत्त्यर्थमुक्तम् ।

**न्या०दी०— यथा स्वतो विप्रादीनां क्षत्रियादित्वं स्वतः क्षत्रियादीनां विप्रादित्वं भवति तथा स्वाभाविकपुंसां स्त्रीत्वं, स्वाभाविकस्त्रीणां पुंस्त्वं स्यात्किमित्याशङ्कायामाह**

**यान्तीति** ॥ पापतो यथा सुद्युम्नस्य इलात्वं, कामतो यथाऽग्निपुत्राणामप्सरस्त्वम् । इलायाः सुद्युम्नत्वदर्शनात् कथं "न स्त्रियो यान्ति पुंस्त्वं" इत्युच्यत इत्यत आह **स्वभावादिति** ॥

*भा०दी०*— **सुद्युम्नस्य इलात्वमिति** । व्यक्तमेतन्नवमस्कन्धे द्वितीये, "होतुस्तद्व्यभिचारेण कन्येला नाम साऽभवदि"त्यादिना । **अग्निपुत्राणामप्सरस्त्वमिति** । "पुत्रा ह्यग्नेः पूर्वमासंश्च तेऽथ स्त्रीत्वप्राप्त्या" इत्यादिना "राजकुलेषु जाता" इत्यन्तेन ग्रन्थेन व्यक्तमेतद्भारततात्पर्ये विंशेऽध्याये ।

"अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमागताः ।
भर्तारं वा जगद्योनिं वासुदेवमजं विभुम् ॥" इति महाकौर्मे ।

इति प्रथमस्कन्धतात्पर्ये दशमेऽध्याये च व्यक्तम् ॥

**गीतातात्पर्यनिर्णयः**

**पुंसा सहैव पुंदेहे स्थितिः स्याद् वरदानतः ।**
**तज्जन्मनि वराः पापजाताभ्यो निजसत्स्त्रियः ॥**

*न्या०दी०*— स्वभावादेव स्त्रिया अम्बायाः शिखण्डित्वं स्थूणाकर्णवरेण दृष्टमित्यत आह **पुंसेति** ॥ अम्बायाः स्थूणाकर्णवरेण तद्देहे तेन सह तस्मिन् जन्मनि स्थितिरेवासीन्न तु स्वातन्त्र्येण पुरुषदेहः । तावन्मात्रं त्वङ्गीक्रियत इति भावः । स्वभावात् पुंसां पापतः स्त्रीत्वे तासां स्वभावतः स्त्रीणां च मध्ये कासां श्रेष्ठत्वमित्यपेक्षायामाह **वरा इति** ॥ पापजाताभ्य इत्यनेन कामतो जातानां वरत्वं सूचितम् । स्वभावतः स्त्रीणां पापजाताभ्यः श्रेष्ठतायाम् इलादिभ्य आसुरीणां श्रेष्ठत्वं प्रसज्यते । तन्निरासार्थमुक्तं **सत्स्त्रिय इति** । अत्रावरत्वमौपाधिकमभिप्रेतम् ।

*भा०दी०*— **अम्बाया इति** । "भविष्यति पुमान् इति, साऽम्बा ततोऽजनि । नाम्ना शिखण्डिनी"त्यादिना "स शिखण्डी नामतोऽभूदि"त्यन्तेन व्यक्तमेतद्भारततात्पर्ये च एकादशेऽध्याये ॥ **तत्रेति** । इलादौ श्रेष्ठत्वमुत्तमकुलजत्वाद्युपाधिकृतमित्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**सर्वेषामपि जीवानामन्त्यदेहो यथा निजः ।**
**मुक्तौ च निजभावः स्यात् कर्मभोगान्ततोऽपि च ॥"**

**इति भविष्यत्पर्ववचनात् पापयोनयः पुण्या इति विशेषणम् ॥ ३२-३४ ॥**

***॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये नवमोऽध्यायः ॥***

***प्रका०—*** **अन्त्यदेहः** चरमदेह इत्यर्थः ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां नवमोऽध्यायः ॥*

***न्या०दी०—*** **स्वाभाविकावशेषस्य कालान्तरं च आह सर्वेषामिति ॥ चरमदेहः स्वभावानुसारीत्यर्थः । पूर्वानुवादेन कालान्तरं चाह मुक्तौ त्विति ॥ इति वचनानुसारेण अविरुद्धताया व्याख्यातुं शक्यत्वादेतद्विशेषणं युक्तमित्यर्थः । अनेन एतदेवं व्याख्यातं भवति । ये पापादियोनयोऽस्वाभाविकाः स्त्रियो वैश्यास्तथा शूद्रा ब्राह्मणा राजर्षयश्च तेऽपि यान्ति परां गतिम् । किं पुनः पुण्याः स्वाभाविका एते स्त्रीवैश्यादयः । अत्र पापयोनयः स्त्रिय इतिवत् पुमांस इत्यनुक्तिः पापादिकारितपुंसामभावादिति ॥ ३२-३३ ॥**

***इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां नवमोऽध्यायः समाप्तः ॥***

***भा०दी०—*** **कालान्तरं चेति** । न केवलं वरत्वमिति चार्थः । स्वाभाव्या एव मुक्तिगा इति प्रागुक्तत्वान्मुक्तौ चेति पुनरुक्तिरिति शङ्काव्युदासायाह **पूर्वानुवादेनेति** ॥ **अविरुद्धतयेति** । सत्त्वाधिक इति प्रागुक्तवचनाविरुद्धतयेत्यर्थः । दुर्गमत्वादर्थं व्यनक्ति **अनेनेति** । पापादिकारिण इति वचनेनेत्यर्थः ॥ ३२-३३ ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते नवमोऽध्यायः ॥*



॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ दशमोऽध्यायः

भाष्यम्

**उपासनार्थं विभूतीर्विशेषकारणत्वं च केषाञ्चित् अनेन अध्यायेन आह ।**

*प०टी०*— एतदध्यायार्थं दर्शयति **उपासनार्थमिति** । अन्यान्तर्गतं बहिर्गतं चेति द्विविधं विभूतिरूपम् । तत्र विष्ण्वादीनि बाह्यरूपाणि । अश्वत्थादीन्यन्तर्गतानि । तेषां स्वसन्निधानेनाश्वत्थादीनां स्वजातितो **विशेषकारणत्वं** चोच्यत इत्यर्थः ।

*प्र०दी०*— प्रकृतसङ्गतत्वेन अध्यायप्रतिपाद्यं दर्शयति **उपासनार्थमिति** । षष्ठे ध्यानमुक्तम् । तत् नवमान्ते 'मन्मना भव' इति स्मारितम् । तच्च ध्येयसापेक्षम् । विशिष्टाधिकारिणां च भगवद्विभूतय उपास्याः । अतस्ताश्च आह अनेन दशमाध्यायेन । तत्रादौ **केषाञ्चित्** बुद्ध्यादीनां महर्ष्यादीनां च विशेषकारणत्वमपि भगवत आहेत्यर्थः । विभूतिशब्दार्थः तात्पर्यनिर्णयेऽभिहितः । तदुक्तेर्भूयस्त्वात् प्रथममुपादानम् । अत एवैकवाक्यता । ननु विभूतयो 'रसोऽहं' इत्यादिनोक्ता एव । सत्यम् । अत एव 'विस्तरेणात्मनः' इति वक्ष्यते । विशेषकारणत्वं नाम सामर्थ्यातिशयोपेततया निर्माणम् ।

*भा०दी०*— **विशिष्टाधिकारिणामिति** । उत्तमाधिकारिणामित्यर्थः । **विभूतय इति** । विशिष्टवस्तुषु विशिष्टताप्रदर्शनाय विशिष्टत्वेन विविधत्वेन वा भक्तिसाधनयोर्विशिष्टत्वेन विविधत्वेन वा प्रादुर्भूतरूपविशेषा इत्यर्थः । **विशेषकारणत्वमपीति** । तस्याप्यधिकारिविशेषध्येयत्वात् अत्रोक्तिरिति भावः । **तात्पर्यनिर्णय इति** ।

'विशिष्टभवनं विभूतिः महत्त्वं विविधभवनं वा' इति गीतातात्पर्यनिर्णयेऽभिहित इत्यर्थः । **अत एवेति** । भूयस्त्वादेव । दशमेऽस्यैवार्थस्य प्रतिपादनात् 'अर्थैकत्वादेकं वाक्यम्' इति न्यायेन एकाध्यायत्वमित्यर्थः । **उक्ता एवेति** । 'सप्तमे' इति योज्यम् ।

*भा०र०*— 'उपासनार्थम्' इति भाष्यानुसारेणाह **प्रकृतेति** । पूर्वाध्यायप्रकृतार्थसङ्गतत्वेनेत्यर्थः । तमेवार्थं दर्शयति **षष्ठ इति** । साङ्गं ध्यानमेव षष्ठाध्याये उक्तमित्यर्थः । अव्यवहिताध्यायसङ्गत्यर्थमाह **नवमान्त इति** ।' **तच्च** ध्यानम् । ननु 'सर्वभूतस्थमात्मानम्' इति तत्रैव ध्येयस्याप्युक्तत्वात् अत्र तदुक्तौ पुनरक्तिः स्यात् ? इत्यत आह **विशिष्टाधिकारिणां चेति** । उक्तमधिकारिणामित्यर्थः । उक्तमेव ध्येयं साधारणानाम् । अत्र तु विशिष्टाधिकारिणां विभूतिरूपाख्यं तदुच्यत इति न पुनरुक्तिरिति भावः । बुद्ध्यादीनां 'बुद्धिर्ज्ञानमसंमोहः' इति वक्ष्यमाणानाम् । 'महर्ष्यादीनाम्' इत्यत्र आदिपदेन चतुर्णां मनूनां ग्रहणम् । 'द्विविधं वैभवं रूपं प्रत्यक्षं च तिरोहितम्' इति तात्पर्यनिर्णयम् अनुरुध्य, *भावप्रदीपिकायाम्*— " 'द्विविधानि विभूतिरूपाणि, अन्तर्गतानि बाह्यानि' इति । तत्र विष्ण्वादीनि बाह्यरूपाणि । अश्वत्थादीन्यन्तर्गतानि । तानि च स्वसन्निधानेन अश्वत्थादीनां स्वजातितो विशेषे कारणत्वं चोच्यते" इत्यर्थ इति व्याख्यातम् ।

नन्वणिमाद्यैश्वर्यस्यानुक्तत्वात् कथं 'विभूतीराहेति' इत्युच्यते ? इत्यत आह **विभूतिशब्दार्थ इति** । नात्राणिमाद्यैश्वर्याणि विभूतिशब्दार्थः, येनोक्तदोषः । किं नाम, विशिष्टभवनं विभूतिः । 'येषां तु विष्णुरूपाणां सन्निधेरन्यवस्तुषु । विशिष्टत्वं स्वजातेः स्यात् विभूत्याख्यानि तानि तु' इति विभूतितत्त्वे इति स्ववचनेनोक्तः, प्रमाणेन विवृतश्चोत्तरप्रस्थाने स एव ग्राह्य इत्यर्थः । **तदुक्तेः** विभूत्युक्तेः । तेन "बुद्ध्यादिविशेषकारणत्वस्यादौ गीतत्वात् तदनुसारेण 'विशेषकारणत्वम्, विभूतीश्चाह' इति भाषणीये कथं 'विभूतीः' इति भाषितम्" इति चोद्यं निरस्तम् । विभूत्युक्तेः भूयस्त्वेन प्राधान्यात् प्रथमग्रहणोपपत्तेरिति । **अत एव** भूयस्त्वेन प्राधान्यादेव **एकवाक्यता** दशमाध्यायस्य । प्रधानार्थैकत्वनिबन्धनत्वात् एकवाक्यता इति भावः ।

**उक्ता एवेति** । 'सोऽप्सु स्थित्वा रसयति रसनामा ततः स्मृतः । सूर्यचन्द्रादिषु स्थित्वा प्रभानामा प्रभासनात्' इत्यादिना बाह्यान्तर्गतभगवद्रूपाणां तात्पर्यनिर्णये वर्णनादिति भावः । तेन भाष्ये तदनुक्तिः न विरुध्यत इति बोध्यम् । **विस्तरेणेति** । 'विस्तरेणात्मनो योगं विभूतिं च जनार्दन । भूयः कथय' इति 'विस्तरेण' इति वक्ष्यति गीतायामित्यर्थः । कार्यमात्रे स्वतन्त्रतया विष्णोर्विशेषकारणत्वात् किं विशिष्याभिधीयते 'केषाञ्चित्' इति ? इत्यत आह **विशेषकारणत्वं**

**नामेति** । भगवतः कार्यमात्रे मुख्यकारणत्वेऽपि यत्र बुद्ध्यादिकार्ये सामर्थ्यातिशयोपेततया निर्माणं तदेव विशेषकारणत्वमिहाभिमतमिति भावः ।

**गीतातात्पर्यनिर्णयः**

*प्रका०*— अधुना विभूत्यध्यायार्थो निरूप्यते ।

*न्या०दी०*— **षष्ठे ध्यानमुक्तम् । तत्र ध्येयतया भगवद्विभूतिरूपाण्यत्रोच्यन्त इत्य-ध्यायार्थस्यातिरोहितत्वादनुक्तिः** ।

*भा०दी०*— भाष्योक्तमध्यायार्थमाह **षष्ठ इति** । 'मन्मना भव' इति नवमान्ते स्मारितं चेत्यपि ग्राह्यम् । तेन षष्ठानन्तर्यशङ्कानवकाशः । 'भोक्तारं यज्ञतपसाम्' इति पञ्चमान्तादौ तत्र तत्र ध्येयमुक्तम् । तथापि विशिष्टाधिकारिणां भगवद्विभूतय उपास्या इति भावेनोक्तम् **भगवदित्यादि** ॥ विभूतिशब्दार्थोऽग्रे व्यक्तः ॥

**गीता**

**श्रीभगवानुवाच—**

**भूय एव महाबाहो शृणु मे परमं वचः ।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥**

*वि०वि०*— षष्ठोक्तं ज्ञानं नवमान्ते 'मन्मना भव' इति स्मारितम्, ध्यानार्थं रसोऽहम् इत्यादिना 'क्रतुः' इत्यादिना चोक्त्वा भूयोऽत्र प्राधान्येन प्रपञ्च्योच्यते । तत्रादौ भगवतो बुद्ध्यादि-महर्ष्यादिविशेषकारणत्वं प्रतिज्ञापूर्वकं प्रतिपादयन्नाह **भूय एवेत्यादिना** । प्रीयमाणाय श्रुत्वा सन्तोषं प्राप्नुवते । हितकाम्यया हितेच्छया यद्वक्ष्यामि तद्वचः शृणु ॥ १ ॥

*सा०सं०*— षष्ठेऽध्याये ध्यानयोग उक्तः । नवमान्ते च '**मन्मनाः**' (९-३४) इत्यादिना तद्ध्यानं स्मारितम् । तच्च ध्येयसापेक्षम् । अतो ध्यानार्थं भगवद्विभूतिरूपाणि अत्राध्याये अग्रे 'हन्त ते कथयिष्यामि' इत्यादिना प्राचुर्येण वक्ष्यन्नादौ बुद्ध्यादीनां महर्ष्यादीनां सामर्थ्यातिशयोपेततया निर्माणरूपं विशेषकारणत्वं च भगवतो वक्ति । यद्यपि 'भोक्तारं यज्ञतपसाम्' (५-२९) इत्यादिना पञ्चमान्तादौ ध्येयमुक्तम् । तथाऽपि विशिष्टाधिकारिणां भगवद्विभूतय उपास्या इति तदुक्तिरत्रेति । उक्तरूपविशेषकारणत्वमपि विशिष्टाधिकारिध्येयमिति तस्याप्यत्रोक्तिः । ननु, विभूतिरूपाण्यपि

'रसोऽहमप्सु कौन्तेय' (७-८) इत्यादिना 'अहं क्रतुः' (९-१६) इत्यादिना चोक्तान्येव । सत्यम् । अत्र विस्तरेणोच्यन्त इत्यदोषः । अत एवास्य विभूत्यध्याय इति व्यपदेशः । तदुक्तेरेव बहुत्वेनैकवाक्यता चाध्यायस्य । विभूतिशब्दार्थमग्रे वक्ष्यामः ।

तत्र पार्थस्य श्रोतृत्वसम्पत्तिप्रतिपादनाय तद्विशेषणोक्तिपूर्वं सम्बोध्य प्रतिजानीते **भूय एवेति!** हे **महाबाहो** । **भूय एव** पुनरेव । **मे** । **परमं वचः** माहात्म्यप्रतिपादकं वचनम् । **शृणु** श्रुत्वा तत्र निष्ठां कुरु । **प्रीयमाणाय** मद्वचः श्रुत्वा सन्तोषं प्राप्नुवते । अनेन श्रोतृत्वसम्पत्तिरुक्ता । ते तुभ्यं **हितकाम्यया** हितेच्छया **वक्ष्यामि** इति ॥ १ ॥

***अ०प्र०— अ०प्र०—*** षष्ठे ध्यानयोगः उक्तः । नवमान्ते च मन्मना इत्यादिना तद्व्याख्यानं स्मारितम् । तच्च ध्येयसापेक्षमतो ध्यानार्थं भगवद्विभूतिरूपाण्यत्र दशमाध्याये सङ्ग्रहेण अग्रे 'हन्त ते कथयिष्यामी'त्यादिना प्राचुर्येण वक्षन्नादौ बुद्ध्यादीनां महर्ष्यादीनां सामर्थ्यातिशयोपेततया तन्निर्माणरूपं विशेषकारणत्वं भगवतो वक्ति । यद्यपि 'भोक्तारं यज्ञतपसामि'त्यादिना पञ्चमान्तादौ ध्येयमुक्तम् । तथापि विशिष्टाधिकारिणां भगवद्विभूतय उपास्या इति तदुक्तिरत्रेति उक्तरूपविशेषकारणत्वमपि विशिष्टाधिकारिध्येयमिति तस्याप्यत्रोक्तिः । यद्वा, एवं तावत् सप्तमादिभिस्त्रिभिरध्यायैर्भजनीयं परमेश्वररूपं निरूपितं तद्विभूतयश्च सप्तमे 'रसोऽहमप्सु कौन्तेये'त्यादिना सङ्क्षेपतो दर्शितः । नवमे च 'क्रतुरहं यज्ञ' इत्यादिना । अथेदानीन्ता एव विभूतीः प्रपञ्चयिष्यन् स्वभक्तेरवश्यकरणीयत्वं वर्णयिष्यन् तत्रादौ **श्रीभगवानाह – भूय एवेति** ।

अथान्वयः— हे महाबाहो ![1], यत्[2], भूय[3], एव[4], मे[5], परमं[6], वचः[7], शृणु[8], अहं[9], प्रियमाणाय[10] ते[11] हितकाम्यया[12], वक्ष्यामि[13] इत्यन्वयः ।

हे महाबाहो ! = महान्तौ युद्धादि स्वधर्मानुष्ठाने महत्परिचर्यायां च कुशलौ बाहू यस्य स तथा[1], यत् = यन्मयोक्तं पूर्वं यत्[2], भूय एव = पुनः उक्तार्थमेव[4], मे = मम[5], परमं = महात्म्यप्रतिपादकं परमार्थनिष्ठं वा । येन निरतिशयानन्दाविर्भावः साक्षाद्भवति तदुत्कृष्टमिति वा[6], एतादृशं वचः = वचनं[7], शृणु = निबोध श्रुत्वा निष्ठां कुरु[8] । परमकारुणिकोऽहं[9], प्रियमाणाय = मद्वचः शृत्वा सन्तोषमाप्नुवते यद्वा, मद्वचसा अमृतेनैव प्रीतिं प्राप्नुवते प्रीतिं कुर्वाणाय इत्यनेन श्रोतृत्वसम्पत्तिरुक्ता[10] । ते = तुभ्यं[11] हितकाम्यया हितेच्छया[12], वक्ष्यामि = यद्वक्ष्यामि तच्छ्रुत्वा तत्र निष्ठां कुर्वित्यर्थः अवधारयेति भावः ॥ १ ॥

भाष्यम्

**प्रियमाणाय श्रुत्वा सन्तोषं प्राप्नुवते ॥ १ ॥**

*प०टी०*— अपृष्टे किमिति 'भूय एव वक्ष्यामि' इति वक्ष्यति ? इत्यत आह **प्रियमाणायेति** ॥ १ ॥

*प्र०दी०*— प्राक् 'शोकसंविग्नमानसः' इत्युक्तम् । तद्विरुद्धं कथं 'प्रीयमाणाय' इत्युच्यते ? इत्यतो व्याचष्टे **प्रीयमाणायेति** । पूर्वं बन्धुस्नेहाच्छोक उक्तः । इदानीं भगवद्वचनश्रवणनिमित्ता सन्तोषप्राप्तिः श्रोतृत्वसम्पत्प्रतिपादनायोच्यत इति न विरोध इति भावः ॥ १ ॥

*भा०र०*— सन्तोषप्राप्तिरपि अत्र किमिति वक्तव्या ? इत्यत उक्तं **श्रोतृत्वसम्पदिति** ॥१॥

**गीता**

**न मे विदुः सुरगणाः प्रभवं न महर्षयः ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः॥ २ ॥**

*वि०वि०*— उपलक्षणार्थं सुरगणा इत्यादि । प्रभवं प्रभावम् । मद्वशां जगदुत्पत्तिं वा । यद्वा, प्रभवं ममोत्पत्तिं न विदुः । अभावादेव । यद्यस्ति तर्हि देवादयः सामान्यतोऽपि जानीयुः, सामान्यतः सर्वज्ञत्वात्, न च जानन्ति, अतो नास्तीति भावः । तत्र हेतुः **अहमिति** । आदि-रुत्पत्तिरित्यर्थः । सर्वस्यापि देवादेरुत्पत्तिरपि यदधीना कुतस्तस्योत्पत्तिरिति भावः । भगवत्प्रभाव-तदधीनजगदुद्भवौ च सामान्यतो देवादिभिर्ज्ञाताविति श्रुत्यादिसिद्धत्वात्तयोरभावो न शङ्कनीयः ॥२॥

*वा०ल०*— 'प्रभवं न महर्षयः' इत्यत्र प्रभवं प्रभावं सामर्थ्यम् ॥ २ ॥

*सा०सं०*— प्रतिज्ञातमहिमानमाह **न म इति** । **सुरगणा महर्षयश्च** । **मे** । **प्रभवं** प्रभावम् । महिमानम् । **न विदुः** । **प्रभवमुत्पत्तिं** मदधीनामुत्पत्तिं जगत इति योज्यम् । **न विदुः** न जानन्ति । देवादिजगतो भगवदधीनामुत्पत्तिं सुरगणादयो न जानन्ति । किमुतान्य इत्यर्थः । यद्वा, **मे प्रभवं** ममोत्पत्तिं सुरगणादयो न विदुरित्यर्थः । भगवन्महिमवज्जगदुत्पत्तिवच्च भगवदुत्पत्तिं विद्यमानां न जानन्तीति न भ्रमितव्यम् । किन्तु महिमजगदुत्पत्त्योः सत्वमिव भगवदुत्पत्तेः सत्वमेव नास्तीति । तदभावादेव न विदुरिति ज्ञेयम् । प्रभावजगत्प्रभवयोरिव मे प्रभवः कुतो नेति चेत्, तत्रोच्यते **अहमादिरिति** । **देवानां मनुष्याणां** च । उपलक्षणमेतत् । देवादिकृत्स्नजगतोऽ**हमादिः** कारणम् ।

हि । यतोऽतो मे प्रभवो नेति । सर्वस्य मत्सृष्टत्वेन । मज्जनकस्यान्यस्याभावात् । असतश्च पूर्ववृत्तित्वरूपजनकत्वायोगात् । आत्माश्रयापत्त्या मयैव मज्जननायोगादिति भावः । तदाह सूत्रे— 'ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ' (२-३-९) इति ॥ २ ॥

*अ०प्र०*— उक्तस्यापि पुनर्वचने दुर्ज्ञेयत्वमाह **न म** इति ।

अथान्वयः— हे महाबाहो ! अहं[१], हि यस्मात्[२], देवानां[३], महर्षीणां च[४], सर्वशः[५], आदिः[६], तस्मात् सुरगणाः[७], महर्षयश्च[८], मे[९], प्रभवं[१०] न विदुरित्यन्वयः ।

हे महाबाहो ! अहं = परमेश्वरः[१], हि = यस्मात् कारणात्[२], देवानां = ब्रह्मादिदेवानां[३], महर्षीणां वसिष्ठादि महर्षीणां चकारेण मनुष्याणां च[४], सर्वशः = कृत्स्नस्य जगतः यद्वा सर्वप्रकारैः[५], आदिः = आदिकारणं[६], तस्मात्कारणात् सुरगणाः[७], महर्षयः = मनुष्याश्च[८], मे = ममात्मनः[९], प्रभवं = प्रभावं आत्मसत्तया अहमेव जगदन्तर्यामित्वेन स्थितिं प्रभावं यद्वा, प्रकृष्टं नवं जन्मरहितस्यापि नानाविभूतिभिः आविर्भावं महिमानं वा जगतः उत्पत्तिः मदधीना इति योज्यं[१०] न विदुः = न जानन्ति देवादिजगतो भगवदधीनामुत्पत्तिं सुरगणादयो न जानन्ति किमुतान्य इत्यर्थः । यद्वा, सर्वैः प्रकारैः उत्पादकत्वेन बुद्ध्यादिप्रवर्तकत्वेन अतो मदनुग्रहं विना मां कोऽपि न जानन्तीत्यर्थः । तदाह सूत्रे– 'असम्भवस्तु सतोऽनुपपत्तेः' इति । स्वज्ञानान्मोक्षाख्यमहिमानं चाह ॥२॥

भाष्यम्

**प्रभवं प्रभावम् । मदीयां जगदुत्पत्तिं वा । तद्वशत्वात् तस्य इत्युच्यते । यद्यस्ति तर्हि देवादयो जानन्ति सर्वज्ञत्वात्, अतो नास्तीति भावः । 'अहमादिर्हि' इति तु उत्पत्तिरपि यस्य वशा कुतः तस्य जनिरिति ज्ञापनार्थम् । ''अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा'' इति चोक्तम् ।**

*प०टी०*— 'न मे विदुः सुरगणाः प्रभवम्' इति 'प्रभव'शब्दं त्रेधा व्याचष्टे **प्रभवमिति** । **मदीयामुत्पत्तिं** जगदुत्पत्त्यर्थम् । 'मे' इत्यस्य कः सम्बन्धः ? इत्यत आह **तद्वशत्वादिति** । ननु ईश्वरोत्पत्तेरज्ञातत्वेनासत्त्वम्, तर्हि तत्प्रभावजगदुत्पत्त्योरसत्त्वं स्यादित्यत आह **अहं सर्वस्येति** । जगत्सृष्ट्यादिप्रभावस्य जगदुत्पत्तेश्च प्रामाणिकत्वान्नासत्त्वम्, किन्तु साकल्येनाज्ञातत्वमेवेत्यर्थः ।

*प्र०दी०*— प्रभवशब्दः **केनचित्** सामर्थ्यमात्रवाचित्वेन व्याख्यातः । **अन्येन** तु भगवदुत्पत्तिवाचित्वेन । तदुभयमङ्गीकुर्वन्नधिकमपि विवक्षुराह **प्रभवमिति** । **मदीयां उत्पत्तिं** इति सम्बन्धः।

जगदुत्पत्तिः 'मे' इति कथं विशेष्यते ? इत्यत आह **तदिति** । 'जगदुत्पत्तिः इति वर्तते । एवं तर्हि भगवत्प्रभाववत् जगदुत्पत्तिवच्च भगवदुत्पत्तिरस्त्येव । किं तु दुर्ज्ञाना एव इत्यापन्नमित्यत आह **यदीति** । भगवदुत्पत्तिरिति शेषः । **सर्वज्ञत्वात्** 'सामान्यतः' इति शेषः । ततः परं 'न च सामान्यतोऽपि जानन्ति' इत्यध्याहारः । **अतः** सर्वथा अनुपलम्भात् । प्रभावादिकं तु विशेषत एव न जानन्ति न तु सामान्यतोऽपीति भावः ।

ननु भगवदुत्पत्तेरभावश्चेदत्राभिप्रेतस्तदा 'अहमादिर्हि' इति हेतुवचनं न सङ्गच्छते । अत्र हि देवादयो अर्वाक्तना मया सृष्टाः कथं पूर्वतनीमुत्पत्तिं जानीयुरिति प्रतीयत इत्यत आह **अहमिति** । **अपिशब्दोऽध्याहृतेन** 'सर्वस्य' इत्यनेन सम्बध्यते । **कुतः** ? जनकात् । नन्वत्र सर्वस्याप्युत्पत्तिः भगवदधीनेति नोच्यते । किं तु देवादीनामेव । तत्कथमनेन कारणाभावः सिद्ध्यति ? इति चेन्न। देवादिशब्दस्योपलक्षणार्थत्वात् । तत्कुतः ? इत्यत आह **अहमिति** ।

***भा०दी०*— अधिकमपीति** । जगदुत्पत्तिरूपमित्यर्थः । 'मे', 'प्रभवम्' इति गीतापदयोरर्थतोऽनुवादः **जगदुत्पत्तिः मदीयां इति** ।

***भा०र०*— भगवदुत्पत्तीति** । 'प्रकर्षेण भवः = उत्पत्तिः = प्रभवः' इति 'भवः संसारजन्मनोः' इत्यभिधानानुरोधेन भगवदुत्पत्तिवाचित्वेन व्याख्यात इत्यर्थः । **अधिकमिति** । जगदुत्पत्तिरूपं अधिकमप्यर्थमित्यर्थः । प्रभवशब्दस्य प्रभावार्थकत्वं 'प्रभवं प्रभावं प्रभुशक्त्यतिशयम्' इति परभाष्येऽप्युक्तम् । 'मदीयाम्' इत्यस्य विशेष्याकाङ्क्षायां 'जगदुत्पत्तिम्' इति समासान्तर्गतम् उत्पत्तिपदं योजनीयमिति भावेनाह **उत्पत्तिमिति सम्बन्ध इति** । **विशेष्यत इति** । गीतायाम् । 'जगदुत्पत्तिम्' इति पदं विभक्तिविपरिणामेन इह 'उच्यते' इत्यत्र कर्मसमर्पकतया संयोज्यमिति भावेनाह **जगदुत्पत्तिरिति वर्तत इति** । प्रथमान्ततया अनुवर्तत इत्यर्थः । अनेन भाष्ये तदीयत्वात् तच्छब्दोपात्तमत्स्वामिकत्वात् तस्य 'मे' इत्युच्यते जगदुत्पत्तिः इत्यक्षरार्थो ज्ञातव्य इत्युक्तं भवति।

**एवं तर्हि** यदि प्रभवशब्दस्य अर्थत्रयमभिसंहितम् । 'एवम्' इत्यतः पूर्वं 'यदि' इति शेष इत्यपि **आहुः** । **इत्यापन्नमिति** । समानन्यायत्वादिति भावः । 'अस्ति' इत्याख्यातोपात्तकर्तृसमर्पणायोक्तम् **भगवदुत्पत्तिरिति शेष इति** । यदि सद्भावमात्रेण देवादिज्ञानगोचरत्वापादनं तर्हि प्रभावादेः 'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि' इत्यादिशास्त्रावेदितगुणविशेषस्य च ज्ञानं मयि स्यात् । तच्च न सम्मतम् ? इत्यत आह **सामान्यत इति शेष इति** । भाष्ये 'जानन्ति' इत्यस्य आपाद्यतास्फोरणाय 'जानीयुः' इत्यर्थो ज्ञेयः । आपाद्यस्य विपर्यये पर्यवसानं तर्काङ्गमिति

तदध्याहरति **ततः परमिति** । 'सर्वज्ञत्वात्' इत्यतःपरमित्यर्थः । 'अतः' इति भाष्यानुवादः, 'सर्वथाऽनुपलम्भात्' इति व्याख्या । तर्हि प्रभावादीनामप्यनुपलम्भात् नास्तित्वं स्यादिति कृतचोद्यं भाष्यभावोक्त्या परिहरति **प्रभावादिकं त्विति** । तथाच न तत्समानन्यायतेति हृदयम् । **अत्र** 'अहमादिः' इति वाक्ये । 'कुतः' इत्यनुवादः । 'जनकात्' इति व्याख्या ।

**अनेन** देवानां ऋषीणां च कारणत्वमात्रेण । **देवादिशब्दस्य** देवशब्दस्य महर्षिशब्दस्य च सर्वोपलक्षणत्वादित्यर्थः । देवानां महर्षीणां चाहमादिः, किमु वक्तव्यम् अन्येषामादिरितीति । कैमुत्यद्योतनाय सर्वोपलक्षकपदोपादानम्' इति *न्यायदीपिकातः* अवसेयम् । वक्ष्यति च 'न तत्प्रभावं ऋषयश्च देवा विदुः कुतोऽन्येऽल्पधृतिप्रमाणाः' इति कैमुत्यं भाष्ये ।

भाष्यम्

**उक्तं चैतत् सर्वमन्यत्रापि । "को अद्धा वेद क इह प्रावोचत् कुत आजाता कुत इयं विसृष्टिः । अर्वाग् देवा अस्य विसर्जनेनाथा को वेद यत आ बभूव ॥" इति । "न तत्प्रभावमृषयश्च देवा विदुः कुतोऽन्येऽल्पधृतिप्रमाणाः" इति ऋग्वेद-खिलेषु । अन्यस्त्वर्थो 'यो मामजम्' इति वाक्यादेव ज्ञायते ॥ २ ॥**

***प०टी०***— जगदुत्पत्तीश्वरप्रभावयोः साकल्येनाज्ञातत्वं, भगवदुत्पत्तिस्तु नास्त्येवेत्यत्र प्रमाणमाह **उक्तं चेति** । **अजाता** प्रजा कुतः ? **प्रजाता कुतश्च** ? तस्या विविधसृष्टिरिति स कः सम्यग्वेद ? को वा लोकेऽवोचत् ? यतो देवाः परमात्मसर्जनत जाता **अर्वाग्भूताः** । अथ कथञ्चिच्चतुर्मुखो वेद । स कः सम्यग्ज्ञानादिना **बभूवे**त्यर्थः ॥ २ ॥

***प्र०दी०***— उक्तमर्थत्रयमुपपादयति **उक्तं चेति** । **इयं विसृष्टिः** विविधा जगत्सृष्टिः **कुतः** कारणात् **आजाता** इति **कः** पुरुषः **कुतः** प्रमाणात् **अद्धा वेद कश्च इह लोके प्रावोचत्** ? न कोऽपि कुतश्चित् । यतो **देवाः अस्य** ईश्वरस्य **विसर्जनेन** निष्पन्ना अर्वाचीनाः । सर्वथाऽप्यज्ञाने तदभावः स्यादित्यत उक्तम्— **अथ** अन्यत् **यतः** यस्मात् इयं **आ बभूव** स **कः** प्रजापतिः भगवान् **अद्धा वेद** इत्यर्थः । 'न तत्प्रभावं' इत्यत्र 'अद्धा' इति द्रष्टव्यम् । अत एव व्युत्क्रमः । **प्रमाणं** प्रमा । **अन्यस्त्वर्थः** भगवतः जन्माभावः ॥ २ ॥

***भा०दी०***— **अर्थत्रयमिति** । 'मे प्रभवम्' इत्यस्य भगवतः सामर्थ्यं भगवत उत्पत्तिं भगवदधीनजगदुत्पत्तिमिति प्रोक्तमर्थत्रयमित्यर्थः । अडभावश्छान्दस इति भावेनाह **प्रावोचदिति** ।

कः इत्यनुवादः । **प्रजापतिः** इति व्याख्या । **इति द्रष्टव्यमिति** । यथायोग्यं ज्ञानस्य सत्त्वेन निषेधायोगात् 'अद्धा सम्यक् न विदुः' इत्यर्थलाभाय 'अद्धा' इत्यनुषञ्जनीयम् इत्यर्थः । **अत एवेति** । 'अद्धा' इत्येवमनुषञ्जनीयत्वादेवेत्यर्थः । अन्यथा हि 'प्रभावं मदीयां जगदुत्पत्तिमिति वा' इति भाष्यानुरोधात् 'न तत्प्रभावम्' इत्येतत् पूर्वमुदाहृत्य 'को अद्धा' इति श्रुतिः पश्चादुदाहार्येति भावः । यद्वा, देवापेक्षया ऋषीणामल्पवेदित्वेन तथाऽऽत्मज्ञानाभावात्, गीतायां **सुरगणाः** इति देवानां प्रागुक्तत्वेऽपि 'को अद्धा' इति श्रुतौ ऋषीणां प्रागुक्तिः गीतायां तु व्युत्क्रम इत्यर्थः ॥ यद्वा 'न तत्प्रभावम्' इति श्रुत्यनन्तरम् 'अन्यस्त्वर्थः' इति वाक्यमुक्त्वा पश्चात् 'को अद्धा' 'क इत्था' इति श्रुतिर्वाच्या । भाष्यव्याख्यानुसारात् । तथापि प्रभाववज्ज्ञानाभावः । भगवज्जन्मनि सर्वथैव ज्ञानाभाव इति द्योतनाय, अद्धापदस्यानुषञ्जनीयत्वादेव 'न तत्' इत्येतत् 'को अद्धा' इत्यनन्तर-मुक्त्वा पश्चात् 'अन्यस्तु' इत्येतदुक्तमित्यर्थः ॥ २ ॥

*भा०र०*— **अर्थत्रयमिति** । मम प्रभवं = प्रभावम्, मदीयामुत्पत्तिम्, भगवदधीनजगदुत्पत्ति-मिति भाषितमर्थत्रयमित्यर्थः । **आ जाता** आ = समन्तान्निर्वृत्ता । 'कः' इत्यत्र विशेष्यपूरणं 'पुरुषः' इति । 'कुतः' इत्यत्र विशेष्यम् **प्रमाणादिति** । **अद्धा वेद** 'अद्धा इति स्फुटावधारणयोः' इति वैय्याकरणोक्तेः स्फुटं जानाति । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभाव इति भावेनोक्तम् **प्रावोचदिति** । 'विसर्जनेन' इत्यनन्तरं शेषं दर्शयति **निष्पन्ना इति** । 'अर्वाग्' इत्यस्यार्थः **अर्वाचीना इति** । 'अथा को वेद' इति पादमवतारयति **सर्वथेति** । **तदभावः** विविधजग-त्सृष्ट्यभावः । अङ्गीकारेऽधिकारे च समुच्चयविकल्पयोः । मतान्तरेऽप्यथो वा च' इति अमरशेषे मतान्तरे अयशब्दोऽस्तीत्यभिधानात् अर्थान्तरे अयं अथशब्द इति भावेन तदर्थमाह **अन्यदिति** । **इयं** विविधा जगत्सृष्टिः । 'कः' इत्यस्यार्थः **प्रजापतिरिति** । तत्तात्पर्यम् **भगवानिति** ।

'अद्धा' इत्यस्यानुवृत्तिमभिप्रेत्योक्तम् **अद्धा वेदेतीति** । देवादीनां यथायोग्यं ज्ञानसत्त्वेन निषेधायोगात् 'सम्यङ् न विदुः' इत्यर्थलाभाय अद्धापदम् अनुवर्त्य व्याख्येयमित्यर्थः । ननु 'प्रभवं प्रभावं मदीयामुत्पत्तिं जगदुत्पत्तिं वा' इति भाष्यक्रमेणैव प्रमाणोदाहरणं युक्तम् । आदौ जग-दुत्पत्तेरविज्ञेयत्वे प्रमाणोक्तिः, ततः प्रभावस्याज्ञेयत्वे तदुक्तिरिति तु व्युत्क्रमः कुतः? इत्यत आह **अत एवेति** । 'न तत्प्रभावम्' इति प्रमाणे 'को अद्धा वेद' इत्यत्रत्यस्य 'अद्धा' इत्यस्य योज-नीयत्वादेवेत्यर्थः । **व्युत्क्रमः** भाष्योक्तप्रभावाज्ञेयत्व-जगदुत्पत्तिर्दुर्विज्ञानत्वरूपक्रमापेक्षया जगदु-त्पत्तेर्दुर्विज्ञेयत्वे, प्रभावस्याज्ञेयत्वे चेति व्यत्यस्तः क्रम इत्यर्थः । प्रमाणशब्दस्य कारणार्थल्युडन्तत्वे

धृतिसाहचर्यास्वारस्यम् ? इत्यत आह **प्रमाणं प्रमेति** । भावे ल्युडन्तोऽयं शब्द इति भावः । 'अन्यरस्त्वर्थः' इत्यनुवादः । 'भगवतो जन्माभावः' इति व्याख्यानम् ॥ २ ॥

**गीतातात्पर्यनिर्णयः**

**उपलक्षणार्थं सुरगणा इत्यादि ॥ १-२ ॥**

***न्या०दी०*— भूयो महिमानं शृण्विति प्रतिज्ञातमुच्यते न मे विदुः इति** । तत्र मे महिमानं सुरगणाः महर्षयश्च न विदुरित्येवोक्तत्वात् गन्धर्वादयो विदुरित्यन्यथाप्रतीति-निरासायाह **उपलक्षणार्थमिति** ॥ सुरगणा महर्षय इति पदद्वयं सर्वोपलक्षकम् । सुरगणा-दीनामज्ञानेऽन्येषां सुतरां तद्भावादिति भावः ॥ १-२ ॥

***भा०दी०*— तद्भावादिति** । अज्ञानभावादित्यर्थः ॥ १-२ ॥

**गीता**

**योो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥**

***वि०वि०*—** अनश्चेष्टयिता आदिश्च सर्वस्येत्यनादिः । अनस्य मुख्यप्राणस्याप्यादिर्वा । तम् । भ्रान्तिरहितः मर्त्येषु मनुष्येषु ॥ ३ ॥

***सा०सं०*—** स्वज्ञानान्मोक्षाख्यमहिमानं चाह **यो मामिति** । **यो**ऽधिकारी **अजम्** उत्पत्ति-हीनम् । **अनादिम्** अनश्चासावादिश्च तम् । सर्वचेष्टकं कारणभूतं च । अनितेरन्तर्णीतण्यर्थात् पचाद्यच् । यद्वा— अनस्य मुख्यप्राणस्य कारणं च । लोकानां महास्वामिनम् । **माम्** । **वेत्ति** जानाति । **स मर्त्येषु** । **असम्मूढः** सम्मोहहीनः भ्रान्तिहीनः सन् । **सर्वपापैः प्रमुच्यते** मुक्तो भवति ॥

***अ०प्र०*—** एवंभूतात्मज्ञाने फलमाह **यो मामिति** ।

यः[१], अनादिं[२], अत एव अजं[३], लोकमहेश्वरं[४], मां[५], वेत्ति[६], सः[७], मर्त्येषु[८], असम्मूढः सन्[९], सर्वपापैः[१०] प्रमुच्यते[११] ।

यः = अधिकारी[१], अनादिं = न विद्यते आदिकारणं यस्य तं सर्वकारणत्वात् यद्वा अनश्चासौ आदिश्च सर्वचेष्टकं कारणभूतं च । यद्वा, अनस्य मुख्यप्राणस्य कारणं च[२], अत एव अजं =

उत्पत्तिहीनं[३], लोकमहेश्वरं = लोकानां महास्वामिनं[४], मां वेत्ति = एतादृशं मां जानाति[५], सः मर्त्येषु = मनुष्येषु[६], असम्मूढः = सम्मोहः भ्रान्तिः तदनधीनः सन्[७], सर्वपापैः = सङ्कल्परूपैः सर्वकिल्बिषैः[१०] प्रमुच्यते = प्रकर्षेण विसृज्यते मुक्तो = भवति[११] ॥ ३ ॥

भाष्यम्

**अनश्चेष्टयिता आदिश्च सर्वस्येत्यनादिः । अजत्वेन सिद्धेरितरस्य ॥ ३ ॥**

***प०टी०—*** 'अज'शब्दात् 'अनादि'शब्दस्यार्थभेदमाह **अन इति** । तर्हि ब्रह्मण आदिराहित्यं नोक्तं स्यादित्यत आह **अजत्वेनेति** ॥ ३ ॥

***प्र०दी०—*** अजशब्दागतार्थतया अनादिशब्दं व्याचष्टे **अन इति** । 'सर्वस्य' इत्युभयशेषः । अन्तर्णीतण्यर्थादनतेः पचाद्यच् । 'न विद्यते आदिः कारणमस्येत्यनादिः' इत्यन्ये । तदसत् । आर्थिकपुनरुक्तेरपरिहारादित्याह **अजत्वेनेति** । **इतरस्य** कारणराहित्यस्य । अजत्वे हेतुरयमुच्यत इति चेत् । मैवम् । तज्ज्ञापकविभक्त्याद्यभावात् । गत्यन्तराभावे हि गमनिकैषा । चेष्टकत्वं प्रागनुक्तं कथमनूद्यते ? इति चेन्न । प्रभावे सर्वस्यान्तर्भावात् ॥ ३ ॥

***भा०दी०—*** **उभयशेष इति** । 'चेष्टयिता' इत्यत्र 'आदिः' इत्यत्राप्यन्वेतीत्यर्थः ॥ ३ ॥

***भा०र०—*** **उभयशेष इति** । 'सर्वस्य चेष्टयिता', 'सर्वस्यादिः' इत्युभयत्र 'सर्वस्य' इति पदं काकाक्षिन्यायेन योजनीयमित्यर्थः । अनितेः 'नन्दि-ग्रहि-पचादिभ्यो ल्यु-णिनि-अचः' इति कर्तरि अच्प्रत्यये कृते चेष्टाकृत्त्वलाभेऽपि, चेष्टाकारयितृत्वालाभात् 'चेष्टयिता' इति व्याख्यानायोगः ? इत्यत उक्तम् **अन्तर्णीतण्यर्थादिति** । **अन्ये** शङ्करश्रीधरप्रभृतयः । **आर्थिकेति** । अजत्वोक्तौ अर्थात् कारणराहित्यस्यापि लाभादिति भावः । 'अनादित्वमजत्वे हेतुः' इति शङ्करभाष्यमनुवदति **अजत्व इति** । **अयं** अनादिशब्दाभिप्रेतः । **तज्ज्ञापकेति** । साधनत्वख्यापकविभक्त्यन्तं लिङ्गवचनं हेतुः' इति । परीक्षकलक्षितहेतुज्ञापकविभक्त्यभावादित्यर्थः । आदिशब्देन 'अनादित्वहेतुना' इत्यादिवचनपरिग्रहः । हेत्वर्थगर्भं अनादिपदं किन्न स्यात् ? इत्यत आह **गत्यन्तरेति** । **गमनिका** अवतारिका । **प्रभावे** प्रभवशब्दगीते सामर्थ्ये **सर्वस्य** सर्वचेष्टयितृत्वादेः ॥ ३ ॥

**गीतातात्पर्यनिर्णयः**

**अनस्याप्यादिः अनादिः ॥ ३ ॥**

*प्रका०*— "न मे विदुः सुरगणाः प्रभवं न महर्षयः ।" इत्येतद्भगवत्प्रभावमन्येऽपि न विदुरित्यस्योपलक्षकमित्याह **अन्यस्यापीति** ॥

*न्या०दी०*— स्वज्ञानान्मोक्षाख्यमहिमाऽत्रोच्यते **यो माम्** इति । तत्र अजमित्युक्तत्वादनादिमिति पुनरुक्तिरित्यत आह **अनस्येति** ॥ **अनो** मुख्यप्राणः ॥ ३ ॥

**गीता**

**बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः ।**
**सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥**

*वि०वि०*— सर्वकारणत्वं प्रथयति **बुद्धिरित्यादिना** । बुद्धिरन्तःकरणं 'बुद्धिर्बोधनिधित्वादन्तःकरणमुच्यते' इत्यभिधानात् । कार्याकार्यविनिश्चयो वा । ज्ञानं प्रतीतिः । 'ज्ञानं प्रतीतिर्बुद्धिस्तु कार्याकार्यविनिर्णयः' इत्यभिधानात् । असम्मोहोऽकार्येच्छाराहित्यं मिथ्याज्ञानाभावो वा । क्षमा क्रोधाभावेन सहापकर्तुरनपकरणम् । 'अक्रोधोऽदोषकृच्छत्रोः क्षमावान् स निगद्यते' इत्यभिधानात्। सत्यं यथार्थं भाषणम्, यथार्थज्ञानपूर्वकरणं वा । 'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः' इति वचनात् । दम इन्द्रियनिग्रहः । शमः परमात्मनिष्ठा, 'शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः' इति वचनात् । सुखम् अनुकूलवेदनीयम् । भव उत्पत्तिः । अभावोऽसत्यम् । भयं त्रासः । अभयं तद्विपरीतम् ॥ ४ ॥

*सा०सं०*— मुक्तिहेतुज्ञानविषयत्वमहिमानमुक्त्वा बुद्ध्यादिप्रदत्वमहिमानं चाह **बुद्धिरिति** । यद्वा, 'अहमादिर्हि देवानाम्' इति देवाद्युपलक्षितसर्वकारणत्वं स्वस्योक्तम् । तत्र केषाञ्चिद्बुद्ध्यादीनां महर्ष्यादीनां च सामर्थ्यातिशयोपेततया निर्माणरूपविशेषकारणत्वोक्त्या प्रागुक्तं प्रपञ्चयति **बुद्धिरित्यादित्रयेण** । **बुद्धिरन्तः**करणं कार्याकार्यनिश्चयो वा । **ज्ञानं** तु प्रतीतिसामान्यम् । **असम्मोहः** अकार्येच्छाभावः मिथ्याज्ञानाभावो वा । **क्षमा** क्रोधाभावेन सहापकर्तुरनपकरणम् । **सत्यं** यथार्थज्ञानपूर्वकमनुष्ठानं वचनं वा । **दम** इन्द्रियनिग्रहः । **शमो** भगवन्निष्ठता । **सुखम**नुकूलवेदनीयम् । **दुःखं** प्रतिकूलवेदनीयम् । **भवः** उत्पत्तिः । **भावः** सत्ता । **भयं** त्रासः । **अभयं** त्रासविरोधिमनोव्यापारः ॥ ४ ॥

*अ०प्र०*— मुक्तिहेतुज्ञानविषयत्वमहिमानमुक्त्वा बुद्ध्यादिप्रदत्वमहिमानं चाह । यद्वा 'अहमादिर्हि देवानाम्' इति देवाद्युपलक्षितसर्वकारणत्वं स्वस्योक्तम् । तत्र केषाञ्चिद्बुद्ध्यादीनां महर्ष्यादीनां

च सामर्थ्यातिशयोपेतया निर्माणरूपविशेषकारणत्वोक्तया प्रागुक्तं प्रपञ्चयति **बुद्धिरित्यादि**त्रयेण । तत्र **बुद्धिरिति** ।

श्लोकक्रमेण बुद्ध्यादित्रयोदश गुणाः मत्त एव भवन्तीति उत्तरेणान्वयः । बुद्धिः = कार्याकार्यसारासारविवेकनैपुण्यरूपमन्तःकरणं[१], ज्ञानं = प्रतीति-सामान्यमात्मविषयं[२], असम्मोहः = विष्णुसर्वोत्तमज्ञानं वा मिथ्याज्ञानेन अकार्येच्छाभावो वा[३], क्षमा = क्रोधाभावेन सहायकर्तुः अनपकरणरूप-सहिष्णुत्वं[४], सत्यं = यथार्थज्ञानपूर्वकमनुष्ठानं भाषणं वा[५], दमः = बाह्येन्द्रियसंयमः[६], शमः = भगवन्निष्ठता अन्तःकरणसंयमः[७], सुखं = अनुकूलवेदनीयं[८], दुःखं = प्रतिकूलवेदनीयं[९], भवः = उद्भवः उत्पत्तिर्वा[१०] भावः = सत्ता यद्वा अभावः = उद्भव-विपरीतः[११] भयं = त्रासः[१२], अभयं = तद्विपरीतं त्रासविरोधी मदधीनो व्यापारः[१३], एतानि मत्त एव भवन्तीति उत्तरेणान्वयः ॥ ॥ ४ ॥

भाष्यम्

**तत् प्रथयति बुद्धिरित्यादिना । कार्याकार्यविनिश्चयो बुद्धिः । ज्ञानं प्रतीतिः । "ज्ञानं प्रतीतिर्बुद्धिस्तु कार्याकार्यविनिश्चयः" इति ह्यभिधानम् । दमः इन्द्रिय-निग्रहः । शमः परमात्मनि निष्ठा । "शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः" इति भागवते ॥ ४ ॥**

***प०टी०***— उत्तरश्लोकद्वयमवतारयति **तदिति** । आदित्वम् । 'बुद्धि''ज्ञान'शब्दयोरर्थभेदं सप्रमाणकमाह **कार्येति** । दमादिशब्दार्थं सप्रमाणकमाह **दम इति** ॥ ४ ॥

***प्र०दी०***— तर्हि 'आदिम्' इत्यनेन 'बुद्धिः' इत्यादिकं गतार्थमित्यत आह **तदिति** । सर्वादित्वम् । 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्' इति गौतमवचनात् । 'बुद्धिर्ज्ञानं' इति पुनरुक्तिरित्यत आह **कार्येति** । कुत एतत् ? इत्यत आह **ज्ञानमिति** । 'ज्ञायते अनेनेति ज्ञानं शास्त्रम्' इत्यसत् । आध्यात्मिकधर्मप्रसङ्गात् । 'दमो बाह्येन्द्रियोपशमः, शमोऽन्तःकरणस्य' इति कश्चित् । तदसत् । एकेनैव शब्देन सिद्धत्वात् । किं तु दमः क्रियासु विनयः । शमो बाह्यान्तःकरणसंयमः' इत्यपरः । तदप्यसदिति भावेनाह **दम इति** । कुतः ? इत्यत आह **शम इति** ॥ ४ ॥

***भा०दी०***— 'ज्ञानम्' इत्यस्य 'शास्त्रम्' इति व्याख्या प्रकृतप्रसङ्गाननुगुणेत्याह **आध्यात्मिकेति** । आत्मानमधिकृत्य स्थितधर्मः, प्रसङ्गात् शास्त्रस्य च तथात्वादिति भावः ॥ ४ ॥

*भा०र०*— तर्हि 'अनश्वासौ आदिश्च सर्वस्य' इति व्याख्याने । **आदिमित्यनेनेति** । 'अनादिं' इति गीतायां 'सर्वस्यानः, सर्वस्यादिः' इति भगवतः सर्वकारणत्वस्य प्राप्तत्वात् । 'बुद्धि-ज्ञानादिकं मत्त एव' इति भगवत्कारणकत्वस्य बुद्ध्यादौ पुनरभिधाने, तद्वाक्यं पुनरुक्तमित्यर्थः । 'प्रथयति' इति भाष्यस्य 'विस्तारयति' इत्यर्थः । **अनर्थान्तरं** अर्थान्तराभावः । **शब्दाः** पर्याया इत्यर्थः । **आध्यात्मिकेति** । बुद्धेरसम्मोहादेश्च आत्मानं = देहमधिकृत्य प्रवर्तमानधर्मरूपत्वात्, तत्प्रसङ्गे शास्त्रग्रहणस्यानुचितत्वादिति भावः । 'दमः = बाह्यकरणानां अनर्थेभ्यो विषयेभ्यो नियमनम् । शमः = अन्तःकरणस्य तथा नियमनम्' इति । *रामानुजभाष्यं* अर्थतोऽनुवदति **दमो बाह्येति** । अन्तःकरणस्य उपशम इत्यस्य बुद्ध्या विविक्तस्यानुवृत्तिः **एकेनेति** । दमशब्दस्य इन्द्रियनिग्रहार्थत्वात्, तेनैव बाह्याभ्यन्तरेन्द्रियनिग्रहग्रहणसम्भवेन शमशब्दस्य वैयर्थ्यादित्यर्थः । **बाह्येति** । बाह्यकरणानां अन्तःकरणस्य च संयम इत्यर्थः । 'बुद्धेर्मन्निष्ठता शमः' इत्यत्र अस्म-च्छब्दार्थः परमात्मा । 'सुखशब्दागतार्थतया' इति वदन् 'सुखं आह्लादः तुष्टिः सन्तोषः' इति शङ्करभाष्यमेकार्थत्वाद् अयुक्तमित्यभिसन्धत्ते ॥ ४ ॥

**गीतातात्पर्यनिर्णयः**

**"बुद्धिर्बोधनिधित्वात् तदन्तःकरणमुच्यते" इति शब्दनिर्णये ॥ ४ ॥**

*प्रका०*— बुद्धिर्ज्ञानमित्यत्र पौनरुक्तिमाशङ्क्य बुद्धिशब्दस्यार्थान्तरमाह **बुद्धिरिति** ॥

***न्या०दी०***— **बुद्ध्यादिप्रदत्वमहिमा चोच्यते 'बुद्धिः' इति । तत्र बुद्धिज्ञानशब्दयो-रेकार्थत्वमित्यतो बुद्धिशब्दस्यार्थान्तरत्वे स्मृतिमाह बुद्धिरिति ॥ भुत् बोधः । तदाश्रय-त्वात् जलधिरितिवत् तज्ज्ञानाश्रयोऽन्तःकरणं बुद्धिरित्युच्यत इत्यर्थः ॥ ४ ॥**

*भा०दी०*— **भुत् बोध इति** । बुध अवबोधन इत्यतो भावे क्विप् । तदुपपदे दधातेर्घोः किरिति किरिति भावः ॥ ४ ॥

**गीता**

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥**

***वि०वि०***— अहिंसा परपीडानिवृत्तिः । समता द्वन्द्वादिराहित्यम् । तुष्टिः अलम्बुद्धिः । 'अलम्बुद्धिस्तथा तुष्टिः' इत्यभिधानात् । तपो ब्रह्मचर्यादि । 'ब्रह्मचर्यादिकं तपः' इत्यभिधानात् ।

दानं न्यायार्जितधनस्य परस्वत्वापादानम् । यशः कीर्तिः । अयशो दुष्कीर्तिः । एते नानाविधा बुद्ध्यादयो भावाः । प्राणिनां मत्सकाशादेव भवन्ति ॥ ५ ॥

*सा०सं०*— **अहिंसा** परप्राणिपीडाभावः । **समता** द्वन्द्वेषु निर्विकारत्वम् । **तुष्टिर्विषया-**लम्बुद्धिः । **तपो** ब्रह्मचर्यादिः । **दानं** धर्मार्जितवित्तस्य परस्वत्वापादनम् । **यशः** कीर्तिः । **अयशोऽ**पकीर्तिः । **पृथग्विधाः** नानाविधाः । **एते भावाः** धर्माः । **भूतानां** प्राणिनाम् । **मत्त एव भवन्ति** इति ॥ ५ ॥

*अ०प्र०*— किञ्च, **अहिंसेति** । अन्वयः— बुद्धिरित्यादि त्रयोदश पूर्वश्लोके उक्ताः । अहिंसादि अयशान्तास्सप्त एते विंशति तद्विपरीताश्च अबुद्ध्यादयश्च पृथग्विधा[८], भावाः[९], भूतानां[१०] मत्त एव[११] भवन्तीत्यन्वयः ।

अहिंसा = परप्राणपीडाभावः[१], समता = द्वन्द्वेषु निर्विकारित्वं रागद्वेषराहित्यं वा[२], तुष्टिः = विषयालम्बुद्धिः दैवलब्धेन सन्तोषो वा[३], तपः = ब्रह्मचर्यादिः शरीरादिवक्ष्यमाणं[४], दानं = न्यायार्जितस्य धनादेः सत्पात्रेऽर्पणं[५], यशः = सत्कीर्तिः[६], अयशः = अपकीर्तिः[७], एते बुद्धिरित्यादयः तद्विपरीताश्च अबुद्ध्यादयः पृथग्विधाः = विभागशः नानाविधाः[८], भावाः = धर्माः[९], भूतानां प्राणिनां[१०] मत्त एव = मत्सकाशादेव[११] भवन्ति = उत्पद्यन्ते इत्यर्थः ॥ ५ ॥

भाष्यम्

**तुष्टिः अलम्बुद्धिः । 'अलम्बुद्धिस्तथा तुष्टिः' इत्यभिधानात् ॥ ५ ॥**

*प०टी०*— सुखात् तुष्टेर्वैलक्षण्यं सप्रमाणकमाह **तुष्टिरिति** ॥ ५ ॥

*प्र०दी०*— सुखशब्दागतार्थतया तुष्टिशब्दं सप्रमाणकं व्याचष्टे **तुष्टिरिति** ॥ ५ ॥

**गीता**

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः॥ ६ ॥**

*वि०वि०*— किञ्च, पूर्वे सप्तमहर्षयः— 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयः स्मृताः ॥' इति प्रसिद्धाः । चत्वारो मनवः पूर्वे— स्वायंभुव-स्वारोचिषरैवतोत्तमाः । यद्वा, 'मनवो बोधवैशेष्याद्देवा ब्रह्मादयः स्मृताः । विप्रादिवर्णभेदेन चत्वारो

बहवोऽपि ते ॥' इत्युक्ता देवाः । लोके । इमाः प्रजाः वर्तमानाः प्रजाः । येषां पुत्रपौत्रादिरूपेण वर्तन्ते । मत्तो भावो जन्म येषां ते मद्भावाः ये च ब्रह्मणो मनसा जातास्तेऽपि मद्भावाः । ब्रह्मादयस्तु निमित्तमात्रम् । उक्तं च— 'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः शर्वश्च कालाख्यारूपिणस्तव ॥ इति ॥ ६ ॥

***वा०ल०***— 'चत्वारो मनवः' इत्यत्र चत्वारो मनवः प्रधानभूताः । 'मद्भावाः' इत्यत्र मयि भावो भक्तिर्येषां ते मद्भावाः । मानसाः मनःप्रियाः । येषां लोकः जनः ॥ ६ ॥

***सा०सं०***— न केवलं भूतानां बुद्ध्यादिधर्मा मत्तो भवन्ति । किन्तु भूतान्यपि मत्त एव भवन्तीत्याह **महर्षय इति** । 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयः स्मृताः' (मोक्षधर्मे) इत्युक्ताः । **पूर्वे** पूर्वमन्वन्तरस्थाः । **सप्तमहर्षयः** । **मानसाः ब्रह्मणो** मनोऽपत्यतया **जाताः** । **पूर्वे** प्राथमिकाः । **चत्वारः** स्वायम्भुवस्वारोचिषरैवतोत्तमाख्याः । **मनवः**। यद्वा, 'मनु अवबोधने' इत्यतः उप्रत्यये बोधवैशेष्याद्ब्रह्माद्या देवाः विप्रक्षत्रियवैश्यशूद्रभेदेन चतुर्धा स्थितत्वाच्चत्वारः । उक्तं हि बृहद्भाष्ये प्रथमाध्याये चतुर्थेऽव्याकृतब्राह्मणे— 'विष्णोर्ब्राह्मणजातिः सन् जज्ञे ब्रह्मा चतुर्मुखः । इतोऽग्रे जगतस्तस्मात् क्षत्रजातिरजायत ॥ वायुः सदाशिवोऽनन्तो गरुडः शक्र एव च । कामश्च वरुणश्चैव सोमः सूर्यो यमस्तथा । एवमाद्याः क्षत्रियास्तु देवता ब्रह्म-निर्मिताः ॥ इति । तथा— "विवस्वदिन्द्रवरुणविष्णुभ्योऽन्येऽदितेः सुताः । रुद्रादन्ये तथा रुद्रा वायोरन्ये च वायवः । अग्नेरन्ये च वसवो वैश्या इत्येव कीर्तिताः ॥' तथा— 'अश्विनौ पृथिवी चैव कालो मृत्यव एव च । शूद्रदेवाः समुद्दिष्टा देववर्णा इति स्मृताः ॥' इति च ॥

विवस्वदिन्द्रवरुणानां क्षत्रियत्वात् विष्णोः अवर्णत्वात् तेभ्योऽन्ये अष्टावादित्या ग्राह्या इति '...विष्णुभ्यः' इत्युक्तम् । अग्नेर्ब्राह्मणत्वात् 'अग्नेरन्यः' इत्युक्तम् । सप्तैव वसवो वैश्याः । सदा-शिवस्य क्षत्रियत्वात् 'रुद्रादन्ये' इत्युक्तम् । दशैव रुद्रा वैश्या इत्यर्थः । मद्भावा मत्तो भावो जन्म येषां ते **मद्भावाः** । मत्त एवोत्पत्तिमन्त इत्यर्थः । **लोके इमाः प्रजाः** । येषां प्रागुक्तमनूनां पुत्रपौत्रादिरूपेण वर्तन्ते । ते मद्भावा इत्यन्वयः । न च 'ततो मनून् ससर्जान्ते मनसा लोक-भावनान्' (भागवत ३-२१-४९) इत्युक्त्या ब्रह्मसृष्टानां स्वायम्भुवादीनां कथं मद्भावा इत्युक्तिरिति शङ्क्यम् । ब्रह्मान्तर्यामिणो मत्तो जनिमन्त इत्यर्थकत्वात् मद्भावा इत्यस्य । ब्रह्मा तु द्वारमात्रम् । न चैवमपि प्रियव्रताद्यपत्यतादशायामेवोत्पन्नानां तेषां मनुसंज्ञकत्वेन मानसत्ववेलायां तदभावेन मनव इति उक्तिरयुक्तेति वाच्यम् । मानसदेहात्यागेनैव प्रियव्रतादावुत्पन्नानां द्वयोर्देहयोरैक्येन मनुत्वोपपत्तेः इत्येतद्भाष्यटीकायामेवोक्तेः ॥ ६ ॥

*अ०प्र०*— किञ्च, **महर्षय इति** ।

सप्त[१], महर्षयः[२], पूर्वे[३], तथा तेभ्योऽपि पूर्वे[४], चत्वारः[५], तथा मनवः[६], मानसा जाताः[७], मद्भावाः[८], येषां[९], लोकं लोके[१०] इमाः[११] प्रजा वर्तन्ते इत्यन्वयः ।

हे पार्थ ! सप्त महर्षयः[२], तदुक्तम्— मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयस्तथा ॥

यद्वा, सप्त ब्रह्माण इत्येते पुराणे निश्चयं गता इत्यादिपुराणप्रसिद्धाः महर्षीणां मध्ये सर्वगुणैः प्रवृद्धाः सप्त महर्षयः[२], पूर्वे = पूर्वसृष्ट्यादौ पूर्वमन्वन्तरस्थाः[३], तथा तेभ्योऽपि पूर्वे तेभ्योऽपि पूर्वमन्वन्तरस्थाः प्राथमिकाः[४], चत्वारः = सनकसनन्दनसनत्कुमारसनत्सुजातादयश्चत्वारः[५], तथा मनवः– स्वायम्भुव-स्वारोचिष-रैवत-उत्तमाख्याः चत्वारो मनवः ॥ यद्वा, मनु अव-बोधने इत्युक्तप्रत्यये बोधविशिष्टाः ब्रह्माद्याः देवाः विप्रक्षत्रवैश्यशूद्रभेदेन चतुर्धा स्थितत्वाच्चत्वारः[६], मानसा जाताः = मनःसम्बन्धिनो सम्भूताः ब्रह्मणो मानसा जाताः । यद्वा, ते हिरण्यगर्भात्मनो ममैव मनसा सङ्कल्प-मात्राज्जाताः[७], मद्भावाः = एवं पञ्चदश मदीयाः विभूतयः मत्तो भावः जन्म येषां ते तथा । मत्त एवोत्पत्तिमन्त इत्यर्थः । यद्वा, मदीयो भावो येषु ते मद्भावाः[८], प्रभावमेवाह **येषामिति** । येषां वसिष्ठादि महर्षीणां सनकादीनां च मनूनां च प्रागुक्तानां सृष्टिः[९], लोकं = लोके वर्तमानाः यथायथं पुत्रपौत्रादिरूपाः शिष्यप्रशिष्यादिरूपाः[१०] इमाः = ब्राह्मणाद्या[११] प्रजाः जाताः = बभूवुः[१२], वर्तन्ते इति अन्वयितव्यम् । ते ते मद्भावा इति अन्वयः ॥ ६ ॥

भाष्यम्

**पूर्वे सप्तर्षयः । "मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाः... ॥" इति मोक्षधर्मोक्ताः । ते हि सर्वपुराणेषूच्यन्ते । चत्वारः प्रथमाः स्वायम्भुवाद्याः । तेषां हि इमाः प्रजाः । न हि भविष्यतां इमाः प्रजा इति युक्तम् । विभागः प्राधान्यं च प्राथमिकत्वादेव भवति । गौतमखिलेषु चोक्तम्— "स्वायम्भुवं स्वारोचिषं रैवतं च तथोत्तमम् । वेद यः स प्रजावान्" इति । पूर्वेभ्यो ह्युत्तरा जायन्त इत्येषां प्राधान्यम् । अजातेषु च ज्यैष्ठ्यम् ।**

*प०टी०*— प्रतिमन्वन्तरं सप्तर्षिभेदात् केऽत्र विवक्षिताः ? इत्यत आह **पूर्व इति** । विशेषणादित्यर्थः । सावर्णिसंज्ञाश्चत्वारो भविष्यन्मनव इति नेत्याह **चत्वार इति** । कुतो न

भविष्यन्ति ? इत्यत आह **तेषामिति** । इतश्च स्वायम्भुवाद्या एव चत्वार इत्याह **विभाग इति** । चतुर्दशमनुषु चतुर्णां विभागेन ग्रहणं प्राधान्याभिप्रायेणैव । तच्च प्राथमिकत्वादेव युक्तमित्यर्थः । चतुर्णां प्राधान्यमेव कुतः ? यदर्थं प्रथमाद्यूह्यत इत्यत आह **गौतमेति** । इतश्च पूर्वेषां प्राधान्यमित्यत आह **पूर्वेभ्य इति** । पूर्वसम्भवादित्यर्थः । तर्ह्यन्यसन्ततिजातेभ्यो नैतेषां प्राधान्यमित्यत आह **अजातेष्विति** । 'प्राधान्यहेतुः' इति शेषः ।

*प्र०दी०*— 'महर्षयः सप्त भृग्वादयः' इति **सङ्करः** । तदसत् । 'पूर्वे' इति विशेषणेन प्रथममन्वन्तरस्थानामेव ग्रहणस्योचितत्वात् । मोक्षधर्मसंवादाच्चेति भावेन आह **पूर्वे इति** । इतोऽपि मरीच्यादय एवेत्याह **ते हीति** । 'निरुपपदेन सप्तर्षिशब्देन' इति शेषः । 'पूर्वे' इत्यस्योत्तरत्र सम्बन्धेऽप्येतत् सिद्धमिति भावेनानेकप्रमाणोपन्यासः ।

'ब्रह्मसावर्ण्यो रुद्रसावर्ण्यो दक्षसावर्ण्यो धर्मसावर्ण्य इति भविष्यन्तश्चत्वारो मनवः' इत्यन्ये । तदसदिति भावेनाह **चत्वार इति** । स्वायम्भुवस्वारोचिषरैवतोत्तमाः । प्रथमातिक्रमे कारणाभावादिति भावः ।

किं च 'येषां लोक इमाः प्रजाः' इति विशेषणमेष्वेव सम्भवति । नेतरेषु । अतोऽप्येवमित्याह **तेषां हीति** । **इमाः** वर्तमानाः **प्रजाः** अपत्यानि । ननु चतुर्दश मनवः । तेषु चतुर्णां यत् पृथक्करणं तत्र कारणेन भाव्यम् । अस्ति च तत्परोक्तेषु संज्ञासाम्यम् । न तु स्वायम्भुवादिषु । अतः कथमेतत् ? इत्यत आह **विभाग इति** । 'प्राधान्यादेव' इति शेषः । संज्ञासाम्यस्य अप्रयोजकत्वात् । अन्यथा मेरुसावर्णेरपि ग्रहणप्रसङ्गादिति भावः । अस्त्वेवम् । प्राधान्यं च परोक्तानामेवेत्यत आह **प्राधान्यं चेति** । 'स्वायम्भुवादीनाम्' इति शेषः ।

किं च श्रुतौ स्वायम्भुवादीनामेव पृथक्करणात् त एवात्रेत्याह **गौतमेति** । 'पृथक्करणे न फलम्' इति शेषः । प्राथमिकत्वादेव प्राधान्यं भवतीत्युक्तम् । तत्कथम् ? इत्यत आह **पूर्वेभ्यो हीति** । तत्सन्ततावित्यर्थः । **तेषां** पूर्वेषामुत्तरान् प्रति । तत्सन्ततावजातान् प्रति प्रथमानां कथं प्राधान्यम् ? इत्यत आह **अजातेष्विति** । विषयसप्तमीयम् । ज्यैष्ठ्यं प्रथमानां प्राधान्यमित्यर्थः ।

*भा०दी०*— शङ्कते **चतुर्णामिति** । ब्रह्मसावर्ण्यादीनामित्यर्थः । 'गौतमखिलेषूक्तं च' इत्यत्र विशेष्यमाह **पृथक्करणे न फलमिति शेष इति** ।

*भा०र०*— **भृग्वादय इति** । 'भृगुर्नभो विवस्वांश्च सुधामा विरजास्तथा । अतिनामा सहिष्णुश्च सप्तैतेऽत्र महर्षयः ॥ चाक्षुषस्यान्तरे तात' इति शास्त्रोक्ताः गीतायां महर्षिशब्देन ग्राह्या

इति आहुः । **ते हीतीति** । तथाच मोक्षधर्मे 'सप्त ब्राह्मणा इत्येते पुराणे निश्चयं गताः' इति । शङ्करः रामानुजश्च तथैवाभाषतेति सोऽपि तद्ग्रहणेनैव गृहीतः । भाष्ये 'पूर्वे' इति विशेषणोपादान-तात्पर्यमाह **इति विशेषणेनेति** । **उत्तरत्र** 'पूर्वे चत्वारः' इत्युत्तरत्र । **एतत्** निरुपपदसप्तर्षिपदेन मरीच्यादीनामेव ग्रहणम् । **अनेकेति** । मोक्षधर्मसर्वपुराणरूपानेकप्रमाणेत्यर्थः । तत्र 'मरीचिरत्र्यङ्गि-रसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयः स्मृताः' इत्युपलक्षणत्वेन ब्राह्म-वचनमुदाहृतं *तात्पर्यनिर्णये* । तथाच *हरिवंशेषु*— 'मरीचिरत्रिर्भगवान् अङ्गिराः पुलहः क्रतुः । पुलस्त्यश्च वसिष्ठश्च सप्तैते ब्रह्मणः सुताः' इति ।

**ब्रह्मसावर्ण्य इति** । यद्यपि भागवते अष्टमस्कन्धे सावर्णिशब्द इकारान्तः पठ्यते । वक्ष्यति च 'मेरुसावर्णेरपि' इति । तथापि शङ्करभाष्ये 'सावर्ण्या इति प्रसिद्धाः' इत्युक्तेरेवमुक्तम् । तथाच *विष्णुपुराणे*— 'पूर्वजस्य सवर्णोऽसौ सावर्ण्यस्तेन कथ्यते' इत्यादि । 'स्वायम्भुवाद्याः' इति भाष्याभिप्रेतानाह **स्वायम्भुवेति** । यद्यपि 'स्वायम्भुव-स्वारोचिष-उत्तम-रैवताः' इति निर्देशः कार्यः । *भागवते*— स्वायम्भुवमाद्यत्वेनोक्त्वा 'स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत्', 'तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः', 'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः', 'पञ्चमो रैवतो नाम मनुस्तापससोदरः' इति क्रमावेदनात् । किञ्च तापसस्य चतुर्थत्वावगमेन उत्तमस्य चतुर्थतया पाठो न युक्तः । तथापि 'तापसस्य भगवदवतारत्वादनुक्तिरि'ति भाष्ये वक्ष्यमाणतया तस्येहा-ग्राह्यत्वात्, 'स्वायम्भुवं स्वारोचिषं रैवतं च तथोत्तमम्' इति भाष्योपात्तप्रमाणानुसाराच्चैवं निर्देशः कृतः । क्रमस्तु भागवतोक्त एवेति अभियुक्ताः ।

भाष्यगतप्रथमपदतात्पर्यमाह **प्रथमेति** । **एष्वेव** स्वायम्भुवादिषु उक्तेषु चतुर्थेष्वेव **इतरेषु** परोक्तेषु ब्रह्मसावर्ण्यादिषु । भाष्यभाषितभाविदूषणसौकर्याय इदंशब्दार्थमाह **इमा इति** । 'अयं घटः' इत्यादौ वर्तमानकालोल्लेखानुभवादिति भावः । 'प्रजा स्यात् सन्ततौ जने' इत्यभिधानात् प्रजा-शब्देन जनग्रहणे 'लोक इमाः' इत्यनन्वितम् । 'लोकस्तु भुवने जने' इति लोकशब्दस्य जनार्थ-त्वात् ? इत्यत आह **प्रजा अपत्यानीति** । सन्ततिरत्र प्रजाशब्दार्थ इति भावः । **चतुर्दशमनवः** स्वायम्भुव-स्वारोचिष-उत्तम-तापस-रैवत-चाक्षुष-वैवस्वत-सावर्णि-दक्षसावर्णि-ब्रह्मसावर्णि-धर्मसावर्णि-मेरुसावर्णि-देवसावर्णि-इन्द्रसावर्णिनामानः चतुर्दश *भागवतोक्ता* मनवः । *हरिवंश-विष्णुपुराणयोस्तु* वेदसावर्णीन्द्रसावर्णी त्रयोदशचतुर्दशमनू रौच्यभौत्यशब्दाभ्यां निर्दिष्टौ । **चतुर्णां** ब्रह्मसावर्ण्यादीनां संज्ञासाम्यं सर्वत्र सावर्ण्यशब्दानुस्यूतेरिति भावः ।

भविष्यन्ति ? इत्यत आह **तेषामिति** । इतश्च स्वायम्भुवाद्या एव चत्वार इत्याह **विभाग इति** । चतुर्दशमनुषु चतुर्णां विभागेन ग्रहणं प्राधान्याभिप्रायेणैव । तच्च प्राथमिकत्वादेव युक्तमित्यर्थः । चतुर्णां प्राधान्यमेव कुतः ? यदर्थं प्रथमाद्यूह्यत इत्यत आह **गौतमेति** । इतश्च पूर्वेषां प्राधान्यमित्यत आह **पूर्वेभ्य इति** । पूर्वसम्भवादित्यर्थः । तर्ह्यन्यसन्ततिजातेभ्यो नैतेषां प्राधान्यमित्यत आह **अजातेष्विति** । 'प्राधान्यहेतुः' इति शेषः ।

***प्र०दी०***— 'महर्षयः सप्त भृग्वादयः' इति **सङ्करः** । तदसत् । 'पूर्वे' इति विशेषणेन प्रथममन्वन्तरस्थानामेव ग्रहणस्योचितत्वात् । मोक्षधर्मसंवादाच्चेति भावेन आह **पूर्व इति** । इतोऽपि मरीच्यादय एवेत्याह **ते हीति** । 'निरुपपदेन सप्तर्षिशब्देन' इति शेषः । 'पूर्वे' इत्यस्योत्तरत्र सम्बन्धेऽप्येतत् सिद्धमिति भावेनानेकप्रमाणोपन्यासः ।

'ब्रह्मसावर्ण्यो रुद्रसावर्ण्यो दक्षसावर्ण्यो धर्मसावर्ण्य इति भविष्यन्तश्चत्वारो मनवः' इत्यन्ये । तदसदिति भावेनाह **चत्वार इति** । स्वायम्भुवस्वारोचिषरैवतोत्तमाः । प्रथमातिक्रमे कारणाभावादिति भावः ।

किं च 'येषां लोक इमाः प्रजाः' इति विशेषणमेष्वेव सम्भवति । नेतरेषु । अतोऽप्येवमित्याह **तेषां हीति** । **इमाः** वर्तमानाः **प्रजाः** अपत्यानि । ननु चतुर्दश मनवः । तेषु चतुर्णां यत् पृथक्करणं तत्र कारणेन भाव्यम् । अस्ति च तत्परोक्तेषु संज्ञासाम्यम् । न तु स्वायम्भुवादिषु । अतः कथमेतत् ? इत्यत आह **विभाग इति** । 'प्राधान्यादेव' इति शेषः । संज्ञासाम्यस्य अप्रयोजकत्वात् । अन्यथा मेरुसावर्णेरपि ग्रहणप्रसङ्गादिति भावः । अस्त्वेवम् । प्राधान्यं च परोक्तानामेवेत्यत आह **प्राधान्यं चेति** । 'स्वायम्भुवादीनाम्' इति शेषः ।

किं च श्रुतौ स्वायम्भुवादीनामेव पृथक्करणात् त एवात्रेत्याह **गौतमेति** । 'पृथक्करणे न फलम्' इति शेषः । प्राथमिकत्वादेव प्राधान्यं भवतीत्युक्तम् । तत्कथम् ? इत्यत आह **पूर्वेभ्यो हीति** । तत्सन्ततावित्यर्थः । **तेषां** पूर्वेषामुत्तरान् प्रति । तत्सन्ततावजातान् प्रति प्रथमानां कथं प्राधान्यम् ? इत्यत आह **अजातेष्विति** । विषयसप्तमीयम् । **ज्यैष्ठ्यं** प्रथमानां प्राधान्यमित्यर्थः ।

***भा०दी०***— शङ्कते **चतुर्णामिति** । ब्रह्मसावर्ण्यादीनामित्यर्थः । 'गौतमखिलेषूक्तं च' इत्यत्र विशेष्यमाह **पृथक्करणे न फलमिति शेष इति** ।

***भा०र०***— **भृग्वादय इति** । 'भृगुर्नभो विवस्वांश्च सुधामा विरजास्तथा । अतिनामा सहिष्णुश्च सप्तैतेऽत्र महर्षयः ॥ चाक्षुषस्यान्तरे तात' इति शास्त्रोक्ताः गीतायां महर्षिशब्देन ग्राह्या

इति आहुः । **ते हीतीति** । तथाच मोक्षधर्मे 'सप्त ब्राह्मणा इत्येते पुराणे निश्चयं गताः' इति । शङ्करः रामानुजश्च तथैवाभाषतेति सोऽपि तद्ग्रहणेनैव गृहीतः । भाष्ये 'पूर्वे' इति विशेषणोपादान-तात्पर्यमाह **इति विशेषणेनेति** । **उत्तरत्र** 'पूर्वे चत्वारः' इत्युत्तरत्र । **एतत्** निरुपपदसप्तर्षिपदेन मरीच्यादीनामेव ग्रहणम् । **अनेकेति** । मोक्षधर्मसर्वपुराणरूपानेकप्रमाणेत्यर्थः । तत्र 'मरीचिरत्र्यङ्गि-रसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयः स्मृताः' इत्युपलक्षणत्वेन ब्राह्म-वचनमुदाहृतं *तात्पर्यनिर्णये* । तथाच *हरिवंशेषु*— 'मरीचिरत्रिर्भगवान् अङ्गिराः पुलहः क्रतुः । पुलस्त्यश्च वसिष्ठश्च सप्तैते ब्रह्मणः सुताः' इति ।

**ब्रह्मसावर्ण्य इति** । यद्यपि भागवते अष्टमस्कन्धे सावर्णिशब्द इकारान्तः पठ्यते । वक्ष्यति च 'मेरुसावर्णेरपि' इति । तथापि शङ्करभाष्ये 'सावर्ण्या इति प्रसिद्धाः' इत्युक्तेरेवमुक्तम् । तथाच *विष्णुपुराणे*— 'पूर्वजस्य सवर्णोऽसौ सावर्ण्यस्तेन कथ्यते' इत्यादि । 'स्वायम्भुवाद्याः' इति भाष्याभिप्रेतानाह **स्वायम्भुवेति** । यद्यपि 'स्वायम्भुव-स्वारोचिष-उत्तम-रैवताः' इति निर्देशः कार्यः । *भागवते*— स्वायम्भुवमाद्यत्वेनोक्त्वा 'स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत्', 'तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः', 'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः', 'पञ्चमो रैवतो नाम मनुस्तापससोदरः' इति क्रमावेदनात् । किञ्च तापसस्य चतुर्थत्वावगमेन उत्तमस्य चतुर्थतया पाठो न युक्तः । तथापि 'तापसस्य भगवदवतारत्वादनुक्तिरि'ति भाष्ये वक्ष्यमाणतया तस्येहा-ग्राह्यत्वात्, 'स्वायम्भुवं स्वारोचिषं रैवतं च तथोत्तमम्' इति भाष्योपात्तप्रमाणानुसाराच्चैवं निर्देशः कृतः । क्रमस्तु भागवतोक्त एवेति अभियुक्ताः ।

भाष्यगतप्रथमपदतात्पर्यमाह **प्रथमेति** । **एष्वेव** स्वायम्भुवादिषु उक्तेषु चतुर्थेष्वेव **इतरेषु** परोक्तेषु ब्रह्मसावर्ण्यादिषु । भाष्यभाषितभाविदूषणसौकर्याय इदंशब्दार्थमाह **इमा इति** । 'अयं घटः' इत्यादौ वर्तमानकालोल्लेखानुभवादिति भावः । 'प्रजा स्यात् सन्ततौ जने' इत्यभिधानात् प्रजा-शब्देन जनग्रहणे 'लोक इमाः' इत्यनन्वितम् । 'लोकस्तु भुवने जने' इति लोकशब्दस्य जनार्थ-त्वात् ? इत्यत आह **प्रजा अपत्यानीति** । सन्ततिरत्र प्रजाशब्दार्थ इति भावः । **चतुर्दशमनवः** स्वायम्भुव-स्वारोचिष-उत्तम-तापस-रैवत-चाक्षुष-वैवस्वत-सावर्णि-दक्षसावर्णि-ब्रह्मसावर्णि-धर्मसावर्णि-मेरुसावर्णि-देवसावर्णि-इन्द्रसावर्णिनामानः चतुर्दश *भागवतोक्ता* मनवः । *हरिवंश-विष्णुपुराणयोस्तु* वेदसावर्णीन्द्रसावर्णी त्रयोदशचतुर्दशमनू रौच्यभौत्यशब्दाभ्यां निर्दिष्टौ । **चतुर्णां** ब्रह्मसावर्ण्यादीनां संज्ञासाम्यं सर्वत्र सावर्ण्यशब्दानुस्यूतेरिति भावः ।

**स्वायम्भुवादिषु** स्वायम्भुव-स्वारोचिष-रैवत-उत्तमेषु । **एतद्** व्याख्यानम् । भाष्ये 'विभागः' इत्यस्य 'पृथक्करणम्' इत्यर्थः । **मेरुसावर्णेरपीति** । *भागवते विष्णुपुराणे* च सावर्णि-शब्दगृहीतस्य अष्टमस्य मनोरेव मेरुसावर्णिशब्देनापि ग्रहणमभ्युपगम्यैवमुक्तम् । मेरुरिव सावर्णि-र्मेरुसावर्णिरिति तदर्थ इति *केचित्* । 'भविता मेरुसावर्णी राजन् द्वादशमो मनुः' इति भागवत-कोशविशेषे, 'रुचेः प्रजापतेः पुत्रो रौच्यो नाम भविष्यति । तस्य चेन्मेरुसावर्णिः' इति *मत्स्यपुराणे, हरिवंशे सप्तमेऽध्याये*— 'तथैव मेरुसावर्णिः मनवस्तु चतुर्दश' इति मेरुसावर्णेरुपात्तत्वात् तस्यापि संज्ञासाम्यात् ग्रहणप्रसङ्गादित्यर्थः । *भागवते* वेदसावर्णीन्द्रसावर्ण्योरुपात्तत्वेऽपि 'त्रयोदशो रौच्यनामा भविष्यति मुने मनुः । भौत्यश्चतुर्दशश्चात्र मैत्रेय भविता मनुः' इति विष्णुपुराणे नामान्तरेण त्रयोदशचतुर्दशयोर्ग्रहणाद् विष्णुपुराणोक्तस्यैव परैर्गृहीतत्वादेवमुक्तिर्युक्ता । तथाच अष्टमनवम-दशमैकादशानां ब्रह्मसावर्ण्य-रुद्रसावर्ण्य-धर्मसावर्ण्य-दक्षसावर्ण्यानां भविष्यतां मनूनां ग्रहणे भागवतोक्तमेरुसावर्णेरपि नामसाम्यात् ग्रहणप्रसङ्गो दुर्वार इति भावेनैवमुक्तमित्यपि **आहुः** ।

**एवं** प्राधान्यात् पृथक्करणमित्येवमस्तु । **पूर्वोक्तानां** सावर्ण्यानाम् । तथा च स्वायम्भुवादिषु हेतुरसिद्ध इति भावः । भाष्ये चशब्दो युक्त्यन्तरसमुच्चायक इति भावेनाह **किञ्चेति** । **अत्र** 'ग्राह्याः' इति शेषः । 'वेद यः स प्रजावान्' इति श्रवणादाह **फलमितीति** । ननु स्वायम्भुवपुत्रः प्रियव्रतः, तत्पुत्राः उत्तम-तापस-रैवता इति भागवतादौ प्रसिद्धम् । तत्कथं 'पूर्वेभ्य उत्तरा जायन्ते' इत्युक्तिः ? इत्यत आह **तत्सन्ततावित्यर्थ इति** । प्राधान्यं सप्रतियोगिकमिति तद्दर्शयति **उत्तरान् प्रतीति** । **तत्सन्ततावजातान् प्रति** स्वारोचिषादीन् प्रति । स्वारोचिषोऽग्नेः पुत्रः, चाक्षुषः चक्षुषः सुतः, । वैवस्वतसावर्णी सूर्यपुत्रौ, दक्षसावर्णिर्वरुणपुत्रः, ब्रह्मसावर्णिः उपश्लोकात्मजः इत्यस्य भागवते प्रसिद्धेरिति भावः । **विषयसप्तमीति** । तथाच अजातविषये पूर्वेषां वयसा ज्यैष्ठ्यमेव प्राधान्यप्रयोजकमिति भाष्यार्थ इति भावः ।

भाष्यम्

**तापसस्य भगवदवतारत्वादनुक्तिः । तच्च भागवते प्रसिद्धम् । मानसत्वं च सर्वेषां मनूनामुक्तं भागवते, "ततो मनून् ससर्जान्ते मनसा लोकभावनान्" इति ।**

***प०टी०***— तर्हि चतुर्थं तापसमगृहीत्वा रैवतः किमिति गृहीतः ? इत्यत आह **तापसस्येति** । तापसस्य भगवदवतारत्वं कुतः ? इत्यत आह **तच्चेति** । नहि भगवान् स्वतो जायत इत्यर्थः । प्रियव्रतादेरुत्पन्नमनूनां कुतो मानसत्वम् ? इत्यत आह **मानसत्वं चेति** । इतश्च स्वायम्भुवाद्या एव ।

*प्र०दी०*— इदमुक्तं भवति । प्रधानगुणभावो हि सति सम्बन्धे भवति । अयुगपद्भाविषु चैतेषु प्रथमानामेव प्राधान्यमुत्तरेषां गुणत्वमुक्तविधया सम्भवति । न त्वन्यथा कथमपीति । प्रथमाश्चेत् गृह्यन्ते तदा चतुर्थस्तापसो गीताभिप्रेततया कुतो न व्याख्यायते ? इत्यत आह **तापसस्येति** । **अनुक्तिः** अव्याख्यानम् । भगवति च 'मद्भावा मानसा जाताः' इति विशेषणासम्भवादिति भावः । तापसस्य भगवदवतारत्वं कुतः ? इत्यत आह **तच्चेति** । ''चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः । हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात् ॥'' इत्यादिना ।

ननु यदि विशेषणासम्भवात् प्रथमप्राप्तातिक्रमेण तत्सम्भवतां ग्रहणम्, तर्हि 'मानसा जाताः' इति विशेषणासम्भवादेतान् परित्यज्य ब्रह्मसावर्ण्यादय एव ग्राह्याः । तेषु तत्सम्भवात्' इति भास्करः । तत्राह **मानसत्वं चेति** । चतुर्णां दक्षदुहितरि किल भावो युगपदासीदित्येवंविधं मानसत्वं न सर्वेषामिति चेन्न । अत्रार्थे तद्धितोत्पत्तेरस्मरणात् ।

*भा०दी०*— **अत्रार्थ इति** । क्वचिद् भावयुक्तमनस्कत्वार्थे 'मानसाः' इति मनःशब्दाद् अण्प्रत्यये रूपम् । **तद्धितोत्पत्तेः** पाणिनिरस्मृत्यनुक्तेः, किन्त्वपत्यार्थ एवेत्यर्थः ।

*भा०र०*— तत्सन्ततावजातान् प्रति प्रथमानां कथं प्राधान्यम् ? इति कृतचोद्यं भाष्यभावोक्त्या परिहरति **इदमुक्तं भवतीति** । 'सम्बन्धे सति' इत्यत्र सम्बन्धः । प्रथमत्व-उत्तरत्वरूपो द्रष्टव्यः । स एव कुतः ? इत्यतो हेत्वर्थगर्भविशेषणम् **अयुगपद्भाविष्विति** । क्रमभाविष्वित्यर्थः । सम्बन्धाभावोपपादनाय 'अयुगपद्भाविषु 'इत्युक्तम्' इत्यपि **आहुः** । **उक्तविधया** 'पूर्वेभ्यो हि' इत्यादिभाष्योक्तविधया । **अन्यथा** उक्तविधया विना प्रकारान्तरेण। 'इति' इत्यस्य पूर्वेण सम्बन्धः।

प्रकृतप्रश्नपरिहारार्थमाह **अनुक्तिरव्याख्यानमिति** । **विशेषणासम्भवात्** विशेषणद्वयासम्भवात् । 'तच्च भागवते प्रसिद्धम्' इति भाष्ये = 'तापसस्य भगवदवतारत्वं भागवते प्रसिद्धम्' इत्युक्तमयुक्तम् । तत्र 'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः' इति तापसनामानं चतुर्थमनुमभिधाय, 'वृषख्यातिर्नरः केतुरित्याद्या दश तत्सुताः । सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः । ज्योतिर्धामादयः सप्त ऋषयस्तापसेऽन्तरे । देवा वैधृतयो नाम विधृतेस्तनया नृप । नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा', 'तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः । हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात्' इति तापसमन्वन्तरे हरिनामकस्य भगवद्रूपस्य गजेन्द्रमोचकत्वाभिधानेन तापसस्य भगवदवतारत्वोक्तेरनाकलनात्, इत्यतो हरिनामकस्य तावत् कृष्णादिश्रुत्या गरुडवाहनलिङ्गेन गजेन्द्रमोचकत्वादिलिङ्गेन च भगवदवतारत्वं सिद्धम् । *द्वितीयस्कन्धतात्पर्योदाहृतम्*— 'हरिस्तापसनामा-

ऽसौ जातस्तापसि वै मनुः । गजेन्द्रं मोचयामास ससर्ज च जगद्विभुः' इति *मात्स्यवचनं* चैन-मेवार्थमाह । एवं च तापसनामा मनुरेव हरितया आहूतो गजेन्द्रं अमोचयत् इति तापसस्य हरेरेव भगवदवतारत्वमवबोधयितुं व्यवहितमपि 'हरिरित्याहुतो येन' इति हरिपदघटितमर्धं अत्र संयोज्य पठति— **चतुर्थ उत्तमभ्रातेति** । भाष्ये चशब्दो 'भागवते च' इति संयोजने 'हरिस्तापसनामा-ऽसौ', 'चतुर्थस्तापसो नाम्ना' इत्यादिपुराणे चेति समुच्चयार्थ इति भावेन आदिशब्दः प्रयुक्तः ।

**इदमत्रावधेयम्**— उत्तमः तापसो रैवतश्च इति त्रयो मनवः प्रियव्रतराजस्य पुत्राः । तत्र उत्तममन्वन्तरे सत्यसेननामको' भगवदवतारः, तापसमन्वन्तरे हरिनामको भगवदवतारः । तत्रापि यस्तापसनामा मनुः हरिशब्देनापि भणितः प्रियव्रतपुत्रः स एव स्वान्तरे हरिण्यां हरिमेधसः सकाशात् हरिनामा पुनरप्यवतीर्णः । रैवतः पञ्चमो मनुः । तत्र वैकुण्ठनामा भगवदवतार इति । एवं सति 'तापसनामाऽसौ मनुरेव हरिरित्याहूतो गजेन्द्रं मोचयासास' इति द्वितीयस्कन्धतात्पर्यम्, 'त्वां तापसं मोचितहस्तिमल्लम्' इति पण्डिताचार्यस्योक्तिः, 'श्रुत्वा हरिस्तमरणार्थिनमप्रमेयः' इति भागवतश्लोके तदा तापसनामा हरिः भगवान् अरणार्थिनम् = शरणार्थिनमिति तट्टीकावाक्यं च सङ्गच्छते । एतेन 'प्रियव्रतसुतस्तापसो मनुः हरिश्च हरिमेधसः पुत्र उक्त इति टीकायां कथ-मेकार्थप्रतिपादकतया अर्धद्वयमेकीकृत्य पठितम् ? इति चोद्यं निरस्तम् ।

तापसनामा मनुरेव हरिनामकश्च प्रथितो गजेन्द्रमोचकः । स एव पुनरंशेन हरिण्यां हरिमेधसो हरिनामा भगवदवतारश्चेत्यर्थस्फोरणाय *प्रमेयदीपिकायां* 'चतुर्थ उत्तमभ्राता' इत्यर्धं 'हरिरित्याहुतो येन' इत्यर्धं च व्यवहितमप्येकीकृत्य पठितवान् जयतीर्थमुनिरिति द्वितीयस्कन्धभागवतोपासनायां सुधीन्द्रतीर्थश्रीमच्चरणैः विभावितत्वात् । तथा च भागवतकथासङ्ग्रहे *विजयीन्द्रस्वामिनः*— यस्तापसनामा मनुर्गजेन्द्रेण हरिरित्याहूतः तं ररक्ष, स एव हरिमेधसो हरिण्यां हरिर्जातः । स च प्रियव्रतपुत्रं भगवदंशं तापसनामकं मनुं त्रिशिखनामकमिन्द्रं 'सत्यका हरयो वीराः' इति 'शास्त्रोक्त-देवान् ज्योतिर्व्योमादीन् सप्तऋषींश्च ररक्ष' इति ।

**यत्तु**— 'तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधस' इति भागवते पठ्यमानोऽर्धः कल्पितः, टीकायां तदपाठात्' इति । तन्न । टीकायामेवं पाठस्य तापसो भगवदवतारो भागवते प्रसिद्ध इति भाष्यघटनाय कृतत्वात् । भागवत एव 'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः' इति वचनानन्तरं अविगानेन पठ्यमानस्य 'वृषख्यातिर्नरः सेतुः' इत्यादेरपि टीकायामपाठेन कल्पितत्वप्रसङ्गाच्च । न च इष्टापत्तिः । तस्यापि कल्पितत्वे तत्पुत्रादेरप्यनुत्तयापत्त्या प्रायपाठविरोधात् । 'वृषख्यातिः' इत्यादिवचनानि टीकोपात्तश्लोकानन्तरमेव पठनीयानीति तु दृष्टहान-अदृष्टकल्पनरूपत्वाद् अयुक्तम् ।

यदि च सूत्रभाष्ये— आत्मशब्दस्य भगवत्परत्वसिद्धये 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते', अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् । दत्तं दूर्वाससं सोमं आत्मेशब्रह्मसम्भवान्' इति भागवत-पाठेऽपि 'अनसूया' इत्यर्धं परित्यज्य तत्पूर्वोत्तरार्धपठनमिव, अत्रापि टीकायां 'तत्रापि जज्ञे' इत्यर्धं परित्यज्य उपयुक्तयोरेवार्धयोः पठनमिति मन्यसे, तदा भाष्यघटनाय उपयुक्तमेव गृहीतमिति क्व कल्पितत्वजल्पः ।

किञ्च विष्णुपुराणे 'तापसस्यान्तरे चैव सम्प्राप्ते पुनरेव तु । हरिण्यां हरिभिः सार्धं हरिरेव बभूव ह' इति हरिनामकावतारस्य हरिण्यां प्रादुर्भावस्य स्पष्टमभिधानेन, *विष्णुरहस्ये अष्टाविंशेऽध्याये*— 'चतुर्थस्तापसो नाम्ना ह्युत्तमस्यानुजो मनुः । स्वयमेव ह्यधो विष्णुः लीलया मनुतां गतः । यस्य मे तनया जाताः वृषख्यात्यादयो दश । नासत्यस्त्रिशिखो नाम्ना प्राप्त इन्द्रपदं सुराः । हरिवीरा-दयस्तत्र विधृतेस्तनयास्तु ये । ततौ वैधृतयो नाम धृता वेदास्तु तैः सह । हरिमेधा ऋषिर्नाम तस्य स्त्री हरिणी सति । तस्यां जज्ञे हरिः साक्षात् अहमेव सुरेश्वरः' इत्युक्त्वा, *तत्रैव चतुस्त्रिंशेऽध्याये*— 'स्वशक्त्या युद्धतस्तस्य शक्तोऽभून्न जलेचरः । प्राणसंशयमापन्नो गजो दीनोऽस्मरद्धरिम् । तदैवा-विरभूत् साक्षात् शङ्खचक्रगदाधरः । दारयित्वाऽरिणा नक्रं ग्राहस्थममोचयद् गजम् । ग्राहं चामोचयत् तस्मात् ग्राहदेहाद्धरिस्तदा' इति हरिनामकस्य भगवदवतारस्यैव विस्पष्टमुपवर्णनेन भागवते पठ्य-मानस्य 'तत्रापि जज्ञे' इति अर्धस्य कल्पितत्वकल्पनम् अतिसाहसम् । 'त्वां तापसं मोचितहस्ति-मल्लम्' इति पठितपण्डिताचार्यसूक्तिः । तापसस्यैव हरिशब्दितस्य गजेन्द्रमोचकमित्येव विस्पष्ट-मावेदयति इति सर्वं समञ्जसम् ।

**विशेषणासम्भवात्** । 'मद्भावा मानसा जाताः' इति विशेषणासम्भवात् । **प्रथमप्राप्तेति** । चतुर्थतया क्रमप्राप्ततापसातिक्रमेणेत्यर्थः । **तत्सम्भवतां** तत् = विशेषणं सम्भवद् येषु तेषाम्, सम्भवद्विशेषणकानामित्यर्थः । **एतान्** स्वायंभुव-स्वारोचिष-रैवत-उत्तमान् **ब्रह्मसावर्ण्यादयः** ब्रह्मसावर्ण्यो रुद्रसावर्ण्यो धर्मसावर्ण्यो दक्षसावर्ण्य इति चत्वारः । भाष्ये 'ततो मनून्' इत्यर्धात् पूर्वं 'स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः' इति तृतीयस्कन्धगतश्लोकार्धसंयोजने, 'ससर्ज' इत्याख्यातोपात्तकर्तृलाभः । 'सर्वेषाम्' इति भाषणमनुपपन्नम् ? दक्षप्रजेश्वरकन्यायां चतुर्णामिव सर्वेषां मनूनां मनो लग्नमित्यनुपलम्भादिति भावेन शङ्कते **चतुर्णामिति** । **भावः** मनः । **अत्रार्थ इति** । जातभवाद्यर्थ इव, 'युगपदेकत्र मनः कृतमेभिः' इति पराभिप्रेतेऽर्थे मनःशब्दाद् अण्प्रत्यय-रूपतद्धितप्रत्ययोत्पत्तेः पाणिनिनाऽननुशासनादित्यर्थः ।

भाष्यम्

**अन्यपुत्रत्वं त्वपरित्यज्यापि शरीरं तद् भवति ।**

*प्र०दी०*— ननु ब्रह्मपुत्रास्सन्तु मानसाः । न तु तदा ते मनवः । किन्तु तच्छरीरं परित्यज्य प्रियादिपुत्रा जातास्तदैव । अतो मनुषु मानसत्वमसम्भाव्यमित्यत आह **अन्येति** । तन्मानसं **शरीरं अपरित्यज्य** स्थितानां **अपि अन्यपुत्रत्वं सम्भवति** इति योजना । 'द्वितीये शरीरे जाते तत्पूर्वशरीरेणैक्यमापद्यते' इति सम्प्रदायविदः ।

*भा०दी०*— **प्रियादीति** । प्रियव्रतादीत्यर्थः । ल्यबन्तनिर्वाहायोक्तं **स्थितानामिति** ।

*भा०र०*— **तदा** ब्रह्मपुत्रत्वदशायाम् । मनुत्वदशायां ब्रह्ममनःसम्भूतत्वरूपं मानसत्वविशेषणमसम्भवि । मानसत्वदशायां मनुत्वमेव नास्तीति भावः । प्रियव्रतादिपुत्रत्वमपरित्यज्य स्थितानामेव पश्चात् तन्मानसं शरीरं भवतीति यथाश्रुतयोजनायाम्, प्रियव्रतादिपुत्रत्वानन्तरं मानसशरीरप्राप्तिः प्रतीयते । सा च प्रमाणबाधितेति भावेन भाष्यं अन्यथा योजयतीति **तन्मानसमित्यादि** । ल्यबुपपत्तये उक्तम् **स्थितानामिति** । 'अन्यपुत्रत्वम्' इति भाष्ये विदुरयुधिष्ठिरादिवत् शरीरान्तरग्रहणाभिप्राये मनुषु मानसत्वमसम्भव्येवेति कृतचोद्यनिरासो न स्यात् ? इत्यतो भाष्यं घटयितुमाह **द्वितीये शरीर इति** । नग्नजितः पुत्र्या नीलादेव्या गोपालकन्यकायाश्च नीलादेव्या द्वितीयशरीरस्य पूर्वशरीरेणैक्यं पुराणादावावेद्यते । तद्वदिति भावः । **सम्प्रदायः** शिष्येषु प्रदानम् ।

भाष्यम्

**प्रमाणं च उभयविधवाक्यान्यथानुपपत्तिरेव । 'पूर्वे' इति विशेषणाच्च एतत् सिद्धिः । मत्तो भावो येषां ते मद्भावाः । ये ते ब्रह्मणो मनसा जातास्ते मत्त एव जाता इति भावः ॥ ६ ॥**

*प०टी०*— तदाह **पूर्व इति** । 'मद्भावा' इत्यस्य मत्स्वायम्भुव इति प्रतीतिनिरासायार्थमाह **मत्त इति** । तर्हि कथं ब्रह्ममानसपुत्रत्वम् ? इत्यत आह **य इति** ॥ ६ ॥

*प्र०दी०*— किमत्र प्रमाणम् ? इत्यत आह **प्रमाणं चेति** । मनूनामेव ब्रह्ममानसपुत्रत्ववाक्यं प्रियव्रतादिपुत्रत्ववाक्यं चेत्युभयविधवाक्यम् । उपचारत्वकल्पना क्लिष्टैव । किं च 'पूर्वे' इति विशेषणं पूर्वेणैव सम्बध्यते परेणैव वा उभाभ्यामपीति त्रयः पक्षाः । पक्षत्रयेऽपि चत्वारो मनवः प्रथमा एवेति सिद्ध्यति । आद्ये सप्तर्षीणां प्रथमत्वेन तत्साहचर्यात् । द्वितीयतृतीययोर्वचनादेवेति भावेनाह **पूर्व इति** ।

'मयि भावो येषाम्' इति व्याख्यानं प्रकृतासङ्गतं, कारणत्वस्यात्र प्रकृतत्वादिति भावेनाह **मत्त इति । भावः** जन्म । ननु 'मानसा जाताः' इत्यनेन भगवतः तत्कारणत्वमुच्यते । मैवम् । 'ततो मनून्' इति वचनस्य सत्त्वेन 'ब्रह्मणो मानसा जाताः' इति व्याख्येयत्वात् । तर्हि कथं न व्याहतिः ? इत्यत आह **ये त इति । मत्त एव** ब्रह्मान्तर्यामिणः । ब्रह्मा तु द्वारमात्रमिति भावः ॥ ६ ॥

*भा०दी०*— ननु भूतपूर्वगत्यादीनां मानसत्वं मनुत्वं वा, अन्यतरद्गौणमिति कल्प्यतामित्यत आह **उपचारत्वेति । प्रकृतत्वादिति** । 'मत्त एव पृथग्विधाः' इत्यनेनेति भावः । **भगवतस्तत्कारणत्वमिति** । तथा च तेन 'मद्भावम्' इत्यस्य पुनरुक्ततेति भावः । **ब्रह्मण इति** । विरिञ्चस्येत्यर्थः ॥ ६ ॥

*भा०र०*— **पुत्रत्ववाक्यम्** पुत्रत्वप्रतिपादकं वाक्यम् । प्रियव्रतादिपुत्रभावदशायां पूर्वदेहत्यागाभ्युपगमेऽपि भूतपूर्वगत्या मानसत्वमस्तु । मानसत्वदशायां मनुत्वं भाविभावाभिप्रायेण अस्तु इति अन्यतरद्गौणमित्यत आह **उपचारेति** । मानसशब्दस्य मनुशब्दस्य वा गौणवृत्तिकल्पनेत्यर्थः । 'अनन्यथोपपत्तिः' इति भाष्यपाठे 'अन्यथाऽनुपपत्तिः' इत्यर्थः । भाष्यगतचशब्दार्थोक्तिः **किञ्चेति। तत्साहचर्यात्** प्रथममन्वन्तरस्थसप्तर्षिसहपाठात् । सहपाठश्च धर्मग्राहकः 'विपराभ्यां जेः' इत्यादौ दृष्ट इति भावः । 'मद्भावाः = मद्गतभावनाः' इति शाङ्करभाष्यं तात्पर्यतोऽनुवदति **मयीति** । **प्रकृतत्वात्** 'अहमादिर्हि देवानाम्', 'मत्त एव पृथग्विधाः' इति प्रकृतत्वात् । 'भव उत्पत्तिः', 'भावः सत्ता' इत्यन्यत्र टीकोक्तरीत्या वैय्याकरणरीत्या च भावशब्दस्य सत्तावाचित्वे 'मद्भावाः' इति सत्ताप्रदत्वलाभाद् 'विशेषकारणत्वमाह' इति प्रतिज्ञाविरोधः ? इत्यत आह **भावो जन्मेति** । 'भावः पुमान् जन्मनि स्यात्' इत्यमरकोषः ।

ननु 'मत्तो भावः' इति भाषणमयुक्तम् ? 'मानसा जाताः' इति गीताचार्येण स्वमनोजातत्वोक्त्या पुनरुक्त्यापत्तेः, इति शङ्कते **नन्विति । ब्रह्मण इति** । स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः' इति चतुर्मुखस्य 'ततो मनून्' इत्यत्र प्रकृतत्वादिति भावः । **व्याख्येयत्वात्** 'मानसा जाताः' इति गीतायाः । **व्याहतिः** चतुर्मुखमनोजातत्व-भगवज्जातत्वोक्त्योर्विप्रतिषेधः । व्याहतिं परिहर्तुं 'मत्तः' इत्यस्यार्थमाह **मत्त इति** । तर्हि भागवतविरोधः ? इत्यत उक्तम् **ब्रह्मा त्विति** ॥ ॥ ६ ॥

**गीतातात्पर्यनिर्णयः**

**"मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।**
**वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयः स्मृताः ॥" इति ब्राह्मे ।**

*प्रका०*— "महर्षयस्सप्त पूर्वे चत्वारो मनवस्तथा" इत्यस्यार्थमाह **मरीचिरित्यादिना** ।

***न्या०दी०*— न केवलं भूतानां बुद्ध्यादिकं मत्तो भवत्यपि तु सर्वभूतानि चेत्युच्यते 'महर्षयः' इति । तत्र प्रतिमन्वन्तरं सप्तर्षिभेदोक्तेरत्र के विवक्षिता इति चेत् पूर्वमन्वन्तरस्था एव । पूर्व इति विशेषणात् । के पूर्वमन्वन्तरस्था इत्यतस्तान् स्मृत्यैव दर्शयति मरीचिरिति ॥**

**गीतातात्पर्यनिर्णयः**

**"मनवो बोधवैशेष्याद् देवा ब्रह्मादयः स्मृताः ।**
**विप्रादिवर्णभेदेन चत्वारो बहवोऽपि ते ॥**

***न्या०दी०*— चतुर्दशमनुषु चत्वारोऽत्र के विवक्षिता इत्यतो न केवलमत्र मनुपदेन प्रसिद्धमनवोऽपि तु सर्वदेवाः । तेषां चतुष्ट्वं विप्रादिवर्णविवक्षयेत्यत्र स्मृतिमाह मनव इति ॥ मनु अवबोधन इति धातोः बोधवत्त्वान्मनव इत्युक्ते बोधस्य सर्वप्राणिसाधारणत्वात् को विशेषो देवादीनामित्यतो बोधवैशेष्यादित्युक्तम् ।**

*भा०दी०*— **प्रसिद्धमनव इति** । स्वायम्भुवस्वारोचिषरैवतोत्तमाख्याः प्रसिद्धमनव इत्यर्थः ॥ **विप्रादिवर्णविवक्षयेति** । देवेषु केचित् ब्राह्मणाः केचन क्षत्रियाः केचन वैश्याः केचन शूद्राः सन्तीति तद्विवक्षया चतष्ट्वमित्यर्थः । व्यक्तमेतच्चातुर्विध्यं वाजसनेयभाष्ये प्रथमेऽध्याये "विष्णोर्ब्राह्मणजातिरस्सन् जज्ञे ब्रह्मा चतुर्मुख" इत्यादिनेति ज्ञेयम् ॥

**गीतातात्पर्यनिर्णयः**

**दीनत्वाद् देवनामानस्त्वन्ये ब्रह्मादिनामकाः ।**
**अवैष्णवकृतो यज्ञो दीनैर्देवैस्तु भुज्यते ॥**
**वैष्णवैस्तु कृतो यज्ञो देवैर्हि मनुनामकैः ।**
**मरीच्याद्यास्तु तत्पुत्रा मानवा नामतः स्मृताः ॥**

तत्पुत्रपौत्रा मुनयस्तथा मानवमानवाः ।
तेभ्यो मनुष्या इत्येषा सृष्टिर्विष्णोः समुत्थिता ॥"

—इति महाविष्णुपुराणे ॥ ६ ॥

***न्या०दी०***— ननु देवा इति वा ब्रह्माद्या इति वा प्रसिद्धप्रयोगं विहाय किमप्रसिद्ध-प्रयोगेणेत्यत आह **दीनत्वादिति** ॥ देवादिशब्दानामसुरसाधारणत्वात् मनुशब्दस्यैव देवेष्वसाधारणत्वात् तस्यैव प्रयोग इति भावः । द्विविधदेवानां कुत्र विनियोग इत्यत आह **अवैष्णवेति** ॥ एतेनैव "एषां लोक इमाः प्रजाः" इत्यस्याप्यभिप्रायो वर्णितो भवति ॥६॥

*भा०दी०*— एतेनैवेति । मरीच्याद्यास्त्वित्यादिस्मृतिशेषोदाहरणेन इत्यर्थः ॥ ६ ॥

**गीता**

## एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
## सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥

*वि०वि०*— उक्तमाहात्म्यज्ञानस्य फलमाह **एतामिति** । विशिष्टभवनं विविधभवनं वा विभूतिः । युज्यते शक्यमनेनेति योगः सामर्थ्यम् । अविकम्पेन निश्चलेन ॥ ७ ॥

*वा०ल०*— 'एतां विभूतिम्' इत्यत्र विशेषेण विशिष्टेषु भूतिः सन्निधानं यस्मात् तम् । योगम् उपायम् । सृष्टियोगेन समुच्चयार्थश्चशब्दः ॥ ७ ॥

*सा०सं०*— उक्तमाहात्म्यज्ञानस्य फलमाह **एतामिति** । एतां 'न मे विदुः सुरगणाः' इत्या-दिनोक्ताम् । **विभूतिं** विशिष्टभवनम् । सुरगणाद्यवेद्यत्वरूपां महत्तां वक्ष्यमाणनानाविधभवनं वा । **योगं च** बुद्ध्यादिसर्वस्रष्टृत्वोक्त्या लब्धम् । 'प्रभव' पदस्य प्रभावमिति व्याख्यानेन प्रभवपदेनोक्तं वा मम सामर्थ्यं च । 'युज्यतेऽनेन योगोऽसावुपायः शक्तिरेव च' इत्युक्तेः । **तत्त्वतो यो वेत्ति**। **सोऽविकम्पेन** निश्चलेन । **योगेन** ध्यानरूपोपायेन । **युज्यते** युक्तो भवति । अत्रार्थे **संशयो** नेत्यर्थः ॥ ७ ॥

*अ०प्र०*— हे पार्थ ! एतां[१], मम[२], विभूतिं[३], योगं च[४], यः[५], तत्त्वतः[६], वेत्ति[७], सः[८], अविकम्पेन[९], योगेन[१०] युज्यते[११] नात्र संशय इत्यन्वयः ।

उक्तमाहात्म्यज्ञानस्य फलमाह **एतामिति** । हे पार्थ !, एतां न मे विदुः सुरगणा इत्यादिविशिष्टादिलक्षणां पूर्वोक्तां यद्वा, भृग्वादिलक्षणां[१], मम[२], विभूतिं = विशिष्टभवनं यद्वा, सुरगणाद्यवेद्यत्वरूपमाहात्म्यं वक्ष्यमाणनानाविधभवनं वा बुद्ध्यादि सर्वे सृष्टत्वोक्त्या लब्धं प्रभवपदस्य प्रभावमिति व्याख्यानेन प्रभवपदेनोक्तं वा[३], योगं च = ऐश्वर्यलक्षणं यद्वा, योगोऽसावुपायः शक्तिरेव चेत्युक्तेः । यद्वा, जगति मदीयानां विभूतीनां व्याप्तिं[४], यः[५], तत्त्वतः वेत्ति[७], सः[८], अविकम्पेन = दासत्वेन निश्चलेन वा[९], योगेन = ध्यानरूपोपायेन[१०] यद्वा, सम्यग्दर्शनेन[१०] युज्यते = मनसा मन्यते । यद्वा, युक्तो भवति[११], नात्र संशयः = अत्रार्थे संशयो नेत्यर्थः ॥ ७ ॥

**गीतातात्पर्यनिर्णयः**

**"युज्यते येन योगोऽसावुपायः शक्तिरेव च ॥" इति च ।**

**विशिष्टभवनं विभूतिः । महत्त्वम्, विविधभवनं वा । योगः सामर्थ्यम् ॥ ॥ ७ ॥**

*प्रका०*— "एतां विभूतिं योगं च" इत्येतद् व्याचष्टे **युज्यत इत्यादिना** ॥

***न्या०दी०*— उक्तमाहात्म्यज्ञाने फलमुच्यते 'एतां' इति । तत्र कर्मसमाधियोगयोरत्रानुक्तेः कथमेतं योगमित्युच्यत इत्यतो नात्र कर्मयोगादिर्विवक्षित इति भावेन योगशब्दस्यार्थान्तरं स्मृत्या दर्शयति युज्यत इति ॥ युज्यते उपेयं सम्भवतीत्यर्थः । शक्तिश्च, युज्यते शक्यमनयेति योग इत्यर्थः । नन्वत्र अणिमाद्यैश्वर्यस्यानुक्तत्वात् कथमेतां विभूतिमित्युच्यत इत्यत आह विशिष्टेति ॥ अभिप्रायमाह महत्त्वमिति ॥ महत्त्वं च सुरगणाद्यविज्ञेयतयोक्तमिति भावः । "वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः" इति पृष्टे महत्त्वस्यानुक्तत्वात् कथं विभूतिशब्दो महत्त्वार्थ इत्यत आह विविधेति ॥ तत्र विविधभवनं विभूतिशब्देनाभिप्रेतमिति भावः । अस्तु योगशब्दस्योपायादिवाचित्वं तथाऽप्यत्र कोऽप्युपायो नोक्त इत्यतोऽत्र शक्तिरेवार्थः । सा चोक्तेति भावेनाह योग इति ॥ ७ ॥**

*भा०दी०*— **उपेयमिति** । प्राप्यमित्यर्थः । अन्यव्यावृत्तिभ्रान्तिनिरासायैवकारत्यागेन अन्वयपूर्वमुपादत्ते **शक्तिश्चेति** । योग इत्यन्वयः ॥ **शक्यमिति** । शक्तिविषयतायोग्यमित्यर्थः ॥ **सा चोक्तेति** । भूतानां बुद्ध्यादिभूतधर्माणां च स्रष्टृत्वोक्त्या प्रभवमित्यस्य प्रभावमिति व्याख्यानाद्वा शक्तिरुक्तैवेत्यर्थः ॥ ७ ॥

गीता

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**

*वि०वि०*— उक्ते फले विश्वासजननार्थं सन्ति च तथा भजन्तः केचिदित्याह **अहमित्यादिना** । प्रभवत्यस्मादिति प्रभव उत्पत्तिहेतुः । भावेन भक्त्या समन्विताः ॥ ८ ॥

*सा०सं०*— उक्तफले विश्वासजननार्थं पूर्वोक्तमहिमज्ञानपूर्वं 'मां भजन्तः सन्ति' इति, 'अहम्' इत्यादि द्वाभ्यामुक्त्वा पुनः, 'तेषाम्' इत्यादिद्वाभ्यां फलं च व्यनक्ति । प्रभवत्यस्मादिति **प्रभवः** सर्वस्याहमुत्पादक इत्यर्थः । **मत्तः सर्वं प्रवर्तते** । इष्टानिष्टप्राप्तिपरिहाराद्यनुकूलव्यापारवद्भवति । लयादिरपि मदायत्त इत्युपलक्ष्यते इति मत्वा । **बुधाः** ज्ञानिनः । **भावसमन्विताः** भावेन भक्त्या समुपेताः सन्तः, **मां भजन्ते** । पत्रपुष्पादिभिरर्चयन्ति ध्यायन्ति चेत्यर्थः । अत्र पूर्वार्धेनैव मामित्यस्य लाभात्, पुनः **'माम्'** इत्युक्तिर्जीवेश्वरैक्याभिप्रायेण स्वात्मानमुद्दिश्याहमेव सर्वस्य प्रभव इति मत्वा भजन्त इति प्रतीतिनिरासाय ॥ ८ ॥

*अ०प्र०*— उक्तफले विश्वासजननार्थं पूर्वोक्तमहिमाज्ञानपूर्वं मां भजन्तः सन्तीति **अहमित्यादि** द्वाभ्यां उक्त्वा पुनस्तेषामित्यादि द्वाभ्यां फलं च व्यनक्ति **अहमिति** ।

हे पार्थ ! बुधाः[१], भावसमन्विताः सन्तः[२], अहं सर्वस्य[४], प्रभवः[५], इदं सर्वं[६], मत्तः[७], प्रवर्तते[८], इति[९], मत्वा[१०] मां भजन्ते[११] ॥

बुधा भावसमन्विताः बुधाः = ज्ञानिनः[१], भावसमन्विताः = भावेन भक्त्या प्रीत्या वा समन्विताः समुपेताः सन्तः यद्वा, प्रेमभावेन संयुक्ताः सन्तः[२], अहं सर्वस्य प्रभवः = अहमेकमात्मा[३], सर्वस्य = जगतः[४], प्रभवः = जन्मस्थानं यद्वा, प्रभवत्यस्मादिति प्रभवः सर्वस्य अहमेव उत्पादकः भृग्वादि मन्वादिरूपविभूतिद्वारेणोत्पत्तिहेतुरित्यर्थः[५], मत्तः सकाशात् मत्त एव इदं सर्वं सर्वस्य बुद्धिर्ज्ञानमसंमोह इत्यादि सर्वं मत्त एव[७], प्रवर्तते = क्रियासु प्रवर्तते इष्टानिष्टप्राप्तिपरिहाराद्यनुकूलव्यापारवद्भवति[८], लयादिरपि मया यतः इत्युपलक्ष्यते[९], इत्येवंविधं व्यापकं मत्वा[१०] मां भजन्ते = मां सर्वान्तर्यामिणं ज्ञात्वा दासत्वेन फलपुष्पादिभिः अर्चयन्ति ध्यायन्ति चेत्यर्थः ॥ ८ ॥

भाष्यम्

**सन्ति च भजन्तः केचिदित्याह अहमित्यादिना ॥ ८ ॥**

***प०टी०***— अजोऽनादिर्भगवानिति सामान्यविशेषाभ्यामुक्तम् । तत्कुतः ? इत्यतः श्लोकमवतारयति **सन्ति चेति** ॥ ८ ॥

***प्र०दी०***— ननु 'एतां विभूतिं' इति परिज्ञातुः फलमुक्तम् । तत्किमर्थं पुनरुच्यते ? इत्यतः तात्पर्यान्तरमाह **सन्ति चेति** । 'उक्तफले विश्वासजननार्थम्' इति शेषः ॥ ८ ॥

***भा०र०***— **फलमुक्तमिति** । 'योगेन युज्यते' इति श्लोके इत्यविकम्पयोगावाप्तिरूप-फलमुक्तमित्यर्थः । **पुनरिति** । 'बुद्धियोगं ददामि', 'तमो नाशयामि' इति च फलं परिज्ञातुः पुनरुच्यत इत्यर्थः । **तात्पर्यान्तरं** न फलोक्तौ तात्पर्यम्, येन पुनरुक्तिः स्यात् । किन्तूक्तफले विश्वासजननार्थं 'सन्ति भजन्तः केचित्' इत्यर्थप्रतिपादने तात्पर्यमिति तात्पर्ये तात्पर्यान्तरमित्यर्थः ॥ ८ ॥

***गीताक्षरार्थस्तु***—

षष्ठे ध्यानमुक्तम्, नवमान्ते 'मन्मना भव' इति स्मारितम् । तच्च ध्येयसापेक्षम् । विशिष्टाधिकारिणां च भगवद्विभूतयो ध्यातव्याः । अतो ध्यानशब्दितोपासनाकर्मभूतानि भगवतो विभूतिरूपाण्यनेन दशमाध्यायेन निरूप्यन्ते । तत्रादौ केषाञ्चित् बुद्ध्यादीनां महर्ष्यादीनां च सामर्थ्यातिशयोपेततया निर्माणरूपं विशेषकारणत्वमपि भगवत उच्यते । विशिष्टाधिकारिध्येयरूपाणाम् अत्र कथनाद् 'भोक्तारं यज्ञतपसाम्' इत्यादिना पञ्चमान्तादौ ध्येयमप्युक्तमिति शङ्काऽनवकाशः । ननु विभूतयोऽपि 'रसोऽहम्' इत्यादिना 'अहं क्रतुः' इत्यादिना चाभिहिता एव । सत्यम् । उक्तानामेव प्रपञ्चनमिह क्रियते । अत एव वक्ष्यति 'विस्तरेणात्मनो योगं विभूतिं च' इति । अत एव चैतदध्यायं विभूतिविस्तरयोगं व्यपदिशन्ति । विभूत्युक्तेरेव भूयस्त्वाद् अवान्तरार्थोक्तावपि अध्यायस्यैकवाक्यता ।

तत्र अर्जुनस्य श्रोतृत्वसम्पत्तिप्रतिपादकविशेषणोक्तिपूर्वकं वक्तव्यं प्रतिज्ञायते **भूय इति** । **प्रीयमाणाय** मद्वचनं श्रुत्वा सन्तोषं प्राप्नुवते । पूर्वं बन्धुस्नेहात् शोक उक्तः । इदानीं तु भगवद्वचनश्रवणनिमित्तसन्तोषप्राप्तिं श्रोतृत्वसम्पत्तिं प्रतिपादयितुं इदं विशेषणमित्याकरे स्फुटम् । **भूय एव** पुनरपि **हितकाम्यया** हितेच्छया **यद् वक्ष्यामि** तत् **परमम्** उत्कृष्टं **वचः श्रृणु** । मन्महिमप्रतिपादकं वचनं श्रुत्वा तत्र निष्ठां कुरु ॥ १ ॥

प्रतिज्ञातो महिमोच्यते **न मे विदुरिति** । **मे** मम **प्रभवं** प्रभावम्, सामर्थ्यशब्दितं महिमानम्। यद्वा प्रकृष्टो भवः **प्रभवः** 'भवः संसारजन्मनोः' इत्यभिधानात् **जन्म** तत् **मे** मदीयं 'जगतः' इति शेषः । मदधीनां जगदुत्पत्तिं **सुरगणा न विदुः** न जानन्ति । **महर्षयः** मरीच्याद्याश्च न विदुः । 'ज्योतिषि भावाच्च' इत्यादिशास्त्रावेदितसर्वज्ञभावा अपि देवादयः सामान्यतो जानन्तोऽपि विशेषतो न जानन्ति । देवानां महर्षीणां चाज्ञाने अन्येषां तत्सुतरामिति द्योतयितुं 'सुरगणाः', 'महर्षयः' इति पदं सर्वोपलक्षकमुपात्तम् । अथवा **मे प्रभवं** ममोत्पत्तिं **देवादयः** सामान्यतोऽपि **न विदुः** । कुतः ? अभावादेव । अभावे हेतुरयमुच्यते । **अहमादिरिति** । **देवानां महर्षीणां च सर्वशः** सर्वेण प्रकारेण **आदिः** उत्पत्तिः **अहम्** । यदाहुः । 'कृष्ण एव हि लोकानामुत्पत्तिरपि चाव्ययः' इति । तदधीनत्वात् ताच्छब्द्यम्, मदधीना । **अहमादिः** कारणमिति वा । देवमहर्ष्यादिरूपस्य सर्वस्यापि जगतः उत्पत्तिर्यदधीना तस्य कुतो जनकादुत्पत्तिः ? यदि च मत्प्रभाववत् जगदुत्पत्तिवच्च ममापि प्रभवः सन् स्यात् तर्हि तं देवादयः सामान्यतो जानीयुः । तेषां सामान्यतः सर्वज्ञत्वात् । अतः सर्वथाऽनुपलम्भात् स नास्तीति निश्चीयत इति भावः ॥ २ ॥

एवं देवाद्यज्ञेयमहिमत्वं उत्पत्तिराहित्यं चोक्त्वा स्वस्याजत्वादिज्ञानिनो मोक्षाख्यमहिमा अत्र उच्यते **ये मामिति** । **अजं** उत्पत्तिहीनं **अनादिं** अन्तर्णीतण्यर्थादनितेः पचाद्यचि, अनः इति = चेष्टयिता चासौ आदिः = कारणं च सर्वस्येति अनादिः । बहुलग्रहणाद् विशेषणयोरपि समासः। तच्चेष्टकत्वं प्रागनुक्तं कथमनूद्यत इति चेन्न । प्रभावे सर्वस्यान्तर्भावात् । **लोकमहेश्वरं** लोकानां महास्वामिनं च । **असम्मूढः** असम्भ्रान्तः सन् **यो वेत्ति** जानाति, **स मर्त्येषु सर्वपापैः प्रमुच्यते** प्रमोक्ष्यते ॥ ३ ॥

यदुक्तम् 'अनादिम्' इति सर्वकारणत्वं तद् विविच्यते **बुद्धिरित्यादिना** । कार्याकार्यविनिश्चयो **बुद्धिः**, **ज्ञानं** प्रतीतिः । **असम्मोहः** अकार्येच्छाराहित्यम् मिथ्याज्ञानाभावो वा '**क्षमा** क्रोधाभावेन सह अपकर्तुरनपकृतिः' इति षोडशाध्यायभाष्यम् । 'सत्यं यथार्थज्ञानपूर्वकमनुष्ठानम्' इति तैत्तिरीय-भाष्यम्, यथार्थभाषणं वा । **दमः** इन्द्रियनिग्रहः, **शमः** परमात्मनिष्ठता, **सुखम्** अनुकूलवेदनीयम्, **दुःखं** प्रतिकूलवेदनीयम् । '**भवः** उत्पत्तिः **भावः** सत्ता' इति तत्त्वोद्योतटीका । **भयं** त्रासः, **अभयं** त्रासविरोधिमनोव्यापारः ॥ ४ ॥

**अहिंसेति** । **अहिंसा** परपीडाऽभावः । **समता** द्वन्द्वेषु निर्विकारत्वम्, **तुष्टिः** विषयालम्बुद्धिः। '**तपः** ब्रह्मचर्यादि' इति षोडशाध्यायभाष्यम् । **दानं** न्यायार्जितधनस्य पात्रे प्रतिपादनम् । **यशः**

कीर्तिः, **अयशः** दुष्कीर्तिः । एते नानाविधा **भावाः** बुद्ध्यादयो विंशतिधर्माः **भूतानां** सशरीर-जीवानां **मत्त एव भवन्ति** ॥ ५ ॥

न केवलं भूतानां बुद्ध्यादिधर्मा मत्त एव भवन्ति, अपि तु सर्वभूतानि चेत्युच्यते । **महर्षय इति** । 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाः' इति मोक्षधर्मोक्ताः **पूर्वे** प्रथममन्वन्तरस्थाः **सप्त महर्षयः पूर्वे** प्राथमिकाः **चत्वारः मनवः** स्वायम्भुव-स्वारोचिष-रैवत-उत्तमाः । **मद्भावाः** मत्तो भावः = जन्म येषां ते तथोक्ताः । ये च **मानसाः** ब्रह्मणो मनसा जाताः चतुर्मुखस्य मनस उद्गताः । मनःशब्दात् 'तस्येदम्' इत्यण् । स एव सम्बन्ध उद्घाटितः 'जातः' इति । तेऽपि मद्भावाः मत्त एव ब्रह्मान्तर्यामिणः समुद्भूताः, ब्रह्मा तु द्वारमिति भावः । **येषां** मनूनां **लोके इमाः** वर्तमानाः **प्रजाः** अपत्यानि ते मद्भावा इत्यन्वयः ।

अनेन च विशेषणेन स्वायम्भुवाद्या एव चत्वारो मनवः अभिप्रेता इति विज्ञायते । भविष्यतां मनूनां सावर्ण्यसंज्ञकानां वर्तमानप्रजासन्तानकत्वायोगात् न तेऽत्र ग्राह्याः । एतेन 'ततो मनून् ससर्जान्ते मनसा लोकभावनान्' इति भागवते स्वायम्भुवादीनां ब्रह्ममानसपुत्रत्वावेदनात् कथं ते 'मद्भावः' उच्यन्ते ? इति निरस्तम् । ब्रह्मान्तर्यामिणो मत्त एव जाताः । ब्रह्मा तु 'निमित्तमात्र-मीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः शर्वश्च कालाख्या रूपिणस्तव' इति शास्त्रात् द्वारमात्र-मभ्युपगमात् । ननु च यदा ब्रह्मपुत्रतादशायां मानसाः तदा न ते मनवः, यदा च प्रियव्रतादि-पुत्रतादशायां मनवः, तदा न ते मानसाः । अतो मनुषु मानसत्वं, मानसेषु वा मनुत्वम् असम्भव्ये-वेति कथं 'मद्भावा मानसा जाताः' इति विप्रतिषिद्धमुच्यत इति चेन्न । ब्रह्मपुत्रतादशायां यन्मानसं शरीरमासीत् तदपरित्यज्य स्थितानामेव प्रियव्रतादिपुत्रभावमापन्नानां मनुत्वम् । द्वितीयशरीरे जाते तत्पूर्वशरीरेणैक्यमापद्यत इत्यङ्गीकारे विप्रतिषेधशङ्काऽनवकाशादिति भाष्यटीकयोः स्फुटम् ॥ ६ ॥

उक्तमाहात्म्यपरिज्ञातुः फलमुच्यते **एतामिति** । **यः मम एतां** 'न विदुः सुरगणाः' इत्यादि-श्लोकोक्तां **विभूतिं** विशिष्टं भवनं सुरगणाद्यविज्ञेयतयोक्तमाहात्म्यम्, वक्ष्यमाणप्रकारेण विविधभवनं वा **योगं** बुद्ध्यादिसर्वधर्मस्रष्टृत्वोक्तिलभ्यं प्रभवपदोक्तं वा सामर्थ्यं च **तत्त्वतः** याथातथ्येन **वेत्ति सः अविकम्पेन** निश्चलेन **योगेन** ध्यानयोगेन **युज्यते** युक्तो भवति । **अत्र** एतस्मिन्नर्थे **संशयो न** ॥ ७ ॥

उक्तफले विश्वासजननार्थं 'सन्ति च तथा भजन्तः केचित्' इत्युच्यते **अहमित्यादिना** । 'प्रभवसत्ताप्रतीत्यादिकारणत्वात् प्रभवभोक्तृत्वाच्च प्रभवः' इति सप्तमभाष्यम् । 'प्रभवत्यस्मात्' इति

प्रभवः = उत्पादक इति वा, **प्रवर्तते** स्वस्वव्यापारेषु । 'प्रलयादिरपि मत्त एव' इत्यप्युपलक्ष्यते । 'माम्' इत्यनुक्तेः जीवेश्वरैक्याभिप्रायेण स्वात्मानमुद्दिश्य 'अहमेव सर्वस्य प्रभवः' इत्यादि मत्वा भजन्त इति प्रतीतिः स्यात्, तं निवृत्त्यर्थम् 'अहं सर्वस्य प्रभवः' इत्यादिनैव 'माम्' इति सिद्धावपि, पुनः 'माम्' इत्युक्तम् । **बुधाः** अवगतभगवत्तत्त्वाः । **भावसमन्विताः** भक्त्या समुपेताः ॥ ८ ॥

**गीतातात्पर्यनिर्णयः**

**भजन्ते माम् इत्यनेन जीवेश्वरैक्यशङ्कां निवर्तयति ॥ ८ ॥**

***प्रका०*—** "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधाः" इत्यस्य अभिप्रायमाह **भजन्ते माम्** इत्यनेन ॥

***न्या०दी०*— उक्तार्थे विश्वासोत्पादनार्थं सन्ति च तथा भजन्त इत्युच्यते 'अहम्' इति । तत्र "अहं सर्वस्य प्रभवः" इत्यादिनैव मामित्यस्य सिद्धत्वात् किं पुनः "भजन्ते माम्" इत्युच्यत इत्यत आह भजन्ते मामिति । मामित्यनुक्ते जीवेश्वरैक्याभिप्रायेण स्वात्मानमुद्दिश्याहमेव सर्वस्य प्रभव इत्यादि मत्वा भजन्त इति प्रतीतिः स्यात् । तन्निवृत्त्यर्थं मामित्युक्तमित्यर्थः ॥ ८ ॥**

***भा०दी०*— तथा भजन्त इति** । सर्वकारणत्वादिज्ञाने विश्वासेनेति वार्थः ॥ ८ ॥

**गीता**

## मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
## कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥

***वि०वि०*—** कथं भजन्ते मच्चित्ताः मद्गतप्राणाः मद्विषयचेष्टाः श्रोतृभ्यः कथयन्तः ॥ ९ ॥

***सा०सं०*—** पुनर्भजनप्रकारमेवाह **मच्चित्ता इति** । मन्निष्ठमनस्काः । मद्गतप्राणाः मद्विषयचेष्टावन्तः । **बोधयन्तः** शिष्यान् प्रति बोधयन्तः । **माम्** उपदेशेनेति योज्यम् । **परस्परं मां कथयन्तः** कीर्तयन्तश्च । **'नित्यम्'** इति सर्वत्रान्वेति । **तुष्यन्ति** तृप्ता भवन्ति । विषयेष्वलम्बुद्धिमन्तो भवन्ति । तत्र हेतुः **रमन्ति च** । सुखमनुभवन्ति च इति ॥ ९ ॥

***अ०प्र०*—** प्रीतिपूर्वकं पुनर्भजनप्रकारमाह **मच्चित्तेति** ।

मच्चिता:[१], मद्गतप्राणा:[२], एवंविधास्ते बुधाः शिष्यान् प्रति बोधयन्तः[३], परस्परं[४], मां[५], कथयन्तः[६], च सन्तः[६], नित्यं[७], तुष्यन्ति[८], तत्र हेतुः रमन्ति च[९] ॥

मच्चित्ताः = मय्येव चित्तं येषां ते तथा मन्निष्ठमनस्काः[१], मद्गतप्राणाः = मयि गताः प्राप्ताः प्राणाः इन्द्रियाणि येषां ते तथा मद्विषयचेष्टावन्तः मया सन्तृप्तप्राणा इत्यर्थः मदर्पितजीवना इति वा[२], एवंविधास्ते बुधाः शिष्यान् प्रति बोधयन्तः श्रुत्यादिप्रमाणैः मां उपदेशेनेति योज्यम्; प्रबोधं कुर्वतः[३], परस्परं अन्योन्यं उभयोरपि यत् ज्ञानं प्राप्तं तेन[४], मां कथयन्तः = मां गोप्यतरं अहमेवंविध इति प्राकट्येन कथयन्तः कीर्तयन्तः सन्तः[६], नित्यमिति = सर्वत्र योज्यं नित्यं सर्वदा[७], तुष्यन्ति च अनुमोदनेन तृप्ता भवन्ति । विषये विषयेष्वलम्बुद्धिमन्तो भवन्ति । यद्वा, तत्कथनेन परितोषं प्राप्य श्रीविष्णोर्दासोऽहमिति बुद्ध्या भजनप्रकारपरिचर्यायां पुनःपुनर्भजने अलम्बुद्धिराहित्येन तुष्यन्ति च[८], तत्र हेतुः, रमन्ति च = अनन्येनैव योगेन एकान्तभक्तिं कुर्वन्तीति भावः । निवृत्तिं यान्तीति वा[९], अहोरात्रं ज्ञानानन्देन सुखिनो भवन्तीत्यभिप्रायः ॥ ९ ॥

**गीता**

## तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
## ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥

***वि०वि०***— सततयुक्तानां मयि निबद्धचित्तानाम् । तमेव बुद्धिरूपमुपायं ददामि । येन बुद्धियोगेन ॥ १० ॥

***सा०सं०***— **सततयुक्तानां** नित्यं मयि निबद्धचित्तानाम् । **प्रीतिपूर्वकं मां भजताम्** । **तेषाम्** । **तमेव बुद्धियोगं** ज्ञानरूपं मुक्त्युपायम् । **ददामि** । **येन** बुद्धियोगेन **मामुपयान्ति** । **तमित्यन्वयः** ॥ १० ॥

***अ०प्र०***— एवं भूतानां च सम्यग्ज्ञानमहं ददामि इत्याह **तेषामिति** ।

हे पार्थ ! सततयुक्तानां[१], प्रीतिपूर्वकं मां[२], भजतां[३], ते यथा[४], येन उपायेन[५], मां[६], उपयन्ति[७], तथा तेषां[८], तं[९], बुद्धियोगं[१०] अहं[११] ददामि[१२] ॥

सततयुक्तानां = नित्यं मयि बद्धचित्तानां यद्वा, निरन्तरप्रीतियुक्तभजतां[१], प्रीतिपूर्वकं मां[२], भजतां[३], ते यथा ते अन्यभक्ताः[४], येनोपायेन = येन बुद्धियोगेन[५], मां = परमात्मानं[६], उपयान्ति = प्राप्नुवन्ति[७], तथा तेनोपायेन तेषां ज्ञानिनां[८], तं = मत्प्राप्तिपटुतरं[९], बुद्धियोगं = मय्यात्मनि

बुद्धेर्योगः सामरस्यं नाम अनन्यभक्तित्वं बुद्धियोगः तं बुद्धियोगं यद्वा, ज्ञानरूपमुक्त्युपायं[१०] अहं = लीलाविग्रहः[११] ददामि = बुद्धियोगं दत्वा च तस्यापरोक्षज्ञानपर्यन्तं अनादि-अविद्याकृतसंसारं नाशयामि अपरोक्षानन्तरं मत्सामीप्यरूपमोक्षं ददामीत्यभिप्रायः ॥ १० ॥

**गीता**

## तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
## नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

*वि०वि०*— अनुकम्पार्थमनुग्रहार्थम् । अज्ञानजं तमः संसारम् । आत्मभावे चित्ते वृत्तौ । विषयतया स्थितः । भास्वता प्रकाशमानेन । ज्ञानाख्येन दीपेन नाशयामि ॥ ११ ॥

*वा०ल०*— 'नाशयाम्यात्मभावस्थो' इत्यत्र आत्मभावस्थः आत्मनां जीवानां भावे चित्ते स्थितः ॥ ११ ॥

*सा०सं०*— अनाद्यज्ञानकृतबन्धसत्त्वात् कथं तत्प्राप्तिरित्यत आह **तेषामेवेति** । **तेषा-मनुकम्पार्थम्** अनुग्रहार्थम् **एव** न तु किञ्चित्फलमुद्दिश्य । **अहमज्ञानजम्** । **तेषाम्** । **तमः** सुखदुःखादिक्लेशरूपबन्धम् । **भास्वता** विरोधिनाशनदक्षतया प्रकाशमानेन । **ज्ञानाख्यदीपेन** । **आत्मभावस्थः** तदीयचित्तवृत्तिस्थः सन् **नाशयामीति** ॥ ११ ॥

*अ०प्र०*— अनाद्यज्ञानकृतबन्धसत्त्वात्कथं त्वत्पर इत्यत आह **तेषामेवेति** ।

आत्मभावस्थः[१], अहं[२], अनुकम्पार्थमेव[३], तेषां[४], अज्ञानजं[५], तमः[६], भास्वता[७], ज्ञानदीपेन[८], नाशयामीत्यन्वयः ।

हे पार्थ ! आत्मभावस्थः = तदीयचित्तवृत्तिः सन्[१], अहं[२], अनुकम्पार्थमेव = अनुग्रहार्थमेव न तु किञ्चिदपि फलमुद्दिश्य[३], तेषां = पूर्वोक्तज्ञानयुक्तभक्तानां[४], अज्ञानजं अज्ञानाज्जातं तथा[५], तमः = संसाराख्यं सुखदुःखादिक्लेशरूपबन्धं[६], भास्वता = विस्फुरता[७], विरोधिनाशनदक्षस्वेच्छ-तया[८], ज्ञानदीपेन प्रकाशमानज्ञानाख्यदीपेन[९], नाशयामि[१०] ॥ ११ ॥

*भा०र०— गीताक्षरार्थस्तु—*

कथम्भूता भजन्ते **मच्चित्ताः** मदर्पितमानसाः । **मद्गतप्राणाः** मद्विषयप्राणादिचेष्टाः । **बोधयन्तः** मत्प्रभावं शिष्यान् अवगमयन्तः । **कथयन्तः** कीर्तयन्तः । 'नित्यम्' इति सर्वत्र

सम्बध्यते । **तुष्यन्ति** विषयेष्वलम्बुद्धिमन्तो भवन्ति **च** इति । तत्र हेतुः— **रमन्ति** रमयन्ते = भगवदनुग्रहप्राप्तं स्वरूपसुखमनुभवन्ति च इति ॥ ९ ॥

य एवं भजन्तः **तेषां सततयुक्तानां** नित्याभियुक्तानां = नित्यं मयि निबद्धमनसां **प्रीतिपूर्वकं** भक्तिपूर्वकं **भजतां** सेवमानानां ध्यायतां **बुद्धियोगं** अपरोक्षज्ञानरूपमुपायं **प्रीतिपूर्वकं ददामि** न तु प्रसभात् । **येन** बुद्धियोगेन **मामुपयान्ति** ते ॥ १० ॥

अनाद्यज्ञानकृतसंसारबन्धसत्त्वात् कथं त्वत्प्राप्तिः ? इत्यत उक्तम् **तेषामेवेति** । उक्तप्रकारक-भजनवताम् **अनुकम्पार्थम्** अनुग्रहार्थमेव, न पुनः किमपि फलमुद्दिश्य, इत्येवकारः । **अज्ञानजं तमः** तम इव क्लेशरूपं संसारम् । **आत्मभावस्थः** स्वचित्तवृत्तौ विषयतया स्थितः सन् **भास्वता** विरोधिनाशनदक्षतया दीप्यमानेन, **ज्ञानमेव दीपः तेन नाशयामि** इति ॥ ११ ॥

**गीता**

**अर्जुन उवाच—**

## परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
## पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥

***वि०वि०***— एवं सामान्यतो भगवतो विभूतियोगं श्रुत्वा विस्तरेण ज्ञातुकामोऽर्जुन उवाच **परमित्यादिना** । परं उत्तमम्, ब्रह्म परिपूर्णम्, परं धाम तेज आश्रयो वा, परमम्, पवित्रं यद्वस्तु श्रुत्यादिसिद्धम् । तत् भवान् नारदादयो ज्ञानिनः त्वामेव पूर्णषाड्गुण्यादिविशेषेण विशिष्टं विशिष्ट-भवनात् विविधभवनाच्च विभुमाहुः ॥ १२ ॥

***अ०प्र०***— एवं सङ्क्षेपेणोक्तां विभूतिं योगं च श्रुत्वा विस्तरेण ज्ञातुकामः स्तुतिपूर्वं तद्वक्तुं प्रार्थयतेऽर्जुनः **परमित्यादि** सप्तभिः ।

हे केशवेति तृतीयेनान्वयः । ऋषयः त्वां परं ब्रह्म[१], परं धाम[२], परमं च[३], पवित्रं[४], भवानेव[५], यतः शाश्वतं[६], पुरुषं[७], दिव्यं[८], आदिदेवं[९], अजं विभुं[११] एतादृशं आहुः इति उत्तरेणान्वयः ।

परं ब्रह्म = उत्तमं परिपूर्णं वस्तु[१], परं धाम = उत्तमाश्रयः महाभूतानां विश्रान्तिस्थानं[२], परमं च[३], पवित्रं[४], भवानेव[५], कुत इत्यत आह यतः शाश्वतं = नित्यं निर्विकारं[६], पुरुषं = पूर्णषड्गुणं चतुर्विंशतितत्त्वातीतं[७], अतो दिव्यं = प्रकृतेः परं लोकविलक्षणं द्योतनात्मकस्य प्रकाशकं च[८], आदिदेवं = देवानामादिभूतं आदिश्चासौ देवश्च तं अनादिसिद्धं[९], अत एव अजं = जन्मधर्मरहितं[१०]

विभुं = विशिष्टतया विविधतया च भवनहेतुना विभुशब्दवाच्यं'' एतादृशं वसिष्ठादयो ऋषयः आहुरिति उत्तरेणान्वयः ॥ १२ ॥

भाष्यम्

**ब्रह्म परिपूर्णम् । ''अथ कस्मादुच्यते परं ब्रह्म । इति । बृहत् बृहत्या बृहति बृंहयति '' इति च श्रुतिः । ''बृह बृहिवृद्धौ'' इति । ''परमं यो महद् ब्रह्म'' इति च । विविधमासीदिति विभुः । तथा हि वारुणशाखायाम्— ''विभु च प्रभु च प्रथमं मेहनावत इति । स ह्येव प्राभवद् विविधोऽभवत्'' इति । ''सोऽकामयत बहु स्यां प्रजायेय'' इत्यादेश्च ॥ १२ ॥**

***प०टी०***— 'ब्रह्म''विभु'शब्दयोः सप्रमाणकं अर्थभेदं आह **ब्रह्मेति** । पृथिव्याख्यमेहनावतो हरे रूपं विभु प्रभु चेत्यर्थः ॥ १२ ॥

***प्र०दी०***— ब्रह्मविभुशब्दौ ऐकार्थ्यपरिहाराय क्रमेण सप्रमाणकं व्याचष्टे **ब्रह्मेति** । **परं** वस्तु **ब्रह्म** इति **कस्मादुच्यते** । **बृहति** पूर्णं भवति । बृंहयति पूरयति चान्यान् । बृहतेर्मनुप्रत्ययः, अमागमश्च । ईश्वरो ब्रह्मणोऽन्यः । स कथं परं ब्रह्मेत्युच्यते ? इत्यत उक्तम् । **परममिति** । **विविधम्** अनेकरूपत्वेन **अभवत्** । **मेहनावतः** सेचकस्य भगवतः प्रथमं रूपं **'विभु प्रभु च'** इत्येतदनूद्य व्याख्यायते । **प्राभवत्** समर्थोऽभवदिति **प्रभुः** । विविधोऽभवदिति **विभुः** । 'सोऽकामयत' इति विविधभवने श्रुत्यन्तरम् । 'विप्रसंभ्यो ड्वसंज्ञायां' (३-२-१८०) इति च स्मृतिः ॥१२॥

***भा०दी०***— **मनिनिति** । 'अन्येभ्योऽपि दृश्यते' (३-२-१७८) इति सूत्रेण 'आतो मनिन्-क्वनिप्-वनिपश्च' इति पूर्वसूत्रादनुवृत्तमनिन्प्रत्यये दृशिग्रहणात्, अमागमे यणादेशे च रूपसिद्धेरिति भावः । **विप्रसम्भ्य इति** । वीत्याद्युपसर्गत्रयात् परतो भूधातोः डुप्रत्यय इत्यर्थः । डित्वात् टेर्लोपे 'विभुः, प्रभुः, सम्भूतिः' इति रूपमिति भावः ॥ १२ ॥

***भा०र०***— **ब्रह्मविभुशब्दौ** 'परं ब्रह्म' इत्यत्र ब्रह्मशब्दः 'अजं विभुम्' इत्यत्र विभुशब्दः ब्रह्मशब्दस्यापरिच्छेद्यवस्तुवाचित्वात्, विभुशब्दस्य च व्यापिवस्तुवचनत्वाद् ऐकार्थ्यमिति भावः । श्रुतौ परपदम् उद्देश्यस्य, ब्रह्मपदं च विशेष्यस्य समर्पकमिति भावेनाध्याहरन् योजयति **परं वस्त्विति** । 'बृहति' इत्यनुवादः, 'पूर्णं भवति' इति व्याख्यानम् । यद्यपि बृहतिः शब्विकरण इति 'बर्हति' इति वक्तव्यम् । तथा च धातुवृत्तिः 'बर्हति' इति । तथापि छन्दस्त्वात् संज्ञापूर्वक-

विधेरनित्यत्वाच्च गुणो न प्रवर्तत इति बोद्धव्यम् । **पूरयति** स्वयोग्यतानुसारेण **अन्यान्** मुक्तान् । **मन्प्रत्यय इति** । 'मनिन् सर्वधातुभ्यः' इत्यौणादिको मनिन्प्रत्यय इत्यर्थः । इकारनकारयोर्लोप-नीयत्वाशयेन 'मन्प्रत्ययः' इत्येवोक्तम् । 'बृंहेर्नलोपश्च' इति औणादिकसूत्रे वृत्तिकारवचनमेवानु-वदति **अमागमश्चेति** । चशब्दाद् अमागमसमुच्चय इति भावः । बाहुलकादमागम इत्यपि **आहुः** । तस्यान्त्यादचः परस्य यणादेशो 'नेड्वशि कृति' इति सूत्रकारमतेन 'व-र-म-नादौ कृति' इति वार्तिककारमतेन च इडागमनिषेधे च 'ब्रह्म' इति रूपमिति भावः ।

'बृंहयति' इति भाष्ये 'बृहि' = वृद्धौ इति धातोः नुमागमे ण्यन्तस्य रूपम् । 'बृहेरनिटि' इति वार्तिकं प्रत्याचक्षणेन भाष्यकृता 'बृंहयति' इत्युक्तत्वात् 'बर्हयतीति नलोपः स्यात्' इति चोद्या-नवकाशः । 'दृह-दृहि-बृह-बृहि=वृद्धौ इति धातुपाठेऽपि भाष्ये 'बृहि=वृद्धौ' इति पठन्तीत्युक्तिः 'पामादिभ्यो नः' इत्यादिवैयाकरणोक्तिरिव उपयुक्तमात्रग्रहणाभिप्राया । **स्वामिनस्तु**, 'अन्येभ्योऽपि न दृश्यन्ते' इति पाणिनिसूत्रे 'आतो मनिन्-क्वनिप्-वनिपश्च' इति सूत्रात् अनुवृत्तौ मनिन्प्रत्ययः क्वनिप्प्रत्ययः वनिप्प्रत्ययो विच्प्रत्ययश्च इत्येते अन्येभ्योऽपि धातुभ्यो भवन्तीति वृत्तावुक्तत्वात् अत्र बृहेर्मनिन्प्रत्ययः । 'दृशिग्रहणं प्रयोगानुसरणार्थम्' इति वृत्तिवचनात् अमागमो यणादेश इडागमाभावश्च । सति चैवं 'ब्रह्म' इति रूपमिति व्याख्यातवन्तः ।

'परमं यो महद्ब्रह्म' इति भारतवचने यच्छब्दस्य 'तस्य लोकप्रधानस्य विष्णोः' इत्यनेन अन्वयः । 'पठन्ति' इत्यनुवृत्त्यर्थश्चशब्दो भाष्ये । विविधत्वं न स्वरूपेण, किन्तु बहुरूपत्वेति व्याचष्टे **विविधमनेकेति** । मिह = सेचने' इति धातोः निष्पन्नो मेहनाशब्दः सेचनार्थक इति भावेनाह **सेचकस्येति** । श्रुतावन्वयं दर्शयन् उत्तरवाक्यमवतारयति **प्रथममित्यादि** । 'प्राभवत्' इत्यस्यार्थः **समर्थोऽभवदिति** । 'बहु स्याम्' इति बहुप्रभावश्रवणादाह **विविधभवने श्रुत्यन्तर-मिति** । भूधातोः कथं ह्रस्वत्वम् ? इत्यतः पाणिनिसूत्रेण तं निष्पादयति **विप्रसम्भ्य इति** । **स्मृतिः** पाणिनिस्मरणम् । 'वि-प्र-सम् इत्येभ्य उपसर्गेभ्यः परस्य भूधातोः डुप्रत्ययः स्यात् असंज्ञायाम्' इति तदर्थः । न केवलं श्रौतनिर्देशो धातोः ह्रस्वत्वे प्रमाणम्, अपितु पाणिनिसूत्रं चेति चकारः ॥ १२ ॥

**गीता**

**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥**

*वि०वि०*— अहं सर्वस्येत्यादिना स्वयमेव ब्रवीषि ॥ १३ ॥

*सा०सं०*— एवं सङ्क्षेपेणोक्तं विभूतिं योगं च श्रुत्वा विस्तरेण ज्ञातुकामः तत्स्तुतिपूर्वकं तद्वक्तुं प्रार्थयते **परम्** इत्यादिभिः सप्तभिः । हे **केशवे**त्यग्रेतनमाकृष्यते । **भवान्** । **परम्** उत्तमम् । **ब्रह्म** परिपूर्णं वस्तु । **परं धाम** उत्तमाश्रयः । **परमम्** । **पवित्रम्** । **त्वां ऋषयो** वसिष्ठाद्याः । **देवर्षिर्नारदोऽसितादयश्च** । पुरुषं पूर्णषड्गुणम् । **शाश्वतं** निर्विकारम् । **दिव्यं** लोकविलक्षणम् । **आदिदेवम्** । **अजं** जन्महीनम् । **विभुं** विशिष्टतया विविधतया च भवनहेतुना विभुशब्दवाच्यम् । **आहुः** । 'अहं सर्वस्य' इत्यादिना । **स्वयं च** । **मे** मह्यम् । **ब्रवीषि** वदसि ॥ १२-१३ ॥

*अ०प्र०*— हे भगवन् ! सर्वे[1], ऋषयः[2], सर्वे देवर्षयश्च[3], तथा[4], नारदः[5], असितश्च[6], देवलः[7], व्यासश्च[8], त्वां पूर्वोक्तं 'पुरुषं पूर्णषड्गुणं' इत्यादिभिर्वेदशास्त्रप्रमाणैः वाक्यैः विभुशब्दवाच्यं त्वां[9], आहुः[10] स एव त्वं मे मह्यं इदानीं कृपया[11] स्वयं चैव साक्षात् त्वं च[12], ब्रवीषि वदसि[13], यद्वा कथयस्येव ॥१३ ॥

**गीता**

## सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
## न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥

*वि०वि०*— अतो यत् मां प्रति वदसि सर्वमेतन्माहात्म्यम्, ऋतं सत्यं मन्ये न प्रशंसामात्रम् । हे भगवन् ! ज्ञानशक्तिबलैश्वर्यतेजोयशोनिधे । ते व्यक्तिम् । देवादयो न विदुः ॥ १४ ॥

*वा०ल०*— 'न हि ते भगवन् व्यक्तिं विदुर्देवानदानवाः' इत्यत्र व्यक्तिम्, अवतारम् ॥१४॥

*सा०सं०*— हे **केशव** ! **यन्मां** प्रति **वदसि सर्वमेतन्**माहात्म्यं **ऋतं** सत्यमेव **मन्ये** । केशवशब्दार्थ उक्तः प्रथमाध्याये । हे **भगवन्** षड्गुणयुक्त । **ते व्यक्तिं** सामर्थ्यातिशयम् । **देवा दानवाश्च** । **न विदुः** । हीति 'न यस्येन्द्रो वरुणो न मित्रः' इत्यादौ प्रसिद्धमित्यर्थः ॥ १४ ॥

*अ०प्र०*— अतो ममेदानीं त्वदैश्वर्ये असम्भावनानि वर्तते इत्याह **सर्वमिति** ।

हे केशव ![1], मां प्रति[2], यत्[3], वदसि[4], एतत्[5], सर्वं[6], ऋतं[7], मन्ये[8], हे भगवन् ![9], ते[10] व्यक्तिं[11] हि यस्मात्[12], देवाः[13], दानवाश्च[14], न[15], विदुः तस्मात्सर्वमेतदृतं मन्येत्यन्वयः ।

हे केशव ![१], मां प्रति[२], यद्वदसि = यन्माहात्म्यं भाषसे बोधयसि[४], एतत् नारदादिभिर्यदुक्तं माहात्म्यं[५], सर्वं[६], ऋतं = सत्यमेव[७] मन्ये[८], हे भगवन् ! = हे षड्गुणयुक्त[९], ते = तव[१०] व्यक्तिं सामार्थ्यातिशयरूपं[११] देवाः दानवाश्च सर्वेऽपि[१२], न विदुः[१३], हि यस्मात् तस्मात् । यद्वा, हीत्यनेन 'न यस्येन्द्रो वरुणो न मित्र इत्यादौ प्रसिद्धमित्यर्थः ॥ १४ ॥

**गीता**

## स्वयमेवात्मनाऽत्मानं वेत्थ त्वं पुरुषोत्तम ।
## भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

***वि०वि०***— त्वं **स्वयमेव** । स्वात्मानमात्मना **स्वसामर्थ्येन** । वेत्थ । भूतानां भावन उत्पादकः । भूतानामीश नियामकः ॥ १५ ॥

***सा०सं०***— तर्हि को जानातीत्यत आह **स्वयमेवेति** । हे **पुरुषोत्तम** ! **त्वं स्वयमेव** अन्यदनपेक्ष्य । **आत्मना** स्वसामर्थ्येन । **आत्मानम्** । **वेत्थ** जानासि । **भूतभावन** भूताना-मुत्पादक । **भूतेश** भूतनियामक ॥ १५ ॥

***अ०प्र०***— तर्हि को जानाति इत्यत आह **स्वयमेवेति** । हे पुरुषोत्तमेत्यादि पञ्च सम्बोधनवान् ![५], त्वं[६], आत्मना[७], आत्मानं[८], स्वयमेव[९], वेत्थ इत्यन्वयः ॥

हे पुरुषोत्तम ! = हे पुरुषश्रेष्ठ[१], हे भूतभावन = हे भूतोत्पादक भूतेभ्यो भावयसि उपदेष्टुं समर्थोऽसि तथा[२], भूतेश = भूतानां नियन्ता[३], हे देवदेव = देवानां ब्रह्मादीनां देव प्रकाशक[४], हे जगत्पते = विश्वपालक[५], त्वं[६], आत्मना = अन्यदनपेक्ष्यात्मना[७], आत्मानं = सर्वशक्तिमन्तं स्वसामर्थ्येनात्मानं[८], स्वयमेव = स्वेनैव[९], वेत्थ = जानासि[१०] नान्यो वेत्तीति भावः ॥१५ ॥

**गीता**

## वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
## याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥

***वि०वि०***— दिव्याः या आत्मविभूतय आत्मनः विविधभूतयः नानाभूतानि रूपाणि ताः । अशेषेण मद्योग्यतानुसारेण वक्तुमर्हसि । द्वितीयार्थे व्यत्ययेन वा प्रथमा । याभिर्विभूतिभिरिमान् लोकान् नियामकत्त्वेन व्याप्य तिष्ठसि ॥ १६ ॥

*सा०सं०*— एवं स्तुत्वा प्रार्थयते **वक्तुमिति** । **दिव्याः** । **या विभूतयः** । **याभिर्विभूतिभिः** । **त्वम्** । **इमान्** । **लोकान्** । **व्याप्य तिष्ठसि** । **ता** विभूतीः **अशेषेण वक्तुम्** । **अर्हसीत्यर्थः** । विभूतयो नाम विविधतया नानारूपतया रामकृष्णादितया भूतानि रूपाणि यद्वा, 'येषां विष्णुस्वरूपाणां सन्निधेरन्यवस्तुषु । विशिष्टत्वं स्वजातेः स्याद्विभूत्याख्यानि तानि तु ॥' इत्युक्तदिशा स्वसन्निधिनिमित्तेन वस्तुषु स्वजात्युत्तमतापादकरूपाणि ॥ १६ ॥

*अ०प्र०*— एवं स्तुत्वा प्रार्थयते यस्मात्तवाभिव्यक्तिं त्वमेव वेत्सि न देवादयः तस्मात् **वक्तुमर्हसीति** ।

अथान्वयः— हे पुरुषोत्तम ! याभिः[२], विभूतिभिः[२], त्वं[३], इमान्[४], लोकान्[५], हि यस्मात्[६], व्याप्य[७], तिष्ठसि[८], तस्मात् ताः दिव्याः[९], आत्मविभूतयः[१०] अशेषेण[११] वक्तुं[१२], अर्हसीत्यन्वयः ।

याभिः विभूतिभिः = विभूतयो नाम विविधतया रामकृष्णादि नानारूपतया भूतानि रूपाणि । यद्वा, येषां विष्णुरूपाणां सन्निधेरन्यवस्तुषु विशिष्टत्वं स्वयं जातं स्यात् । तानि विभूत्याख्यानि इत्युक्तदिशा स्वसन्निधिनिमित्तेन वस्तुषु स्वजात्युत्तमतापादकरूपाणि एवं विभूतिभिः[२], त्वं[३], इमान्[४], लोकान्[५], हि यस्मात्[६], व्याप्य[७], तिष्ठसि[८], तस्मात्ताः दिव्याः अद्भुताः[९], आत्मविभूतयः[१०] अशेषेण[११] वक्तुं[१२], अर्हसि दर्शयितुं समर्थो-ऽसीत्यर्थः[१३], ॥ १६ ॥

भाष्यम्

**विभूतयः विविधभूतयः** ॥ १६ ॥

*प०टी०*— 'विभूति'शब्दं व्याचष्टे **विभूतय इति** ॥ १६ ॥

*प्र०दी०*— विभूतयः ऐश्वर्याणि पृष्टानि । नानारूपाणि वक्ष्यन्ते । किं केन सङ्गतम् ? इत्यत आह **विभूतय इति** । **विविधभूतयः** नानाभूतानि रूपाणि ॥ १६ ॥

*भा०र०*— चोदितासङ्गतिपरिहाय 'विविधभूतयः' इति भाष्यमनूद्य व्याचष्टे **विविधेति** । नात्र विभूतिपदेनैश्वर्यं विवक्षितम् । किन्तु 'नानाभूतानि रूपाणि' इति नोक्तासङ्गतिशङ्केति भावः ॥ ॥ १६ ॥

**गीता**

**कथं विद्यामहं योगिन् त्वां सदा परिचिन्तयन् ।**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥**

*वि०वि०*— हे योगिन् अचिन्त्यशक्ते ! त्वाम् । सदा परिचिन्तयन् त्वद्ध्यानार्थं प्रवृत्तः । ध्येयं त्वाम् । कथं विद्याम् । बुद्धिज्ञानादाविवान्येषु केषु केषु वस्तुषु मया चिंतनीयोऽसि ॥१७॥

*वा०ल०*— केषु केषु च भावेषु चिन्त्योऽसि इत्युक्तत्वात् सन्निधानमेव विभूतिः, न तु तैस्तैरैक्यम् ॥ १७ ॥

*सा०सं०*— नित्यं मच्चिन्तनया विभूतिरूपाणि जानीहि, किं मद्वचनप्रार्थनयेत्यत आह **कथमिति** । **त्वां परिचिन्तयन्**, अपि । **अहं** त्वद्वचनाभावे । हे **योगिन्** अनन्तशक्ते **विभूतीः**। **कथम्** । **विद्याम्** । जानीयाम् । अतो हे **भगवन्** ! **मया** । **केषु केषु भावेषु** तेषां स्वजात्युत्तमतापादकतया स्थितः सन् **चिन्त्योऽसि** ॥ १७ ॥

*अ०प्र०*— कथनप्रयोजनं दर्शयन् प्रार्थयते **कथमिति** द्वाभ्याम् ।

हे योगिन् ![१], अहं[२], त्वां[३], सदा[४], परिचिन्तयन्नपि[५], कथं विभूतीः विद्यां[७], हे भगवन्[८], मया त्वं[९], केषु केषु च[१०] भावेषु = पदार्थेषु[११], चिन्त्योऽसि इत्यन्वयः ।

हे योगिन् ! = अनन्तशक्तेः[१], अहं[२], त्वां[३], सदा[४], परिचिन्तयन्नपि[५], कथं विभूतीः[६], विद्यां = जानीयाम्[७], अतो हे भगवन् ![८], मया विभूतिभेदेन[९], चिन्त्योऽपि त्वं केषु केषु च[१०] भावेषु = पदार्थेषु[११] चिन्त्योऽसि = स्वजात्युत्तमतापादकतया स्थितः सन् चिन्तनीयोऽसि ? ॥ १७ ॥

**गीता**

**विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।**
**भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥**

*वि०वि०*— अतः सङ्क्षेपेणोक्तमपि विभूत्यादिकं विस्तरेण पुनः कथय । त्वयोच्यमानं त्वन्महिमामृतं शृण्वतो मे अलम्बुद्धिर्नास्ति । हिशब्दो भगवताऽप्येतदवगतमिति द्योतनार्थः— 'द्विविधं वैभवं विष्णोः प्रत्यक्षं च तिरोहितम् । कपिलव्यासकृष्णाद्यं प्रत्यक्षं वैभवं स्मृतम् ॥ भिन्नं ब्रह्मादिजीवेभ्यो जडेभ्यश्चापि तद्गतम् । स्वजात्याधिक्यदं तेषां तत् तिरोहितवैभवम् ॥' इत्यादि प्रमाणसिद्धम् ॥ १८ ॥

*सा०सं०*— तम् । **आत्मनः** । **विभूतिं** वस्तूनां विशिष्टताप्रदमात्मनो रूपम्, विविधतया भूतं रूपं च । एकवचनं समुदायाशयम् । **योगं** सामर्थ्यं च । **विस्तरेण** । **भूयः** पुनः पुनः ।

**कथय** । **ते** । वचो**ऽमृतम्** । **शृण्वतः** । **मे** । **तृप्तिर्नास्ति** । जनार्दनशब्दार्थ उक्तः तृतीयाध्याये ॥ १८ ॥

***अ०प्र०***— तदेवं बहिर्मुखेऽपि चित्ते तत्तद्विभूतिभेदेन त्वच्चित्त एव यथा भवेत् तथा विस्तरेण कथयेत्याह **विस्तरेणेति** ।

हे जनार्दन ![१], हि यस्मात्[२], ते वचनामृतं[३], शृण्वतः[४], मे[५], तृप्तिः[६], नास्ति[७], तस्मात् विस्तरेण[८], आत्मनः[९], योगं[१०] विभूतिं च[११] भूयः[१२], कथय[१३] ।

यद्वा, भूयः किमर्थं वक्तव्यमिति वदसि चेत् हि यस्मात्कारणात् प्राकृतामृतं तुच्छं तस्मात् अमृतं तव परमवचनामृतं[३], शृण्वतो मे तृप्तिर्नास्तीति व्याख्यानान्तरं हे जनार्दन[१], हि यस्मात् कारणात्[२], अमृतं ते वचनामृतं[३], शृण्वतः = कर्णद्वारा पानं कुर्वतः[४], मे = मम[५], तृप्तिः = अलम्बुद्धिः[६], नास्ति[७], तस्मात् = कारणात् विस्तरेण[८], आत्मनः = तव[९], विभूतिं = वस्तु विशिष्टताप्रदं आत्मनोरूपं विविधतया भूतं रूपञ्च एकवचनं समुदायाशयं[१०] योगं च सर्वज्ञत्वं सर्वशक्तित्वादिलक्षणं सामर्थ्यञ्च योगैश्वर्यं[११] भूयः = पुनः[१२], कथय[१३] ॥ १८ ॥

भाष्यम्

**न जायते अर्दयति च संसारं इति जनार्दनः । तथा च बाभ्रव्यशाखायां "स भूतः स जनार्दनः इति । स ह्यासीत् स नासीत् सोऽर्दयति" इति ॥ १८ ॥**

***प०टी०***— 'जनार्दन'शब्दार्थं सप्रमाणकमाह **न जायत इति** ॥ १८ ॥

***प्र०दी०***— 'अर्द गतौ याचने च' इति वचनात् 'असुरजनानां नरकादिगमयितृत्वात्, जनैः याच्यत्वाद्वा जनार्दनः' इति **सङ्करः** । तदप्रामाणिकं व्याख्यानम् । इदं तु श्रौतत्वादुपादेयमिति भावेनाह **न जायत इति** । नञः परनिपातः । अत एव नलोपाभावः । उत्तरपदे तस्य स्मरणात् । **अर्दयति** गमयति । **स ह्यासीदिति** । **भूतः** अनादितः सत्तावानित्यर्थः । **स नासीत्** न जन्मवान् । **सोऽर्दयति इति जनार्दनः** ॥ १८ ॥

***भा०दी०***— ननु 'न जायते' इति व्युत्पत्तौ 'अजः' इति भाव्यं, 'जन' इतिं तु कथम् ? इत्यत आह **नञः परनिपात इति** । निरुक्तिबलादिति भावः । तावता कथं न लोपाभावः ? इत्यत आह **अत एवेति** । परनिपातत्वादेवेत्यर्थः । ततोऽपि कुतः ? इत्यत आह **उत्तरेति** । **तस्येति** ।

लोपस्येत्यर्थः । 'अलुगुत्तरपदे' इत्युत्तरपदाधिकारात् 'न लोपो नञः' इति सूत्रे 'नञो न लोपो भवति, उत्तरपदे परतः' इति पाणिन्युक्तेः । इह च जपदस्य पूर्वपदत्वेन नञ उत्तरपदपरत्वाभावान्नलोपाभाव इत्यर्थः । गत्यर्थ एवात्र ग्राह्यः, नञो नान्यार्थ इति भावेनाह **गमयतीति** । परिहरतीत्यर्थः ॥ १८ ॥

*भा०र०*— **वचनात्** धातुव्याख्यानात् । 'याच्यत्वात्' इति वदन् बाहुलकात् कर्मणि ल्युटि, तस्य टित्करणसामर्थ्यात् पुलिङ्गत्वमित्यभिसन्धत्ते **शङ्कर इति** । तथा च तदीयं भाष्यं 'असुराणां = देवप्रतिपक्षजनानां' नरकादिगमयितृत्वात् अभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनं सर्वैर्जनैर्याच्यत इति वा' इति । **इदं तु** 'न जायते, अर्दयति संसारम्' इति व्याख्यानं तु, तर्हि 'अजार्दनः' इति स्यात् ? इत्यत आह **नञ इति** । उपसर्जनस्य पूर्वं निपातनीयस्यापि श्रुतिबलात् परनिपातः = पश्चात् प्रयोज्यत्वमित्यर्थः । तथापि 'नलोपो नञः' इति नकारलोपे सवर्णदीर्घे च 'जार्दनः' इति स्यादिति कुतो न स्यात् ? इत्यत आह **उत्तरपद इति** । 'नलोपो नञः' नञो नकारस्य लोपो भवति उत्तरपदे परतः, 'न ब्राह्मणः अब्राह्मणः' इति सूत्रार्थोदाहरणे । अत्रैवोत्तरपदाधिकारभाष्ये 'उत्तरपद इति किम् ? परमन' इति प्रत्युदाहरणम् । एवं प्रकृतेऽपि 'जन' इति नञः परनिपातस्य श्रौततया तस्योत्तरपदे परतोऽनुशिष्टो लोपो न भवति । नञ एव जपदादुत्तरपदत्वेन तस्यान्योत्तरपदकत्वाभावादिति भावः ।

अत्र **एके** चोदयन्ति । नञोऽप्युत्तरपदम् अर्दनशब्द एवास्तीति, तस्मिन् परतस्तस्य लोपः स्यादेवेति टीकोक्तो लोपाभावश्चिन्त्य इति । तन्न । नञा समस्यमानोत्तरपद एव तच्छास्त्रप्रवृत्तेरभिमतत्वात् । तथा हि । 'नलोपो नञः' इति सूत्रे 'उत्तरपदे' इत्यनुवर्तते । तत्सामर्थ्याच्च 'पूर्वपदम्' इत्येतदाक्षिप्यते । **तच्च** नञा विशेष्यते 'नञ्रूपं यत् पूर्वपदम्' इति । तथा च यस्मिन् समासे पूर्वपदोत्तरभावापन्नपदद्वयघटिते नञ् पूर्वपदम्, तस्मिन्नेव समासे यदुत्तरपदं तस्मिन् परतो नञो नकारस्य लोप इति निर्गलितार्थोऽभिमत इति, न प्रकृते नलोपप्रसक्तिः । नञा समस्यमानस्य जपदस्योत्तरपदत्वाभावात्, अर्दनशब्दस्य च नञ्घटितसमासानन्तर्गतत्वात् । न चैवं विवक्षायाम् 'स्त्रैणार्थः' इत्यत्रार्थशब्दे परतः 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति सूत्रविहिततद्धितप्रत्ययरूपनञो नकारस्य लोपः स्यादिति पर्यनुयोगस्य 'रात्रेः कृति विभाषा' इत्यतो विभाषाग्रहणानुवृत्तेः, तस्याश्च विभाषाया व्यवस्थितविभाषात्वाभ्युपगमनेन नोक्तस्थले नलोप इति *न्यासकार*समाधानम् अयुक्तं स्यात् । पूर्वपदत्वविवक्षयैव नलोपापादनाप्रसक्तेरिति वाच्यम् । उपायस्योपायान्तरादूषकत्वात् । उक्तविवक्षामनभ्युपगम्य नञ्घटितसमासत्वमात्राश्रयणेन नञ्लोपाक्षेपसमाधाने न्यासकारेण कृते,

अस्माभिस्तु पूर्वपदत्वाश्रयणेन । न्यासकारोक्तपरिहाराभिप्रायेणैव नगनाकादिशब्दवत् अयंशब्दो ज्ञातव्यः' इति टीकाव्याख्यान*चन्द्रिकायां* नारायणशब्दे नञो नलोपाभाव उक्तः ।

*हरदत्तस्तु* '**स्त्रैणार्थः**' इत्यत्र नञो नलोपो न भवति । 'नञो नलोपः' इत्यत्र निरर्थकानुबन्धनञो ग्रहणात् । तद्धितनञस्तु सानुबन्धकस्यैवात्र ग्रहणम्, अनुबन्धस्य च वृद्धिस्वरौ प्रयोजनमिति, नञो नलोपः स्यादिति न शक्यम् । उत्तरपदग्रहणेन पूर्वपदाक्षेपाद्वा तदप्रसक्तिः । तद्धितस्य नञोऽपदत्वादिति समाधानद्वयमभ्यधत्त । तथाच न्यास-हरदत्तमतद्वयेनापि नात्र लोपशङ्केति द्रष्टव्यम् । 'गत्यर्थाकर्मक'इत्यादिना भवतेः कर्तरि निष्ठायां अवध्यनुक्तेः, अस्तेश्च भवत्यर्थकत्वाद् 'अनादिकालतः सत्तावान्' इति कथं लभ्यते ? इत्यत आह **स ह्यासीदिति** । 'न जायते' इति भाष्याविसंवादायाह **नासीन्न जन्मवानिति** ॥ १८ ॥

*गीताक्षरार्थस्तु—*

सामान्येनोक्तौ विभूतियोगौ श्रुत्वा विशेषविवित्सया अर्जुनोऽपृच्छत् इत्युच्यते **अर्जुन उवाच इति** । **परं** उत्तमं **ब्रह्म** परिपूर्णं पूरयितृ च वस्तु । मुक्तगणोऽपि स्वयोग्यतापेक्षया पूर्णः स्वानुग्राह्यपूरयिता च । इत्यतः **परमिति** । उत्तमत्वं च अत्र स्वातन्त्र्यरूपं विवक्षितमिति ज्ञातव्यम् । **परं धाम** उत्तमं तेजः, उत्तमाश्रयो वा । **परमं पवित्रं** सकलपापपावनसमर्थं वस्तु **भवान्** एव । किञ्च **सर्वे ऋषयः** ज्ञानिनो मरीच्याद्या वा तथा **देवर्षिः नारदः असितदेवलनामानौ** ऋषी, **व्यासः** पाराशर्यः **पुरुषं** पूर्णषड्गुणं सर्वशरीरेषु सन्तं वा, **शाश्वतं** एकरूपं **दिव्यं** लोकविलक्षणं **आदिदेवं** देवानां आदौ विद्यमानम्, **अजं** जन्महीनं **विभुं** विविधभवनहेतुना विभुशब्दवाच्यं **त्वामाहुः** । 'अहं सर्वस्य प्रभवः' इत्यादिना **स्वयं च मे** मह्यं **ब्रवीषि** व्यक्तं भाषसे ॥ १२-१३ ॥

हे **केशव** ! ब्रह्मरुद्रनियामक ! **यत्** माहात्म्यं **वदसि एतत्सर्वं ऋतं मन्ये** । न किञ्चिदपि मृषा । हे **भगवन्** ! अतिपरिपूर्णतमज्ञानैश्वर्यवीर्यानन्दश्रीशक्त्यादिसम्पन्न ! **ते** तव **व्यक्तिं** सामर्थ्यातिशयं **देवा दानवाश्च** न विदुः । 'देवदानवाः' इत्युत्तमाधमजीवोपलक्षणम् । तव सामर्थ्यविशेषेण केऽपि न जानन्तीत्यर्थः । तव **व्यक्तिं** अवतारं **देवाः** स्वानुग्रहार्थं कृतमपि तत्त्वेन न **विदुः** वा । 'नराः स्वानुग्रहार्थं कृतमपि तत्त्वेन न विदुः' इत्यपि **केचिदाहुः** ॥ १४ ॥

तव सर्वाविज्ञेयत्वे स त्वमेव स्यात् ? इत्यत उच्यते **स्वयमेवेति** । हे **पुरुषोत्तम** ! **त्वं स्वयमेव** अन्यं वेदयितारमनपेक्ष्य **आत्मना** स्वभावेन स्वसामर्थ्येन वा **आत्मानं** स्वात्मानं **वेत्थ**

जानासि । **भूतभावन** भूतोत्पादक, भूतानामीशितश्च, **देवदेव** देवानामपि देव = देवोत्तम **जगत्पते** जगद्रक्षक ॥ १५ ॥

एवं स्तुत्वा लब्धव्यमुच्यते **वक्तुमर्हसीति** । **अशेषेण** मद्योग्यतामपेक्ष्य अनवशेषेण **दिव्या आत्मनो विभूतयः** विविधभूतयः = नानाभूतानि रूपाणि दुर्विज्ञेयत्वस्फोरणाय द्वितीयार्थे प्रथमा । किं मयैव वक्तव्या विभूतयः ? अन्यैरपि तज्ज्ञानं किं न स्यादित्यत उक्तं **दिव्या ह्यात्मविभूतय इति** । आत्मनो नानाभूतानि रूपाणि यतो दिव्याः = अलौकिकाः, **याभिर्विभूतिभिः लोका-निमान्** लोकान् नियामकत्वेन **त्वं व्याप्य तिष्ठसि** । ता वक्तुमर्हसीति सम्बन्धः । त्वदन्यो विभूतीनां वक्ता दुर्लभ इति भावः ॥ १६ ॥

निरन्तरमच्चिन्तनया विभूतिरूपाणि जानीहि । किमिति मद्वचनं प्रार्थयसे ? इत्यत उच्यते **कथमिति** । **त्वां सदा परिचिन्तयन्** अपि **अहं** त्वद्वचनाभावे हे **योगिन् !** अचिन्त्यशक्ते ! अज्ञानिबोधनसामर्थ्यातिशय ! इदं सम्बोधनम् । तव विभूतीः । **कथं विद्यां** विजानीयाम् ? अतो हे **भगवन् मया केषु केषु भावेषु** पदार्थेषु विभूतिरूपेण **स्थितस्त्वं** चिन्त्योऽसि ॥ १७ ॥

तामात्मनो विभूतिं योगं च सामर्थ्यं **विस्तरेण भूयः** पुनः **कथय,** ते **अमृतं** वचनामृतं **शृण्वतो मे तृप्तिर्नास्ति हि** । हिशब्दो भगवताऽप्येतदवगतमिति द्योतनार्थः । हे **जनार्दन** न जायत इति जनः, नञः परनिपातः । अत एव नलोपाभावः । उत्तरपदे तस्य स्मरणात् । 'जनेर्डः' । अर्दयति = गमयति संसारमिति अर्दनः । अर्दतेर्गतिकर्मणो ण्यन्तात् ल्युप्रत्यये रूपम् । जनश्चासावर्दनश्च जनार्दनः । स्वयं जननरहितः अन्येषां संसारं प्रापयिता चेति जनार्दनः, तत्सम्बुद्धिरिति ॥ १८ ॥

**गीता**

**श्रीभगवानुवाच—**

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥**

***वि०वि०—*** द्विविधा विभूतीरुपासनार्थं भगवानुवाच **हन्त इत्यादिना** । प्राधान्येन प्रधान-भूताः । काश्चिद्विभूतीः कथयिष्यामि । मे विभूतिविस्तरस्यान्तोऽवधिर्नास्ति ॥ १९ ॥

*सा०सं०*— 'वस्तुमर्हस्यशेषेण' इत्यस्योत्तरं वदन् प्रतिज्ञां तावत् करोति **हन्तेति** । **हन्त** हर्षे । **या दिव्याः । आत्मविभूतयः** । वस्तूनां विशिष्टताप्रदरूपाणि विविधरूपाणि च । **तानि** रूपाणि । **प्राधान्यतः** प्रधानतया स्थितानि । ते तुभ्यम् । **कथयिष्यामि** । **मे** । **विस्तरस्य** । विभूतिराशेः । **अन्तः** समाप्तिर्नास्ति । अतो नाशेषेण वचनं युक्तमिति भावः ॥ १९ ॥

*अ०प्र०*— एवमर्जुनेन प्रार्थितः सन् श्रीभगवान् वक्तुमर्हस्यशेषेणेति अस्योत्तरं वदन् प्रतिज्ञां तावत्करोति **हन्त ते इति** ।

हे कुरुश्रेष्ठ ![१], हन्त हे तात अनुकम्पासम्बोधने हर्षे वा[२], याः[३], दिव्याः[४], आत्मविभूतयः च[५], ताः[६], प्राधान्यतः[७], ते कथयिष्यामि[८], यतः विस्तरस्य[१०] मे[११] अन्तः[१२], नास्तिः[१३], अतः कारणात् प्राधान्यतः[१४], ते कथयिष्यामि ।

हे कुरुश्रेष्ठ ![१], हन्त = अनुकम्पा सम्बोधने हर्षे वा । यद्वा, हे तात[२], हि यतः[३], विस्तरस्य = अवान्तरविभूतिविस्तरस्य[३], मे = मदीयस्य विभूतेः अंशस्य[४], अन्तो = समाप्तिः[५], नास्ति[६], अतः = कारणात् याः दिव्याः आत्मविभूतयः = मम विभूतयः[७], वस्तूनां विशिष्टताप्रदरूपाणि विविधरूपाणि वा । ताः = तानि रूपाणि प्राधान्यतः मुख्यतया यद्वा, प्रधानतया स्थितानि[८], ते = तुभ्यं[९], कथयिष्यामि = कतिचिद्वर्णयिष्यामि । अन्तो नाशेषेण वचनयुक्तमिति भावः ॥१९॥

**गीता**

## अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
## अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥

*वि०वि०*— गुडाका निद्रा, तस्या ईशः जितनिद्रः । अहमात्मा आततगुणः । सर्वेषां भूतानामाशयेषु हृदयेषु नियामकतया स्थितः । अहमेव भूतानामादिश्च मध्यं चान्तश्च । सर्वोत्पत्तिस्थितिप्रलयहेतुरित्यर्थः ॥ २० ॥

*वा०ल०*— 'अहमात्मा' इत्यत्र आत्मा परमात्मा । जडेभ्योऽपि चेतनेषु विशेषेण स्थिता विभूतिमूर्तिरियम् । 'अहमादिः' इत्यत्र आदिः सृष्टिकर्ता, मध्यं स्थितिकर्ता, अन्तः नाशकर्ता । वक्ष्यमाणविभूतिषु विष्णुकपिलव्यासवासुदेवरामाः पञ्च स्वरूपविभूतयः । अन्यास्तेषु तेषु विशेषेण सन्निहितविभूतयः । सर्वैक्यवादिनां गणश्रेष्ठेनैकैकेनैक्यकथनस्यासङ्गतत्वात् सन्निधानविशेषादेवेयमुक्तिरिति सर्वैरपि वक्तव्यम् । केषु केषु इत्युपक्रमाच्च ॥ २० ॥

***सा०सं०***— 'केषु केषु च भावेषु चिन्त्यः' इत्यस्य प्रश्नस्य सर्वभूतेष्वपि चिन्त्य इति भावेन सर्वभूतस्थत्वं तावत् सामान्यतो वक्ति **अहमिति** । हे **गुडाकेश** जितनिद्र । **अहमात्मा** । व्याप्तोऽपि । **सर्वभूतानां** हृदयगुहायां स्थितः । **अहमेव भूतानामादिर्मध्यमन्तश्च** । सृष्टिस्थिति-लयकर्ता चेत्यर्थः ॥ २० ॥

***अ०प्र०***— केषु केषु च भावेषु चिन्त्य इत्यस्य प्रश्नस्य सर्वभूतेष्वपि चिन्त्य इति भावेन सर्वभूतस्थत्वं तावत्सामान्यतो वक्ति **अहमिति** ।

हे गुडाकेश ![1], अहं[2], आत्मा[3], सर्वभूताशयस्थितः[4], अहमेव[5], भूतानां[6], आदिः[7], मध्यञ्च[8], अन्त एव च[9] ॥

हे गुडाकेश ! = गुडाका निद्रा तस्या ईश जितनिद्र, यद्वा, गुडाः कुटिलाः केशा यस्य सः अस्य सम्बोधनं[1], अहमात्मा = व्याप्तोपि[3], सर्वभूताशयस्थितः = सर्वभूतानां हृदयगुहास्थितः यद्वा, सर्वेषां भूतानां आशयेषु अंतःकरणेषु सर्वज्ञत्वादिगुणैः नियन्तृत्वेन अवस्थितः[4], अहमेव भूतानां आदिः[7], मध्यं च = चकारेण अहमेव भूतानां मध्यं द्विविधं हि भगवतो विभूतिरूपं प्रत्यक्षं तिरोहितं च तत्र प्रत्यक्षं विष्णुकपिलव्यासरामादिरूपं तिरोहितं तु पदार्थेष्वन्तरं उक्तेषु उत्तमत्व-प्रदत्वेन सन्निहितं एतत् द्विविधं मध्यं[8], अन्त एव च = चकारेण अहं भूतानां अन्त एव सर्व-भूतानां जन्मादिहेतुश्चाहमेवेत्यर्थः[9] ॥ २० ॥

**गीतातात्पर्यनिर्णयः**

**मद्गतप्राणाः मद्विषयचेष्टाः** ॥ ९-२० ॥

***न्या०दी०***— प्राणानां भगवद्गतत्वं कथमित्यत आह **मद्गतेति** ॥ ९-२० ॥

**गीता**

## आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
## मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

***वि०वि०***— अत्र शश्यादिषु विजातीयस्वाम्यदत्वेनोक्तो भगवान् नक्षत्रादीनां विजातीयत्वात्, 'सत्वं सत्ववताम्' इत्यादौ धर्मिषु सत्वादिसारदत्त्वेनोक्तः, 'रुद्राणां शङ्करः' इत्यादौ शङ्करादीनां सजातीयश्रैष्ठ्यदत्वेनोक्तः, 'देवानामस्मि वासवः' इत्यादौ वासवादीनां सजातीयैकदेशश्रेष्ठ्यद-

त्वेनोक्तः । तदुक्तम्— 'शश्यादिषु विजातीयसाम्यदः सारदः क्वचित् । शर्वादिषु सजातीयश्रेष्ठ्यदत्वेन संस्थितः ॥ शक्रोशनार्जुनाद्येषु सजातीयैकदेशतः । देवेष्वभ्यधिको ब्रह्मा यतो विष्णोरनन्तरः ॥ कवित्वादिगुणैश्चैव यत्समो नास्ति कश्चन । तथा भीमश्च पार्थेषु ज्ञानं यज्ञेषु चोत्तमम् ॥ सुदर्शनश्चायुधेषु वेदेष्वृग्वेद एव च ॥' इत्यादि । क्वचित् साम्न आधिक्यमभिमानिव्यपेक्षया ॥२१॥

*वा०ल०*— 'मरीचिर्मरुतामस्मि' इत्यत्र मरीचिरिति मरुत्सु श्रेष्ठस्य कस्यचिन्नाम ॥ २१ ॥

*सा०सं०*— द्विविधं हि भगवतो विभूतिरूपम्, प्रत्यक्षं तिरोहितं च । तत्र प्रत्यक्षं विष्णुकपिलव्यासवासुदेवरामादिरूपम् । तिरोहितं तु पदार्थेष्वन्यत उत्कर्षप्रदत्वेन सन्निहितम् । द्विविधविभूतिरूपाणि सङ्कल्प्याह **आदित्यानामिति** । द्वादशा**दित्यानां मध्ये अहं विष्णुरस्मि** । सर्वत्रव्याप्तत्वात् सर्वेषु प्रविष्टत्वाद्वा, विष्णुनामास्मि । 'विष्लृ व्याप्तौ' इत्यतः क्नुप्रत्ययः । 'विश प्रवेशने' इत्यतः क्नुप्रत्यये शकारस्य षत्वे वा विष्णुरिति सिद्धेः । 'केषु केषु' इति पृष्टस्योत्तरमाह **ज्योतिषामिति** । **ज्योतिषां** प्रकाशरूपाणां मध्ये **अंशुमान्** विश्वव्यापिरश्मियुक्तो **रविरहमस्मि** । ज्योतीरूपेभ्यो रवेराधिक्यहेतुतया रवेण वेदशब्देन ईयते ज्ञायते इति व्युत्पत्त्या रविनामकः सन् रवौ सन्निहितोऽस्मीत्यर्थः । रवशब्द उपपदे 'इण् गतौ' इत्यतः क्विप् उपपदान्तलोपः । मरुतामेकोनपञ्चाशन्**मरुतां** मध्ये तेभ्यो मरीचिनाम्नो मरुत आधिक्यहेतुतया मरशब्दोक्तोदकवान् मेघो मरी तं चालयतीति व्युत्पत्त्या **मरीचिः** मरीचिनामा सन् मरीचौ मरुति सन्निहितो**ऽस्मि** । **नक्षत्राणां** मध्ये तेभ्यो शशिन आधिक्यहेतुतया शशिशब्दितातिसुखत्त्वहेतुना **शशि**नामा सन् शशिनि चन्द्रे स्थितोऽस्मि । एवमग्रे सर्वत्र तिरोहितेष्वर्थो ध्येयः । ग्रन्थगौरवभयात् निरुक्तिमात्रं वक्ष्यामः ॥२१॥

*अ०प्र०*— विभूतिरूपाणि सङ्कल्प्याह अत्र 'आदित्यानामहं विष्णुरि'त्यादिषु । प्रायशो निर्धारणे षष्ठी क्वचिच्च भूतानामस्मि चेतनेत्यादिषु अवतारेष्वपि प्रभावातिशयमात्रं विभूतित्वेन निर्दिश्यते । अतःपरं च अध्यायस्य स्पष्टार्थत्वेऽपि क्वचिद्व्याख्यास्यामः **आदित्यानामिति** ।

अथान्वयः— आदित्यानां मध्ये[१], अहं[२], विष्णुः[३], ज्योतिषां मध्ये[४], अंशुमान्[५], रविरहमस्मि[६], मरुतां मध्ये[७], मरीचिः[८], अहमस्मि[९], नक्षत्राणां मध्ये[१०] शशी[११] अहमस्मीत्यन्वयः ।

आदित्यानां द्वादशादित्यानां मध्ये[१], अहं विष्णुः रश्मीनां सर्वत्र-व्याप्तत्वात् सर्वेषु प्रविष्टत्वाद्वा विष्णुनामा अहमस्मि[३], ज्योतिषां प्रकाशरूपाणां मध्ये[४], अंशुमान् = विश्वव्यापी रश्मि इत्युक्तः[५], रविः अहमस्मि ज्योतिरूपेभ्यो रवेराधिक्यहेतुतया रविशब्देन ईयते ज्ञायते इति व्युत्पत्त्या रविनामकः सः रवौ सन्निहितोऽस्मीत्यर्थः[६], मरुतां = एकोनपञ्चाशत् मरुतां मध्ये तेभ्यो मरीचि-

नाम्नो मरुतः आधिक्यहेतुतया मरशब्दोक्त उदकवान् मेघो मरी तं चालयतीति व्युत्पत्त्या मरीचि-नामा सन् मरीचिः मरुत्सु सन्निहितोऽस्मि[९], नक्षत्राणां मध्ये[१०] शशी[११] अहमस्मि नक्षत्राणां मध्ये तेभ्यः शशिनः आधिक्यहेतुतया शशशब्दित-अतिसुखवत्वहेतुना शशिनामा सन् शशिनि चन्द्रे च स्थितोऽस्मि[१२], एवमग्रे सर्वत्र तिरोहितेषु अर्थो ध्येयः । ग्रन्थगौरवभयान्निरुक्तिमात्रं वक्ष्यामः ॥२१॥

भाष्यम्

**विष्णुः सर्वव्यापित्वप्रवेशित्वादेः । "विष्लृ व्याप्तौ", "विश प्रवेशने" इति च पठन्ति । "गतिश्च सर्वभूतानां प्रजानां चापि भारत । व्याप्तौ मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम । अधिभूतनिविष्टश्च तदिच्छुश्चापि भारत । क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः ॥" इति मोक्षधर्मे ॥ २१ ॥**

***प०टी०***— प्रत्यक्षविभूतिवाचिविष्ण्वादिशब्दान् सप्रमाणकं व्याचष्टे **विष्णुरिति** । मे व्याप्तौ रोदसी तिष्ठतः मयेति कृषणा...क्रमणात् ॥ २१ ॥

***प्र०दी०***— द्विविधं विभूतिरूपम् । प्रत्यक्षं तिरोहितं च । अत्र विष्ण्वादिकं प्रत्यक्षमिति ज्ञापयितुं तच्छब्दान् व्याकुर्वन् 'आदित्यानामहं विष्णुः' इति विष्णुशब्दं तावत् सप्रमाणकं व्याकरोति **विष्णुरिति** । 'सर्व' इति योग्यतया सम्बद्ध्यते । **आदिपदेन** वक्ष्यमाणार्थसङ्ग्रहः । चशब्दः धात्वन्तरसमुच्चयार्थः ।

गच्छत्यनेनेति गतिः । **भूतानां** पृथिव्यादीनां, **प्रजानां** ब्रह्मादीनाम् । 'वी गतिव्याप्तिप्रजन-कान्त्यशनखादनेषु' इत्यतो गत्यर्थात् क्स्नुप्रत्ययः । धातोर्ह्रस्वश्च ।

**मे** मया । **रोदसी** द्यावापृथिव्यौ । **व्याप्तौ** व्याप्ते । 'विष्लृ व्याप्तौ' इत्यतः क्नुः । **कान्तिः** कमनीयता । 'वश कान्तौ' इत्यतो नुः । धातोरकारस्येकारः । शकारस्य षकारः । 'वी गति' इत्यतो वा कान्तिकर्मणः क्स्नुः ।

**अधिभूतं** प्राग्व्याख्यातम् । 'विश प्रवेशने' इति । अतः क्नुः, षत्वं च । **तदिच्छुः** अधिभूतस्य जन्मादीच्छुः । **कान्तिः** इच्छा । अतो वयतेर्वष्टेश्च पूर्ववद्रूपम् । **क्रमणात्** त्रिविक्रमरूपेण पाद-विक्षेपात् । पूर्ववत् वयतेर्गत्यर्थात् कर्तरि प्रत्ययः ॥ २१ ॥

***भा०दी०***— **वक्ष्यमाणार्थेति** । भूताधिगमनहेतुत्वं कमनीयत्वं गमयित्वा 'अधिभूतजन्म' इत्युक्त्या पादक्रमणरूपार्थसङ्ग्रह इत्यर्थः । **धात्वन्तरेति** । 'वा'धातुवत् 'वश'धातूक्तिरित्यर्थः ।

**क्स्नुप्रत्यय इति** । कित्वात् सार्वधातुकार्धधातुकयोः इति गुणाभावे 'इण् कोः' इति षत्वे 'रषाभ्यां नो णः' इति णत्वे विष्णुरिति रूपमिति भावः ।

**क्रुः इति** । 'कित्वात् पुगन्तलघूपधस्य च' इति गुणाभावे, णत्वे च रूपम् । **षकार इति**। तथा च 'रषाभ्यां नो णः' इति णत्वे रूपमिति भावः । निरुक्तिबलात् प्राप्तेकारस्य 'पुगन्त' इति गुणाभावो विधिबलादेवेत्यर्थः ।

**कान्तीति** । इच्छापर्यायकान्त्यर्थकादित्यर्थः । **प्रागिति** । 'भूतानि शरीरजीवानधिकृत्य तदुपकारित्वेन स्थितम् । उत्पत्तिविनाशिवस्तु तदधिभूतम्' इत्यष्टमोक्तेरिति भावः । **वयतेरिति** । 'वा'धातोरित्यर्थः । **वष्टेरिति** । 'वश'धातोः इत्यर्थः । कान्त्यर्थादिति ....... उभयशेषो ज्ञेयः । **पूर्ववदिति** । वयतेः क्स्नुः, वष्टेः क्स्नुरिति भावः । **प्रत्यय इति** । क्स्नुप्रत्यय इत्यर्थः ॥ २१ ॥

*भा०र०*— 'द्विविधं वैभवं रूपं प्रत्यक्षं च तिरोहितम् । कपिलव्यासकृष्णाख्यं प्रत्यक्षं वैभवं स्मृतम् ॥ भिन्नं ब्रह्मादिजीवेभ्यो जडेभ्यश्चापि तद्गतम् । स्वजात्याधिक्यदं तेषां तत्तिरोहितवैभवम् ॥' इति अन्यत्रोक्तं हृदि कृत्वा उत्तरभाष्यमवतारयति **द्विविधमिति** । 'तिरोहितं च' इत्यत्र 'इतिशब्दः' अध्याहार्यः । **विष्ण्वादिकं** विष्णु-कपिल-व्यास-राम-वासुदेवनामवाच्यम् । 'ज्योतिषां रविरंशुमान्' इत्यादिवाक्योक्तं तु तिरोहितविभूतिरूपमिति योज्यम् । भाष्ये 'विष्लृव्याप्तौ' इत्यत्र 'दाभाभ्यां नुः' इति नुप्रत्ययेऽनुवर्तमाने 'विषेः किच्च' इति तस्य कित्वे लघूपधलक्षणस्य गुणस्य 'क्ङिति च' इति निषेधे, 'रषाभ्यां नो णः' इति वा, 'ष्टुना ष्टुः' इति वा णत्वे च, 'वेवेष्टि सर्वम्' इति 'विष्णुः' इति रूपम् । 'विश = प्रवेशने' इत्यत्र च 'क्रुहनिभ्यां क्रुः' इति विधीयमानः क्रुप्रत्ययो बाहुलकाद् विशेरपि भवति । पृषोदरादिभावेन शकारस्य षकारे पूर्ववत् णत्वे च 'विष्णुः' इति भवति । व्याप्त्यादेरेव धात्वर्थत्वादाह **सर्वेति योग्यतयेति** । व्याप्त्यादौ अवधेरनुक्तेः सर्वव्यापित्वादिकमेवौत्सर्गिकं लभ्यत इति भावः । **वक्ष्यमाणेति** । 'गतिश्च सर्वभूतानाम्' इति वक्ष्यमाणप्रमाणार्थस्य सर्वभूतप्रजागतित्वादेः सङ्ग्रह इत्यर्थः । 'इति च' इत्यत्र भाष्ये चशब्दो वी = गतौ, 'वश = कान्तौ' इत्यादिवक्ष्यमाणधात्वन्तरसमुच्चयार्थ इत्यर्थः ।

'गतिश्च सर्वभूतानाम्' इति प्रमाणे सर्वभूतादिगतित्वं विष्णुशब्दार्थ इत्युच्यते । तदयुक्तमिव । विष्णुशब्दो हि कर्त्रर्थक्रुप्रत्ययान्तः । नुप्रत्ययश्च कृत्वात् 'कर्तरि कृत्' इति कर्तर्यनुशिष्टः । वक्ष्यति च 'कर्तरि प्रत्ययः' इति । गतिशब्दस्तु क्तिन्नन्तः, न कर्तरि निष्पादयितुं शक्यः । क्तिन्प्रकरणे 'अकर्तरि' इत्युक्तेरनुवृत्तेः । अत एव 'गम्यते' इति 'गतिः' इति कर्मणि निष्पाद्यः । कर्तृप्रत्ययान्त-

विष्णुशब्देन ऐकार्थ्यायोगात् इत्यत आह **गच्छन्त्यनेनेति** । भूतानि प्रजाश्च । नायं गतिशब्दः कर्तरि कर्मणि वा निष्पन्नः, येनोक्तदोषः स्यात् । किन्तु करणे क्तिन्प्रत्यये 'अनुदात्तोपदेश-वनति-तनोत्यादीनाम्' इति मकारलोपे च सति । तथाच कर्तुः करणत्वविवक्षायां णिजन्तभवि च फलतः 'सर्वभूतगतिः' इति 'विष्णुः' इति च अनर्थान्तरं इति भावः । भूतशब्देन 'क्षरः सर्वाणि भूतानि' इत्यादाविव जीवग्रहणे 'प्रजानाम्' इति पुनरुक्तिः ? इत्यतो विवक्षितभूतशब्दार्थमाह **पृथिव्यादीनामिति** । सर्वभूतादिगतित्वं विष्णुशब्दार्थो यथा स्यात् तथा तं निष्पादयति **वी गतीति** । **क्स्नुप्रत्ययः** 'कर्तर्यौणादिको ग्राह्यः' इति शेषः ।

**यत्तु** 'ग्ला-जि-स्थश्च ग्स्नुः' इत्यत्र चशब्दस्य 'भुवश्च' इति पूर्वसूत्रोपात्तभूधातुसमुच्चायकत्ववत् अनुपात्तवीधातुसमुच्चायकत्वे पाणिनीय एव क्स्नुप्रत्यय इति व्याख्यानं तद् वृत्तिभाष्यादौ क्वापि तथाऽनुक्तेः न वैयाकरणानुमतम् । एवं सति 'वीष्णुः' इति स्यात् ? इत्यत उक्तम् **धातोर्ह्रस्व इति** । 'पृषोदरादीनि यथोपदिष्टम्' इति धात्वीकारस्य विकार इकार इत्यर्थः । प्रत्ययस्य कित्त्वेन 'सार्वधातुकार्धधातुकयोः' इति प्राप्तगुणस्य 'क्ङिति च' इति निषेधे, 'इण्कोः' इति वर्तमाने 'आदेशप्रत्यययोः' इति षत्वे, 'रषाभ्यां नो णः' इति णत्वे च 'विष्णुः' इति रूपमिति भावः ।

ननु रोदःशब्दो नपुंसकलिङ्गः, तत्कथं तस्य 'व्याप्तौ' इति पुल्लिङ्गेन सामानाधिकरण्यम् ? इत्यत उक्तम् **व्याप्तौ व्याप्ते इति** । 'सुप्तिङुपग्रहलिङ्गनराणाम्' इति छान्दसो लिङ्गव्यत्यय इति भावः । रोदोव्याप्तिः विष्णुशब्दार्थ इत्येतत् व्युत्पादयति **'विष्लृ = व्याप्तावित्यतः क्नुः' इति** । 'दाभाभ्यां नुः' इति प्राप्तो नुप्रत्ययः 'विषेः किच्च' इति किदनुशिष्ट' इति तस्यायं निष्कृष्यानुवादः, न पुनः 'कृहनिभ्यां क्नुः' इत्यस्य, विषेः तत्रानुपादानात् । 'विषेः किच्च' इत्याहृत्य नुप्रत्ययस्य कित्त्वानुशासनाच्च । कित्वेन च लघूपधगुणाभावे 'विष्णुः' इति रूपम् । रोदसोश्च योग्यतया सम्बन्ध इति भावः । 'अभ्यधिका कान्तिश्च मम यतः अतो अहं विष्णुरित्यभिसंज्ञितः' इत्यत्र कान्तिशब्देनेच्छाग्रहणे 'तदिच्छुः' इत्यत्रेच्छाया वक्ष्यमाणत्वात् पुनरुक्तिः ? इत्यतः कान्तिशब्दस्य विवक्षितार्थमाह **कमनीयतेति** । न कामनेत्यर्थः । कान्तिशब्दार्थकमनीयतायाः विष्णुशब्दार्थत्वं दर्शयितुं व्युत्पादयति **वश कान्तावित्यतो नुरिति** । दाभाभ्यां विधीयमानोऽपि बाहुलकाद् वशेरपि भवति । इकारः षकार इति द्वावपि विकारौ च निरुक्तत्वादेवेति भावः ।

अनेककल्पनानुशयादाह **वी गतीत्यतो वेति** । 'वी = गति-प्रजन-कान्ति-असन-खादनेषु' इति धातोः कान्तिलक्षणक्रियाभिधायिनः क्स्नुप्रत्ययः, धातोर्ह्रस्वता च पूर्ववदेवेति भावः । **यत्तु**

विष्णुशब्दो न 'वश = कान्तौ इत्यस्य रूपम् । तथात्वे तत्र 'कान्तिरिच्छा' इति वैयाकरणैर्व्याख्यातत्वेन तद्ग्रहणप्रसङ्गात् । तथात्वे च उक्तपुनरुक्तिस्तदवस्थैव ? इत्यत आह **वी गतीत्यतो वेति** । 'वश = कान्तौ' इत्यत्र 'कान्तिरिच्छा' इति व्याख्यानेऽपि 'वी = गति-प्रजन-कान्ति-असन-खादनेषु' इत्यत्र तथा व्याख्यानाभावेन कमनीयतार्थोपपत्तेः, सापि विष्णुशब्दप्रवृत्तिनिमित्तमिति भाव इति व्याख्यानम् । तत्तु 'कान्तिरिच्छा' इति भाविटीकाविरोधात् मन्दम् ।

**प्राग्व्याख्यातमिति** । 'अधिभूतं क्षरो भावः' इत्यष्टमाध्याये 'भूतानि = सशरीरान् जीवानधिकृत्य तदुपकारित्वेन स्थितम् उत्पत्तिनाशवद् वस्तु तदधिभूतम्' इति व्याख्यातमित्यर्थः । क्नुः कित्त्वाद्गुणाभावः, षत्वं धातुशकारस्य । 'तदिच्छुः' इत्यत्र तच्छब्देनाधिभूतजन्मादिग्रहणे तदिच्छाऽपि विष्णुशब्दप्रवृत्तिनिमित्तमिति भावेन तदर्थं वदन् तत्र विष्णुरूपं निष्पादयितुं 'वी = गतिप्रजनकान्ति' इत्यत्रापि 'वश = कान्तौ' इत्यत्रेव कान्तिरिच्छैव ग्राह्येत्याह **तदिच्छुरधिभूतस्य जन्मादीच्छुः, कान्तिरिच्छेति** । **अतो वयतेः** इच्छार्थकवीधातोः लुग्विकरणस्यापि अस्य अन्यविकरणेन निर्देशः तस्यौत्सर्गिकत्वेन सुखोच्चारणाशयेन, गणकार्यस्यानित्यत्वाभिप्रायेण वा । तेन 'वेतेः इति वक्तव्यम्' इति चोद्यस्य अनवकाशः । **वष्टेः** 'वश = कान्तौ' इति धातोः । **पूर्ववत्** वयतेः क्स्नुप्रत्यये, वष्टेः क्स्नुप्रत्यये 'विष्णुः' इति रूपमित्यर्थः । 'क्रमु = पादविक्षेपे' इति धातोराह **पादविक्षेपादिति** । तद्घटनायोक्तं **त्रिविक्रमेति** । **पूर्ववत्** 'प्रत्ययः' इति सम्बन्धः । क्स्नुप्रत्यय इत्यर्थः ॥ २१ ॥

**गीता**

## वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
## इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥

*वि०वि०*— भूतानां चेतनवतां सम्बन्धिनी चेतना ज्ञानशक्तिः ॥ २२ ॥

*वा०ल०*— 'भूतानामस्मि चेतना' इत्यत्र चेतना ज्ञानम् ॥ २२ ॥

*सा०सं०*— साम्यहेतुना सामवेदनहेतुना वेदे स्थितः **सामवेदनामा** । वसन्त्यत्रेति वासः सर्वदिशः, तत्र सर्वत्र वर्तत इति वासवः । वसतेरधिकरणे घञ्, तस्मिन्नुपपदे वृतुधातोर्डः । अवबोधरूपत्वान्मनः मनतेरसुन् । चेतोनेतृत्वा**च्चेतना** । स्त्रीरूपेण चेतनायां स्थितत्वात् स्त्रीलिङ्गम् । यद्वा, भूतानां चेतनारूपसारधर्मद इत्यर्थः । **चेतना** नाम चेतसो व्याप्तिः । सा च 'बहुस्मरणशक्तिश्च चेतनेत्यभिधीयते' इत्युक्तदिशा ज्ञेया ॥ २२ ॥

*अ०प्र०*— वेदानामिति ।

वेदानां मध्ये[१], सामवेदोऽस्मि = साम्यहेतुना नाम वेदनहेतुना वेदे स्थितः सामवेदनामा अहमस्मि[२], देवानां मध्ये[३], वासवः = वसत्यत्रेति सर्वदिशः तत्र वर्तत इति वासवः[४], अहमस्मि[५], इन्द्रियाणां मध्ये[६], मनश्चास्मि मनः अव-बोधरूपत्वान्मनश्चास्मि[७], मनुतेरसुन्[८], भूतानां सम्बन्धिनि[९], चेतनाचेतनयोः नेतृत्वाच्चेतनाज्ञानशक्तिद इत्यत्र स्त्रीरूपेण चेतनायां स्थित्वा स्त्रीलिङ्गं यद्वा, भूतानां चेतनाचेतनरूपसारधर्म इत्यर्थः । चेतनाचेतसो व्याप्तिः सा च बहुस्मरणशक्तिश्च चेतनेत्यभिधीयत इत्युक्तदिशा ज्ञेया ॥ २२ ॥

**गीता**

**रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षराक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥**

*सा०सं०*— सुखकारणत्वात् **शङ्कर**नामा । वित्तस्वामित्वात् **वित्तेश**नामा कुबेरस्थः । **पावकः** पावयति शोधयतीति व्यत्पत्त्या पावकनामा । 'पव शुद्धौ' इत्यतोऽन्तर्णीतण्यर्थात् ण्वुल् । शुद्धिकर्तेत्यर्थः । **मेरु**रित्यत्र मा ईरुरिति विभागः । ईरयति प्रेरयतीति ईरः प्रेरको 'मा'शब्दो निषेधार्थः । ईरः प्रेरकः अस्यान्यो मा नास्तीति मेरः मेर एव मेरुः । 'ईर प्रेरणे' इत्यतः ताच्छी-ल्यार्थे उप्रत्ययः । **शिखरिणां** पर्वतानाम् ॥ २३ ॥

*अ०प्र०*— शङ्करः[१] सुखकरत्वात् शङ्करनामा[२], अहमस्मि[३], यक्षरक्षसां मध्ये राक्षसानामि विक्रूरत्वादि सामान्यात् पक्षैः सहैकीकृत्य निर्देशः तेषां मध्ये[४], वित्तेशः वित्तस्वामित्वात् वित्तेश-नामा कुबेरस्थः[५], वसूनां मध्ये[६], पावकः = पावयति शोधयतीति व्युत्पत्त्या पावकनामा शुद्धिकर्तेत्यर्थः अहमस्मि शिखरिणां शिखरवतां उच्छ्रितानां पर्वतानां मध्ये[९], मेरुः मायि रूरिति विभागः ईरयति प्रेरयतीति । ईरः प्रेरकः । मा शब्दो निषेधार्थः ईरप्रेरकोऽस्यान्यो नामाऽस्तीति । मेरुः मेर एव मेरुः[१०] अहमस्मि ।

**गीता**

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥**

***सा०सं०***— पुरोधसां पुरोहितानां, बृहतां पतित्वाद्**बृहस्पति**नामानम् । **सेनानीनां** सेनानेतॄणां **स्कन्द**नात् स्वस्माज्जगतो निष्कासनात् स्कन्दनामा । 'स्कन्दिर्गतिविशोषणयोः' इति धातोरच् । **सरसां** सरोवराणां **सागरः** । गिरतीति गरः । 'गृ निगरणे पचाद्यच् । सारस्य गरः सागरः । रशब्दलोपो निरुक्तत्वात् । सारभोक्तृत्वात् सागरनामा समुद्रस्थः ॥ २४ ॥

***अ०प्र०***— हे पार्थ[१], पुरोधसां मध्ये[२], मुख्यं[३], बृहस्पतिं[४], मां विद्धि[५], = हे पार्थ[१], पुरोधसां = पुरोहितानां मध्ये[२], मुख्यं[३], बृहस्पतिं = बृहतां पतित्वात् देवपुरोहितत्वात् बृहस्पतिनामानं[४], मां[६], विद्धि[५], सेनानीनां = सेनानेतॄणां मध्ये[७], देवसेनापतिः स्कन्दः = स्कन्द-नामा । यद्वा, स्वस्माज्जगतो निष्कासनात् स्कन्दनामा[८], अहमस्मि[९], सरसां = सरोवराणां स्थिर-जलाशयानां मध्ये[१०] सागरः = सारस्य गरः सागरः रशब्दाल्लोपो निरुक्तत्वात् सारभोक्तृत्वा-त्सागरनामा समुद्रस्थः[११] अहम् ॥ २४ ॥

**गीता**

## महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
## यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥

***वि०वि०***— गिरां पदानाम्, एकमक्षरं प्रणवः । जपयज्ञः स्वाध्यायः । स्थावराणां गहनानां गभीराणाम् ॥ २५ ॥

***वा०ल०***— 'एकमक्षरम्' इत्यत्र एकमक्षरम् ओङ्कारः ॥ २५ ॥

***सा०सं०***— विरोधिनां भर्जनाद्धननात् **भृगु**नामा भृगुस्थः । मुख्यत्वादे**कम्** । चतुर्विध-नाशहीनत्वात् **अक्षर**नामा प्रणवस्थः । जान् जातान् पातीति जपः । याज्यत्वाद्यज्ञः । जपश्चासौ यज्ञश्चेति व्युत्पत्त्या **जपयज्ञ**नामा जपरूपयज्ञस्थः । **स्थावराणां** गतिहीनानां **हिमालय** इति । ह्रीश्च माच तयोरालय आश्रयः ह्रीमालयः स एव हिमालयः । ह्रीश्रीशब्दितलक्ष्मीस्वरूपद्वयस्याश्रयत्वात्, हिमवत्पर्वतस्थः ॥ २५ ॥

***अ०प्र०***— महर्षीणां मध्ये[१], भृगुः विरोधिनां मर्जनाद्दहनात् भृगुनामा भृगुस्थः[२], अहमस्मि[३], गिरां मध्ये[४], एकं[५], अक्षरं ॐकाराख्यं[६], अहमस्मि मुख्यत्वादेकं 'अनित्यत्वं देहहानिः दुःखप्राप्तिः अपूर्णता' इति । चतुर्विधनाशहीनत्वात् अक्षरनामा प्रणवस्थः अहमस्मि[७], यज्ञानां = यज्यत्वात्

यज्ञः तेषां मध्ये[८], जपयज्ञः जनजातान् पातीति जपः यज्यत्वात् यज्ञः जपश्चासौ यज्ञश्चेति व्युत्पत्त्या जपयज्ञनाम जपरूप यज्ञस्थः[९], अहमस्मि[१०] स्थावराणां गतिहीनानां मध्ये[११] हिमालयः हीश्च मा च तयोरालयः आश्रयः हिमालयः । यद्वा हीः श्रीशब्दितलक्ष्मीरूपद्वयस्याश्रयत्वात् हिमवत् पर्वतस्थः[१२], अहमस्मीत्यर्थः ॥। २५ ॥

गीता

## अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
## गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥

***सा०सं०***— अश्ववत् तिष्ठतीत्य**श्वत्थ**नामा अश्वत्थगतः । नराणामपेक्षितं नारम् । तद्ददातीति **नारद**नामा नारदस्थः । विचित्राधिदेवादिरथवत्त्वात् **चित्ररथ**नामा तन्नामकगन्धर्वस्थितः । सुखरूपत्वात् कः । पाल्यते जगदनेनेति पिः । 'पा रक्षणे' इत्यतः किः । 'आतो लोप इटि च' (६-४-६४) इत्याकारलोपः । लीयते जगदनेनेति लः । 'ली श्लेषणे' इत्यतो डः । 'ला आदाने' इत्यतो वा कः । कश्चासौ पिश्चासौ लश्चेति **कपिलः** । सुखं पिबत्यनुभवति लीलयेति वा कपिलः ॥ २६ ॥

***अ०प्र०***— **अश्वत्थेति** ।

सर्ववृक्षाणां मध्ये[१], अश्वत्थः = अश्ववत्तिष्ठतीति अश्वत्थनामा अश्वत्थगतः[२], देवर्षीणां देवा एव ऋषित्वं प्राप्तास्ते तथा । यद्वा, देवा एव सन्तो मन्त्रदर्शित्वेन ये ऋषित्वं प्राप्ताः तेषां मध्ये[३], नारदः = नराणामपेक्षितं नारं तद्ददातीति नारदनामा नारदस्थः[४], गन्धर्वाणां मध्ये[५], चित्ररथः = विचित्रादि देवादिरथत्वात् चित्ररथनामकगन्धर्वस्थः[६], सिद्धानां = उत्पत्तित एव अधिगतपरमार्थानां मध्ये[७], मुनिः[८], कपिलः = कं सुखं पिबति अनु-भवति लीयतेति वा कपिलः अहमस्मि ॥२६॥

भाष्यम्

**सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः । "प्रीतिः सुखं, कं आनन्दः" इत्यभिधानात् । "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति च । "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति ज्ञायमानं च पश्येत् । सुखादनन्तात् पालनाल्लापनाच्च यं वै देवं कपिलमुदाहरन्ति ॥" इति च बाभ्रव्यशाखायाम् ॥ २६ ॥**

*प०टी०*— **तं कपिलं ऋषिं** ज्ञानिनं **पश्येत्** । **योऽग्रे प्रसूतं जायमानं** च ब्रह्माणं **ज्ञानैः बिभर्ति** पुष्णातीत्यर्थः ॥ २६ ॥

*प्र०दी०*— **'सिद्धानां** कपिलो मुनिः' इति कपिलशब्दं व्याचष्टे **सुखेति** । सुखरूप इति कः। पाल्यते जगदनेनेति पिः । 'पा रक्षणे' इत्यतः किः । लीयते जगदनेनेति लः । 'लीङ् श्लेषणे' इत्यस्मात् डः । 'ला आदाने' इत्यतो वा कः । ततः कर्मधारयः । कशब्दस्य सुखवाचित्वेऽभिधानं प्रयोगं च पठति **प्रीतिरिति** ।

समग्रार्थे श्रुतिमाह **ऋषिमिति** । **तं** भगवन्तं **ऋषिं कपिलं च पश्येत्** (जानीयादित्यर्थः)। कथं ऋषिः सर्वज्ञत्वादित्युच्यते । **यः प्रसूतं** पूर्वकल्पेषु जातम् । **जायमानं** वर्तमानं च, एवमागामि च जगत् **ज्ञानैः बिभर्ति** जानाति इति यावत् । कथं कपिलः ? इत्यत उक्तम् **सुखादिति** । 'यत्'-शब्दद्वयस्य 'तं' इत्यनेनान्वयः ॥ २६ ॥

*भा०दी०*— **किरिति** । कित्वात् 'आतो लोपः' (इटि च) इति वेत्यकारलोप इति भावः। **ड इति** । डित्वात् टिलोपः । **क इति** । आतो लोपे रूपमिति भावः । कश्चासौ पिश्चासौ लश्चेति कर्मधारय इत्यर्थः ॥ २६ ॥

*भा०र०*— 'सुखरूपः' इत्यनन्तरं भाष्ये 'कपिलः' इति निर्देशघटनाय शेषमाह **इति क इति** । **कि**ः औणादिकः । ततश्च 'आतो लोप इटि च' इत्याकारलोप इति भावः । यद्यपि 'पाल्यते' इति भाष्ये 'पाल = रक्षणे' इति धातुर्गृहीतः । तथापि 'पा = रक्षणे' इत्यस्यार्थानुवाद इति भावेन 'पा = रक्षणे' इत्यतः 'किः' इत्युक्तमिति *केचित्*। वस्तुतस्तु 'पा = रक्षणे' इत्यस्य 'णौ' इति वर्तमाने 'पातेर्लुग्वक्तव्यः' इति णिचि परतो लुगागमे, कर्मणि यकि च, 'पाल्यते' इति रूपमिति भावेन एव-मुक्तम् । 'लीङ् = श्लेषणे' इत्यत्र श्लेषणं = स्वस्वकारणेषु मेलनम् = स्वोदरसंश्लिष्टतापादनमर्थः । तस्माद्धातोः 'विभाषा लीयतेः' इत्यात्वे 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ (७-३-३६)' इति आत्वेन पुगागमे, ल्युटि 'लापनात्' इति भाष्ये रूपम् । 'लानात्' इति क्वचित् पाठः । तत्र दीर्घत्वं छान्दसमिति **आहुः** । ला = आदाने' इत्यत्र आदानं = आत्मनियम्यतापादनम् । एकत्र टिलोपः, अपरत्रात् लोप इति भावः । **कर्मधारयः** 'कश्चासौ पिश्चासौ लश्च' इति कर्मधारयः ।

यद्यप्यभिधाने कशब्दो नपुंसकलिङ्गो निर्दिष्ट इति 'सुखरूपम्' इति 'कम्' इत्येवानुवादः कर्तव्यः । तथापि 'कं = सुखं स्वरूपत्वेनास्यास्ति' इति 'अर्श आदिभ्यः' इति मत्वर्थीयाच्प्रत्यये 'कः' इति रूपमिति द्योतयितुं भाष्ये 'सुखम्' इति वक्तव्ये 'सुखरूपः' इति पुलिङ्गप्रयोग इति

तदनुसारेणैव 'कः' इति पुल्लिङ्गोऽनूदितः । 'कं ब्रह्म' इति श्रुतौ कशब्दः 'सुखविशिष्टाभिधानादेव च' इति सूत्रे सुखार्थो व्याख्यात इति प्रकृतसिद्धिः । **समग्रार्थे** 'कपिलशब्दस्योक्ते' इति शेषः । चशब्दसमुच्चेयमाह **आगामि चेति** । कथमनेन सार्वज्ञलाभः ? इत्यत उक्तं **जानातीति यावदिति यच्छब्दद्वयस्य** 'यो ज्ञानैः बिभर्ति, 'यं च पश्येत्' इति यच्छब्दद्वयस्य ॥ २६ ॥

**गीता**

## उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
## ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥

***सा०सं०***— अत्युत्कृष्टकीर्तिमत्त्वहेतुना **उच्चैःश्रवो**नामानममृतोद्भवं क्षीरसमुद्रजातोच्चैःश्रवःस्थं विद्धि । 'तदैरं मदीयं सरः' इति मुक्तिस्थसरसो लक्ष्म्यात्मकत्वोक्तेः ऐरं श्रीः तामवतीति **ऐरावत**-नामानम् इन्द्रवाहनस्थं विद्धि । नरेश्वरत्वहेतुना **नराधिपनामानं** चक्रवर्त्यादिस्थं विद्धि ॥ २७ ॥

***अ०प्र०***— **उच्चैःश्रवसमिति** ।

अश्वानां मध्ये[२], अमृतोद्भवं[३], उच्चैःश्रवसं[१], मां[४], विद्धि[५], अश्वानां मध्ये उच्चैःश्रवसं अमृतोद्भवं अमृतार्थं क्षीराब्धिमन्थने उद्भूतं उच्चैःश्रवनामाऽश्वं मां मद्विभूतिं विद्धि[५], गजेन्द्राणां मध्ये[६], ऐरावतं = यत् ऐरं मदीयं सर इति मुक्तिस्थसरसो लक्ष्म्यात्मकत्वोक्तेः । ऐरं श्रीः तां अवतीति ऐरावतनामानं इन्द्रवाहनस्थं अमृतोद्भवमित्येतत् ऐरावतेऽपि सम्बध्यते[७], नराणां मध्ये[८], नराधिपं राजानं तन्नामानं चक्रवर्त्यादिस्थं[९], मां विद्धीति पूर्वेणान्वयः ॥ २७ ॥

**गीता**

## आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
## प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

वि०वि०— प्रजनः प्रजोत्पादकः कन्दर्पः, न केवलं भोगार्थम् । सर्पाणामेकशिरसाम् ॥२८॥

***सा०सं०***— सर्वदोषवर्जितत्वादरभिर्वर्जनाद्वा **वज्र**नामा इन्द्रायुधस्थः । कामितार्थदोग्धृत्वात् **कामधुङ्**नामा कामधेनुस्थः । कं सुखम्, तस्य दराः प्रभेदाः तान् पिबत्यनुभवतीति **कन्दर्पनामा**। प्रकृष्टजननकारणमन्मथस्थः । सर्पाणामेकशिरसाम् । वासस्य कं वासकम् अतिशयार्थ उकारः

वासुकः तद्वातृत्वेनः तद्वान् **वासुकिः** । मत्वर्थकइकारप्रत्ययः । 'वासुकिर्वासससुखदः' इति निरुक्तेः ॥ २८ ॥

***अ०प्र०*—** किञ्च, **आयुधानामिति** ॥

आयुधानां मध्ये[१], वज्रं = सर्वदा वर्जितत्वादरिभिः, वर्जनाद्वा वज्रनामा इन्द्रायुधस्थः[२], अहं = मद्विभूतिः[३], धेनूनां मध्ये[४], कामधुक् = कामान् दोग्धीति कामधुक् । कामितार्थदोग्धृत्वात् कामधेनुस्थः च[५], अहमस्मि मद्विभूतिः[६], प्रजनः = प्रकृष्टजननकारणप्रजोत्पत्ति-हेतुः[७], कन्दर्पः = कं सुखं तस्य दराः प्रभेदाः तान् पिबति अनुभवतीति कन्दर्पनामा कामोऽस्मि । न केवलं सम्भोग-प्रधानकामो मद्विभूतिः अशास्त्रीयत्वात् तत्स्थश्चाहमस्मि[८], सर्पाणां सविषाणां एकशिरसां मध्ये[१०] वासुकिः = वासस्य कं वासकं अतिशयार्थे उकारः वासुकः राजा । तद्वातृत्वेन तद्वान् वासुकिः। त्वमर्थक इकारप्रकारः । 'वासुकेर्वास सुखदं' इति निरुक्तेः ॥ २८ ॥

**गीता**

## अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
## पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

***वि०वि०*—** नागानां बहुशिरसां शेषः । यादसां जलजन्तूनाम् । संयमतां नियमनं कुर्वताम् ॥ २९॥

***सा०सं०*—** **नागानाम**नेकशिरसां देशकालगुणानन्त्यहेतुनाऽ**नन्त**नामा शेषगतः । **यादसां** जलचराणां उत्कृष्टानन्ददत्वात् **वरुण**नामा वरुणस्थः । 'णश्च निर्वृतिवाचकः' इत्युक्तेः । वरशब्दस्य उकारोऽन्तादेशः । वृणोतीति वा वरुणः वृञ उणप्रत्ययः । 'ऋ गतौ' इति धातोर्यप्रत्यये, अर्यं ज्ञेयं तन्माति जानातीत्य**र्यम**नामा तन्नामकपितृस्थः । संयमतां नियमनं कुर्वतां **यमः** । नियमनहेतुना यमनामा यमाख्यसारधर्मप्रद इत्यर्थः ॥ २९ ॥

***अ०प्र०*—** **अनन्तेति** ।

नागानां निर्विषाणां अनेकशिरसां मध्ये[१], अनन्तः = राजा देश-कालगुणानन्त्यहेतुनाऽनन्त-नामा शेषगतः[२], अहमस्मि = मद्विभूतिः[३], यादसां = यादो नाम उदकम् । तदधिष्ठानदेवतानां मध्ये । यद्वा, जलचराणां मध्ये[४], वरुणः = उत्कृष्टानन्दत्वाद्वरुणनामा राजा वरुणस्थः । यद्वा,

वृणोतीति वा वरुणः[7], अहं = मद्विभूतिः[6], पितॄणां मध्ये[7], अर्यमा = राजा अर्यमा[8], अस्मि[9], मद्विभूतिः[10] संयमतां = नियमकर्तॄणां मध्ये[11] यमः = यमस्थः साक्षी धर्मो यमः[12], अहं = मद्विभूतिः[13], नियमनहेतुना यमनियमाख्य सारधर्मप्रद इत्यर्थः ॥ २९ ॥

**गीता**

## प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
## मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

***वि०वि०***— कलयतां बन्धनादिकुर्वताम् ॥ ३० ॥

***सा०सं०***— प्रकृष्टः ह्लादः सुखं यस्येति **प्रह्लाद**नामा तन्नामकदैत्यस्थः । **कलयताम्** आकलयतां बन्धनादिकुर्वतां वा **कालः** । 'कल ज्ञाने' इति धातोः । सर्वमाकलयतीति कालनामा कालस्थः । स्वात्मानं मृगयन्त्यन्वेषयन्तीति मृगाः भक्तास्तदधिपतित्वात् **मृगेन्द्र**नामा मृगेन्द्रस्थः । विशेषेण नताः विनतास्तेषाम्, आश्रयतया तत्सम्बन्धी **वैनतेयः** । 'वैनतेयो नतास्पदः' इति निर्वचनात् । सम्बन्धे ढक् ॥ ३० ॥

***अ०प्र०***— **प्रह्लाद** इति । किञ्च दैत्यानां मध्ये[1], प्रह्लादः = प्रकृष्टाह्लादः सुखं यस्येति प्रह्लाद-नामकदैत्यस्थः[2], अस्मि = मद्विभूतिः[3], कलयतां = आकलयतां बन्धनादि कुर्वतां यद्वा, वशीकुर्वतां अथवा अकर्षतां मध्ये[4], कालः = अहं महा-कालोऽहम् । यद्वा, कल ज्ञान इति धातोः सर्वमाकलयतीति कालनामा कालस्थः[5], अहमस्मि = मद्विभूतिः[6], मृगाणां स्वात्मानं मृगयन्ति अन्वेषयन्ति इति मृगाः भक्ताः । तेषां मध्ये यद्वा, श्वापदानां मध्ये[7], मृगेन्द्रः = तदधिपतित्वात् मृगेन्द्रनामा । यद्वा, शार्दूलः मृगेन्द्रस्थ सिंहस्थः[8], अहमस्मि[9], पक्षिणां मध्ये[10] वैनतेयः = विशेषेण नताः तेषामाश्रयतया तत्सम्बन्धि वैनतेयः[11] 'वैनतेयो नतास्पदः' इति अहमस्मि ॥३० ॥

**गीता**

## पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
## झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥

***वि०वि०***— पवतां शोधकानाम् । वेगवतां वा । झषाणां मत्स्यानां मकरो मत्स्यविशेषः । स्रोतसां प्रवाहजलानां गङ्गा ॥ ३१ ॥

*सा०सं०*— पवतां शोधकानाम्, वेगवतां वा । पान्तीति पाः 'पा रक्षणे' क्विप् । पाभिः पालकैः वननीयत्वात्, भजनीयत्वात्, **पवनः** पवनस्थः । लोकं रमयतीति **रामः** लोकोऽस्माद्रमत इति वा रामः । रमेर्घञ् । **झषाणां** मीनानाम् । 'माङ् माने इत्यतो माशब्देन ज्ञानं तस्याल्पताज्ञापनाय ह्रस्वतया निर्देशः । 'ऊनार्थे चोनमिष्यते' इत्युक्तेः । लोकस्य मं अल्पज्ञानं करोतीति **मकर**नामा मकराख्यजन्तुगतः । असारतया संसारं जहतस्त्यजतोऽवति रक्षतीति **जाह्नवी**नामा गङ्गास्थः ॥ ३१ ॥

*अ०प्र०*— **पवन इति** । प्लवतां यावत्पितॄणां शोधकानां वेगवतां वा[१], पवनः = पातीति पाः । पा रक्षणे क्विपूपाभिः पालकैः वर्णनीयत्वात्पवनः पवनस्थः[२], अहमस्मि[३], शस्त्रभृतां मध्ये = शस्त्रधराणां मध्ये[४], जानकीकान्तो रामः[५], अहमस्मि[६], झषाणां = मीनानां मध्ये । यद्वा, मत्स्यादि जलचराणां मध्ये[७], मकरः = माङ् ज्ञाने इत्यतो माशब्देन ज्ञानं लोकस्य मं अल्पज्ञानं करोतीति मकरः तन्नामा मकराख्यजन्तुगतः पुच्छवान् मकरश्च[८], अस्मि[९], स्रोतसां = स्रवतीनां नदीनां प्रवाहोदकानां मध्ये[१०] जाह्नवी असारतया संसारं जहतां त्यजतां अवति रक्षति इति जाह्नवी नाम्नी, भागीरथीनामा गङ्गास्थः[११] अहमस्मि = मद्विभूतिः ॥३१॥

भाष्यम्

**आनन्दरूपत्वात् पूर्णत्वात् लोकरमणाच्च रामः । "आनन्दरूपो निष्परीमाण एष लोकश्चैतस्माद् रमते तेन रामः ॥" इति शाण्डिल्यशाखायाम् । रश्च अमश्चेति व्युत्पत्तिः ॥ ३१ ॥**

*प०टी०*— लोकरमणाच्च व्युत्पत्तिः ॥ ३१ ॥

*प्र०दी०*— 'रामः शस्त्रभृतामहं' इति रामशब्दं व्याख्याति **आनन्देति** । **आनन्दरूपत्वात्** पूर्णत्वात् इत्येकोऽर्थः । रमत इति रः । 'रमु क्रीडायाम्' इत्यतो 'ञमन्ताड्डः' इति डः । न विद्यते मा प्रमा परिच्छेदो अस्येति अमः । 'लोक' इत्यपरोऽर्थः । रमतेः घञ् । अत्र श्रुतिमाह **आनन्देति**। आद्येऽर्थे विग्रहं दर्शयति **रश्चेति** । रश्चासावमश्चेत्यर्थः ॥ ३१ ॥

*भा०दी०*— **ञमन्तादिति** । ञमिति ञमङणन इति पञ्चवर्णाः उच्यन्ते । 'ञमन्तात् शब्दात् डप्रत्ययः' इति सूत्रार्थः । डित्वात् टिलोपः । **घञिति** । अकर्तरि च कारके संज्ञायाम् इति करणे घञि सति 'अत उपधायाः' इति वृद्धौ रामेति रूपमिति भावः ॥ ३१ ॥

***भा०र०*— इति** गीतागतं प्रवृत्तिनिमित्तं त्रिविधमुच्यत इति प्रतीयते । तन्निरासायोक्तम् **इत्येक इति** 'रश्च अमश्च' इति भाविभाष्यादिति भावः । **ञमन्ताड्ड इति** । 'ञम्' इति ञमङणनानां संज्ञा । तदन्तात् धातोः डप्रत्ययो भवतीति सूत्रार्थः । 'चुटू' इति डकारलोपे, 'टेः' इति टिलोपे च 'रः' इति रूपमिति भावः । यद्यप्यत्र डप्रत्यये डकारस्येत्संज्ञा बाहुलकान्न भवति । 'दण्डः' 'गण्डः' इत्युदाहरणं उक्तं वैयाकरणैः, इति अत्रापि डप्रत्यये 'रण्ड' इत्यनभिमतरूपं स्यात् । तथापि 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति' इति वचनात् अत्र डकारेत्संज्ञाशास्त्रप्रवृत्तिरिति भावेनैवमुक्तम् । **परिच्छेदः** देशतः कालतो गुणतश्च । उपसर्जनत्वात् माशब्दस्य ह्रस्व इति भावेनोक्तम् 'अमः' इति । **लोकेतीति** । 'लोकरमणाच्च' इति भाष्यं रामशब्दस्यार्थान्तरं प्रतिपादयितुं प्रवृत्तमित्यर्थः । **रमतेर्घञिति** । 'रमु = क्रीडायाम्' इत्यतो 'लोको रमते अनेन' इति करणे घञ्प्रत्यये 'अत उपधायाः' इति वृद्धौ च 'रामः' इति रूपम् । तथाच वक्ष्यति 'लोकश्चैतस्मात् रमते' इति । तेन " 'कर्तरि घञ्प्रत्ययः 'अकर्तरि' इति प्रतिषिद्ध इति कथं राम इति रूपम् ?" इति चोद्यानवकाशः । **अत्र** उक्ते अर्थद्वये । 'निष्परीमाणः' इति श्रुतौ 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति परिशब्दे दीर्घः । 'रश्चामश्च' इति भाष्ये द्वन्द्वभ्रमं वारयितुमाह **रश्चासावमश्चेत्यर्थ इति** ॥ ३१ ॥

**गीता**

## सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
## अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

***वि०वि०*—** सृज्यन्त इति सर्गाः भूतानि । तेषां ये सृष्ट्यादिहेतवः तेऽहम् । अध्यात्मविद्या ब्रह्मविद्या । प्रवदतां जल्पवितण्डादिकुर्वतां सम्बधी । 'तत्वनिर्णयार्थं कथा' वादः ॥ ३२ ॥

***सा०सं०*—** सृज्यन्त इति **सर्गाः** भूतानि । तेषां सृष्टिस्थितिलयहेतुरहमेवेत्यर्थः । आत्मनो जीवानधिकृत्य पतित्वेन वर्तते ज्ञप्तिस्वरूपश्चेत्य**ध्यात्मविद्या**नामा ब्रह्मविद्यास्थः । **प्रवदतां** जल्पवितण्डादिकथां कुर्वताम् । वाच्यत्वहेतुना **वाद**नामा वादकथास्थः ॥ ३२ ॥

***अ०प्र०*—** किञ्च, **सर्गाणामिति** ।

हे अर्जुन ![१], सर्गाणां[२], आदिः[३], मध्यं च[४], अन्तश्चैव[५], अहं[६], विद्यानां[७], अध्यात्मविद्याऽहं[८], प्रवदतां[९], वादः[१०] अहमस्मीत्यन्वयः ॥

हे अर्जुन ![१], सर्गाणां = सृजन्त इति सर्गाः आकाशादयः । यद्वा, भूतानि तेषां सर्गाणां[२], आदिः मध्यं च अन्तश्चैवाहं सृष्टिस्थितिलयहेतुरहमेवेत्यर्थः[६], आत्मनो जीवानधिकृत्य पतित्वेन वर्तते ज्ञप्तिस्वरूपश्च अनेन सृष्ट्यादिकर्तृत्वपरमैश्वर्यमुक्तम् । अत्र हेतुः— उत्पत्तिप्रलयस्थितयोः मद्विभूतित्वेन मध्येव इत्युच्यत इति विशेषः[६], विद्यानां मध्ये[७], अध्यात्मविद्या नाम ब्रह्मविद्यास्थः अहमेव[८], प्रवदतां = वादिनां सम्बन्धिन्यः वादजल्पवितण्डाख्या तिस्रः कथाः प्रसिद्धाः । तासां मध्ये । यद्वा, प्रवदतां प्रकर्षेण वदतां मध्ये[९], वादः = यत्र द्वाभ्यामपि प्रमाणतस्तर्कतश्च स्वपक्षः स्थाप्यते पूर्वपक्षश्च छलजातिनिग्रहस्थाने दूष्यते स जल्पो नाम । यत्र त्वेकः स्वपक्षं स्थापयति अन्यश्च छलजातिनिग्रहस्थानैः तत्पक्षं दूषयति न तु स्वपक्षं साधयति सा वितण्डा नाम कथा । तत्र जल्पवितण्डे विजिगीषमाणयोः वादिनोः शक्तिपरीक्षामात्रफले । वादस्तु वीतरागयोः शिष्याचार्ययोः अन्ययोरन्ययोर्वा तत्त्वनिर्णयफलः अतोऽसौ श्रेष्ठत्वात् मद्विभूतिः । यद्वा, प्रवदतां प्रकर्षेण वदतां मध्ये वादः वक्तुं प्रवर्तितश्चेत्सकलशास्त्रप्रमाणेन स्वयं वर्धमानः सन् श्रोतुः श्रोतव्यापेक्षां वर्धयित्वा वक्तुर्वाक् अतीव मधुरा भवति स वादोऽहम् ॥ ३२ ॥

**गीता**

# अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
# अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥

***वि०वि०—*** सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वः समासः । स ह्युभयपदार्थप्रधानत्वेनोत्तमः । अक्षयः कालः । अबाधकः कालादिः । धाता स्रष्टा । विश्वतोमुखश्चतुर्मुखः ॥ ३३ ॥

***वा०ल०—*** 'द्वन्द्वः सामासिकस्य च' इत्यत्र सामासिकस्य समस्तसम्बन्धिनो व्यापारस्य ॥ ॥ ३३ ॥

***सा०सं०—*** अ इत्याक्रियमाणत्वात्, **अकार**नामा अकारस्थः । **सामासिकस्य** समाससमूहस्य । बहिरन्तर्द्विरूपत्वेन द्वन्द्वनामा **द्वन्द्व**समासस्थः । क्षयहीनत्वात्, **अक्षय**नामा संहर्तृत्वात्, **काल**नामा सन् । अक्षयकालस्थः । उत्तरावधिशून्यः त्रिकालगतः । 'कलच्छेदने' इति धातोः । **धाता** धारणपोषणकर्ता । डुधाञ् धारणपोषणयोः । सर्वदिङ्मुखत्वहेतुना **विश्वतोमुख**नामा चतुर्मुखस्थ इत्येके । सर्वत्र स्थितमुखोपलक्षितसर्वावयववान् इत्यन्ये ॥ ३३ ॥

***अ०प्र०—*** **अक्षराणामिति** ।

अक्षराणां = वर्णानां मध्ये', अकारोऽस्मि = तस्य सर्व वाङ्मयेन श्रेष्ठत्वात् । तदुक्तम्— 'अकारो वै सर्वा वाक् सैषा स्पर्शोष्माभिर्व्यज्यमाना बह्वी नानारूपा भवन्ती'ति श्रुतिः । 'अ' इत्यादि आक्रियमाणत्वात् अकारनामा अकारस्थः[3], सामासि-कस्य च = समाससमूहस्य तेषां मध्ये द्वन्द्वः । रामश्च कृष्णश्चेत्याद्युभयप्रधानत्वेन श्रेष्ठत्वात् । यद्वा, बहिरन्तर्द्विरूपवत्त्वहेतुना द्वन्द्वनामा द्वन्द्वसमासस्थः अहमस्मि', अक्षयः = अहमेव क्षयहीनत्वादक्षयनामा प्रवाहरूपो कालोऽहमेव', कालः = संहर्तृत्वात्कालनामा सन् अत्ययकालस्थः उत्तरावधिशून्यांशकालगतः । यद्वा, 'कालः कलयतामहमि'त्यत्र आयुर्गणनात्मकः संवत्सरशताद्यायुष्यरूपः कालः उक्तः । स चास्मिन्नपि क्षीणे सति क्षीयते अत्र तु प्रवाहात्मको क्षयः काल उच्यते' इति विशेषः । एतादृशः कालोऽहमेवेत्यर्थः[८], यद्वा, ग्रसिष्णुक्षयपरः कालः भविष्यतां पुनः कल्पादौ भाविभूतानां उद्भवः सृष्टिः । अहं कल्पादौ पुनः स्रष्टे स्रष्टोऽहमित्यर्थः । विश्वतोमुखः धाता अहं = सर्वदिङ्मुखत्वहेतुना विश्वतोमुखनामा धाता धारणपोषणकर्ता चतुर्मुखस्थः इत्येके । सर्वत्र स्थितः मुखोपलक्षित-सर्वावयववानित्यर्थ इत्यन्ये । यद्वा कर्मफलविधातॄणां मध्ये विश्वतोमुखो धाता सर्वकर्मफलविधाताऽहमित्यर्थः ॥ ३३ ॥

**गीता**

## मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
## कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥

***वि०वि०***— सर्वहरो मृत्युश्चाहम् । भविष्यतामुत्पत्स्यमानानां सम्बधी । उद्भव उत्पत्तिः । यद्वा, भविष्यतां भावि शुभानाम् । प्राणिनामुद्भवोऽभ्युदयः, नारीणां मध्ये कीर्त्यादयः स्त्रियः ॥ ॥ ३४ ॥

***वा०ल०***— 'कीर्तिः श्रीः' इत्यत्र कीर्त्यादीनि सप्त कीर्त्याद्यभिमानिभूतश्रियो रूपाणि नारीणां मध्ये श्रेष्ठानि ॥ ३४ ॥

***सा०सं०***— **सर्वहरो** मारकत्वहेतुना **मृत्युस्थः** । **भविष्यताम्** उत्पत्स्यमानानां उद्भावयतीति व्युत्पत्त्योद्भवनामा **उद्भवस्थः** । कीर्त्यत्वाश्रयत्ववक्तृत्वहेतुभिः **कीर्तिश्रीवाङ्**नामा सन् कीर्तौ श्रियां वाचि च स्थितः । स्मरणीयत्वात्, **स्मृति**नामा स्मृतिस्थः । **मेधाधृतिक्षमा**रूपत्वात् तत्तन्नामा मेधाधृतिक्षमास्थः ॥ ३४ ॥

*अ०प्र०*— मृत्युः सर्वहरमिति ।

सर्वहरः[१], मृत्युश्चाहं[३], संहारिणां मध्ये सर्वभूतानां संहर्ता मारकत्वे हेतुना[१], मृत्युस्थः[२], अहमस्मि[३], भविष्यतां[४], उद्भवश्च[१], उत्पत्स्यमानानां भावि कल्याणानां[४], उद्भवः = अभ्युदयः उद्भावयतीति व्युत्पत्त्या उद्भवस्थः अहमेव[१], नारीणां स्वर्नारीणां मध्ये कीर्तिः श्रीर्वाङ्नामा सन् कीर्तौ श्रिया वाचि च स्थितः[९], स्मृतिः स्मरणीयत्वात्स्मृतिर्नामा स्मृतिस्थः[१०] मेधा-धृतिः-क्षमा-रूपत्वात्तन्नामा मेधा धृतिक्षमास्थः[१३], यद्वा, नारीणां सन्नारीणां मध्ये कीर्तिः, श्रीः, वाक्, स्मृतिः, मेधा, धृतिः, क्षमा इत्याद्याः सप्तदेवतारूपाः स्त्रियोऽहम् । यासामाभासमात्रयोगेन प्राणिनः श्लाघ्या भवन्ति ताः कीर्त्याद्याः स्त्रियो मद्विभूतयः कीर्तिः नित्यनूतना श्रीः । औदार्येण सह या प्रवर्धमाना सा सम्पत् वाक् अन्यायसुखासने समारूढा सती विवेकमार्गेण प्रचलति सा वाक् । स्मृतिः दृश्यमात्रावलोकनेन यामात्मानमेव स्मारयति तेन परमात्मानं अहं दासोऽहमिति अनन्यया भक्त्या नित्यं स्मरति सा स्मृतिः । मेधा या परमात्मानमेव अनुसरति सा मेधा । धृतिः परमात्मभजने गुरुणापि दुःखेन न विचाल्यते सा धृतिः । क्षमा दारापुत्रधनादिसंयोगवियोगे हर्षविषादशून्यत्वं क्षमा । नारीणां मध्ये पूर्वोक्तास्सप्त शक्तयो मद्विभूतय इत्यर्थः ॥ ३४ ॥

**गीता**

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।**
**मासानां मार्गशीर्षोऽहं ऋतूनां कुसुमाकरः ॥ ३५ ॥**

*वि०वि०*— साम्नां रथन्तरादीनाम् । छन्दसां त्रिष्टुप्जगत्यादीनां गायत्री छन्दः । कुसुमाकरो वसन्तः ॥ ३५ ॥

*सा०सं०*— बृहत्सारत्वात् बृहत्सः अमेयत्वादमः बृहत्सश्चासावमश्चेति **बृहत्साम**नामा । रथन्तरवैरूपवैराजशाक्करादि**साम्नां** मध्ये तदाधिक्यहेतुतया बृहत्सामस्थः । स्वगायकान् त्रातीति व्युत्पत्त्या **गायत्री**नामा । त्रिष्टुप्जगत्यादिछन्दोभ्य आधिक्यहेतुतया गायत्रीच्छन्दस्थः । मार्गाणां शीर्षस्थानत्वात् **मार्गशीर्ष**नामा मासेभ्य आधिक्यहेतुतया मार्गशीर्षमासस्थः । कुत्सितां सुष्टुभूतां च मां ज्ञानं करोतीति **कुसुमाकर**नामा अन्यऋतुभ्य आधिक्यहेतुना वसन्तऋतुस्थः ॥ ३५ ॥

*अ०प्र०*— बृहत्साम इति ।

साम्नां बृहत्साम[2], अहं[3], तथा[4], छन्दसां[1], गायत्री[6], शेषं स्पष्टम् ॥

साम्नां = वेदराशेः मध्ये तदाधिक्यहेतुतया बृहत्साम । बृहत्सारत्वात् बृहत् साममयत्वात् । अमः बृहश्चासौ अमश्चेति बृहत्सामनामा बृहत्सामरस्थः । यद्वा, श्रीः बृहत् महत् इत्यस्यां रुचि गायमानं बृहत्साम ते न चेन्द्रः सर्वेश्वरत्वेन श्रूयते इति[2], अहमस्मि[3], तथा छन्दसां श्रैष्ठ्यात् मन्त्राणां मध्ये छन्देभ्यो आधिक्यहेतुतया द्विजत्वापादकत्वेन सामाहरणे च श्रेष्ठत्वात्[1], गायत्री-मन्त्रस्थः अहमस्मि[6], मासानां मध्ये[7], मार्गशीर्षः = मार्गानां मार्गस्थानत्वान्मार्गशीर्षनामा मासेभ्यः आधिक्यहेतुतया मार्गशीर्षमासस्थः अहमस्मि[8], ऋतूनां = षट् ऋतूनां मध्ये[10] कुसुमाकरः = कुत्सिता सुष्टुभूता च मां ज्ञानं करोतीति कुसुमाकरनामा अन्यऋतुभ्यः आधिक्यहेतुना कुसुमा-करोऽहं वसन्तऋतुस्थः ॥ ३५ ॥

**गीता**

## द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
## जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥

***वि०वि०—*** छलकार्यादीनां सम्बन्धीनि द्यूतादीनि ॥ ३६ ॥

***सा०सं०—*** **छलयतां** कापट्यमाचरताम् । क्रीडापरत्वहेतुना **द्यूत**नामा द्यूतस्थः । प्रकाश-त्वात् **तेजो**नामा तेजःस्थः । **जयिनां** जयरूपसारप्रदत्वहेतुना **जयोऽस्मि** । **व्यवसायो** निश्चयः । व्यवसायिनां व्यवसायरूपसारधर्मदाताऽस्मीत्यर्थो ज्ञेयः । **सत्त्ववतां सत्त्व**रूपसारधर्मप्रदोऽस्मी-त्यर्थः ॥ ३६ ॥

***अ०प्र०—*** **द्यूतमिति** । अन्वयः स्पष्टः । छलयतां = अन्योन्यवञ्चनादिकपटाचरणपराणां सम्बन्धि[1], द्यूतमस्मि[2], क्रीडापरत्वहेतुना द्यूतनामा द्यूतस्थः अहमस्मि[3], तेजस्विनां = तेजोवतां प्रभाववतां वा[4], तेजोऽहं = तेजो नाम प्रभावः तेजस्थः अहमस्मि[6], जयोऽस्मि = सकलकार्यो-देशानां मध्ये विजयः । यद्वा, जयवतां (जयरूपसारप्रदत्वहेतुना जयोऽस्मि[8], व्यवसायोऽस्मि व्यवसायिनां उद्यमवतां व्यवसायरूपसारधर्मदाताऽस्मीत्यर्थो ज्ञेयः । यद्वा, सर्वेषां व्यवसायानां मध्ये यस्मिन् परिशुद्धो न्यायो दृश्यते स व्यवसायोऽहं[10] सत्त्ववतां = सात्त्विकानां[11] सत्त्वमहम् । यद्वा, सत्त्वरूपसारधर्मप्रदोऽस्मीत्यर्थः ॥ ३६ ॥

गीता

# वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
# मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥

*वि०वि०*— कवीनां वाग्मिनाम् उशना शुक्रः ॥ ३७ ॥

*सा०सं०*— वासयति सर्वमाच्छादयति निवासयतीति वा वासुः । 'वस आच्छादने' 'वस निवासे' इत्यतो वा, ण्यन्तादुण् । सर्वत्र वसतीति वा वासुः, वसतेरुण् । स चासौ देवश्च क्रीडादिगुणविशिष्टश्चेति **वासुदेवः** । धनं जयतीति **धनञ्जयनामा** धनञ्जयस्थः । सर्वस्माद्विशिष्टत्वाद्विः आसमन्तात्सः गतः, 'सृ गतौ' इत्यतो डः । विश्वासावासश्च सर्वगतश्चेति **व्यासः** ।

यद्वा, विशिष्टा आसा स्थितिर्यस्यासौ **व्यासः**, 'आस उपवेशने' इति धातोः । 'उश इच्छायाम्' इति धातोः सर्गादीच्छावत्त्वादुशनानामा सन् **उशना** कविः उशनसि कवौ स्थित इत्यर्थः ॥ ॥ ३७ ॥

*अ०प्र०*— **वृष्णीनामिति** । वृष्णीनां = यादवानां[१], मध्ये वासुदेवोऽहं वासयति सर्वमाच्छादयति निवासयतीति वा वासः । वस आच्छादने, वस निवासे, सर्वत्र वसतीति वा वासः। स चासौ देवश्च क्रीडादिगुणविशिष्टश्चेति वासुदेवः । वासुदेवोऽहं त्वां उपदिशामि[३], पाण्डवानां मध्ये = भीमं विना[४], धनञ्जयः = धनं जयतीति धनञ्जयनामा धनञ्जयस्थः स त्वमेव मद्विभूतिं विद्धि[५], मुनीनां = वेदार्थमननशीलानां मध्ये[६], व्यासः = सर्वस्माद्विशिष्टत्वाद्विः आसमन्तात्सङ्गतः सृगतावित्यतोऽविश्वासौ आसश्च सर्वगतश्चेति व्यासः । यद्वा, विशिष्टा आसा स्थितिः यस्यासौ व्यासः। आस उपवेशने इति धातोः व्यासः[७], अधीत्यनेन अहमस्मि[८], कवीनां = कान्तदर्शिनां मध्ये[९], उशना कविः = शुक्रः उश इच्छायामिति धातोः सर्गादि इच्छावत्वात् उशना नामा सन् उशना कविः उशानकवौ स्थित इत्यर्थः ॥ ३७ ॥

भाष्यम्

**आच्छादयति सर्वं वासयति वसति च सर्वत्रेति वासुः । देवशब्दार्थ उक्तः पुरस्तात् । "छादयामि जगद् विश्वं भूत्वा सूर्य इवांशुभिः । सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहम् ॥" इति मोक्षधर्मे ।**

*प०टी०*— जगति भूत्वा सूर्योऽशुभिरिव छादयामि । आ समन्तादिति व्याप्त इत्यर्थः ।

*प्र०दी०*— 'वृष्णीनां वासुदेवोऽस्मि' इति वासुदेवशब्दं व्याचिकीर्षुः वासुशब्दार्थं तावदाह **आच्छादयतीति** । 'वस आच्छादने' इत्यत उण् । वासयति सर्वमिति वर्तते । 'वस निवासे' इत्यतो ण्यन्तादुण् । 'वसति च' इति केवलादुणेव । ततः किमायातं वासुदेवशब्दस्य ? इत्यत आह **देवेति** । तथा हि 'देवशब्दार्थे' इत्यत्र । ततः कर्मधारयः । विश्वं समस्तं **भूत्वा** प्राप्य 'भू प्राप्तौ आत्मनेपदी' इति वचनात् । **सर्वभूताधिवासश्च** इति तत्पुरुषो बहुव्रीहिश्च । अत्रापि देवशब्दार्थो ग्राह्यः ।

*भा०दी०*— **उणिति** । 'उणादयो बहुलम्' इति सूत्रात् अणप्रत्यये उपधावृद्धौ रूपमिति भावः । ण्यन्तात् उण् इति 'णेरनिटि' इति णिलोपे रूपम् । **केवलादिति** । अण्यन्तादित्यर्थः । **तथेहापीति** । अष्टमे 'दिव्यम्' इत्यस्य 'सृष्ट्यादिक्रीडादियुक्तम्, दिवु क्रीडा इति धातोः' इति भाष्यकृदुक्तेः । तथेहापि देवशब्दार्थो ग्राह्य इत्युक्तं भवति । **भू प्राप्ताविति** । भूधातुः प्राप्त्यर्थकः आत्मनेपदीति वचनार्थः । **तत्पुरुषो बहुव्रीहिश्चेति** । सर्वभूतानामधिवासः आश्रयः, सर्वभूतानि अधिवासः आश्रयो यस्य स इति भावः । **अत्रापीति** । मोक्षधर्मवाक्येऽपीत्यर्थः ।

*भा०र०*— असाङ्गत्यशङ्कापरिहारायाह **वृष्णीनामिति** । 'आच्छादयति' इति भाष्ये 'सर्वं व्याप्नोति', 'अविद्यादिना आवृणोति वा' इति कर्मनिर्णयटीकारीत्या अर्थः । **उणिति** । 'कृ-वा-पा-जि-मि-स्वदि-साधि-अशूभ्य उण्' इति विधीयमान उणप्रत्ययो बाहुलकाद् वसेरपि भवति । सति च तस्मिन् परतः, 'अत उपधायाः' इति वृद्धौ वस्तेः 'सर्वमाच्छादयति' इति 'वासुः' इति रूपमिति भावः । **णन्ताद् उणिति** । तस्मिंश्च (णौ) परतः 'अत उपधायाः' इति वृद्धौ, 'णेरनिटि' इति णिलोपे, उणो णकारलोपे च वासुरिति रूपमिति भावः । नन्वेवं सति वसतेर्वृद्धिर्न स्यात् । तन्निमित्तस्य णिचो लुप्तत्वादिति चेन्न । 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति तल्लोपेऽपि वृद्ध्युपपत्तेः । न चैवम् उणो णित्त्वं व्यर्थमिति वाच्यम् । उक्तवक्ष्यमाणप्रत्यययोः णित्त्वस्य वृद्ध्यर्थतया कर्तव्यत्वेन अत्राप्येकशास्त्रोक्तत्वरूपप्रत्यासत्त्या प्रतिपत्तिसौकर्याय प्राप्तस्य धातुजवासुशब्दे उकारान्तत्वाय एवमुक्तत्वात् । यथा तातङि ङित्त्वस्य गुणाभावार्थस्य प्रवृत्तौ सप्रयोजनस्यापि, 'सेर्ह्यपिच्च' इति ङित्त्वस्य सिद्धतया तत्र प्रयोजनशून्यस्यापि प्रवृत्तिः, यथा वा 'कृ-वा-पा-जि-मि-स्वदि-साधि-अशूभ्य उण्' इति सूत्रे साधयति साध्नोति वा 'साधुः' इत्युदाहरणे ण्यन्तात् केवलाद्वा विहितोण्-प्रत्ययस्य णित्त्वं न किमपि प्रयोजनमावहति इति शब्दस्योकारान्तत्वसम्पादनमेव प्रयोजनमिति तस्मादुणप्रत्ययोत्पादनम्, तद्वदेवात्रापीति द्रष्टव्यम् ।

**केवलात्** अण्यन्तात् । बाहुलकात् ण्यन्तात् प्राप्तः केवलादप्युणेव भवति, न पुनः प्रत्ययान्तरं गवेषणीयमिति एवशब्दः । **इत्यत्र** सप्तमभाष्ये । ननु भवतिः सत्तार्थः । स कथं प्राप्त्यर्थो व्याख्यायते इत्यत आह **भू प्राप्ताविति** । अनेनैव वचनेन भवतेः प्राप्तिरप्यर्थोऽभिसन्धीयत इति भावः । 'सर्वं वासयति', 'सर्वत्र वसति' इत्युक्तार्थद्वयलाभायाह **तत्पुरुष इति** । 'सर्वभूतानाम् अधिवासः' इति षष्ठीतत्पुरुषः । 'सर्वभूतान्यधिवासो यस्य' इति बहुव्रीहिः । एवमपि 'वासुः' इत्येव स्यात्, न तु 'वासुदेवः' इति ? तत्राह **अत्रापीति** । मोक्षधर्मेऽपीत्यर्थः ।

भाष्यम्

**विशिष्टः सर्वस्मादासमन्तात् गतः स एवेति व्यासः । तथा च आग्निवेश्यशाखायाम्— "स व्यासो वीति तमप् वै विः सोऽधस्तात् स उत्तरतः स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरत इति" इति । "यच्च किञ्चित् जगत् सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ॥" इति च ॥ ३७ ॥**

*प०टी०*— **उत्तरतः** ऊर्ध्वतः ॥ ३७ ॥

*प्र०दी०*— 'मुनीनामप्यहं व्यासः' इति व्यासशब्दं व्याचष्टे **विशिष्ट इति** । 'सर्वस्मात् विशिष्टः' इति विशब्दार्थः । 'आ' इत्यनुवादेन 'समन्तात्' इति व्याख्यानम् । 'सः' इत्यस्य 'स एव' इति । 'सृ गतौ' 'सृप्लृ गतौ' इत्यतो वा डे रूपमेतत् । न तु तदः । व्यासमित्याद्यनुपपत्तेः । **समन्तात् गतः** सर्वगत इत्यर्थः । स व्यासः । कुतः ? वीति हेतोः । कोऽर्थः । तमपो अर्थो हि विशब्दः । **उत्तरतः** उपरिष्टात् । 'यच्च किञ्चित्' इति भगवतः सर्वगतत्वे प्रमाणम् ॥ ३७ ॥

*भा०दी०*— **डे रूपमिति** । डित्वात् टिलोपे सति स इति रूपम्, व्याप्तमित्यर्थः । **न तु तद इति** । तच्छब्दस्य रूपं न त्वित्यर्थः । कुतः ? इत्यत आह **व्यासमित्याद्यनुपपत्तेरिति** । व्यासं, व्यासेन, व्यासस्मै, व्यासस्मात् इत्यादि स्यादित्यर्थः । गत्यर्थधातुजत्वे फलितमाह **आ समन्तादित्यादि** । श्रुत्यर्थमाह **स व्यास इति** । **उपरिष्टादिति** । तथा च चरमस्य उत्तरत इति न पुनरुक्ततादोष इति भावः ॥ ३७ ॥

*भा०र०*— 'उपसर्गाः क्रियायोगाभावे ससाधनक्रियावचनाः' इति वैयाकरणाभ्युपगमादाह **विशिष्ट इति विशब्दार्थ इति** । 'आङ् मर्यादाऽभिविध्योः' इत्युक्तेः अत्रापि अभिविध्यर्थस्य

*प०टी०*— जगति भूत्वा सूर्योऽशुभिरिव छादयामि । आ समन्तादिति व्याप्त इत्यर्थः ।

*प्र०दी०*— 'वृष्णीनां वासुदेवोऽस्मि' इति वासुदेवशब्दं व्याचिकीर्षुः वासुशब्दार्थं तावदाह **आच्छादयतीति** । 'वस आच्छादने' इत्यत उण् । वासयति सर्वमिति वर्तते । 'वस निवासे' इत्यतो ण्यन्तादुण् । 'वसति च' इति केवलादुणेव । ततः किमायातं वासुदेवशब्दस्य ? इत्यत आह **देवेति** । तथा हि 'देवशब्दार्थं' इत्यत्र । ततः कर्मधारयः । विश्वं समस्तं **भूत्वा** प्राप्य 'भू प्राप्तौ आत्मनेपदी' इति वचनात् । **सर्वभूताधिवासश्च** इति तत्पुरुषो बहुव्रीहिश्च । अत्रापि देवशब्दार्थो ग्राह्यः ।

*भा०दी०*— **उणिति** । 'उणादयो बहुलम्' इति सूत्रात् अण्प्रत्यये उपधावृद्धौ रूपमिति भावः । ण्यन्तात् उण् इति 'णेरनिटि' इति णिलोपे रूपम् । **केवलादिति** । अण्यन्तादित्यर्थः । **तथेहापीति** । अष्टमे 'दिव्यम्' इत्यस्य 'सृष्ट्यादिक्रीडादियुक्तम्, दिवु क्रीडा इति धातोः' इति भाष्यकृदुक्तेः । तथेहापि देवशब्दार्थो ग्राह्य इत्युक्तं भवति । **भू प्राप्ताविति** । भूधातुः प्राप्त्यर्थकः आत्मनेपदीति वचनार्थः । **तत्पुरुषो बहुव्रीहिश्चेति** । सर्वभूतानामधिवासः आश्रयः, सर्वभूतानि अधिवासः आश्रयो यस्य स इति भावः । **अत्रापीति** । मोक्षधर्मवाक्येऽपीत्यर्थः ।

*भा०र०*— असाङ्गत्यशङ्कापरिहारायाह **वृष्णीनामिति** । 'आच्छादयति' इति भाष्ये 'सर्वं व्याप्नोति', 'अविद्यादिना आवृणोति वा' इति कर्मनिर्णयटीकारीत्या अर्थः । **उणिति** । 'कृ-वा-पा-जि-मि-स्वदि-साधि-अशूभ्य उण्' इति विधीयमान उण्प्रत्ययो बाहुलकाद् वसेरपि भवति । सति च तस्मिन् परतः, 'अत उपधायाः' इति वृद्धौ वस्तेः 'सर्वमाच्छादयति' इति 'वासुः' इति रूपमिति भावः । **णन्ताद् उणिति** । तस्मिंश्च (णौ) परतः 'अत उपधायाः' इति वृद्धौ, 'णेरनिटि' इति णिलोपे, उणो णकारलोपे च वासुरिति रूपमिति भावः । नन्वेवं सति वसतेर्वृद्धिर्न स्यात् । तन्नि-मित्तस्य णिचो लुप्तत्वादिति चेन्न । 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति तल्लोपेऽपि वृद्ध्युपपत्तेः । न चैवम् उणो णित्त्वं व्यर्थमिति वाच्यम् । उक्तवक्ष्यमाणप्रत्यययोः णित्त्वस्य वृद्ध्यर्थतया कर्तव्य-त्वेन अत्राप्येकशास्त्रोक्तत्वरूपप्रत्यासत्त्या प्रतिपत्तिसौकर्याय प्राप्तस्य धातुजवासुशब्दे उकारान्तत्वाय एवमुक्तत्वात् । यथा तातङि ङित्त्वस्य गुणाभावार्थस्य प्रवृत्तौ सप्रयोजनस्यापि, 'सेर्ह्यपिच्च' इति ङित्त्वस्य सिद्धतया तत्र प्रयोजनशून्यस्यापि प्रवृत्तिः, यथा वा 'कृ-वा-पा-जि-मि-स्वदि-साधि-अशूभ्य उण्' इति सूत्रे साधयति साध्नोति वा 'साधुः' इत्युदाहरणे ण्यन्तात् केवलाद्वा विहितोण्-प्रत्ययस्य णित्त्वं न किमपि प्रयोजनमावहति इति शब्दस्योकारान्तत्वसम्पादनमेव प्रयोजनमिति तस्मादुण्प्रत्ययोत्पादनम्, तद्वदेवात्रापीति द्रष्टव्यम् ।

**केवलात्** अण्यन्तात् । बाहुलकात् ण्यन्तात् प्राप्तः केवलादप्युणेव भवति, न पुनः प्रत्ययान्तरं गवेषणीयमिति एवशब्दः । **इत्यत्र** सप्तमभाष्ये । ननु भवतिः सत्तार्थः । स कथं प्राप्त्यर्थो व्याख्यायते इत्यत आह **भू प्राप्ताविति** । अनेनैव वचनेन भवतेः प्राप्तिरप्यर्थोऽभिसन्धीयत इति भावः । 'सर्वं वासयति', 'सर्वत्र वसति' इत्युक्तार्थद्वयलाभायाह **तत्पुरुष इति** । 'सर्वभूतानाम् अधिवासः' इति षष्ठीतत्पुरुषः । 'सर्वभूतान्यधिवासो यस्य' इति बहुव्रीहिः । एवमपि 'वासुः' इत्येव स्यात्, न तु 'वासुदेवः' इति ? तत्राह **अत्रापीति** । मोक्षधर्मेऽपीत्यर्थः ।

भाष्यम्

**विशिष्टः सर्वस्मादासमन्तात् गतः स एवेति व्यासः । तथा च आग्निवेश्यशाखायाम्— "स व्यासो वीति तमप् वै विः सोऽधस्तात् स उत्तरतः स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरत इति" इति । "यच्च किञ्चित् जगत् सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ॥" इति च ॥ ३७ ॥**

***प०टी०***— **उत्तरतः** ऊर्ध्वतः ॥ ३७ ॥

***प्र०दी०***— 'मुनीनामप्यहं व्यासः' इति व्यासशब्दं व्याचष्टे **विशिष्ट इति** । 'सर्वस्मात् विशिष्टः' इति विशब्दार्थः । 'आ' इत्यनुवादेन 'समन्तात्' इति व्याख्यानम् । 'सः' इत्यस्य 'स एव' इति । 'सृ गतौ' 'सृप्लृ गतौ' इत्यतो वा डे रूपमेतत् । न तु तदः । व्यासमित्याद्यनुपपत्तेः । **समन्तात् गतः** सर्वगत इत्यर्थः । स व्यासः । कुतः ? वीति हेतोः । कोऽर्थः । तमपो अर्थो हि विशब्दः । **उत्तरतः** उपरिष्टात् । 'यच्च किञ्चित्' इति भगवतः सर्वगतत्वे प्रमाणम् ॥ ३७ ॥

***भा०दी०***— **डे रूपमिति** । डित्वात् टिलोपे सति स इति रूपम्, व्याप्तमित्यर्थः । **न तु तद इति** । तच्छब्दस्य रूपं न त्वित्यर्थः । कुतः ? इत्यत आह **व्यासमित्याद्यनुपपत्तेरिति** । व्यासं, व्यासेन, व्यासस्मै, व्यासस्मात् इत्यादि स्यादित्यर्थः । गत्यर्थधातुजत्वे फलितमाह **आ समन्तादित्यादि** । श्रुत्यर्थमाह **स व्यास इति** । **उपरिष्टादिति** । तथा च चरमस्य उत्तरत इति न पुनरुक्ततादोष इति भावः ॥ ३७ ॥

***भा०र०***— 'उपसर्गाः क्रियायोगाभावे ससाधनक्रियावचनाः' इति वैयाकरणाभ्युपगमादाह **विशिष्ट इति विशब्दार्थ इति** । 'आङ् मर्यादाऽभिविध्योः' इत्युक्तेः अत्रापि अभिविध्यर्थस्य

आङोऽर्थः **समन्तादिति** । इति अस्य **व्याख्यानम्** । **डे रूपं** 'अन्येष्वपि दृश्यते' इत्यत्र दृशिग्रहणात् डप्रत्यये, डिति अभस्यापि टेर्लोपे च, 'सः' इति रूपमित्यर्थः । **तदः** 'त्यजि-यजि-तनिभ्यो डित्' इत्युणादौ निष्पन्नस्य दकारान्ततच्छब्दस्य तद्रूपत्वे बाधकमाह **व्यासमिति** । तथाच 'देवीं सरस्वतीं व्यासम्', 'व्यासेनामिततेजसा', 'व्यासाय भूम्ने' इत्यादिप्रयोगानुपपत्तिः । प्रत्युत 'त्यदादीनामः' इत्यत्वे 'व्यातम्' इत्याद्येव स्यादिति भावः । 'समन्तात्' इत्यनन्तरं भाष्ये शेषं वदन् समग्रार्थमाह **समन्ताद्गतः सर्वगत इति** । 'स व्यासः' इति प्रतीकग्रहणम् । **वीति हेतोः** 'सर्वस्माद्विशिष्टः' इति हेतोः । तमप् वै विः' इत्येतदवतार्य व्याचष्टे **कुत इति** । 'अधरस्तात्' इत्येतत् प्रतियोगित्वेन 'उत्तरतः' इत्येतत् व्याख्यातम् **उपरिष्टादिति** । उपरितनोत्तरशब्दस्य तूत्तरदिगेवार्थ इति भावः । अनेन दिग्व्याप्तिलाभेऽपि सर्वगतत्वं नात्र लभ्यते ? इत्यतः उत्तर-श्रुत्युदाहरणमित्याह **यच्च किञ्चेति** ॥ ३७ ॥

**गीता**

# दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
# मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

***वि०वि०—*** दमयतां दण्डं कुर्वताम् । जिगीषतां जेतुमिच्छताम् । गुह्यानां सम्बन्धिषु गोपनेषु ॥ ३८ ॥

***सा०सं०—*** दमयतां दण्डं कुर्वतां दण्डनहेतुना दण्डनामा दण्डनरूपधर्मदाताऽस्मीत्यर्थः । जिगीषतां नीतिरस्मि नीतिरूपसारप्रदोऽस्मि । गुह्यानां गोपनीयानां मुनीनामीड्यत्वसम्बन्धेन मुनीना-मिदं मौनम् । शब्दस्वभावान्नपुंसकता । मुनिसम्बन्धितया मौननामा मौनस्थः । ज्ञानवतां ज्ञानाख्य-सारदोऽहमित्यर्थः । स्वयं च ज्ञानरूपत्वेन ज्ञाननामा ।

अत्र शश्यादिषु विजातीयश्रैष्ठ्यदं विभूतिरूपमुक्तम् । नक्षत्रादीनां विजातीयत्वात् । 'सत्वं सत्ववताम्' इत्यादौ धर्मिषु सत्वादिसारधर्मदं विभूतिरूपमुक्तं ज्ञेयम् । तथैव दर्शितमस्माभिस्तत्रैव । 'रुद्राणां शङ्करः' इत्यादौ सजातीयश्रैष्ठ्यदं विभूतिरूपमुक्तम् । वासवोशनधनञ्जययज्ञवज्रसामवेदानां सजातीयैकदेशाधिक्यदं विभूतिरूपमुक्तम् । तेषां सजातीयसर्वश्रैष्ठ्याभावात् । देवेषु कवित्वादिगुणेषु च ब्रह्मणः, पार्थेषु भीमस्य, यज्ञेषु ज्ञानयज्ञस्य, आयुधेषु चक्रस्य, वेदेषु ऋग्वेदस्य आधिक्यात् ॥ ॥ ३८ ॥

*अ०प्र०*— **दण्ड इति** । दमयतां = दमयितॄणां दण्डकर्तॄणां मध्ये[२], दण्डः = सर्वभूतानां अनिवार्यो दण्डः दण्डनहेतुना येन असंयतापि संयता भवन्ति दण्डनामा दण्डनरूप धर्मदाताऽस्मीत्यर्थः[३], जिगीषितां = जेतुमिच्छतां मध्ये[४], नीतिरस्मि = सामदानाद्युपायरूपा नीतिरस्मीति नीतिरूपसारप्रदोऽस्मि । यद्वा, धर्मज्ञानयोगपक्षेण सारासारनिर्धारं कुर्वतां सकलशास्त्राणां मध्ये नीतिशास्त्रमहमस्मि[५], गुह्यानां मौनं चैवास्मि = गुह्यानां गोपनीयानां मुनीनां ईड्यत्वसम्बन्धे मुनीनामिदं मौनशब्दस्वभावत्वा-न्नपुंसकत्वात् मुनिसम्बन्धितया मौननामा मौनस्थः मौनं चैवास्मीति न हि तूष्णीं स्थितस्याभिप्रायो ज्ञायते[६], ज्ञानवतां ज्ञानं अहं[१२], ज्ञानवतां = तत्त्वज्ञानिनां मध्ये ज्ञानं ज्ञानाख्यसारदोऽहमित्यर्थः । स्वयं च ज्ञानरूपत्वेन ज्ञाननामा अत्र सत्यादिषु विजातीयश्रेष्ठ्यत्वं विभूतिरूपमुक्तम् । नक्षत्रादीनां विजातीयात् 'सत्त्वं सत्त्ववतामहम्' इत्यादौ धर्मिषु सत्त्वादिसारधर्मदं विभूतिरूपमुक्तं ज्ञेयम् । तथैव दर्शितमस्माभिः तत्रतत्रैव 'रुद्राणां शङ्कर' इत्यादौ । सजातीयादौ सजातीयात् श्रेष्ठदविभूतिरूपमुक्तवासवोशनाधनञ्जययज्ञवज्रसामवेदानां सजातीयैकदेशाधिक्यदं विभूतिरूपमुक्तम् । तेषां सर्वश्रेष्ठ्याभावात् देवेषु कवित्वादि गुणेषु च ब्रह्मणः पार्थेषु भीमस्य यज्ञेषु ज्ञानयज्ञस्य आयुधेषु चक्रस्य वेदे ऋग्वेदस्य अधिक्यात् बीजकारणं तदप्यहमेव ॥ ३८ ॥

**गीता**

## यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
## न तदस्ति विना यत्स्यात् मया भूतं चराचरम् ॥ ३९ ॥

*वि०वि०*— यच्च सर्वभूतानां बीजं कारणं तदप्यहमेव । यदि ज्योतिरादिषु रव्यादीनां त्वत्सन्निधानकृतवैशिष्ट्यम्, तर्हि तदन्येषां ज्योतिरादीनां त्वत्सन्निधिर्न स्यादतः तत्तत्सत्तादिकं स्वत एव स्यादित्यत आह **न तदिति** । मया विना यद्भूतं स्यात् तन्नास्ति ॥ ३९ ॥

*वा०ल०*— उक्तस्ववचनानां स्वयमेवाभिप्रायमाह **न तदस्ति विना इति** । यत् चराचरं स्यात् तत् मया विनाभूतं नास्ति । किन्तु सर्वं मयाऽविनाभूतं व्याप्तम् । तत्र श्रेष्ठेषु विभूतिरूपेण तिष्ठामीति भावः ॥ ३९ ॥

*सा०सं०*— **बीजं** कारणम् । तदप्य**हमेव** श्रेष्ठ्यदत्वेन । भगवतः सर्वगतत्वं कुतो मानादित्यत आह **न तदिति** । **मया विना यद्भूतं** स्यात् **तच्चराचरं नास्ति**, यतोऽतोऽहं सर्वत्र स्थित इत्यर्थः । यद्वा, रविप्रभृतिषु श्रेष्ठ्यदत्वेन तव सन्निधावुक्ते ज्योतिरादिषु नेति प्राप्तम्, अतः सर्वत्राहमस्मीति व्यतिरेकमुखेनाह **न तदिति** ॥ ३९ ॥

*अ०प्र०*— श्रेष्ठयदत्वेन भगवतः सर्वगतत्वं कुतो मानादित्यत आह **यच्चापीति** ।

हे अर्जुन ![१], यच्चापि[२], सर्वभूतानां[३], बीजं[४], तत्[५], अहम्[६] ॥

हे अर्जुन ![१], यच्चापि[२], सर्वभूतानां[३], बीजं = सर्वभूताङ्कुरेण यच्च बीजं प्ररोहकारणं विवर्धते[४], तदहं[६], अहमित्युक्ते तत्र हेतुः— यतः अहं सर्वत्र अन्तर्यामित्वेन स्थितः अतः अहमित्युक्तम् । यद्वा, रविप्रभृतिषु श्रेष्ठयदत्वेन तव सन्निधानोक्ते ज्योतिरादिषु नेतिप्राप्ततः सर्वत्रापि अतः तं अस्मीति व्यतिरेकमुखेनाह—, **न तदिति** । मया = विना यत्[१०] भूतं स्यात् भवेत्[१२], तत्[१३], चराचरं[१४], नास्ति[१५] इत्यन्वयः ॥ ३९ ॥

**गीता**

# नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
# एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया॥ ४० ॥

*वि०वि०*— सङ्क्षेपकरणे कारणं दर्शयन्नुपसंहरति **नान्त इति** । विभूतिरूपाणाम् आनन्त्या-दुक्तो विभूतिविस्तर एष उद्देशतः इदमिदं विभूतिरूपस्येति यत् तद्विशेषनामनिर्देशतः सोऽपि सङ्ग्रह एवेति भावः ॥ ४० ॥

*सा०सं०*— सङ्क्षेपकरणे कारणं दर्शयन्नुपसंहरति **नान्त इति** । **अन्तः** पर्यवसितिः । अत्र एष इति पदमावर्तते । एष 'अहमात्मा गुडाकेशः' इति 'आदित्यानामहं विष्णुः' इत्यादिना विभूतिरूपसङ्क्षेप उद्देशतः शृङ्गग्राहिकया इदमिति, विशिष्य निर्देशेन **मया प्रोक्तः** । एष तु वक्ष्यमाणतया हृदिस्थस्तु **विभूतेर्विस्तरः** । मया प्रोक्तः प्रोच्यते । वर्तमाने निष्ठाप्रत्ययः । पुरा प्रोक्त इति वाऽर्थः ॥ ४० ॥

*अ०प्र०*— **नान्तोऽस्तीति** । हे परन्तप ![१], मम[२], दिव्यानां[३], विभूतीनां[४], अन्तो[५], नास्ति[६], मया[७], एषः[८], विभूतेः[९], विस्तरः[१०] उद्देशतः[११] प्रोक्तः[१२] ॥

हे परन्तप ![१], मम[२], दिव्यानां = मुख्यानां[३], विभूतीनां[४], अन्तः = पर्यवसितिः अत्र एष इति पदमावर्तते[५], एषः अन्त इति योजनीयं[५], विभूतीनां अनन्तत्वात् अतः[५], नास्ति[६], मया = सर्वज्ञेन कृष्णमूर्तिना[७], एषः = 'अहमात्मा गुडाकेश' इति 'आदित्यानामहं विष्णुरित्यादिना' एषः[८], विभूतेः[९], विस्तरः[१०] साकल्येन वक्तुं न शक्यते तस्मात् उद्देशतः सङ्क्षेपेण शृङ्गग्राहिकया इदमिति विशिष्य निर्देशेन प्रोक्तः । प्रोच्यते[१२], वर्तमाने निष्ठा प्रत्ययः पुरा प्रोक्त इति वार्थः ॥ ४० ॥

भाष्यम्

**मया विना यद् भूतं स्यात् तन्नास्ति । "विश्वरूप अनन्तगते अनन्तभाग अनन्तग अनन्त (अनादे) ॥" इत्यादि मोक्षधर्मे ॥ ४० ॥**

*प०टी०*— 'न तदस्ति' इत्यस्यान्वयमुक्त्वा, तत्रैव प्रमाणमाह **मयेति** ॥ ४० ॥

*प्र०दी०*— 'न तदस्ति विना' इत्यत्र पदानां व्यवहितत्वादन्वयमाह **मयेति** । भगवतो अनन्तै रूपैः । सर्वपदार्थव्यापित्वे प्रमाणमाह **विश्वेति** । विश्वं रूपं प्रतिमा यस्यासौ **विश्वरूपः** । अनन्तानां गतिः आश्रयः **अनन्तगतिः** । अनन्ता भागाः अवताराः यस्यासौ **अनन्तभागः** । अनन्तान् पदार्थान् गतः **अनन्तगः** । **अनन्तः** कालाद्यपरिच्छिन्नः ॥ ४० ॥

*भा०र०*— **भगवत इति** । **विश्वरूपः** इत्यनन्तरं 'तत्सम्बुद्धिः' इति शेषः । एवमुत्तरत्रापि । 'पदार्थान् गतः' इत्यत्र गमेः 'गत्यर्थाकर्मक' इति कर्तरि क्तः । **कालाद्यपरिच्छिन्नः** कालदेशगुणाद्यपरिच्छिन्नः ॥ ४० ॥

**गीतातात्पर्यनिर्णयः**

**"येषां विष्णुस्वरूपाणां सन्निधेरन्यवस्तुषु ।**
**विशिष्टत्वं स्वजातेः स्याद् विभूत्याख्यानि तानि तु ॥**
**ब्रह्मनामा ब्रह्मगतः सर्वदैवतसश्रयात् ।**
**आधिक्यहेतुर्भगवान् सामस्थः सामनामकः ॥**
**आधिक्यहेतुर्वेदेभ्यस्तथाऽश्वत्थस्थितो हरिः ।**
**उत्कर्षहेतुर्वृक्षेभ्यो य एवाश्वत्थनामकः ॥"**

**—इत्यादि विभूतितत्त्वे ।**

*न्या०दी०*— अत्र विभूतिरूपप्रश्ने "अहं ज्योतिषां रविः" इत्याद्युच्यते । तत्र स्वजात्यादिविशिष्टवस्तून्येव भगवतो विभूतिरूपाणीत्यन्यथाप्रतीतिं स्मृत्यैव निवारयति **येषामिति** ॥ स्वजातेरिति स्वजात्येकदेशाद्युपलक्षणम् । तदेव प्रपञ्चयति **ब्रह्मेति** ॥ आधिक्यहेतुरित्यादौ ब्रह्मण इत्यादि शेषः ।

*भा०दी०*— **स्वजात्यादीति** । स्वजात्यादिभ्यो विशिष्टवस्तुनि श्रेष्ठवस्तुनीत्यर्थः । वासवादेः स्वजातिसर्वदेवेभ्यः श्रैष्ठ्याभावात् क्वचिद्विजातितोऽपि श्रैष्ठ्यस्य गीतायामुक्तेराह **स्वजात्येकदेशाद्युपलक्षणमिति** ॥ **इत्यादि शेष इति** । वेदेभ्य आधिक्यहेतुरित्यत्र साम्न इति उत्कर्षहेतुरित्यत्र अश्वत्थस्येत्येवंरूपेणेति भावः ॥

**गीतातात्पर्यनिर्णयः**

**"केषु केषु च भावेषु" इत्युक्तत्वाच्च ब्रह्मादिजीवेभ्योऽन्यदेव विभूतिरूपम् ।**

***न्या०दी०*— इतश्च न रव्यादिकमेव भगवतो विभूतिरूपं किन्तु तत्रस्थमेवेत्याह केष्विति ॥ यद्यत्र रव्यादिकमेव विभूतिरूपं न तु तदन्तर्गतमिति स्यात् तदा "केषु केषु च भावेषु चिन्त्योऽसि" इति प्रश्नाननुगुणत्वं परिहारस्य स्यादिति भावः ।**

**गीतातात्पर्यनिर्णयः**

**"द्विविधं वैभवं रूपं प्रत्यक्षं च तिरोहितम् ।**
**कपिलव्यासकृष्णाद्यं प्रत्यक्षं वैभवं स्मृतम् ॥**
**भिन्नं ब्रह्मादिजीवेभ्यो जडेभ्यश्चापि तद्गतम् ।**
**स्वजात्याधिक्यदं तेषां तत् तिरोहितवैभवम् ॥" इत्यादि च ।**

*प्रका०*— "केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया" इति प्रश्नो विष्णु-कपिलादि-नारायणावतारातिरिक्तरविमरीच्यादिविषय इत्यभिप्रेत्याह **द्विविधमिति** ।

***न्या०दी०*— जीवपदं जडस्याप्युपलक्षणम् । यदि तत्तत्पदार्थगतमेव विभूतिरूपं तर्हि "सिद्धानां कलिपो मुनिः", "मुनीनामप्यहं व्यासः", "वृष्णीनां वासुदेवोऽस्मि", "रामः शस्त्रभृतामहम्", "आदित्यानामहं विष्णुः" इत्युक्तानां कपिलादीनामपि भगवद्रूपत्वाभावः स्यादित्याशङ्कां स्मृत्यैव पहिरति द्विविधमिति ॥ वैभवं रूपं विभूतिरूपम् । अत्रापि स्वजातिपदमन्योपलक्षकम् । केषु केष्विति प्रश्नस्तिरोहितरूपविषय इति भावः ।**

**गीतातात्पर्यनिर्णयः**

**"आत्माऽऽततगुणत्वेन रवज्ञेयो यतो रविः ।**
**उदवन्मेघचलनान्मरीचिः साम साम्यतः ॥**

सुखात् सुखत्वात्तु शशी वेदो वेदनतो हरिः ।
वासवर्ती वासवोऽसौ चेतोनेता तु चेतना ॥

*प्रका०*— रवेण ईयते ज्ञायत इति रविः । उधादकस्यापि मरशब्दार्थत्वात् मे मरी तच्चालनात् **मरीचिः** । सारात् सारमितिवत् । शात् शमधिकं सुखं तद्वान् **शशी** ।

***न्या०दी०*— तत्तन्नामकं तत्तद्वस्तुगतं विभूतिरूपमित्युक्तम् । तत्र तत्तत्पदार्थैक्याभावे कथं तत्तन्नामकत्वमित्यतो योगवृत्त्या विभूतिरूपाणां तत्तन्नामकत्वं स्मृत्यैव दर्शयति आत्मेति ॥ रवेण वेदशब्देन ईयते ज्ञायत इति रविः । इण् गताविति धातुः मरशब्दोदितोदकवान् मेघो मरी । तं चालयतीति मरीचिः । सुखात्सुखमतिसुखं शशम् । तद्वान् शशी । साम साम्यतः, वेदो वेदनतः इत्यनेन सामवेदोऽस्मीत्येतद् व्याख्यातम् । वासः सर्वदिशः । तत्र वर्तत इति वासवः ।**

*भा०दी०*— **इण् गताविति धातुरिति** । रवशब्दोपपदादिणः क्विपि उपपदान्तलोपे रविरिति रूपमिति भावः ॥ **वासः सर्वदिश इति** । वसतेरधिकरणे घञिति भावः ॥ **वर्तत इति** । वृतेर्ड इति भावः ॥

**गीतातात्पर्यनिर्णयः**

पालकैर्वननीयत्वात् पवनो बोधनान्मनः ।
पावकः शोधनान्मेरुरीरो यन्माऽस्य सागरः ॥

*प्रका०*— **वननीयत्वम्** भजनीयत्वम् ।

***न्या०दी०*—** पाः पालकाः, **तैर्वननीयत्वाद्** भजनीयत्वात् **पवनः । वन षण सम्भक्ताविति धातुः । पव शुद्धाविति धातोः शोधनात्पावकः । मा नास्ति ईरः प्रेरको यस्येति मेरः । तच्छीलत्वान्मेरुः । ताच्छील्यार्थादुनस्तथेत्युक्तेः ।**

*भा०दी०*— **पाः पालका इति** । पा रक्षण इत्यतो विच्प्रत्ययः । **मा** इत्यनुवादः **नास्तीति** व्याख्या ॥

**गीतातात्पर्यनिर्णयः**

सारस्य गरणात् स्कन्दो जगतः स्कन्दनाद् भृगुः ।
भर्जनाज्जपयज्ञश्च जातपो याज्य एव च ।

*भा०दी०*— **स्वजात्यादीति** । स्वजात्यादिभ्यो विशिष्टवस्तुनि श्रेष्ठवस्तुनीत्यर्थः । वासवादेः स्वजातिसर्वदेवेभ्यः श्रैष्ठ्याभावात् कचिद्विजातितोऽपि श्रैष्ठ्यस्य गीतायामुक्तेराह **स्वजात्येकदेशाद्युपलक्षणमिति** ॥ **इत्यादि शेष इति** । वेदेभ्य आधिक्यहेतुरित्यत्र साम्न इति उत्कर्षहेतुरित्यत्र अश्वत्थस्येत्येवंरूपेणेति भावः ॥

**गीतातात्पर्यनिर्णयः**

**"केषु केषु च भावेषु" इत्युक्तत्वाच्च ब्रह्मादिजीवेभ्योऽन्यदेव विभूतिरूपम् ।**

*न्या०दी०*— इतश्च न रव्यादिकमेव भगवतो विभूतिरूपं किन्तु तत्रस्थमेवेत्याह **केष्विति** ॥ यद्यत्र रव्यादिकमेव विभूतिरूपं न तु तदन्तर्गतमिति स्यात् तदा "केषु केषु च भावेषु चिन्त्योऽसि" इति प्रश्नाननुगुणत्वं परिहारस्य स्यादिति भावः ।

**गीतातात्पर्यनिर्णयः**

**"द्विविधं वैभवं रूपं प्रत्यक्षं च तिरोहितम् ।**
**कपिलव्यासकृष्णाद्यं प्रत्यक्षं वैभवं स्मृतम् ॥**
**भिन्नं ब्रह्मादिजीवेभ्यो जडेभ्यश्चापि तद्गतम् ।**
**स्वजात्याधिक्यदं तेषां तत् तिरोहितवैभवम् ॥" इत्यादि च ।**

*प्रका०*— "केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया" इति प्रश्नो विष्णु-कपिलादि-नारायणावतारातिरिक्तरविमरीच्यादिविषय इत्यभिप्रेत्याह **द्विविधमिति** ।

*न्या०दी०*— जीवपदं जडस्याप्युपलक्षणम् । यदि तत्तत्पदार्थगतमेव विभूतिरूपं तर्हि "सिद्धानां कलिपो मुनिः", "मुनीनामप्यहं व्यासः", "वृष्णीनां वासुदेवोऽस्मि", "रामः शस्त्रभृतामहम्", "आदित्यानामहं विष्णुः" इत्युक्तानां कपिलादीनामपि भगवद्रूपत्वाभावः स्यादित्याशङ्कां स्मृत्यैव पहिरति **द्विविधमिति** ॥ वैभवं रूपं **विभूतिरूपम्** । अत्रापि स्वजातिपदमन्योपलक्षकम् । केषु केष्विति प्रश्नस्तिरोहितरूपविषय इति भावः ।

**गीतातात्पर्यनिर्णयः**

**"आत्माऽऽततगुणत्वेन रवज्ञेयो यतो रविः ।**
**उदवन्मेघचलनान्मरीचिः साम साम्यतः ॥**

**सुखात् सुखत्वात्तु शशी वेदो वेदनतो हरिः ।**
**वासवर्ती वासवोऽसौ चेतोनेता तु चेतना ॥**

*प्रका०*— रवेण ईयते ज्ञायत इति **रविः** । उद्घादकस्यापि मरशब्दार्थत्वात् मे मरी तच्चालनात् **मरीचिः** । सारात् सारमितिवत् । शात् शमधिकं सुखं तद्वान् **शशी** ।

***न्या०दी०*— तत्तन्नामकं तत्तद्वस्तुगतं विभूतिरूपमित्युक्तम् । तत्र तत्तत्पदार्थैक्याभावे कथं तत्तन्नामकत्वमित्यतो योगवृत्त्या विभूतिरूपाणां तत्तन्नामकत्वं स्मृत्यैव दर्शयति आत्मेति ॥ रवेण वेदशब्देन ईयते ज्ञायत इति रविः । इण् गताविति धातुः मरशब्दोदितोदकवान् मेघो मरी । तं चालयतीति मरीचिः । सुखात्सुखमतिसुखं शशम् । तद्वान् शशी । साम साम्यतः, वेदो वेदनतः इत्यनेन सामवेदोऽस्मीत्येतद् व्याख्यातम् । वासः सर्वदिशः । तत्र वर्तत इति वासवः ।**

*भा०दी०*— **इण् गताविति धातुरिति** । रवशब्दोपपदादिणः क्विपि उपपदान्तलोपे रविरिति रूपमिति भावः ॥ **वासः सर्वदिश इति** । वसतेरधिकरणे घञिति भावः ॥ **वर्तत इति** । वृतेर्ड इति भावः ॥

**गीतातात्पर्यनिर्णयः**

**पालकैर्वननीयत्वात् पवनो बोधनान्मनः ।**
**पावकः शोधनान्मेरुरीरो यन्माऽस्य सागरः ॥**

*प्रका०*— **वननीयत्वम्** भजनीयत्वम् ।

***न्या०दी०*— पाः पालकाः, तैर्वननीयत्वाद् भजनीयत्वात् पवनः । वन षण सम्भक्ताविति धातुः । पव शुद्धाविति धातोः शोधनात्पावकः । मा नास्ति ईरः प्रेरको यस्येति मेरः । तच्छीलत्वान्मेरुः । ताच्छील्यार्थादुनस्तथेत्युक्तेः ।**

*भा०दी०*— **पाः पालका इति** । पा रक्षण इत्यतो विच्प्रत्ययः । **मा** इत्यनुवादः **नास्तीति** व्याख्या ॥

**गीतातात्पर्यनिर्णयः**

**सारस्य गरणात् स्कन्दो जगतः स्कन्दनाद् भृगुः ।**
**भर्जनाज्जपयज्ञश्च जातपो याज्य एव च ।**

अश्वाकारस्थितोऽश्वत्थ ऐरं श्रीश्च तदाश्रयः ।
ऐरावतो नराणां यद् दद्यात् सर्वं स नारदः ।
ह्रीश्रीसमाश्रयत्वाच्च हिमालय इतीरितः ॥

*न्या०दी०*— सारस्य सारविषयस्य गरणाद् भोक्तृत्वादित्यर्थः । स्कन्दनं स्वतो निष्कासनमिति यावत् । भर्जनाद्विरोधिनामिति शेषः । जाः जाताः । तान् पातीति जपः, याज्यत्वाद् यज्ञ इति जपयज्ञः । अश्ववत् स्थित इत्यश्वत्थः । "तदैरं मदीयं सरः" इत्यादेः ऐरं श्रीः । ताम् अवतीत्यैरावतः । नराणामपेक्षितं नारं, तद्ददादीति नारदः । ह्रीमाऽऽलय एव हिमालयः ।

*भा०दी०*— **स्वत इति** । स्वस्मादित्यर्थः ॥ **इत्यादेरिति** । अष्टमाध्यायछन्दोगश्रुतेः इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

वर्ज्यत्वादरिभिर्वज्रो वैनतेयो नतास्पदः ।
वासुकिर्वाससुखदः कन्दर्पः सुखभेदपः ।
अर्यमा ज्ञेयमातृत्वात् काल आकलनादपि ।
वरुणो वरणाद् द्वन्द्वो द्विरूपोऽन्तर्बहिर्यतः ॥

*प्रका०*— विशेषेण नताश्रयौ **वैनतेयः** । कन्दराः सुखभेदाः, तान्पिबतीति **कन्दर्पः** ।

*न्या०दी०*— विशेषेण नता विनताः । तदास्पदतया तत्सम्बन्धी वैनतेयः । वासस्य कं सुखं वासकम् । तदेवाधिक्येऽधिकमित्यतो वासुकम् । दातृत्वेन तद्वान् वासुकिः । कस्य सुखस्य दराः प्रभेदाः कन्दराः । तान् पिबति अनुभवतीति कन्दर्पः । पा पान इति धातुः । ऋगताविति धातोरर्यं ज्ञेयम् । तन्माति जानातीत्यर्यमा । कल ज्ञान इति धातोराकलनं ज्ञानम् । वरं णं सुखं यस्यासौ वारुणः । "णो हि निर्वृतिवाचकः" इत्युक्तेः । वृणोतीति वरुण इति वा ।

*भा०दी०*— **तत्सम्बन्धी वैनतेय इति** । सम्बन्धार्थे उक्प्रत्यय इति भावः । मत्वर्थे इकारप्रत्यय इत्युपेत्याह **तद्वान् वासुकिरिति** ॥

**गीतातात्पर्यनिर्णयः**

मकरो मानकर्तृत्वाद् यमः संयमनाद् विभुः ।
प्रह्लादः स महानन्दो मृगेन्द्रो मृगयत्पतिः ।
जाह्नवी जहतां स्थानमध्यात्मं चात्मनां पतिः ।
विद्या ज्ञप्तिस्वरूपत्वाद् वादो वाच्यत्वतो हरिः ॥

*प्रका०*— असारत्वेन प्रपञ्चं जहतां **हरिः** आश्रयः ।

*न्या०दी०*— माङ् मान इति धातोर्मा ज्ञानम् । ऊनार्थे चोनमिष्यत इत्यतो लोकस्याल्पं मां करोतीति मकरः । स्वात्मानं मृगयन्तो भक्ता मृगाः । तदधिपतित्वात् मृगेन्द्रः । असारतया संसारं जहतो वृणोतीति जाह्नवी । स्थानमाश्रयः । आत्मनोऽधिकृत्य पतित्वेन वर्तत इत्यध्यात्मम् ।

*भा०दी०*— माकर इत्यनुक्त्वा मकर इत्युक्तिकृत्यमाह **ऊनार्थ इति** । ओहाक् त्याग इति धातुपाठादाह **जहत इति** । त्यजत इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

कीर्त्यो वक्ताऽऽश्रयः कीर्तिर्वाक् श्रीरिति च नामकः ।
स्मरणीयः स्मृतिर्मेधाक्षमारूपस्तथेर्यते ॥
द्यूतं क्रीडापरत्वाच्च गायत्री त्राति गायकान् ।
सत्त्वं साधुगुणत्वाच्च दण्डनाद्दण्ड उच्यते ॥

*न्या०दी०*— कीर्त्यत्वात् कीर्तिः । वक्तृत्वाद् वाक् । श्रयत इति श्रीः । तथेर्यते मेधा क्षमेतीर्यते । दिवु क्रीडेत्यादिधातोः क्रीडापरत्वाद् द्यूतम् । गायकान्, स्वस्येति शेषः ।

*भा०दी०*— **श्रयत इति** । श्रिञ् सेवायां, सेवत इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

बृहत्सारोऽप्यमेयश्च बृहत्सामोशनोशतेः ।
शुभाशुभज्ञानकरः कुसुमाकर ईरितः ॥

ज्ञानं ज्ञानात्मतो मौनं मुनीड्यो नीतिरानयन् ।
मार्गाणामन्तगत्वात्तु मार्गशीर्षः प्रकीर्तितः ॥

*न्या०दी०*— बृहत्सारो बृहत्सः । अमेयत्वादम इति बृहत्साम । उशतेः स्वर्गादीच्छावत्त्वात् । उश इच्छायामिति धातोः । कुत्सितां सुष्ठुभूतां च मां ज्ञानं लोकस्य करोतीति कुसुमाकरः । ईड्यत्वेन मुनिसम्बन्धित्वात् मौनम् । "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति श्रुतेः । मार्गाणां शीर्षस्थानत्वान्मार्गः ।

*भा०दी०*— **बृहत्स इति** । सारशब्दस्य सादेश इति भावः ॥ **इति धातोरिति** । तस्मादसुन्प्रत्यये उशना इति रूपमिति भावः ॥ **मुनिसम्बन्धीति** । मुनिशब्दात् सम्बन्धार्थेऽणप्रत्ययः। सम्बन्धः(श्च) स्तुत्यस्तोतृरूप इति भावः ॥ **शीर्षस्थानत्वादिति** । चरमप्राप्यत्वादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

सुखं पिबन् लीलयैव कपिलो व्यास एव च ।
विशिष्टत्वाद् विष्णुनामा विशिष्टप्राणसौख्यतः ॥
एवं नानागुणैर्विष्णुर्नानानामभिरीरितः ।
नानाप्राण्यादिसंस्थश्च विभूतिरिति शब्दितः ॥

*प्रका०*— श्रीः विशिष्टत्वेनास्ते इति **व्यासः** । षकारस्य प्राणवाचकत्वेन णकारस्य निर्वृतिवाचकत्वेन विशिष्टप्राणसुखत्वात् **विष्णुः** ।

*न्या०दी०*— कं सुखं पिबत्यनुभवति लीलयेति कपिलः । विशिष्टा आसा स्थितिर्यस्यासौ व्यासः । "षकारः प्राणः" इति श्रुतेः, ण शब्दस्य निर्वृतिवाचकत्वाद् विशिष्टसुखचेष्टाशीलत्वाद् विष्णुः ।

*भा०दी०*— आस उपवेशन इति धातो रूपमुपेत्याह **आसा स्थितिरिति** । उ(न्प्र)प्रत्ययार्थमाह **शीलत्वादिति** ।

**गीतातात्पर्यनिर्णयः**

शश्यादिषु विजातीयस्वाम्यदः सारदः क्वचित् ।
शर्वादिषु सजातीयश्रैष्ठ्यदत्वेन संस्थितः ।

**शक्रोशनार्जुनाद्येषु सजातीयैकदेशतः ॥**

*प्रका०*— 'नक्षत्राणामहं शशी'त्युक्तत्वात् **सारदः** क्वचित् ।

***न्या०दी०***— **शश्यादिषु विजातीयस्वाम्यदो नक्षत्रादीनां विजातीयत्वात् । सत्त्वं सत्त्ववतामहमित्यादौ धर्मिषु सत्त्वादिसारदत्वेनोक्तः । रुद्राणां शङ्कर इत्यादौ शङ्करादीनां सजातीयश्रैष्ठ्यदत्वेनोक्तः ।**

*भा०दी०*— शश्यादिषु विजातीयस्वाम्यद इत्यादेरर्थमाह **शश्यादिष्विति** । ज्योतिषां रविरंशुमान् । स्थावराणां हिमालय इत्यादिरादिपदार्थः । विभूतिरूपत्वोपपादनायोक्तम् **सत्त्वादिसारदत्वेनेति** । आदिपदेन "भूतानां चेतना", "यमस्संयमताम्", "वादः प्रवदतां", "उद्धवश्च भविष्यतामि"त्यादेर्ग्रहः ॥ **उक्त इति** । भगवानिति योज्यम् ॥

**गीतातात्पर्यनिर्णयः**

**देवेष्वप्यधिको ब्रह्मा यतो विष्णोरनन्तरः ।**
**कवित्वादिगुणेष्वेव यत्समो नास्ति कश्चन ॥**
**तथा भीमश्च पार्थेषु ज्ञानं यज्ञेषु चोत्तमम् ।**
**सुदर्शनं चाऽयुधेषु वेदेष्वृग्वेद उच्यते ॥"**

**—इत्यादि विभूतितत्त्वे ॥**

*प्रका०*— "रुद्राणां शङ्करश्चास्मि" इत्युक्तत्वात् शर्वादिषु सजातीयश्रैष्ठ्यदत्वेन संस्थितः "देवानामस्मि वासवः । कवीनामुशना कविः । पाण्डवानां धनञ्जयः । यज्ञानां जपयज्ञोऽस्मि । आयुधानामहं वज्रम् । वेदानां सामवेदोऽस्मि" इत्यत्रोक्तेषु वासवादिषु सजातीयैकदेशश्रैष्ठ्यदत्वेन संस्थितः । सर्वजातीयश्रैष्ठ्ये तेषां बाधकवचनमाह **वेदेष्विति** ।

***न्या०दी०***— **देवानामस्मि वासवः, कवीनामुशना कविः, पाण्डवानां धनञ्जयः, यज्ञानां जपयज्ञोऽस्मि, आयुधानामहं वज्रं, वेदानां सामवेदोऽस्मीत्यादौ सजातीयैकदेशतः श्रैष्ठ्यदो वासवादीनामुक्तः । वासवादीनां सजातीयैकदेशतः एव श्रैष्ठ्यं कुत इत्यत आह देवेष्विति । देवादिषु ब्रह्मादीनामेव श्रेष्ठत्वाद् वासवादीनां सजातीयैकदेशत एव श्रैष्ठ्यमित्यर्थः ।**

**गीतातात्पर्यनिर्णयः**

**क्वचित् साम्न आधिक्यमभिमान्यपेक्षया—**

**"ऋचः श्रीर्गीरुमाद्याश्च साम्नः प्राणशिवादयः ॥"**

**इत्याद्यभिमानिभेदात् । तत्रापि यथायोग्यम् ॥ २१-४० ॥**

*प्रका०*— सर्वत्र वेदेषु ऋग्वेदस्याधिक्यमुच्यते । क्वचित्साम्न आधिक्यवचनम् ऋग्वेदाभिमानिदेवताया आधिक्यप्रतिपादनेपरम् । तथाहि ऋचः श्रीर्गीरुमाद्या देवताः साम्नः प्राणशिवादयो देवताः अतश्च सरस्वतीत्यादिदेवेभ्यः प्राणादिदेवानामाधिक्यात् ऋग्वेदात् साम्न आधिक्यं युज्यते । यत्र तु ऋचः श्रीर्देवता तत्र ऋग्वेदः सर्वप्रकारेण वेदेषु अधिकः तदाह **क्वचिदिति** ॥

*न्या०दी०*— यदुक्तं वेदेषु ऋग्वेदस्याधिक्यात् साम्नः सजातीयैकदेशात एव श्रेष्ठत्वमिति, तदयुक्तम् । क्वचित्सामवेदस्य ऋग्वेदादप्याधिक्यस्योक्तत्वादित्यत आह **क्वचित् इति** ॥ यत्र सामवेदस्य ऋग्वेदादाधिक्यमुच्यते तत्र सामवेदाभिमानिदेवताया एव ऋग्वेदाभिमानिदेवताधिक्यविवक्षयैवोच्यते, न तु वेदस्वरूपविवक्षया । अतो न विरोध इति भावः । भवेदेतद्यदि सामवेदाभिमानिदेवताभ्यो ऋग्वेदाभिमानिदेवता अन्या भवेत् तदेव कुत इत्यत आह **ऋच इति** ॥ ननु सामवेदाभिमानिनां प्राणशिवादीनां ऋग्वेदाभिमानिलक्ष्म्यादिभ्यः श्रैष्ठ्याभावात् कथं सामवेदस्य ऋग्वेदादाधिक्योक्तिरभिमानिदेवतापेक्षयाऽप्युपपद्यत इत्यत आह **तत्रापीति** ॥ अभिमानिष्वपि यथासम्भवमाधिक्यं ग्राह्यमित्यर्थः । यदा सामवेदस्य ऋग्वेदाधिक्यमुच्यते तदा सामवेदाभिमानिनः प्राणस्य विवक्षायाम् ऋग्वेदाभिमानिसरस्वत्याद्याधिक्यं ग्राह्यम् । यदा शिवस्य विवक्षा तदोमाद्याधिक्यं ग्राह्यमित्याद्युक्तं भवति ॥ २१-४० ॥

*भा०दी०*— **यत्र सामवेदस्येति** । छान्दोग्ये वाच ऋग्रसः ऋचः साम रस इत्यादिना उच्यत इत्यर्थः ॥ **इत्याद्युक्तं भवतीति** । यदा तु ऋच श्रीर्देवता तस्य सर्ववेदाधिक्यमित्यादि चादिपदार्थः ॥

**गीता**

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥ ४१ ॥**

*वि०वि०*— विस्तारकाङ्क्षिणं प्रति सामान्यतो विस्तारमाह । **यद्यदिति** । यद्विभूत्यादिमत्सत्वं विष्णुकपिलरामद्वयकृष्णव्यासादिकं तत्तन्मम तेजोंऽशस्य सम्भवं प्रादुर्भावमवगच्छ । तथा यद्यद्विभूत्यादिमत्सत्वं श्रीब्रह्मरुद्रादिकं तत्तन्मम तेजोंशेन सम्भवः सम्बधो यस्य तदवगच्छ ॥ ४१ ॥

*वा०ल०*— 'मम तेजोंऽशसम्भवम्' इत्यत्र मम तेजोंशात् सम्भवः सम्यक् भवः महिमा यस्य ॥ ४१ ॥

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे दशमोऽध्यायः ॥ १० ॥*

*सा०सं०*— तमेव विभूतिविस्तरं लक्षणोक्त्याऽऽह **यद्यदिति** । **यद्यत् सत्वं** वस्तु **विभूतिमत्** स्वजातितः श्रैष्ठ्योपेतं **श्रीमत्** सम्पद्युक्तम् **ऊर्जितम्** अभिवृद्ध्युपेतं वा । **तत्तद्वस्तु मम** तेजोरूपेण प्रकाशरूपेणांशेन सह भवतीति **तेजोंऽशसम्भवम् एवावगच्छ** जानीहि ॥४१॥

*अ०प्र०*— तमेव विभूतेर्विस्तरं लक्षणोक्त्या पुनश्च साकाङ्क्षं प्रति कथञ्चित्साकल्येन कथयति **यद्यदिति** ।

अन्वयः— हे परन्तप ! विभूतिमत्[1], श्रीमत्[2], ऊर्जितं वा[3], यत् यत् सत्त्वं[4], तत्तत्[5], मम तेजोंशसम्भवं[6], एवं इति त्वं अवगच्छेत्यन्वयः ॥

विभूतिमत् = स्वजातितः श्रैष्ठ्योपेतं ऐश्वर्ययुक्तं वा[1], श्रीमत् = सम्पत्तियुक्तं[2], ऊर्जितं वा = अभिवृद्ध्युपेतं वा । केनचित् प्रभावबलादिना गुणेन अतिशयितं वा[3], यत् यत् सत्त्वं = वस्तुमात्रं प्राणिजातं वा[4], तत्तत्सर्वं[5], मम तेजोंशसम्भवं = मम तेजोरूपेण अंशेन प्रतिबिम्बत्वेन सम्भवतीति तथा । यद्वा, मम तेजसः प्रभावस्य अंशेनैव[6], इति त्वं[7], अवगच्छ = जानीहि[8] ॥ ४१ ॥

भाष्यम्

**यद्यद् विभूतिमदिति विस्तरः । विष्णवादीनि तु स्वरूपाण्येव । अन्यानि तु तेजोयुक्तानि । तथा च पैङ्गिखिलेषु– "विशेषका रुद्रवैन्येन्द्रदेवराजन्याद्या अंशयुताऽन्यजीवाः । कृष्णव्यासौ रामकृष्णौ च रामकपिलौ यज्ञप्रमुखाः स्वयं सः" इति । "स एवैको भार्गवदाशरथिकृष्णाद्यास्त्वंशयुता अन्यजीवाः" इति गौतमखिलेषु । "ऋषयो मनवो देवा मनुपुत्रा महौजसः । कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः । एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" इति भागवते ऋष्यादीन् अंशयुतत्वेनोक्त्वा वराहादीन् स्वरूपत्वेनाह ।**

*प०टी०*— 'एष तूद्देशतः' इति पूर्वपरामर्शो भवतीति । आह **यदिति** । 'प्रोक्तः' इति शास्त्रान्तर इत्यर्थः । 'मम तेजोंशसम्भवम्' इति विष्णवादीनामप्यंशसंयुक्तत्वशङ्कां सप्रमाणकं निराचष्टे **विष्णवादीनामिति** । **विशेषकाः** गरुडानन्तब्रह्मणः ।

*प्र०दी०*— 'एष तूद्देशतः' इति 'एतत्'शब्दोऽनुक्रान्तपरामर्शी इति प्रतीतिनिरासार्थमाह **यद्यदिति** । वक्ष्यमाणं बुद्धिस्थमेतच्छब्देन परामृश्यते । शृङ्गिग्राहिकयोक्तेरपि लक्षणोक्तेर्विस्तरत्वादिति भावः । विभूतिमदादिकं मम तेजोरूपेणांशेन सह भवतीत्युक्त्या विष्णवादीनामपि भगवदंशयुक्तत्वं प्रतीयते । तेषामप्येतल्लक्षणोपेतत्वात् । तन्निवृत्त्यर्थमाह **विष्णवादीनीति** । तर्हि किं विषयमेतद्वाक्यम् ? इत्यत आह **अन्यानि त्विति** ।

कुत एतत् ? इत्यत आह **तथा चेति** । **विशेषकाः** गरुडानन्तविरिञ्चाः । **वैन्यः** पृथुः । **राजन्यग्रहणेन** गृहीतस्यापि पुनरुक्तिः साक्षाद् अवतारत्वविशेषोक्तिबाधनार्थम् । **कृष्णः** धर्मसूनुरपि। **रामः** भार्गवोऽपि । अंशयुक्तत्वेनोक्त्वा 'कलाः' इत्यनेन कला इव कलाः । न स्वरूपत्वेन । 'एते स्वांशकलाः' इत्यनेन स्वरूपांशरूपा एव कलाः । न तु पूर्ववदुपचारेणेति ।

*भा०दी०*— **भृङ्गग्राहिकयेति** । 'आदित्यानामहं विष्णुः' इत्यादिव्यक्तिविशेषोक्तितोऽपि 'यद्यद्विभूतिमत्' इति लक्षणोक्तेरनेकसङ्ग्राहकत्वादिति भावः । **किंविषयमेतद्वाक्यमिति** । 'यद्यत्' इति वाक्यम् । **धर्मसूनुरपीति** । वासुदेवः कृष्णः 'अपि'पदार्थः । **भार्गवोऽपीति** । दशरथरामोऽपिपदार्थसमुच्चेयः । 'उक्तत्वेन' इति भाष्ये 'केन' इत्याकाङ्क्षां पूरयति **कला इत्यनेनेति** । तेन तदर्थलाभप्रकारमाह **कला इव कला इति** । 'स्वरूपत्वेनाह' इति भाष्ये 'केन' इत्याकाङ्क्षां पूरयति **स्वांशकला इत्यनेनेति** । तदर्थमाह **स्वरूपांश एवेत्यादि** ।

*भा०र०*— **वक्ष्यमाणं बुद्धिस्थम्** । 'वक्ष्यमाणतया बुद्धिस्थम्' इति तद्ग्रहणे निमित्तकथनम्। अनुक्रान्तपरामर्शित्वाभावे उपपत्तिमाह **भृङ्गग्राहिकयेति** । 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इति वचनात् ण्वुलन्तोऽयं शब्दः । 'आदित्यानामहं विष्णुः', 'वृष्णीनां वासुदेवोऽस्मि' इत्यादिरूपेण गोः भृङ्गग्रहणेनेवोक्तेरपि लक्षणोक्तेः बहुव्यक्तिग्राहकत्वात् विस्तरोक्तित्वं स्वरसं इति एतच्छब्देन वक्ष्यमाणस्य ग्रहणं युक्तमिति भावः । **विभूतिमदादिकं** विभूतिमत्, श्रीमद्, ऊर्जितं च **तेषां** विष्णवादीनां **एतल्लक्षणोपेतत्वात्** विभूतिमत्, श्रीमद्, ऊर्जितमित्युक्तलक्षणोपेतत्वात् । **तर्हि** विष्णवादिरूपाणां स्वरूपत्वे, **एतद्वाक्यं** 'यद् विभूतिमदादिकं तत् मम तेजोंशसम्भवम्' इति वाक्यम् । **कुत एतत्** विष्णवादीनि स्वरूपाणि, अन्यानि तु तेजोयुक्तानि इति व्याख्यानं कुतः प्रमाणात् ज्ञातव्य-

मित्यर्थः । विशेषकशब्दोऽखण्डप्रातिपदिकं व्यावर्तकवचनश्चेत् प्रकृतानुपयोगः ? इत्यतस्तदर्थमाह **गरुडानन्तविरिञ्चा इति** । **विः** पक्षी गरुडः । **अनन्तः** शेषदेवः । **कः** विरिञ्च इति विवेकः । अप्रतीतेर्व्याख्याति **वैन्यः पृथुरिति** । **विशेषोक्तीति** । 'जातो नारायणांशेन पृथू राजा क्षितीश्वरः', नवमं पार्थिवं वपुः' इत्यादिविशेषोक्तीत्यर्थः ।

'कृष्णव्यासौ', 'रामकृष्णौ', 'रामकपिलौ' इत्यत्र कृष्णशब्दो रामशब्दश्च द्विरुपात्तः । तत्रैको वसुदेवसूनुः कृष्णः, दशरथसूनुः रामश्च प्रसिद्धः । अपरः कृष्णो रामश्च कौ ? इति न प्रतीयते । अत आह **कृष्णो धर्मसूनुरपि रामो भार्गवोऽपीति** । न केवलं वसुदेवसूनुः कृष्णः स्वयं भगवान् परमपुरुषः अपितु अन्यः कृष्णः धर्मसूनुरपि स्वयं सः । न केवलं दाशरथी रामो भगवान्, किन्तु अन्यो रामो भार्गवोऽपीति प्रत्यायनाय अपिशब्दः इति *स्वामिनः* । **अन्ये तु** आद्यकृष्णशब्दार्थोक्तिः धर्मसूनुरिति, द्वितीयरामशब्दार्थोक्तिः भार्गव इति । यद्यपि धर्मात्, भृगोरप्युत्पन्न इति उत्पत्त्यादि-दोषित्वात् न भगवत्त्वमिति शङ्का । तथापि 'न च गर्भे वसद्देव्या न चापि वसुदेवतः । न चापि राघवाज्जातो न चापि जमदग्नितः । नित्यानन्दाद् द्वयोऽप्येवं क्रीडतेऽमोघदर्शनः' इत्यादि शास्त्रा-वमर्शेन तत्सूनुत्वमपि तत्र प्रादुर्भावेनैव, न तु स्त्रीपुंसमलाभियोगात्मकदेहयोगित्वेन इत्येवं निश्चीयत इत्येवमर्थमावेदयितुं अपिशब्द इति व्याचक्षते । 'अंशयुक्तत्वेनोक्त्वा' इति भाष्ये शेषमाह **कला इत्यनेनेति** । कथं तेन तल्लाभः ? इत्यतो व्याख्याति **कला इव कला इति** । 'स्वरूपत्वेन' इति भाष्यप्रतीकग्रहणम् । तत्र शेषोक्तिः **स्वांशकला इत्यनेनेति** । तेनोक्तार्थलाभाय व्याचष्टे **स्वरूपांशरूपा एवेति** । **पूर्ववत्** कला इव कला इतिवत् । एकत्र कलाशब्दः, अपरत्र स्वांश-कलाशब्द एव भिन्नांशत्वे स्वरूपांशत्वे च मानमिति हृदयम् ।

भाष्यम्

**तुशब्द एवार्थे । अन्यस्तु विशेषो न कुत्राप्यवगतः । अंशत्वं तत्राप्यवगतम् "उद्धबर्हात्मनः केशौ" इति । 'मृडयन्ति' इति बहुवचनं चायुक्तम् । न ह्यन्तरा-ऽन्यदुक्त्वा पूर्वमपरामृश्य तत्क्रियोच्यमाना दृष्टा कुत्रचित् ॥ ४१ ॥**

***प०टी०***— नन्वत्र वराहादीनामंशांशत्वमुक्त्वा, कृष्णस्यैव ब्रह्मत्वमुच्यत इति तुशब्दादव-गम्यत इत्यत आह **तुशब्द इति** । कृष्ण **एव** भगवानिति योजना । न वराहादीनां ब्रह्मत्वम् । किन्तु कृष्णस्यैवेति किं न स्यात् ? इत्यत आह **अन्यस्त्विति** । वराहादीनामंशत्वश्रवणादयं विभाग इत्यत आह **अंशत्वमिति** । इतश्च नान्यथाऽस्य योजनेत्याह **मृडयन्तीति** । इन्द्रारिव्याकुलं

मृडयतीत्येव स्यादित्यर्थः । 'अवतारा ह्यसङ्ख्येयाः' इति पूर्वोक्तेनास्यान्वय इत्यत आह **न हीति** ॥ ४१ ॥

***प्र०दी०*—** नन्वत्र 'एते वराहाद्याः परमपुरुषस्य अंशा एव । कृष्णस्त्वंशी भगवान् स्वयमिति प्रतीयते । तत्कथमुक्तव्याख्यानम् ? अन्यथा तुशब्दानुपपत्तेरित्यत आह **तुशब्द इति** । ततश्चायमर्थः। एते वराहाद्याः **पुंसः स्वांशकलाः** । कोऽर्थः ? **कृष्णः** परमपुरुषो **भगवान् स्वयमेव** एत इति । कुत एतत् ? इति चेत् उदाहृतश्रुतिसंवादात् । अर्थान्तरस्य संवादाभावाच्चेत्याह **अन्यस्त्विति** । वराहादयो अंशाः । कृष्णोंऽशी इत्येवंरूपः । इतोऽप्ययं विशेषो न युक्त इत्याह **अंशत्वमिति** ।

**तत्रापि** कृष्णेऽपि । किञ्चास्मिन् व्याख्याने कृष्णस्यैकस्यैव प्रकृतत्वात् । 'इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे' इत्युत्तरवाक्ये बहुवचनं नोपपन्नमित्याह **मृडयन्तीति** । ननु बहुवचनं पूर्वोक्तैः वराहादिभिः **सम्बद्ध्यते**, न कृष्णेनेति चेन्न । 'कृष्णस्तु भगवान् स्वयम्' इति वाक्यार्थेन व्यवहितत्वात् । व्यवहितस्यापि पुनः सन्निधानाय परामर्शाभावात् । सति गत्यन्तरेऽध्याहारायोगात्। असन्निहितेनान्वयबोधस्य क्वाप्यदर्शनादिति भावेन आह **न हीति** । 'क्रिया' इति प्रकृतापेक्षयोक्तम्। ननु सन्निधेरपि योग्यता बलवतीति चेत्, सत्यम् । सन्निधिमनतिक्रम्य योग्यान्वयस्तूक्तः ॥ ४१ ॥

***भा०दी०*—** 'इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे' इति वाक्यात् पूर्वं 'एते वराहाद्याः' इत्यध्याहारेणास्तु परामर्श इत्यत आह **सति गत्यन्तर इति** । प्रागुक्तदिशेति भावः । 'क्रिया' इत्युक्त्या क्रियान्यधर्मान्तरं वक्तुं शक्यमिति भ्रमनिरासायाह **क्रियेति** । **प्रकृतापेक्षयोक्तमिति** । 'मृडयन्ति' इति क्रियाया एवात्र प्रकृतत्वादिति भावः ॥ ४१ ॥

***भा०र०*—** **एते** इत्यस्य अर्थः **वराहाद्या इति** । 'पुंसः' इत्यस्य अर्थः **परमपुरुषस्येति**। **उक्तं व्याख्यानं** 'ऋष्यादयोंऽशयुताः', 'वराहाद्याः स्वरूपांशरूपाः' इत्युक्तं व्याख्यानमित्यर्थः । **तुशब्देति** । तस्य पूर्वोक्तविशेषकत्वादिति भावः । कथमनेनोक्तान्यथाप्रतीतिप्रतीकारः ? इत्यत आह **ततश्चायमिति** । 'एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इत्यस्य । 'कृष्णस्तु भगवान् स्वयम्' इति पादमवतारयति **कोऽर्थ इति** । 'विष्णुर्नारायणः कृष्णः' इत्यादि लौकिक-प्रसिद्धेः । 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इति वैदिकप्रसिद्धेश्च कृष्णशब्दो नारायणस्यैव वाचक इति भावेनाह **कृष्णः परमपुरुष इति** । **एतत्** 'वराहाद्याः कृष्णो भगवान् मूलरूपी स्वयमेव' इति व्याख्यानम् । **उदाहृतेति** । पैङ्गिखिलगौतमखिलरूपोदाहृतश्रुतिसंवादादित्यर्थः । **अर्थान्तरस्य** 'परमपुरुषस्य अंशा एव वराहाद्याः, कृष्णस्तु भगवान् स्वयमंशी' इति प्रतीतार्थस्य । **कृष्णेऽपि** वासुदेवेऽपि ।

'पूर्वपरामृश्य' इत्येतद्भाष्यार्थमाह **व्यवहितस्यापीति** । **परामर्शाभावादिति** । 'सं ते प्राणो वायुना गच्छताम् । संयजत्रैरङ्गानि । संयज्ञपतिराशिषा' इत्यत्र 'अङ्गानि' इति बहुवचनव्यवधानेऽपि यज्ञपतिः 'सङ्गच्छताम्' इति पदस्य पुनरन्वयाभावस्य 'व्यवायान्नानुषज्येत' इति जैमिनिसूत्रे व्यवस्थापनादिति भावः । ननु 'वराहाद्याः' इत्यध्याहारात् बहुवचनोपपत्तिः ? 'संयज्ञपतिराशिषा' इत्यत्र 'गच्छताम्' इति पदाध्याहारस्य मीमांसकैरभ्युपगमादित्यत आह **सति गत्यन्तर इति** । 'एते वराहाद्याः पुंसः स्वांशकलाः, कोऽर्थः ? कृष्णः = परमपुरुषो भगवान् स्वयमेवैते' इति व्याख्यानरूपगत्यन्तरे सम्भवतीत्यर्थः । ननु सामान्यन्यायोपपादनावसरे 'क्रियोच्यमाना' इति कथमुक्तम् ? इत्यत आह **क्रियेति** । 'मृडयन्ति' इति क्रियाप्रस्तावात् तदपेक्षया क्रियाग्रहणम् । 'धर्ममात्रमप्युच्यमानं न दृष्टम्' इत्येव तु भाष्यार्थ इति भावः । **बलवतीति** । 'आनन्तर्यमचोदना' इत्यधिकरणे योग्यताबलीयस्त्वस्य स्थितेरिति भावः । **उक्तः** 'ततश्चायमर्थ इत्यत्र' इति शेषः । सन्निधियोग्यतयोर्विरोधे सत्येव, सन्निध्यपेक्षया योग्यता बलवतीति, तया तद्बाधो युक्तः । अत्र तूभयोरविरोध एवेति भावः ॥ ४१ ॥

**गीतातात्पर्यनिर्णयः**

**मम तेजोंऽशेन संयुक्तं भवति ॥ ४१ ॥**

*प्रका०*— ''यद्यद्विभूतिमत्सत्त्वमि''ति निर्दिश्य मम तेजोंऽशसम्भवमिति यदुक्तं तद्व्याचष्टे **मम तेजोंशेन् संयुक्तं भवतीति** ॥ "

***न्या०दी०***— **विभूतीनां सङ्क्षेपमुक्त्वा विस्तर उच्यते यद्यदिति ॥ तत्र यद्यद्विभूत्यादिमत्तत्तन्मयाऽधिष्ठितमित्यनुक्त्वा मम तेजोंऽशसम्भवमिति स्वांशजातत्वं तस्य किमर्थमुच्यत इत्यत आह ममेति ॥ प्रकाशरूपांशेन संयुक्तं भवतीति तेजोंऽशसम्भवं न तु तेजोंऽशात् संभवो यस्येति । येनासङ्गतिरिति भावः ॥ ४१ ॥**

*भा०दी०*— इत्यनुक्त्वेति । प्रकरणबलेनाधिष्ठितत्वस्यैव वक्तव्यत्वादेव मुक्तिरसङ्गतेति भावः ॥

**गीता**

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥**

***इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥***

***वि०वि०—*** उक्तविस्तरादधिकं विभूतिविस्तारमाह **अथ वेति** । तत्र तत्र परिच्छिन्नज्ञानादहं कोटिकोट्यैकदेशेन सर्वजगद्व्याप्य स्थितः इत्यपरिच्छिन्नभगवद्दर्शनं प्रधानमिति ज्ञापनार्थं 'किं ज्ञातेन' इत्युक्तम् । न तु उक्तनिष्फलत्वज्ञापनाय अन्यथोक्तेरेव वैय्यर्थ्यात् । त्वं तु बहुफलप्राप्तियोग्य इति तवेति विशेषणम् । उक्तं च—

'अन्याधिक्यज्ञापनार्थं शुभं चाक्षिप्यते क्वचित् ।
न तावताऽस्य निन्द्यत्वं ज्ञेयैवाऽन्यवरिष्ठता ॥

उभयं मिलितं चैव ततोऽभ्यधिकशोभनम् ॥' इति ॥ ४२ ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां दशमोऽध्यायः ॥*

***सा०सं०—*** लक्षणमुखेनोक्ततत्तद्वस्तुनिष्ठविभूतिविस्तरादप्यधिकविभूतिविस्तरमाह **अथवेति** । **अथवेति** पक्षान्तरे । **एतेन बहुना** विभूत्यादियुक्तरविप्रभृतितत्तद्वस्तुनिष्ठपरिच्छिन्नविभूतिरूपाणाम् । विस्तरेण **ज्ञातेन तव किम्** । न किमपि फलम् । वक्ष्यमाणव्याप्तज्ञानफलादल्पफलत्वादाक्षेपः । न तु वैफल्यादिति भावः । तर्हि किं ज्ञातव्यमित्यत आह **विष्टभ्येति** । **इदं** प्रमाणावगतं **कृत्स्नं जगदेकांशेन,** अनन्तांशमध्ये एकांशेनैव । **विष्टभ्य** व्याप्य, **स्थितः** । सर्वांशेन व्याप्तुं जगत्सहस्रमपि नालम् । अतः तादृशापर्यवसितव्याप्तिमानहम् । अतस्तज्ज्ञानमावश्यकमिति भावः ।

***सा०सं०—*** न चैतज्ज्ञानादेव मोक्षसिद्धौ प्रागुक्तपरिच्छिन्नविभूतिरूपाणां ज्ञानं व्यर्थमिति तदुक्तिर्व्यर्थेति शङ्क्यम् । 'अज्ञात्वैनं सर्वविशेषयुक्तं देवं परं को विमुच्येत बन्धात्' इति श्रुत्या प्रागुक्तज्ञानस्यावश्यकत्वात् । महाफलाधिकारित्वात् तवोभयज्ञानमावश्यकम् । न विशेषज्ञानमात्रेणालमिति तवैतेन ज्ञातेन किमिति भावेन तवेत्युक्तम् ॥ ४२ ॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते दशमोऽध्यायः ॥*

***अ०प्र०—*** अथवा किमनेन परिच्छिन्नदर्शनेन सर्वत्र समदृष्टिमेव कुरु । यद्वा, लक्षणमुखोक्ततत्तद्वस्तुनिष्ठां विभूतिविस्तरमाह **अथवेति** ।

हे अर्जुन ![1], अथवा[2], बहुना[3], एतेन[4], ज्ञानेन[5], तव किं[6], अहं[7], इदं[8], कृत्स्नं[9], जगत्[10] एकांशेनैव[11] विष्टभ्य[12], स्थितः[13] इत्यन्वयः ।

हे अर्जुन ![1], अथ = अनन्तरं पक्षान्तरे वा[2], बहुना = विभूत्याद्युक्तरविप्रभृति तत्तद्वस्तु-निष्ठपरिच्छिन्नविभूतिरूपाणां विस्तरेण यद्वा, पृथक् ज्ञानेन[3], एतेन = विभूतिभेदेन[4], ज्ञातेन[5], तव किं[6], न किमपि फलं वक्ष्यमाणव्याप्तित्वज्ञानफलात् अल्पफलत्वाक्षेपः । न तु नैष्फल्यादिति ज्ञेयम्। यद्वा, 'वा'शब्दस्य अलमित्यर्थः । तर्हि किं ज्ञातव्यमित्यत आह **विष्टभ्येति** । अहं[7], इदं प्रमाणा-वगतं[8], कृत्स्नं = समग्रं[9], जगत् यस्मात्सर्वमिदं जगत्[10] एकांशेनैव एकदेशमात्रेणैव । यद्वा, सर्वा-न्तर्यामित्वेनैव[11] विष्टभ्य = व्याप्य धृत्वा वा[12], स्थित अहमेव स्थित इत्यर्थः । न च मद्व्यतिरिक्त एतद्गुणविशिष्टं किञ्चदस्ति 'पादोऽस्य विश्वा भूतानी'ति श्रुतेः । सर्वांशेन व्याप्तुः जगत्सहस्रमपि नालं तमस्तादृशपर्यवसितिव्याप्तिमानाह अतस्तज्ज्ञानामावश्यकमिति भावः । न च तज्ज्ञानादेव मोक्ष-सिद्धौ प्रागुक्तपरिच्छिन्नविभूतिरूपाणां ज्ञानं व्यर्थमिति तदुक्तिर्व्यर्थमिति । शक्यं अज्ञात्वैनं सर्व-विशेषयुक्तं देवं परः को विमुच्येत । बन्धनादित्यादि श्रुत्यादि प्रागुक्तं ज्ञानस्याप्यावश्यकत्वान्महा-फलाधिकारित्वात् तव उभयज्ञानमावश्यकत्वविशेषकज्ञानमात्रेणालमिति तवैतेन ज्ञानेन इतिभावेन तवेत्युक्तम् ॥ ४२ ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां दशमोऽध्यायः ॥*

भाष्यम्

**'किम्' इति वक्ष्यमाणप्राधान्यज्ञापनार्थम् । न तु उक्तनिष्फलत्वज्ञापनाय । तथा सति नोच्येत । "अज्ञात्वैनं सर्वविशेषयुक्तं देवं परं को विमुच्येत बन्धात्" इति ऋग्वेदखिलेषु ।**

*प०टी०*— 'अथवा बहुना' इत्यत्रान्यथाप्रतीतिं निवारयति **किमिति** । ननु सर्वगतत्वज्ञाने तदन्तर्गतत्वात् पूर्वोक्तमफलमेव किं न स्यात् ? इत्यत आह **अज्ञात्वेति** ।

*प्र०दी०*— 'अथवा बहुनैतेन किं ज्ञातेन' इति पूर्वोक्तव्यस्तज्ञानाक्षेपात् तस्य निष्फलत्वमिति प्रतीतिनिरासार्थमाह **किमिति** । किमित्ययमाक्षेपो वक्ष्यमाणसर्वव्याप्तरूपज्ञानस्य उक्तरविप्रभृति-परिच्छिन्नवस्तुस्वरूपज्ञानापेक्षया प्राधान्यज्ञापनार्थमेव न तु उक्तविशेषज्ञानस्य निष्फलत्वज्ञापना-र्थम् । निष्फलत्वे तदुक्तिवैयर्थ्यापत्तिरित्यर्थः ।

ननु व्याप्तिज्ञानेनैव मुक्तिसम्भवात् विशेषज्ञानं व्यर्थमेव किं न स्यात् ? इत्यत आह **अज्ञात्वेति** । 'प्रियशिरस्त्वाद्यप्राप्तिः' इत्यादिकं ध्यानापेक्षयोक्तम् । ज्ञानापेक्षया तु श्रुतिरित्यविरोधः । अथवा विशिष्टाधिकारिविषयेयं श्रुतिः ।

*भा०दी०*— **व्यस्तेति** । व्यासो विस्तारः विस्तरेणोक्तविभूतिज्ञानापेक्षादित्यर्थः । 'आदित्यानामहं विष्णुः' इत्यादिनोक्तविष्णवादिज्ञानापेक्षयेति भ्रमनिरासायाह **उक्तरविप्रभृतीति** । ननु 'तस्य प्रियमेव शिरः' इत्याद्युक्तप्रियशिरस्त्वसम्भृतिद्युव्याप्त्यादेरसर्वाधिकारिकत्वस्य सूत्रकृदुक्तेः कथं 'अज्ञात्वैनं' इति श्रुतिः ? इत्यत आह **प्रियशिरस्त्वादीति** । **विशिष्टाधिकारीति** । उत्तमेत्यर्थः। 'यो माम्' इत्युक्तसर्वत्रहरिदर्शनस्य कथं प्राधान्यलाभः ? इत्यत आह **विशिष्टेति** ।

'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि' इति षष्ठे व्याप्तिज्ञानस्य योगक्षेमादिविशिष्टफलोक्तेरित्यर्थः ।

*भा०र०*— **व्यत्यस्तज्ञानाक्षेपात्** विस्तरेणोक्तविभूतिज्ञानस्य 'किं ज्ञातेन' इति किंशब्देनाक्षेपादित्यर्थः । **तस्य** विस्तृत्योक्तविभूतिज्ञानस्य । **रविप्रभृतीति** । 'ज्योतिषां रविरंशुमान्' इत्यादिनोक्तरविप्रभृतीत्यर्थः । ननु भगवद्गतसर्वधर्माणां ज्ञेयत्वे 'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे 'वेधाद्यर्थभेदात्' इत्यादि ब्रह्मसूत्रविरोधः ? तत्र 'तस्य प्रियमेव शिरः' इत्यादिशास्त्रोक्तप्रियशिरस्त्वादिगुणोपासना न सर्वेषाम्, यतो मोक्षाख्यफलतारतम्यार्थं उपासनाया उपचयापचयौ = वृद्धिह्रासौ, तारतम्यमिति यावत्, उपेयाविति भागवतगुणानामपि सर्वाधिकार्युपास्यत्वाभावस्य प्रियशिरस्त्वाद्यधिकरणे स्थितेः, इत्यत आह **प्रियशिरस्त्वादीति** । **ध्यानापेक्षयेति** । एतत्सूत्रस्य उपासनापादगतत्वादिति भावः । 'अज्ञात्वैनम्' इति भाष्ये श्रवणादाह **ज्ञानापेक्षया त्विति** । **विशिष्टेति** । उत्तमेत्यर्थः । सूत्रं तु मन्दाधिकारिविषयमिति हृदयम् ।

भाष्यम्

**त्वं तु बहुफलप्राप्तियोग्य इति 'तव' इति विशेषणम् । अन्यस्तुत्यर्थत्वेन प्रसिद्धश्च एकत्र किंशब्दः । "रागद्वेषौ यदि स्यातां तपसां किं प्रयोजनम् । तावुभौ यदि न स्यातां तपसा किं प्रयोजनम्" इत्यादौ । प्राधान्यं च सिद्धमेकत्र दर्शनात् सर्वत्र भगवद्दर्शनस्य "यो मां पश्यति सर्वत्र" इत्यादौ ॥ ४२ ॥**

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते*

*श्रीमद्भगवद्गीताभाष्ये दशमोऽध्यायः ॥*

*प०टी०*— नन्वल्पोपासकानां विशेषसाफल्येऽपि, अर्जुनादीनां व्याप्तोपासकानां निष्फलमेव पूर्वोक्तम् । अन्यथा 'तव' इति वैयर्थ्यं स्यादित्यत आह **त्वं त्विति** । नन्वेकत्र किंशब्देनान्य-प्राधान्यस्तुतिः क्व दृष्टा ? इत्यत आह **अन्येति** । भवेन्नेतदुक्ताद्वक्ष्यमाणप्राधान्ये । तदेव कुतः ? इत्यत आह **प्राधान्यं चेति** ॥ ४२ ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित-श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां दशमोऽध्यायः ॥*

*प्र०दी०*— ननु व्याप्तज्ञानयोग्यानां विशेषज्ञानं निष्फलमेव । अन्यान् प्रति तु तदुक्तिरिति व्यवस्थाऽस्तु । 'तव' इति विशेषणसामर्थ्यादित्यत आह **त्वं त्विति** । 'अतो न तव विशेषज्ञान-मात्रेणालमिति ज्ञापयितुम्' इति शेषः । विशेषणस्यान्यथासिद्धत्वात् नोक्तव्यवस्थाकल्पकत्वमिति भावः ।

ननु किं ज्ञातेन ? न किमपीति शब्दादुक्तस्य नैष्फल्ये प्रतीते तदुक्तिवैयर्थ्यप्रसङ्गात् बाधकात् निष्फलाल्पफलयोः महाफलत्वाभावसादृश्यात् गौण्या वृत्त्या उक्तस्य अप्राधान्यप्रतीतौ अर्थाद्वक्ष्य-माणस्य 'प्राधान्यप्रतीतिः' इत्युक्तम् । तत्र गौणप्रयोगे प्रयोजनं वाच्यमिति चेन्न । रूढोपचार-त्वादिति भावेन आह **अन्येति** । **स्तुतिः** प्रशस्तताज्ञापनम् । **अर्थः** प्रयोजनम् ।

स्यादिदं व्याख्यानं यदि परिच्छिन्नज्ञानात् व्याप्तज्ञानस्य प्राधान्यं प्रमितं स्यात् । तदेव कुतः ? इत्यत आह **प्राधान्यं चेति** । 'यो माम्' इति विशिष्टफलकथनात् । न्यायसिद्धोऽप्यर्थो वाक्य-सम्मत्या दृढो भवतीत्येतदुक्तम् ॥ ४२ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां दशमोऽध्यायः समाप्तः ॥ १० ॥*

*भा०दी०*— **न्यायेति** । आक्षेपार्थककिंशब्दप्रतीतौ अन्यथासिद्धप्राधान्यरूपः न्यायसिद्धो-ऽप्यर्थो 'यो माम्' इति वाक्यसम्मत्या दृढो भवतीति प्राधान्यं सिद्धं इत्याद्युक्तं इत्यर्थः ॥ ४२ ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां राघवेन्द्रयतिकृतायां भावदीपे दशमोऽध्यायः ॥*

*भा०र०*— **विशेषज्ञानं** रविप्रभृतिपरिच्छिन्नवस्तुस्वरूपज्ञानम् । **अन्यान्** व्याप्तिज्ञाना-योग्यान् । अन्यथासिद्धत्वात् बहुफलयोग्यत्वज्ञापनार्थत्वात् ।

**उक्तस्य** रविप्रभृतिपरिच्छिन्नवस्तुस्वरूपज्ञानस्य **वक्ष्यमाणस्य** सर्वव्याप्तिज्ञानस्य । ननु गुणोत्कर्षप्रतिपादनपरं वाक्यं स्तुतिः । तद्वाचित्वं च किंशब्दस्य नास्तीति 'स्तुत्यर्थत्वेन' इति अयुक्तम् ? इत्यह आह **स्तुतिः प्रशस्तताज्ञापनमिति** । ननु 'यो माम्' इति वाक्ये सर्वदर्शन-मुच्यते, न पुनः तस्याधिक्यम् इत्याशङ्क्य 'तस्याहं न प्रणश्यामि' इति व्याक्यशेषोक्तं आधिक्ये हेतुमध्याहरति **विशिष्टफलकथनादिति** । योगक्षेमवहनमेव विशिष्टं फलम्, तस्य कथनादित्यर्थः । ननु विशेषरूपाण्युक्तानि, 'किं ज्ञातेन ?' इति चोक्तम् । एतदुभयान्यथानुपपत्त्या परिच्छिन्नव्याप्त-ज्ञानयोः गुणप्रधानभावः प्रमितः । ततो 'यो माम्' इति वाक्योदाहरणमयुक्तम् ? न च प्रमाणा-न्तरत्वेन तदुपन्यासः । गीतार्थस्यैव विचार्यत्वेन तद्भावायोगात्, इत्यत आह **न्यायसिद्ध इति** । आक्षेपार्थककिंशब्दप्रतिपादित-अन्याप्राधान्य-रूपन्यायसिद्धोऽप्यर्थः 'यो माम्' इति वाक्यसम्मत्या दृढो भवतीति 'प्राधान्यं च सिद्धमित्याद्युक्तम्' इति *स्वामिनः* ॥ ४२ ॥

***'हन्त ते कथयिष्यामि' इत्यादेः 'अथवा बहुनैतेन' इत्यन्तस्य***
***गीतावचनस्य अक्षरार्थस्तु—***

'द्वितीयं वैभवं विष्णोः प्रत्यक्षं च तिरोहितम् । कपिलव्यासकृष्णाद्यं प्रत्यक्षं वैभवं स्मृतम् ॥ भिन्नं ब्रह्मादिजीवेभ्यो जडेभ्यश्चापि तद्गतम् । स्वजात्याधिक्यजं तेषां तत्तिरोहितवैभवम् ॥' इति प्रमाणसिद्धानि द्विविधानि भगवतो विभूतिरूपाणि 'वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः' इति प्रश्नस्योत्तरतया निरूपयिष्यता प्रतिज्ञा क्रियते— **भगवानुवाच– हन्त त इति** । 'हन्त' इति हर्षे अव्ययम् । हे **कुरुश्रेष्ठ** या **हि दिव्या** आत्मनो विभूतयः पृष्टाः ता **दिव्या आत्मविभूतयः** आत्मविभूतीः । नानाभूतानि रूपाणि इति, द्वितीयार्थे तु प्रथमा, **प्राधान्यतः** प्रधानतया स्थितानि, **ते** तुभ्यं **कथयिष्यामि** । यतो **मे विस्तरस्य** विभूतीनां वैपुल्यस्य **अन्तः** अवधिः **नास्ति** ॥१९॥

विभूतिविवक्षया प्रथमम् 'एतावच्छृणु' इति स्वरूपस्थितिरुच्यते **अहमिति** । गुडाकायाः = निद्राया ईशो **गुडाकेशः** जितनिद्रः, तत्सम्बुद्धिः । कर्तव्येषु जागरूक ! **अहमात्मा** आततगुणः **सर्वेषां भूतानां आशये** अन्तर्हृदये स्थितः नियामकतया । आत्मा व्याप्तोऽपि सर्वप्राणिहृदय-गुहाश्रित इति *स्वामिनः* । किञ्च **भूतानां अहं एव आदिः मध्यं अन्तश्च** सृष्टिस्थितिप्रलयहेतुः। अनेन प्रत्यक्षतः प्रतीयमानपरिच्छिन्नस्वरूपस्य तव वक्ष्यमाणदिव्यविभूतिशालित्वं असम्भावितमिति पर्यनुयोगोऽपहस्तितः ॥ २० ॥

प्रत्यक्षं विभूतिरूपमुच्यते **आदित्यानामहं विष्णुरिति** । द्वादशादित्यानां मध्ये उरुक्रमशब्दितो **विष्णुरहमस्मि** । 'विष्लृ = व्याप्तौ' इत्यतः क्नुप्रत्ययः सर्वव्यापी । नियमनाय सर्वत्र प्रवेशवान् विष्णुः । 'विश = प्रवेशने' इत्यतः क्नुः । शकारस्य षकारः । सर्वभूतानां पृथिव्यादीनां ब्रह्मादीनां प्रजानां च गमयितृत्वात् विष्णुः । 'वी = गतिप्रजनकान्त्यसनखादनेषु' इत्यतो गतिकर्मणः क्स्नुप्रत्ययो धातोर्ह्रस्वश्च । द्यावापृथिव्यौ व्याप्नोति इति वा विष्णुः । 'विष्लृ = व्याप्तौ' इत्यतः पूर्ववदेव क्नुप्रत्ययः । अभ्यधिककमनीयताशालित्वाद् वा विष्णुः । 'वश = कान्तौ इत्यतो नुप्रत्ययः । धातोरकारस्येकारः, शकारस्य षकारः । 'वी = गति' इत्यतो वा कान्तिकर्मणः क्स्नुः धातोर्ह्रस्वश्च अधिभूतनिविष्टत्वाद्वा विष्णुः । 'विश = प्रवेशने' इत्यतः क्नुः षत्वं च । अधिभूतस्य जन्मादीच्छावत्त्वाद् विष्णुः । वेतेः वष्टेश्च पूर्ववद्रूपम् । त्रिविक्रमरूपेण पादविक्षेपाद्वा विष्णुः । पूर्ववद् 'वी = गति' इत्यतो गतिकर्मणः कर्तरि प्रत्ययः ।

केषु केषु च भावेषु चिन्त्योऽसीति प्रश्नस्योत्तरम् **ज्योतिषां रविरंशुमानिति** । प्रकाशरूपाणां भावानां मध्ये विश्वव्यापिरश्मियुक्तो **रविरहमस्मि** । इदं च तिरोहितविभूतिरूपम् । इतरज्योतिरपेक्षया रवेराधिक्यं ददत् तन्नामकम् । तत्र चिन्तनीयमिति हृदयम् । एवमेवोत्तरत्रापि तिरोहितविभूतिस्थले व्याख्यानम् । विष्णुकपिलव्यासवासुदेवरामरूपाणि प्रत्यक्षविभूतिरूपाणि । इतराणि तु तिरोहितविभूतिरूपाणीति विवेको द्रष्टव्यः ।

**मरीचिर्मरुतामस्मि** आहङ्कारिकप्राणं विना एकोनपञ्चाशतो मरुतां मध्ये मरीचिनामा मरुदस्मीत्यर्थः । अत्र मरीचिशब्देन प्रवहदेवो ग्राह्यः । 'प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः' इति त्रयोदशाध्यायगीतातात्पर्यनिर्णयवचनात् । तत्र प्रधानवायुजत्वलिङ्गेन भूतवायुश्रुत्या प्रवहत्वमावेद्यते । 'पर्जन्यमित्रशाखिनो भूतवायुस्तथैव च' इति छान्दोग्यभाष्ये, भूतवायुशब्देन प्रवहग्रहणाच्च । किञ्च तात्पर्यनिर्णये दशमे 'उदवन्मेघचलनान्मरीचिः' इति तत्र मरीचिशब्दनिर्वचनमस्ति । तद्व्याख्यातं तट्टीकायाम्— 'मरशब्दोदितोदकवान् मेघो मरी, तं चालयतीति मरीचिः' इति । तत्र मरीचिशब्दो विभूतिरूपविशेषे भगवति परममुख्यः । तत्सन्निधानपात्रत्वान्मरीचिनामकमरुति मुख्यः, अनिषिद्धास्तदन्येषु' इत्युक्तेः । मेघेषु स्थितत्वात् तच्चालनव्यापारवांश्च मरीचिनामकविभूतिरूपाधिष्ठानभूतः प्रवह एवाभ्युपगन्तव्यः ।

"पृथिव्यां प्रथमस्कन्ध आमेघेभ्यो य आवहः । द्वितीयश्चापि मेघेभ्य आसूर्यात् प्रवहस्तु सः" इति *ब्रह्मवैवर्तपुराणवचनात्,* "आवहः प्रवहश्चैव विवहश्च समीरणः । परावहः संवहश्च ह्युद्वहश्च

महाबलः । तथा परीवहः श्रीमान् मरुतो भयशंसिनः । इत्येते कथिताः सप्त मरुतो गगनेचराः'' इति *हरिवंशे,* प्रवहस्यैव द्वितीयस्कन्धत्वावेदनाच्च । तथाच अभियुक्तसङ्ग्रहः— ''प्रधानभूतो मरुतां भूतवाय्वभिमानवान् । मुमुक्षुभिर्गम्य एष आतिवाहिकनामवान् । प्रधानवायोः पुत्रोऽयं मरीचिरिति चोदितः । प्रवहो नाम देवोऽसौ विधेरस्तु द्विगुणाधिकः'' इति । ''मरीचिनामान्तरवान् प्रवहो मुख्यवायुजः । कोणाधिपः स एवोक्त आतिवाहिकनामवान्'' इति । ''ततस्तु प्रवहो वायुरुक्तो नाम्ना मरीचिकः । कृष्णेन विष्णुना साक्षात् पार्थं बोधयता युधि । मरीचिर्मरुतामस्मीत्युक्तः कुन्तीसुतं प्रति । मरीचिनामान्तरवान् आतिवाहिकसंज्ञिकः । कोणाधिपः स एवोक्तो भूतवाय्वभिमानवान्'' इति च । 'आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत्' इत्यत्र *षट्प्रश्नभाष्यटीकायां* मरुद्भूतं वायुदैवतेत्युक्तमरुत्तु भूतावान्तराभिमानिदेवताविशेष इति विचक्षणाः । **नक्षत्राणां** मध्ये **शशी** चन्द्रमाः **अहं** अस्मि, नक्षत्राणां विजातीयत्वात् । तत्स्वाम्यदातृविभूतिरूपं चन्द्रमसि वर्तत इति चिन्तनीयोऽस्मीति भावः ॥ २१ ॥

**वेदानामिति** । **वेदानां** ऋगादीनां मध्ये सामवेदोऽस्मि इत्यत्र सजातीयैकदेशश्रैष्ठ्यदोऽस्मीति चिन्तनीयः । वेदेषु ऋग्वेदस्याधिकत्वात् । एवमप्यत्र सामवेदस्य यद् ऋग्वेदाद् आधिक्यवचनं तत्तु सामवेदाभिमानिनः प्राणस्य ऋग्वेदाभिमानिसरस्वत्या आधिक्यपरम् इत्युत्तरप्रस्थाने स्फुटम् । **देवानां वासवः** इन्द्रः **अस्मि** इत्यत्र देवादिषु ब्रह्मादीनामेव श्रेष्ठत्वात् सजातीयैकदेशश्रैष्ठ्यदोऽस्मीत्यर्थः । 'ऋते रुद्रादिकान् इन्द्रः सर्वदेवाधिकः स्मृतः' इति भागवततात्पर्यनिर्णयवचनात् । सर्वेन्द्रियेषु मनस एव प्रधानत्वात् **इन्द्रियाणाम्** एकादशानां **मनोऽस्मीति** सजातीयश्रैष्ठ्यदः, तत्र मनसि वर्तत इति चिन्तनीयः । **भूतानां** चेतनावतां सम्बन्धिनी **चेतना** ज्ञानशक्तिः तद्रूपसारवत्त्वेनोक्तः ॥ २२ ॥

**रुद्राणामिति** । **रुद्राणां** एकादशानां मध्ये **शङ्करः** उमापतिरस्मि । सजातीयश्रैष्ठ्यदत्वेन तत्रास्मि । **वित्तेशः** कुबेरोऽस्मि । **वसूनां** अष्टानां **पावकः** सजातीयश्रैष्ठ्यदस्तत्रास्मि । **शिखरिणां** पर्वतानां **मेरुः** कनकगिरिः पूर्ववत् ॥ २३ ॥

**पुरोधसामिति** । **पुरोधसां** पुरोहितानां मध्ये **बृहस्पतिं मां विद्धि** जानीहि चिन्तय च । **सेनानीनां** नुडागमः छान्दसः । सेनान्याम् । यद्वा, सेनाशब्दोपपदात् नयतेः औणादिके डिप्रत्यये ह्रस्वान्ततया नुडागमे, 'नामि' इति दीर्घे च 'सेनानीनाम्' इति रूपम् । देवसेनानायकानां **स्कन्दोऽहम्** । **सरसां** देवखातानां **सागरः** समुद्रोऽस्मि ॥ २४ ॥

**महर्षीणामिति । महर्षीणां** 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च' इत्युक्तानां अन्येषां च शास्त्रोक्तानां महर्षीणां मध्ये **भृगुरहं** अस्मि । **गिरां** वाचां पदलक्षणानां मध्ये **एकमक्षरं** प्रणवोऽस्मि । **यज्ञानां** अग्निहोत्रादीनां मध्ये ज्ञानयज्ञं विना **जपयज्ञः** जपात्मकदेवपूजारूपकर्मा अस्मि । इति सजातीयैकदेशश्रैष्ठ्यदविभूतिः । **स्थावराणां** स्थितिमतां **हिमालयः** हिमवान् पर्वत इति ॥ २५ ॥

**अश्वत्थ इति । सर्ववृक्षाणां** मध्ये **अश्वत्थः** अस्मि । **देवर्षीणां** देवा एव सन्तोऽपि ऋषित्वं प्राप्ताः, तेषां **नारदः** अस्मि । **चित्ररथ**नामा गन्धर्वः । **सिद्धानां** जन्मनैव सिद्धानां = धर्म-ज्ञान-वैराग्य-ऐश्वर्याद्यतिशयशालिनां मध्ये **कपिलः** । कं = सुखम्, तदेव रूपमस्यास्तीति कः । 'पाल्यते जगदनेन' इति पिः । 'पा = रक्षणे' इत्यतः किः । 'लीयते जगदनेन' इति लः। लीङ् = श्लेषणे इत्यस्मात् डः । 'ला = आदाने' इत्यतो वा कः । 'कश्चासौ पिश्चासौ लश्च' इति कर्मधारये कपिलोऽस्मि इति प्रत्यक्षविभूतिः ॥ २६ ॥

**उच्चैःश्रवसमिति । अश्वानां** मध्ये **उच्चैःश्रवसम्,** उच्चैःश्रवस्संज्ञकं अश्वं **मां विद्धि** जानीहि, उपास्स्व च । **अमृतोद्भवं** क्षीरसागरसमुद्भूतमिति देहलीदीपन्यायेनाश्वे गजे चान्वेति । **ऐरावतं** इरावत्या अपत्यं गजं मां विद्धि । **नराधिपं** राजानम् ॥ २७ ॥

**आयुधानामिति । आयुधानामहं वज्रं** इति सजातीयैकदेशश्रैष्ठ्यदविभूतिः, 'सुदर्शनश्चा-युधेषूत्तमः' इति वचनात् । कामान् दोग्धीति **कामधुक्** कामधेनुः । **प्रजनः** प्रजोत्पत्तिहेतुः । **कन्दर्पः** न पुनः केवलभोगार्थः । तस्य अशास्त्रीयत्वात् । **सर्पाणां** एकशिरसां **वासुकिः** अस्मि ॥ २८ ॥

**अनन्त इति । नागानां** बहुशिरसां **अनन्तः** शेषः । **यादसां** जलजन्तूनां **वरुणः** अस्मीति। विजातीयश्रैष्ठ्यदविभूतिः । **अर्यमा** अर्यमनामकपितृराजः **संयमतां** संयमप्रातिपदिकात् क्विप्, संयमनं कुर्वन्तः संयमतः, तेषां मध्ये **यमः** अस्मि ॥ २९ ॥

**प्रह्लाद इति । दैत्यानां** मध्ये **कलयतां** गणयताम्, वशीकुर्वताम्, बन्धनादिकं कुर्वतां च **मृगेन्द्रः** सिंहः । **वैनतेयः** गरुडः ॥ ३० ॥

**पवन इति । पवतां** पावयितॄणां **पवनः** वायुरस्मि । **रामः** 'रमु = क्रीडायाम् इत्यतः 'ञमन्तात् डः' इति कर्तरि डः । रमत इति रः । न विद्यते मा = प्रमा परिच्छेदो यस्येति अमः।

'रश्चासावमश्च' इति विग्रहः । यद्वा 'रमते लोकोऽनेन' इति करणे रमेर्घञ् रामः । **शस्त्रभृतां** धानुष्काणां राम इति प्रत्यक्षविभूतिः । **झषाणां** मत्स्यानां मध्ये **मकरः** मत्स्यराजः । 'मकरो मत्स्यराजः' इति *यादवः* । मत्स्यविशेषो मकरः किलिमकरो भवति । तद्विशेषश्चेति **हलायुधश्च** । **स्रोतसां** स्रवन्तीनां **जाह्नवी** गङ्गाऽस्मि । भगवति स्त्रीलिङ्गशब्दश्च प्रकृत्यधिकरणे समर्थितः ॥३१॥

**सर्गाणामिति** । सृज्यन्त इति **सर्गाः** भूतानि, तेषां **आदिः मध्यं अन्तश्च** तद्धेतुभूतोऽपि **अहमेव** । 'अहमादिश्च मध्यं च भूतानामन्त एव च' इत्युपक्रमे भूतोत्पत्तिस्थितिलयकर्तृत्वमात्रमुक्तम् । अत्र तु सृष्टिस्थितिलयलक्षणक्रियासु भगवतस्तिरोहितविभूतिरूपाणि सन्ति उपासितव्यानीत्युच्यत इति भेद इति **आहुः** । **केचित्तु** पूर्वत्र सर्वप्राण्युदयादिनिमित्तत्वमुक्तम् । अत्र तु आकाशादिभूतोत्पत्त्यादिहेतुरस्मीत्युच्यत इति विशेष इत्याहुः । पूर्वोक्तं जगदुत्पत्त्यादिहेतुत्वं अवश्यज्ञातव्यमिति विभावनया अत्र स एवार्थः स्मर्यत इति **अपरे** । अधिकश्चासावात्मा च अध्यात्मा, तद्विद्या **अध्यात्मविद्या** परब्रह्मविषयकज्ञानम्, तत्साधनविद्या वा । **प्रवदतां** वक्तृद्वारेण प्रवदनभेदानामेवेह वादजल्पवितण्डानां ग्रहणम् । प्रवदतां = जल्पवितण्डादि कुर्वतामित्यपि **आहुः** । तन्मध्ये वा **अहं** तस्य तत्त्वनिर्णयहेतुत्वात् ॥ ३२ ॥

**अक्षराणामिति** । **अक्षराणां** वर्णानाम् **अकारोऽस्मि** तस्य सर्ववाग्व्याख्येयत्वात् । **सामासिकस्य** समाससमूहस्य मध्ये **द्वन्द्वः** समासोऽस्मि । तस्योभयपदार्थप्रधानत्वात् । **अक्षयः** प्रवाहरूपेणाव्ययः । **धाता** विधाता स्रष्टा । **विश्वतोमुखः** चतुर्मुखः ॥ ३३ ॥

**मृत्युरिति** । **सर्वहरो मृत्युश्च भविष्यताम्** उत्पत्स्यमानानां **उद्भवः** उत्पत्तिः, भविष्यतां भाविकल्याणानां प्राणिनां **उद्भवः** उदयो **अहं** अस्मीति । **नारीणां** मध्ये **कीर्तिः श्रीः** इत्यादयः सप्त देवतारूपस्त्रियोऽप्यहमेव ॥ ३४ ॥

**साम्नां** रथन्तर-वैरूप्य-वैराज-शाक्कर-रैवतनामकानां मध्ये **बृहत्** नामकं सामाहम् । **छन्दसाम्** उष्णिग्-अनुष्टुप्-बृहत्यादीनां **गायत्री**नामकं छन्दोऽहम् । **मासानां** चैत्रादिमासानां, **कुसुमाकरः** वसन्तः ॥ ३५ ॥

**द्यूतमिति** । **छलयतां** छद्म कुर्वताम् । अक्षदेवनादिलक्षणं **द्यूतम्** । **तेजस्विनां तेजोऽहम्** । **जयः** जेतॄणाम् । **व्यवसायोऽस्मि** व्यवसायिनाम् । सत्त्ववतां **सत्त्वं** सत्त्वलक्षणसारभूतधर्मोऽस्मीत्यर्थः ॥ ३६ ॥

**वृष्णीनामिति** । **वासुदेवः** 'वस्ते = छादयति' इति वासुः । 'वस आच्छादने' इत्यतः उण् । 'वासयति सर्वम्' इति वा वासुः । 'वस = निवासे' इत्यतो ण्यन्तादुण् । 'वसति सर्वत्र' इति वा वासुः । वसतेः केवलाद् उण् । देवशब्दार्थो भाषितः सप्तमे । वासुश्चासौ देवश्च = क्रीडादिगुणविशिष्टश्चेति विग्रहः । **धनञ्जयः** अर्जुनः । 'तथा भीमश्च पार्थेषूत्तमः' इति वचनात् इयं सजातीयैकदेशश्रैष्ठ्यदविभूतिः । सर्वस्माद्विशिष्ट इति विशब्देनोक्तः । **आ** समन्तात् **सः** एव सर्वगत इति व्यासः - व्यापूर्वात् 'सृ = गतौ' इत्यतो डः । **उशना** शुक्रः ॥ ३७ ॥

**दण्ड इति** । **दमयतां** दमयितृणाम्, दण्डं कुर्वतां दण्डोऽस्मि । येनासंयता अपि संयता भवन्ति स दण्डो मद्विभूतिः । **जिगीषतां** जेतुमिच्छताम्, **नीतिरस्मि** सामाद्युपायभूतसारधर्मप्रदोऽस्मि । गुह्यानां गोपनीयानां मध्ये **मौनं** मौनलक्षणसाधारणधर्मोऽस्मि । **ज्ञानवतां** ज्ञानलक्षणसाधारणधर्मोऽहम् ॥ ३८ ॥

**सर्वभूतानां बीजं** कारणं च **अहम्** एव । यदि ज्योतिरादिषु रव्यादीनां त्वत्सन्निधानकृतं वैशिष्ट्यम् । तर्हि तदन्येषां ज्योतिरादीनां त्वत्सन्निधिर्न स्यात् । ततश्च तत्सत्तादिकं स्वत एव स्यात् ? इत्यत उच्यते **मया विना यच्चराचरं भूतं स्यात् तन्नास्तीति** । **केचित्** प्रकरणोपसंहारार्थं विभूतिसङ्क्षेप उच्यते 'न तदस्तीति' इत्यवातारयन् ॥ ३९ ॥

सङ्क्षेपकरणे कारणं दर्शयतोपसंह्रियते **नान्तोऽस्तीति** । हे **परन्तप** ! **मम दिव्यानां विभूतीनां अन्तः** अवसानं यतो **नास्ति**, अत उक्तविभूतिरूपाणां आनन्त्यात् **एष उक्तो विभूतिविस्तरः उद्देशत एव** इदमिदं विभूतिरूपमिति योऽयमत्र विशेषनामनिर्देशः कृतः सोऽपि सङ्ग्रह एव ॥ ४० ॥

एवं विभूतीनां सङ्क्षेपमुक्त्वा सामान्यतो विस्तर उच्यते **यद्यदिति** । **यद्यद् विभूत्यादिमत् सत्त्वं** वस्तु **श्रीमत्** सम्पद्युक्तं **ऊर्जितं** अभिवृद्ध्युपेतं च **तत्तद्** वस्तु **मम तेजोंऽशसम्भवं** प्रकाशरूपेण अंशेन सम्भवतीति तेजोंऽशसम्भवं **एव अवगच्छ** ॥ ४१ ॥

लक्षणमुखेनोक्ततत्तद्वस्तुनिष्ठविभूतिविस्तरादपि अधिकविभूतिविस्तर उच्यते **अथवेति** । 'अथवा' इत्ययं निपातसमुदायः पक्षान्तरे । **एतेन बहुना** विभूत्यादियुक्तरविप्रभृतितत्तद्वस्तुनिष्ठपरिच्छिन्नविभूतिरूपाणां विस्तरेण **ज्ञातेन तव किं** फलम् ? न किमपि । अत्र वक्ष्यमाणप्राधान्यज्ञापनार्थ एवाक्षेपः, न तु उक्तज्ञानस्य निष्फलत्वज्ञापनार्थः । तथात्वे तस्यावचनप्रसङ्गादिति भाष्ये स्फुटम् । किं तर्हि ज्ञातव्यम् इत्यत उक्तं **विष्टभ्येति** । इदं प्रमाणावगतं **कृत्स्नं जगत् एकांशेन**

ममानन्तांशानां मध्ये एकेनैवांशेन **विष्टभ्य** व्याप्य **स्थितः** । सर्वांशेन व्याप्तुं जगतां सहस्रमपि न पर्याप्तम् । अतः 'तादृशापर्यवसितव्याप्तिमानहम्' इति ज्ञानं अत्यावश्यकम् । न च एतज्ज्ञानादेव मोक्षसिद्धौ प्रागुक्तरविप्रभृतिपरिच्छिन्नवस्तुरूपरव्यादिविभूतिरूपाणां ज्ञानं व्यर्थमिति वाच्यम् । 'अज्ञात्वैनं सर्वविशेषयुक्तं देवं परं को हि मुच्येत बन्धात्' इति श्रुत्या प्रागुक्तज्ञानस्याप्यावश्यकत्वावगमात् । तव च महाफलाधिकारितया उभयज्ञानमप्यावश्यकम् । तेनाधिकफलसद्भावात् । तथाचोक्तम्—

'अन्याधिक्यज्ञापनार्थं शुभं चाक्षिप्यते क्वचित् ।
न तावताऽस्य हेयत्वं ज्ञेयैवान्यवरिष्ठता ॥
उभयं मिलितं चैव ततोऽप्यधिकशोभनम् ॥' इति ॥ ४२ ॥

श्रीमद्गीताभाष्यटीकादशमाध्यायसेवया ।
तोषमायान्तु विबुधाः गुणग्रहणभूषणाः ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित-श्रीमद्भगवद्गीताभाष्यटीकाव्याख्यायां भावरत्नकोशसमाख्यायां श्रीसूरीन्द्रतीर्थश्रीपादशिष्यसुमतीन्द्रयतिविरचितायां दशमोऽध्यायः ॥*

**गीतातात्पर्यनिर्णयः**

**"किं ज्ञातेन" इति वक्ष्यमाणस्य अधिकफलत्वज्ञापकमेव । अन्यथोक्तेरेव वैयर्थ्यात् ।**

*प्रका०*— "अथवा बहुनैतेन किं ज्ञातेन तवार्जुन । विष्टभ्याहमिमं कृत्स्नमेकांशेन स्थितो जगत्" इत्यस्यार्थमाह **किं ज्ञातेनेत्यादिना** ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां दशमोऽध्यायः ॥*

**न्या०दी०— ततोऽपि विभूतिविस्तर उच्यते 'अथवा' इति । तत्रोक्तेन बहुना ज्ञातेन किमपि फलं नास्तीत्यन्यथाप्रतीतिनिरासायाह किमिति ॥ किं ज्ञातेनेति वचनमुक्तज्ञानादपि वक्ष्यमाणज्ञानस्याधिकफलत्वज्ञापनार्थमेव न तूक्तज्ञानस्य निष्फलत्वज्ञापकमित्यर्थः ।**

*भा०दी०*— **ततोऽपीति** । लक्षणमुखेनोक्तादप्येकांशेन जगद्व्यापित्वोक्त्या अधिकविस्तरमाह इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"अन्याधिक्यज्ञापनार्थं शुभं चाक्षिप्यते क्वचित् ।**
**न तावताऽस्य निन्द्यत्वं ज्ञेयैवान्यवरिष्ठता ॥**

**उभयं मिलितं चैव ततोऽप्यधिकशोभनम् ॥" इति च ॥ ४२ ॥**

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये दशमोऽध्यायः ॥*

***न्या०दी०***— उक्तज्ञानस्य निष्फलत्वज्ञापकमेव किं न स्यादित्यत आह **अन्यथेति** ॥ ननु पूर्वोक्तविज्ञानस्यापि साफल्ये ततोऽपि वक्ष्यमाणज्ञानमधिकफलमित्येव वक्तव्यम् । किं ज्ञानेनेत्युक्ताक्षेपो न युक्त इत्यतो वक्ष्यमाणस्याधिक्यज्ञापनेऽप्युक्तशुभाक्षेपसम्भव-नियामिकां स्मृतिमाह **अन्येति** ॥ निन्द्यत्वं हेयत्वं ज्ञेयमिति शेषः । किं त्वस्मादन्यस्य वरिष्ठतैव ज्ञेयेत्यर्थः । यद्यन्यद्वरिष्ठं तर्ह्याक्षिप्तं हेयमेव । वरिष्ठलाभेऽल्पस्याप्रयोजकत्वा-दित्यत आह **उभयमिति** ॥ न वरिष्ठलाभेऽल्पस्य हेयत्वम् । उभयलाभे अधिकशोभन-प्राप्तेरित्यर्थः ॥ ४२ ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां दशमोऽध्यायः समाप्तः ॥*

***भा०दी०***— **उभयलाभ** इति । प्रागुक्तरविप्रभृतिस्थपरिच्छिन्नविभूतिरूपज्ञानजगद्व्यापि-रूपज्ञानरूपोभयलाभे अधिकशोभनप्राप्तेरित्यर्थः ॥ ४२ ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते दशमोऽध्यायः ॥*



॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# श्रीमद्-भगवद्गीता

## अथ एकादशोऽध्यायः

भाष्यम्

**यथा श्रुते ध्यानं शक्यं तथा स्वरूपस्थितिरनेनाध्यायेन उच्यते ।**

***प०टी०*— अध्यायप्रतिपाद्यमाह **यथेति** ॥

***प्र०दी०*— एतदध्यायप्रतिपाद्यमर्थमाह **यथेति** । दशमान्ते 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति व्याप्तोपासनं सङ्क्षेपेणोक्तम् । न च सङ्क्षेपोक्तस्य ध्यानं शक्यम्, बुद्ध्यावनारोहात् । अतो **यथाभूते** व्याप्तरूपे विस्तरेण **श्रुते ध्यानं शक्यं** भवति । **तथाभूतस्वरूपस्थितिः** अर्जुनाय प्रदर्शितस्यानुवादेन **अनेन** एकादशाध्यायेनोच्यते । **स्वरूप**ग्रहणेन विश्वरूपस्य मायादिना तदैव निर्माय विसृष्टत्वं निवारयति ।

***भा०दी०*— **तथाभूतस्वरूपस्थितिरिति** । अस्य 'उच्यते' इत्यनेनान्वयः । 'अनुवादेन' इति अध्यायविशेषणम् ।

***भा०र०*— 'एतदध्याय' इत्यतःपूर्वं 'पूर्वसङ्गतिं सूचयन्' इति शेषः । तामेव भाष्यसूचितां सङ्गतिं व्यक्तीकर्तुं तदर्थमाह **दशमान्त इति** । **ध्यानम्** उपासनम् । 'यथा' इत्यस्यार्थः **यथाभूत इति** । 'श्रुते' इत्यस्य विशेष्यपूरणम् **व्याप्तरूप इति** । **ध्यानं शक्यं भवतीति** । तथाच पूर्वाध्यायोक्तध्यानसमर्थनार्थत्वाद् अस्याध्यायस्य सिद्ध्यति तेन सङ्गतिरिति भावः । 'पश्य मे पार्थ रूपाणि' इत्यादिना विश्वरूपस्य प्रदर्शनमेव कृतम्, न तु वचनम् । तत्कथं 'तथाभूतस्वरूपस्थिति-रुच्यते' इत्युक्तिः ? इत्यत उक्तम् **अर्जुनाय प्रदर्शितस्यानुवादेनेति** । **एतच्च** अध्यायविशेषणम् । **उच्यते** 'अनेकबाहूदरवक्त्रनेत्रम्' इत्यादिना । 'मायादिना' इत्यत्रादिशब्देन *न्यायदीपिकोक्तं* प्रधानं ग्राह्यम् ॥

गीता

## अर्जुन उवाच—

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

***वि०वि०*—** अत्र दशमान्तोक्तव्याप्तरूपध्यानार्थं विश्वरूपस्थितिरुच्यते । विश्वरूपं भगवन्तं ज्ञातुकामः पूर्वोक्तमर्थमनुवदन्नर्जुन उवाच **मदनुग्रहायेत्यादिना** । पूर्वषट्के मामनुगृहीतुमात्मज्ञान-तदुपायकर्मसमाधियोगप्रतिपादकं गोप्यं यद्वचः त्वयोक्तं तेनायं मे मोहो विगतो दूरं निरस्तः ॥१॥

***सा०सं०*—** पूर्वान्ते 'विष्टभ्याहमिदं कृत्स्नम्' इति व्याप्तरूपोपासनं सङ्क्षेपेणोक्तम् । सङ्क्षेपेणोक्तरूपस्य बुद्धावनारोहेणाशक्यध्यानत्वात् तद्ध्यानसौकर्याय प्राक् सङ्क्षेपेणोक्तविश्वरूप-स्थितिरत्र विस्तरेणोच्यत इति पूर्वानन्तर्यमर्थभेदश्चास्येति ध्येयम् । विश्वरूपं ज्ञातुं तत्प्रष्टुकामः प्रागुक्तमनुवदत्यर्जुनः **मदनुग्रहाय** इति द्वाभ्याम् । **परमं गुह्यम्** अतिगोप्यम् । आत्मानं भगवन्तं अधिकृत्य स्थितम् **अध्यात्मम्** । अध्यात्मनामकं **यद्वचः त्वया मदनुग्रहायोक्तम्** । **तेन** बन्धुस्नेहादिरूपः । **अयं मोहो विगतः** अपगतः **मम** ॥ १ ॥

***अ०प्र०*— *अ०प्र०*—** पूर्वाध्यायान्ते विष्टभ्याहमिति व्याप्तरूपोपासनं सङ्क्षेक्षेपेण उक्तम् । सङ्क्षेपेणोक्तस्य बुद्धावनारोहेणाशक्यं ध्यानत्वात् ध्यानसौकर्याय प्राक् सङ्क्षेपोक्तविश्वरूपस्थितिः सविस्तरेण उच्यत इति पूर्वानन्तर्यभेदश्चास्येति ध्येयः । विश्वरूपं तु तत्प्रष्टुकामः प्रागुक्तमनु-वदति— **अर्जुनः मदनुग्रहाय** इति द्वाभ्याम् ।

अथान्वयः— हे कमलपत्राक्ष ! उत्तरेण[१], त्वया[१], मदनुग्रहाय[२], अध्यात्मसंज्ञितं[३], परमं[४], गुह्यं[५], यत्[६], वचः[७], उक्तं[८], तेन[९], मम[१०] अयं[११] मोहः[१२], विगतः[१३] इत्यन्वयः ।

हे कमलपत्राक्ष ! त्वया = श्रीकृष्णेन[१], मदनुग्रहाय = ममानुग्रहरूपशोकनिवृत्तये[२], अध्यात्म-संज्ञितं = अध्यात्मं इति संज्ञायुक्तं आत्मानात्मविवेकविषयम् । यद्वा, आत्मानं भगवन्तं अधिकृत्य स्थितं अध्यात्मनामकं[३], परमं = अनिर्वचनीयं परमार्थनिष्ठं वा[४], गुह्यं = वेदैर्न ज्ञातमपि अति-गोप्यं[५], यदुक्तं वचः—'अशोच्यानन्वशोच्यस्त्व'मित्यादिषष्ठाध्यायपर्यन्तं यत् वचनं उपदेशितं तेनोपदेशेन[९], मम[१०] अयं मोहः = अहमर्जुनः एते कौरवाः स्वजनाः तथा द्रोणादीन् हत्वा पापं

प्राप्स्यामीति बन्धुस्नेहरूपः अहं हन्ता एते हन्यन्त इतिलक्षणो भ्रमः[१२], विगतः अपगतः त्वत्प्रसादादिति अनेनात्मनो कर्तृत्वाद्यभावो उक्तः ॥ १ ॥

**गीता**

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥**

***वि०वि०—*** तथा सप्तमादौ भूतानां भवदधीनं जन्मादिकं त्वन्माहात्म्यं चोक्तम् । मया श्रुतम् ॥ २ ॥

***सा०सं०—*** हे कमलदलवदायतनेत्र ! **त्वत्तः भूतानां भवाप्ययौ** । 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' (७-६) इत्यादिना सप्तमाध्यायादिषु **विस्तरशो मया श्रुतौ अव्ययं माहात्म्यमपि** च श्रुतम् ॥ २ ॥

***अ०प्र०—*** हे कमलपत्राक्ष ![१], भूतानां[२], भवाप्ययौ[३], त्वत्त इति[४], श्रुतौ[५], हे कृष्ण ! मया[६], विस्तरशः[७], अव्ययं[८], माहात्म्यमपि श्रुतम्[९] ॥

हे कमलपत्राक्ष ! = कमलस्य पत्रे इव सुप्रसन्ने विशाले अक्षिणी यस्य तव तत्सम्बुद्धौ हे कमलपत्राक्ष ![१], भूतानां स्थावरजङ्गमादीनां[२], भवाप्ययौ = सृष्टिलयौ[३], त्वत्त इति = त्वत्तः सकाशादेव भवत इति[४], श्रुतौ[५], हे कृष्ण ! मया = 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इत्यादिषु सप्तमाध्यायादिषु मया[६], विस्तरशः = पुनः पुनः[७], अव्ययं = अपरिमितं अक्षयं वा[८], माहात्म्यमपि = महात्मनो भावः माहात्म्यं माहात्म्यमपि[९], श्रुतं = विश्वसृष्ट्यादिकर्तृत्वेऽपि शुभाशुभकर्मकारयितृत्वेऽपि बन्धमोक्षादि विचित्रफलदातृत्वेऽपि अविकारावैषम्यासङ्गौदासीन्यादि लक्षणमपरिमितं महत्त्वं च श्रुतं[९], 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते', 'मया ततमिदं सर्वं', 'न च मां तानि कर्माणि निबध्नन्ति', 'समोऽहं सर्वभूतेषु' इत्यादिना अतस्त्वत्परतन्त्रत्वादपि जीवानामहं कर्तेत्यादि मदीयो मोहो विगत इति भावः ॥ २ ॥

**गीता**

**एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥**

*वि०वि०*— एवमेतत् तथ्यम् । यथा त्वमात्मानमात्थ ब्रवीषि । तं ऐश्वरमचिन्त्यशक्तिस्वभावरूपं साक्षात्कर्तुमिच्छामि ॥ ३ ॥

*सा०सं०*— तद्वचनं स्तुवन् ज्ञातव्यविश्वरूपाविर्भावं प्रार्थयते **एवम्** इत्यादि द्वाभ्याम् । हे परमेश्वर ! यथा येन प्रकारेण**ात्मानं त्वमात्थ** वदसि । एतद्वचनम् **एवमेव** सत्यमेव । हे **पुरुषोत्तम ! ऐश्वर्यम्** अचिन्त्यशक्तिकम् । **ते रूपं द्रष्टुमिच्छामि** ॥ ३ ॥

*अ०प्र०*— हे परमेश्वर ![1], त्वं[2], यथा[3], आत्मानं[4], आत्थ[5], एतत्[6], एवमेव[7], हे पुरुषोत्तम ![8], अहं[9], ऐश्वरं[10] ते[11] रूपं[12], द्रष्टुं[13], इच्छामीत्यन्वयः ॥

हे परमेश्वर ![1], त्वं[2], यथा = भवाप्ययौ हि भूतानामित्यादि यथाक्रमं चेदानीं येन प्रकारेण[3], आत्मानं = विष्टभ्याहं इत्येवं[4], आत्थ = कथयसि[5], एतत् = पूर्वोदितं वचनं[6], एवमेव = सत्यं अत्राप्यविश्वासो मम नास्तीत्यर्थः[7], तथापि हे पुरुषोत्तम ![8], अहं = अर्जुनः[9], ऐश्वरं = ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सम्पन्नं अचिन्त्यशक्तिकं[10] ते रूपं = यस्य सङ्कल्पाद्विश्वं भवति नश्यति च यदन्तर्यामिणमिति वदसि यन्मुख्यं त्वद्रूपं[12], कुतूहलाद्द्रष्टुं इच्छामि = अनेन चक्षुषा प्रत्यक्षमवलोकितुं वाञ्छामीत्यर्थः ॥ ३ ॥

गीता

## मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
## योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

*वि०वि०*— प्रभोऽतीन्द्रियदर्शने समर्थ । त्वद्रूपं मया द्रष्टुं शक्यमिति यदि मन्यसे । तर्हि मे अव्ययमात्मानं स्वरूपभूतमेव स्वरूपं दर्शय ॥ ४ ॥

*सा०सं०*— हे **प्रभो** ! समर्थ । **तद्रूपं मया द्रष्टुं शक्यमिति यदि मन्यसे** । ततस्तर्हि **योगेश्वर** सर्वोपायपते । **त्वमव्ययमात्मानं** स्वरूपम् । **मे** मह्यं **दर्शय** । प्रार्थनायां लोट् । प्रभो इति वचनं तवातिसमर्थत्वात् त्वच्छक्त्या एवातीन्द्रियस्यापि दर्शनं स्यादिति ज्ञापनाय ॥ ४ ॥

*अ०प्र०*— न चाहं द्रष्टुमिच्छामि इत्येतावत् त्वया तद्रूपं दर्शयितव्यम् । किं तर्हि, **मन्यस इति** ।

हे प्रभो ![1], तत्[2], मया[3], द्रष्टुं[4], शक्यं[5], इति[6], यदि[7], मन्यसे[8], ततः[9], हे योगेश्वर ![10] त्वं[11] अव्ययं आत्मानं[12], मे[13], दर्शय[14] इत्यन्वयः ।

हे प्रभो ! = समर्थ![1], तत् = रूपं[2], मया[3], द्रष्टुं[4], शक्यं[5], इति[6], यदि मन्यसे[7], ततः = तर्हि[8], हे योगेश्वर ! = योगिन एव योगाः तेषां ईश्वरः तत्सम्बुद्धौ हे योगेश्वर सर्वोपायपते[10] त्वं[11] अव्ययं = नित्यं[12], आत्मानं = तद्रूपवन्तं स्वरूपं[13], मे = मह्यं[14], दर्शय = निदर्शय इत्यर्थः । प्रार्थनाय लोट् । प्रभो इति वचनं तेतेति समर्थत्वात् त्वच्छक्त्यैवातीन्द्रियस्यापि दर्शनं स्यादिति ज्ञापनाय एवं कौतूहलचित्तेन पार्थेन प्रार्थितो भगवान् रूपं दर्शयितुः सावधानो भवेत्येवं अर्जुनं अभिमुखीकरोति ॥ ४ ॥

भाष्यम्

**प्रभुः समर्थः । "नास्ति तस्मात् परं भूतं पुरुषाद्वै सनातनात्" इति मोक्षधर्मे । "प्रभुरीशः समर्थश्च" इत्याद्यभिधानम् ॥ ४ ॥**

***प०टी०***— 'मया द्रष्टुमिति प्रभो' 'महायोगेश्वरो हरिः' इत्युक्त 'प्रभु-हरि'शब्दौ सप्रमाणकं व्याचष्टे **प्रभुरिति** ॥ ४ ॥

***प्र०दी०***— 'मन्यसे यदि' इत्यत्र प्रभुशब्दो न स्वामित्वमात्रार्थः । किं तु तवातिसामर्थ्यात् त्वत्सामर्थ्येनैवातीन्द्रियस्यापि दर्शनमिति भावेन प्रयुक्त इत्याशयेनाह **प्रभुरिति** । ईश्वरस्य निरतिशयसामर्थ्ये प्रमाणमाह **नास्तीति** । **भूतं** समर्थम् । प्रभुशब्दस्य समर्थार्थत्वेऽभिधानमाह **प्रभुरिति** ॥ ४ ॥

***भा०र०***— 'प्रभुशब्दः प्रयुक्तः' इति सम्बन्धः । **अतीन्द्रियस्य** 'अतिक्रान्तमिन्द्रियम् अतीन्द्रियम्' इति, 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति **समासः** । तस्य सामर्थ्ये प्रमाणत्वं घटयितुं भूतशब्दार्थमाह **भूतं समर्थमिति** । भवतेः सत्तार्थत्वाद् 'असमर्थस्य सत्ता न सत्ता' इति औचित्यात् सामर्थ्यार्थकत्वमिति भावः । 'तस्मात् परं भूतं नास्ति' इत्येतत् प्रमाणविरुद्धम् इत्यतो भूतशब्दात् परमध्याहरति भूतं समर्थमिति इत्यपि एके ॥ ४ ॥

***गीताक्षरार्थस्तु***—

दशमान्ते 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति व्याप्तोपासनं सङ्क्षेपेणोक्तम् । न च सङ्क्षेपेणोक्तस्य ध्यानं कर्तुं शक्यम्, बुद्ध्यावनारोहात् । अतो यथाभूते व्याप्तरूपे विस्तरेण श्रुते ध्यानं शक्यं भवति तथाभूतस्वरूपस्थितिः अर्जुनाय प्रदर्शितस्यानुवादेन अनेनैकादशाध्यायेन विस्तरेणोच्यत इति, पूर्वाध्यायानन्तर्यम् अर्थभेदश्चेति द्रष्टव्यम् ।

विश्वरूपं दिदृक्षुरर्जुनः प्रागुक्तमभिनन्दन् आहेत्युच्यते **अर्जुन उवाच– मदनुग्रहायेत्यादि** चतुःश्लोक्या । हे **कमलपत्राक्ष ! मदनुग्रहाय** माम अनुग्रहीतुं **परमं** निरतिशयं **गुह्यं** गोप्यम् **अध्यात्मसंज्ञितम्** आत्मानं = भगवन्तं जीवं वाऽधिकृत्य स्थितमध्यात्मम्, तन्नामकम् आत्म-ज्ञान-तदुपायकर्मयोग-समाधियोगप्रतिपादकम् 'अशोच्यानन्वशोचस्त्वम्' इत्यादि आषष्ठसमाप्ति **यद् वचः त्वयोक्तं तेनायं** बन्धुस्नेहादिरूपमोहो **मम विगतः** मत्तोऽपगतः ॥ १ ॥

अपि च हे **कमलपत्राक्ष** ! कमलस्य पत्रे इव अक्षिणी यस्येति बहुव्रीहौ अक्ष्णः षच् । **त्वत्तः** सार्वविभक्तिकस्तसिः, तव सकाशादेव **भूतानां** सशरीरजीवानां **भवाप्ययौ** सृष्टिप्रलयौ । 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा' इत्यादिना **विस्तरशः** विस्तरेण **मया श्रुतौ अव्ययम्** अक्षयं **माहात्म्यमपि** 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते', 'मया ततमिदं विश्वम्', 'न च मां तानि कर्माणि', 'समोऽहं सर्वभूतेषु' इत्यादौ श्रुतम् ॥ २ ॥

**परमेश्वर** ! यद् मया 'भवाप्ययौ हि भूतानाम्' इत्यादिना श्रुतम्, यथा च **आत्मानमात्थ** 'विष्टभ्याहमिदं कृत्स्नम् एकांशेन स्थितो जगत्' इति ब्रवीषि, **एतत्** द्वयमपि **एवम् एव** अवितथम् = अर्थाव्यभिचार्येव । एवमभिनन्दता दिदृक्षितं प्रार्थ्यते **द्रष्टुमिच्छामीति** । हे **पुरुषोत्तम** ! **ऐश्वरम्** अचिन्त्यशक्तिकं **ते रूपं** द्रष्टुमिच्छामि ॥ ३ ॥

'कौतूहलपारवश्यात् अहं द्रष्टुमिच्छामि' इत्येतावतैव त्वया न प्रदर्शितव्यं तद्रूपम्, किं तर्हि; **मन्यसे यदि तच्छक्यं मया द्रष्टुमिति ततः** तर्हि योगिन एव **योगाः**, 'अर्शआद्यच्' **तेषामीश्वर** ! **अव्ययमात्मानं** स्वरूपभूतमेव, न तु मायादिना निर्मितं तद्रूपं दर्शय । 'प्रभो' इति सम्बोधनम्, तवातिसमर्थत्वात् त्वत्सामर्थ्येनैवातीन्द्रियस्यापि दर्शनमिति भावयितुम्, स्वामित्वं प्रत्याख्यापयितुं च ॥ ४ ॥

**गीता**

**श्रीभगवानुवाच—**

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥**

*वि०वि०*— एवं कौतूहलान्वितेन पार्थेन प्रार्थितो भगवानुवाच **पश्येत्यादिना** । एकस्यैवा-भिन्नानन्तरूपत्वाद्रूपाणि शतश इत्याद्युक्तम् । उक्तं च— 'एकं रूपं हरेर्नित्यमचिन्त्यैश्वर्ययोगतः ।

बहुसङ्ख्यागोचरं च विशेषादेव केवलम् ॥' इति । तानि रूपाणि नानाविधानि दिव्यान्यप्राकृतानि। वर्णः शुक्लादिः आकृतिरवयवसन्निवेशः । तौ नाना येषां तानि नानावर्णाकृतीनि पश्य ॥ ५ ॥

***सा०सं०***— एवं कौतूहलान्वितेन पार्थेन प्रार्थितो भगवान् रूपं दिदर्शयिषुरादौ दर्शनं कुर्विति विधत्ते **पश्य** इत्यादिना चतुष्टयेन । ते रूपं द्रष्टुमिच्छामीत्येकरूपदृष्टिप्रार्थनेऽपि **दिव्यानि** अप्राकृतानि । नानाभूताः शुक्लादिवर्णाः आकृतयः संस्थानविशेषाः येषां तानि । **शतशः सहस्रशः** बहूनीति यावत् । 'मे रूपाणि पार्थ पश्य' इति बहुरूपदर्शनोक्तिः एकस्यैव रूपस्याचिन्त्यशक्त्या विशेषबलेन चानन्तरूपसमुदायात्मकत्वाभिप्रायेणेति ज्ञेयम् । **नानाविधानीत्यस्य** विवरणं **नानावर्णेत्यादि** ॥ ५ ॥

***अ०प्र०***— आदौ दर्शनं कुर्विति विधत्ते **पश्येत्यादि** चतुष्टयेन ।

हे पार्थ ![1], नानाविधानि[2], दिव्यानि च[3], नानावर्णाऽऽकृतीनि च[4], शतशः[5], अथ सहस्रशः[6], मे[7], रूपाणि[8], पश्येत्यन्वयः ॥

हे पार्थ ![1], नानाविधानि = ते रूपं द्रष्टुमिच्छामीत्येकरूपदृष्टिप्रार्थनेऽपि रूपस्यैकत्वेऽपि नानाविधत्वाद्रूपाणीति बहुवचनं[2], दिव्यानि = अप्राकृतानि[3], नानावर्णाऽऽकृतीनि = नानाभूताः शुक्लादिवर्णा आकृतयश्च संस्थानविशेषाः येषां तानि नानावर्णाकृतीनि । यद्वा, कपिलवर्णादिनानावर्णानि लावण्यादि-नानाविधानि आकृतीनि च[4], शतशः[5], अथ सहस्रशः इत्युपलक्षणं अनन्ता इत्यर्थः[6], मे = मम[7], रूपाणि[8], पश्य = अवलोकय[9], पश्येति बहुप्रदर्शनोक्तिः एकस्यैव रूपस्याचिन्त्यशक्त्या विशेषबलेन चानन्तरूपसमुदायात्प्रकृतत्वाभिप्रायेति ज्ञेयम् । नानाविधानि दिव्यानि इत्यस्य विवरणं नानावर्णेत्यादि ॥ ५ ॥

**गीता**

## पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
## बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥

***वि०वि०***— ममैकस्मिन् रूपे आदित्यादीन् पश्य । तथा लोके शास्त्रे चादृष्टपूर्वाणि बहून्याश्चर्याणि पश्य ॥ ६ ॥

***सा०सं०***— पश्येत्युक्तौ कस्तत्र विशेष इत्यत आह **पश्येति** । द्वादशा**दित्यान्**, अष्टौ **वसून्**, एकादश**रुद्रान्**, पञ्चाशन्**मरुतः** । **तथा**शब्दः समुच्चये । **अदृष्टपूर्वाणि** पूर्वमदृष्टानि **बहूनि आश्चर्याणि** अद्भुतानि **च** ॥ ६ ॥

*अ०प्र०*— पश्येत्युक्तौ कस्तत्र विशेष इत्यत आह **पश्येति** ।

हे भारत ![१], त्वं मम देहे आदित्यान्[३], वसून्[४], रुद्रान्[५], अश्विनौ[६], मरुतः[७], तथाशब्दः समुच्चये[८], एतानि अदृष्टपूर्वाणि[९], बहूनि[१०] आश्चर्याणि[११] मम देहे त्वं पश्येत्यन्वयः ॥

हे भारत ![१], मम देहे त्वं[२], आदित्यान् = द्वादशादित्यान्[३], वसून् = अष्टवसून्[४], रुद्रान् = एकादश रुद्रान्[५], अश्विनौ = देवविशेषौ[६], मरुतः = एकोनपञ्चाशत् मरुतः[७], तथाशब्दः समुच्चये[८], एतानि अदृष्टपूर्वाणि त्वया चान्येन वा पूर्वं अदृष्टानि = अदृष्टपूर्वाणि बहूनि = अनन्तानि आश्चर्याणि = अद्भुतानि च चकारेण मम देहे मदीये रूपे त्वं पश्य अवलोकय । यद्वा, विश्वरूपस्य चक्षुषां उन्मीलन-निमीलनाभ्यां उत्पत्तिलयौ गताननेकाऽऽदित्यसङ्घान् पश्य = वदनज्वालायां सञ्जातान् वसुगणान् पश्य रुद्रान् = कोपेन सम्मेलनं गतासु भ्रुकुटीषु सम्भूतान् रुद्रसमूहान् पश्य । तथा पृथगवयवेषु सुरसिद्धादीन् । एवं बहूनि अनेकरूपाणि पश्य अवलोकय । मम देहे त्वमिति योजनीयम् ॥ ६ ॥

**गीता**

## इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
## मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥ ७ ॥

*वि०वि०*— इह मम एकस्मिन् देहे । तत्राप्येकस्थम् एकदेशस्थम् । जगत् पश्य । यच्चान्य-द्द्रष्टुमिच्छसि तदप्येकदेशस्थमेव पश्य । त्वद्दिदृक्षितमहं सर्वं दर्शयिष्यामि ॥ ७ ॥

*सा०सं०*— **मम देहे** मदीये रूपे **पश्य** । 'कृत्स्नम्' इत्यस्य विवरणं 'सचराचरम्' इति । **जगदिह** तव प्रदर्शनीये **मम देहे** । **एकस्थम्** एकदेशस्थम् **अद्य पश्य** । हे **गुडाकेश** जितनिद्र । **यच्चान्यद्द्रष्टुमिच्छसि** । तत् सर्वम् । **मम देहे पश्य** ॥

*अ०प्र०*— हे गुडाकेश ![१], कृत्स्नमपि[२], सचराचरं[३], जगत्[४], इह[५], मम देहे[६], अद्य[८], एकस्थं[७], पश्य[९], यच्च[१०] अन्यत्[११] द्रष्टुं[१२], इच्छसि[१३], तत्सर्वं पश्येति योजनीयम् ।

हे गुडाकेश ! = हे जितेन्द्रिय[१], कृत्स्नमपि[२], सचराचरं[३], जगत् = तत्र तत्र परिभ्रमता वर्षकोटिभिरपि द्रष्टुमशक्यं कृत्स्नमपि सचराचरं जगत्[४], इह = अस्मिन् प्रदर्शनीये[५], मम देहे[६], एकस्थं = एकस्मिन् रोममूले स्थितं तथा पृथक् देहावयवरूपेणैकत्रैव स्थितं[७], अद्य = अधुनैव[८],

पश्य = अवलोकय[९], यच्चान्यत् = जगदाश्रयभूतं कारणस्वरूपं जगतश्चावस्थाविशेषाधिकं जय-पराजयादिकं च यच्चाप्यन्यत्[११] द्रष्टुं = इच्छसि[१३], तत्सर्वं पश्येति योजनीयम् ॥ ७ ॥

**गीता**

## न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
## दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

***वि०वि०—*** त्वं त्वनेन प्राकृतेन स्वचक्षुषा । मां विश्वरूपं द्रष्टुं न शक्यसे । अतस्ते दिव्यं चक्षुर्ददामि । मम सामर्थ्यं पश्य इति ॥ ८ ।

***सा०सं०—*** त्वं द्रष्टुमिच्छसि । मयाऽप्युच्यते **पश्येति** । तथाऽपि त्वम् । **त्वनेन स्वचक्षुषा मां द्रष्टुं न शक्यसे** न शक्तो भविष्यसि । अतस्ते **दिव्यम्** अलौकिकम् । **चक्षुर्ददामि** दर्शनशक्तिं ददामि । **ऐश्वरम्** ईश्वरभूतमत्सम्बन्धि । **योगं** सामर्थ्यम् । **पश्येति** ॥ ८ ॥

***अ०प्र०—*** यदुक्तमर्जुनेन मन्यसे यदि तच्छक्यमिति तत्राह **न त्विति** ।

अनेनैव[१], स्वचक्षुषा[२], मां[३], द्रष्टुं[४], न शक्यसे[५], तुकारेण अतोऽहं[६], दिव्यं[७], चक्षुः[८], ते[९], ददामि[१०] त्वं मे[११] ऐश्वरं[१२], योगं[१३], पश्येत्यन्वयः ।

हे गुडाकेश ! अनेनैव[१], स्वचक्षुषा = प्राक् दृष्ट्या स्वीयेन चर्मचक्षुषा[२], मां[३], द्रष्टुं[४], न शक्यसे = शक्तो न भविष्यसि - शक्तोऽसीति वा पाठान्तरं[५], तुकारेण अतोऽहं[६], दिव्यं = तेजोरूपं अलौकिकं ज्ञानात्मकं वा[७], चक्षुः[८], ते = तुभ्यं[९], ददामि = दर्शनशक्तिं ददामि[१०] त्वं मे = मम[११] ऐश्वरं = असाधारणं[१२], योगं = ईश्वरसम्बन्धयोगं यद्वा, युक्तिं अघटितघटनासामर्थ्यं पश्य ॥ ८ ॥

*भा०र०— गीताक्षरार्थस्तु—*

एवं कौतूहलवता पार्थेन प्रार्थितेन भगवता 'विश्वरूपदर्शनं कुरु' इति विधीयते **भगवानुवाच–पश्य मे पार्थेत्यादिना** । **शतशः सहस्रशः** इत्यत्र 'सङ्ख्यैकवचनाच्च वीप्सायाम्' इति शस्-प्रत्ययः । शतंशतं सहस्रंसहस्रमिति तदर्थः । एकस्यैवाभिन्नानन्तरूपात्मकत्वात् 'रूपाणि' इति विशेषबलात् बहुवचनम् । **दिव्यानि** अलौकिकानि वर्णाः = शुक्लपीतादयः आकृतयः = अवयव-सन्निवेशविशेषाः । नानाविधा वर्णाकृतयो येषां तानि तथोक्तानि ॥ ५ ॥

किञ्च ममैवैकस्मिन् रूपे **पश्यादित्यान् वसून्** अष्टौ **रुद्रान्** एकादश । **अदृष्टपूर्वाणि** लोके शास्त्रे वा इतःपूर्वमदृष्टानि । 'भूतपूर्वः' इतिवत् समासः । बहूनि आश्चर्याणि अद्भुतानि च **पश्य** ॥ ॥ ६ ॥

**इह** त्वया दर्शनीये **मम देहे कृत्स्नम्** इत्यस्य विवरणम् **सचराचरमिति** । **जगद् एकस्थम्** एकदेशे स्थितम् **अद्य पश्य** । **गुडाकेश** जितनिद्र इति सम्बोधनम् । **यच्च अन्यत्** तव योग्यं **द्रष्टुमिच्छसि** तच्च प्रदर्शयिष्यामीति योज्यम् ॥ ७ ॥

यदुक्तम् अर्जुनेन 'मन्यसे यदि द्रष्टुं शक्यम्' इति तत्रोच्यते **न तु मामिति** । **अनेन** लौकिकेन **स्वचक्षुषा द्रष्टुं न शक्यसे** न शक्तो भविष्यसि । अतो **दिव्यम्** अलौकिकं **ददामि**। **ऐश्वरम्** ईश्वरसम्बन्धिनं **योगं** सामर्थ्यातिशयम् इति ॥ ८ ॥

**गीता**

**सञ्जय उवाच—**

**एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥**

***वि०वि०***— अनन्तरं वृत्तान्तं धृतराष्ट्रं प्रति संजय उवाच **एवमित्यादिना** ॥ ९ ॥

***सा०सं०***— अनन्तरवृत्तान्तं धृतराष्ट्रं प्रति संजय उवाच । तदाह **एवमिति** । 'पश्य मे पार्थ रूपाणि' इत्यादिप्रकारेण **उक्त्वा** इत्यर्थः । महतां योगानामुपायानां अनन्तशक्तीनां वेश्वरः । कुत एतदित्यत उक्तम् **हरिरिति** । सर्वयज्ञादिभागहरणाद्धरिः । **परमम्** अनेकविभवोपेतम् । 'इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् । वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः ॥' इति मोक्षधर्मोक्तेः । गेहेषु इष्टिगृहेष्वित्यर्थः । हरतेरिकारप्रत्ययः । अप्राकृतविग्रहस्य साकारस्यानन्तपूजास्थानेषु युगपत्सन्निधानेन भागहारिणो महायोगेश्वरत्वं किं वक्तव्यमिति भावः ॥ ९ ॥

***अ०प्र०***— भगवान् एवमुक्त्वा अर्जुनाय रूपं दर्शितवान् । तद्रूपं दृष्ट्वा चार्जुनः कृष्णं प्रति विज्ञापितवानिति इमं अर्थं एवमुक्त्वेत्यादिभिः षट्श्लोकैः धृतराष्ट्रं प्रति सञ्जयः प्राह **एवमिति** ।

हे राजन् ![१], महायोगेश्वरो हरिः[२], एवं[३], उक्त्वा[४], ततः[५], पार्थाय[६], परमं[७], ऐश्वरं[८], रूपं[९], दर्शयामास[१०] ॥

हे राजन् ! = धृतराष्ट्र[१], महायोगेश्वरः = महांश्चासौ योगेश्वरश्च तथा । यद्वा, महतां योग्यानां उपायानां अनन्तशक्तीनां वा ईश्वरः महान् योगो येषां ते महायोगाः शुकादयः तेषां ईश्वरः कुत इत्यत उक्तं **हरिरिति** । सर्वयज्ञभागहरणात् हरिः । तदुक्तं मोक्षधर्मे— इडोपहूतगेहेषु हरेर्भागं क्रतुस्वयम् । वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः ॥ एतादृशो हरिः श्रीकृष्णः[२], एवमुक्त्वा = पश्य मे पार्थ रूपाणि इत्यादि प्रकारेण उक्त्वा[४], ततस्तदनन्तरं[५], पार्थाय = अर्जुनं प्रति[६], परमं = अनेक-विभवोपेतं[७], ऐश्वरं = ईश्वरसम्बन्धि[८], रूपं[९], दर्शयामास = दर्शितवान्[१०] ॥ ९ ॥

भाष्यम्

**हरिः सर्वयज्ञादिभागहारित्वात् । ''इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् । वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः'' इति मोक्षधर्मे ॥ ९ ॥**

***प्र०दी०***— 'महायोगेश्वरो हरिः' इत्यत्र हरिशब्दस्य प्रकृतोपयुक्तमर्थमाह **हरिरिति** । **गेहेषु** इष्टिगृहेषु । हरतेः इकारप्रत्ययः । **श्रेष्ठः** अप्राकृतः । अप्राकृतविग्रहस्य साकारस्यैवानन्तपूजास्थानेषु स्वरूपेणैव युगपत् सन्निधाने किं वक्तव्यं महायोगेश्वरत्वमिति ॥

***भा०दी०***— प्रकृतोपयुक्तमिति महायोगेश्वरत्वोपपादकत्वमित्यर्थ इति भावः । **हरतेरिति** । 'हृञ् हरणे' इत्यतः 'सार्वधातुकार्धधातुकयोः इति गुणे रपरत्वे च हरिरिति रूपमिति भावः ॥९॥

***भा०र०***— **प्रकृतोपयुक्तं** महायोगेश्वरत्वोपयुक्तम् । गेहशब्दमनुवदन् प्रकृतोपयुक्तमर्थं तस्याह **गेहेष्विति** । प्रमाणे इडाशब्दो हविराधानानुकूलयज्ञपात्रवचनः, तत्र प्रतिपादितम् इडोपहुतं हरे = हरामि, हरितः = श्याम इति शिष्टपदार्थः । यज्ञेषु दीयमानहविर्भागहरणकर्तृत्वं हरिशब्दार्थ इत्येतद् व्युत्पादयति **हरतेरिति** । 'हृ-पिषि-रुहि-वृति-विदि-छिदि-कीर्तिभ्यश्च' इत्युणादिसूत्रेण 'हृञ् = हरणे' इति धातोः कर्तरि इन्प्रत्यय इत्यर्थः । स्वरार्थनकारानुबन्धानुक्तिरत्र स्वरस्याविवक्षितत्वात् । ततः सार्वधातुकलक्षणे गुणे, रपरे च 'हरिः' इति रूपम् इति भावः । अप्राकृत एव हि श्रेष्ठो भवतीति भावेनोक्तम् **श्रेष्ठोऽप्राकृत इति** । 'प्रकृतोपयुक्तम्' इत्युक्तं दर्शयति **अप्राकृतविग्रहस्येति** । वर्णपदतात्पर्यम् **साकारस्यैवेति** । 'गेहेषु' इत्यस्य तात्पर्यम् **पूजास्थानेष्विति** ॥ ९ ॥

**गीता**

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥**

*वि०वि०*— अनेकवक्त्रेत्यादावनेकशब्दोऽनन्तवाची । 'अनन्तबाहुम्' इत्यादेः अनेकमद्भुतानां दर्शनं यस्मिन्नित्यनेकाद्भुतदर्शनम् ॥ १० ॥

*सा०सं०*— तद्रूपमाह **अनेकेति** । अनेकानि वक्त्राणि नयनानि यस्य तत् । **अनेक**शब्दोऽनन्तवाची । अनेकेषामद्भुतानां दर्शनं यस्मिन्नित्य**नेकाद्भुतदर्शनं** रूपं दर्शयामासेत्यनुषङ्गः ॥१०॥

*अ०प्र०*— तद्रूपमाह **अनेकवक्त्रनयनमिति** ।

अनेकानि वक्त्राणि मनोहराणि भयावहानि सौम्यानि च तथैव **नयनानि** च यस्मिन् तत् तथा अनेकशब्दोऽत्रानन्तवाची[1], अनेकाद्भुतदर्शनं अनेकेषां अद्भुतानां दर्शनं यस्मिन् तत् । यद्वा, अनेकानि अद्भुतानि विस्मयावहानि करचरणाद्यवयवदर्शनानि यस्मिन् तत् तथा[2], अनेकदिव्याभरणं अनेकानि दिव्यानि आभरणानि मुकुटादिपादभूषणान्तानि यस्मिन् तत्[3], दिव्यानेकोद्यतायुधं = दिव्यानि अनेकानि उद्यतानि आयुधानि यस्मिन् तत् । यद्वा, दिव्यानि अत्यन्तदुर्निरीक्ष्यतेजोरूपाणि अनेकोद्यतानि अनेककरैरुद्धृतानि यस्मिन् तत् तथा ॥ १० ॥

**गीता**

# दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
# सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

*वि०वि०*— सर्वाश्चर्यमयं सर्वाश्चर्यात्मकम् । देवं क्रीडादिगुणयुक्तम् । अनन्तं देशतः कालतो गुणतश्च परिच्छेदरहितम् । विश्वतोमुखम् अनन्तमुखं दर्शयामास ॥ ११ ॥

*सा०सं०*— **सर्वाश्चर्यमयं** सर्वाश्चर्यात्मकम् । तादात्म्यार्थे मयट् । **देवं** क्रीडादिगुणम् । **अनन्तं** देशकालगुणापरिच्छिन्नम् । **विश्वतोमुखं** सर्वदिक्षु मुखं यस्य तद्विश्वतोमुखम् । अनन्तमुखमिति वा ॥ ११ ॥

*अ०प्र०*— किञ्च **दिव्येति** । दिव्यमाल्याम्बरधरं = दिव्यानि माल्यानि कमलानि वासांस्यादीनि पुष्पमाल्यानि अम्बराणि सुवर्णपीताम्बराणि धारयतीति तथा[1], दिव्यगन्धानुलेपनं = दिव्येन स्वप्रकाशस्यापि कान्तिप्रदेन गन्धेन चन्दनेन अनुलेपनं सर्वाङ्गे विलेपनं यस्य तत्[2], सर्वाश्चर्यमयं = सर्वाश्चर्यात्मकं अनेकाश्चर्यप्रायं[3], देवं = क्रीडादिगुणं द्योतनात्मकं[4], अनन्तं = देशकालगुणापरिच्छिन्नं[5], विश्वतोमुखं = सर्वदिक्षु मुखं अनन्तमुखमिति वा विश्वतः सर्वतो मुखानि यस्मिन् तत् ॥ ११ ॥

भाष्यम्

**सर्वाश्चर्यमयं सर्वाश्चर्यात्मकम् ॥ ११ ॥**

***प०टी०***— मयटो विवक्षितार्थमाह **सर्वेति** ॥ ११ ॥

***प्र०दी०***— 'सर्वाश्चर्यमयम्' इति **केनचित्** प्राचुर्यार्थो मयट् व्याख्यातः । तदसत् । सर्वशब्देन गतार्थत्वादिति भावेनाह **सर्वेति** । मयटस्तादात्म्यार्थत्वे प्रमाणमुक्तमेव ॥ ११ ॥

***भा०दी०***— **प्रमाणमुक्तमिति** । यस्येत्यर्थः । 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इत्युक्तं सप्तमेऽध्याये इत्यर्थः ॥ ११ ॥

***भा०र०***— **केनचित्** 'सर्वाश्चर्यप्रायम्' इति भाषमाणेन **शङ्करेण** 'सर्वैराश्चर्यैः प्रचुरम्' इति व्याचक्षाणेन केशवसाक्षिणा च । **गतार्थत्वादिति** 'सर्वैराश्चर्यैः प्रचुरम्' इत्यत्र सर्वशब्देनैव प्राचुर्यस्य लाभेन पुनर्मयटो न प्रयोजनं परव्याख्यान इति भावः । तदात्मकत्वार्थे मयडनुशासनं न प्रसिद्धव्याकरणेऽस्ति ? इत्यत आह **मयट इति** । **उक्तं** 'त्रिभिर्गुणमयैर्भावैः' इत्यत्र 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति सप्तमे ॥ ११ ॥

**गीता**

## दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
## यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥

***वि०वि०***— किञ्च दिवि आकाशे । सूर्यसहस्रस्य युगपदुत्थितस्य या युगपदुत्थिता भाः प्रभा भवेत् तर्हि सा महात्मनो विश्वरूपस्य भासः । प्रभायाः कश्चित् सदृशी स्यात् । नान्योपमाऽस्तीत्यर्थः । अत्र सहस्रशब्दोऽनन्तवाची । तदपि 'पाकशासनविक्रमः' इत्यादिवत् प्रत्यायनार्थमेव । भगवतोऽपरिमिततेजःस्त्वात् ॥ १२ ॥

***सा०सं०***— किञ्च **दिवि** आकाशे । **सूर्यसहस्रस्या**नन्तसूर्यराशेः युगपदुत्थितस्येति शेषः । प्रभा **युगपदुत्थिता स्यात्** । सा प्रभा **तस्य महात्मनो** विश्वरूपस्य । **भासः** प्रभायाः । **सदृशी स्यात्** । नान्याऽस्त्युपमेत्यर्थः ॥ १२ ॥

***अ०प्र०***— विश्वरूपदीप्तेः निरुपमत्वमाह **दिवीति** ।

दिवि[१], सूर्यसहस्रस्य[२], युगपत्[४], उत्थिता[५], यदि भाः[६], भवेत्[७], तर्हि तस्य[८], महात्मनः[९], भासः = प्रभायाः कथञ्चित् सा प्रभा[१०] सदृशी[११] स्यादित्यन्वयः ॥

तथारूपं दर्शयामासेति पूर्वेणान्वयः । अत्रापि सहस्रशब्दोऽनन्तवाची । तदपि पाकशासनविक्रमो राम इतिवत् । परज्ञापनार्थमेव भगवतो परिच्छिन्न-तेजस्त्वात् दिवि = आकाशे[१], सूर्यसहस्रस्य = कल्पान्ते द्वादशादित्याः यथैकदेवोत्पद्यन्ते तथा दिवि अन्तरिक्षे यदि सूर्याणां सहस्रस्य[३], युगपदुत्थिता = एकस्मिन् काले समुदाये नोदयादुत्थिता उत्थितस्य[४], या भा भवेत् = या प्रभा भवेत्[९], तर्हि तस्य महात्मनः = विश्वरूपस्य[६], भासः = प्रभायाः कथञ्चित् सा प्रभा[१०] सदृशी स्यात् इत्यस्य काका न स्यादित्यर्थः । वस्तुतो निरुपमेति यावत् । नान्योपमास्तीत्यर्थः । एतादृशं रूपं दर्शयामासेति पूर्वेण ॥ १२ ॥

भाष्यम्

**सहस्रशब्दोऽनन्तवाची । तदपि 'पाकशासनविक्रमः' इत्यादिवत् प्रत्यायनार्थमेव । तथा हि ऋग्वेदखिलेषु– "अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्ततेजाश्च ततस्ततोऽपि" इति । महातात्पर्याच्च प्राबल्यम् । न च परिमाणोक्त्या किञ्चित् प्रयोजनम् ॥ १२ ॥**

***प॰टी॰***— 'दिविसूर्यसहस्रस्य' इति भगवत्तेजसः परिमितत्वमुच्यत इत्यत आह **सहस्रेति** । अस्तु वा सहस्रशब्दस्य प्रसिद्धार्थत्वम् । तथाऽपि न विरोध इत्याह **तदपीति** । साक्षात्परिमितत्वमेवार्थः किं न स्यात् ? इत्यत आह **तथा हीति** । ननु वचनत्वाविशेषात् केन कस्य बाधः ? इत्यत आह **महातात्पर्येति** । कथं परिमाणोक्त्या महातात्पर्यविरोधः ? इत्यत आह **न चेति** । मोक्षार्थं प्रवृत्तशास्त्राणां परिपूर्णे ब्रह्मणि परिमाणवाचित्वे किञ्चित्प्रयोजनं नास्ति, किमु मोक्षः । इत्यर्थः ॥ १२ ॥

***प्र॰दी॰***— 'दिवि सूर्यसहस्रस्य' इति विश्वरूपस्य सहस्रसूर्योपमप्रभत्वमुच्यते । तत्र सहस्रशब्दो दशशतवाचीति प्रतीतिनिरासार्थमाह **सहस्रेति** । अनन्तसूर्योपमप्रभत्वमपि भगवतो न वास्तवम् । निरुपमत्वात् । किं तर्हीत्यत आह **तदपीति** । **प्रत्यायनार्थं** बुद्धिप्रवेशनार्थं **एव** उच्यते । यथा भगवतो दाशरथेः पाकशासनोपमपराक्रमत्वमित्यर्थः ।

सहस्रशब्दस्य प्रसिद्धार्थपरित्यागः कुतः ? इत्यत आह **तथा हीति** । **ततस्ततः** 'सूर्यादेरपि विलक्षणः' इति शेषः । कुतः श्रुत्या गीतावाक्यस्य बाधः ? इति चेत् । 'शतं सहस्रं इत्यपरिमितनामानि' इति गीतावाक्यस्य सावकाशत्वेन दौर्बल्यात् । श्रुतेः निरवकाशत्वेन प्राबल्यात् । इतश्च श्रुतेः प्राबल्यमित्याह **महातात्पर्याच्चेति** । समस्तागमानां महाप्रयोजनाय यद्भगवति महातात्पर्यं,

भाष्यम्

**सर्वाश्चर्यमयं सर्वाश्चर्यात्मकम् ॥ ११ ॥**

*प०टी०*— मयटो विवक्षितार्थमाह **सर्वेति** ॥ ११ ॥

*प्र०दी०*— 'सर्वाश्चर्यमयम्' इति **केनचित्** प्राचुर्यार्थो मयट् व्याख्यातः । तदसत् । सर्वशब्देन गतार्थत्वादिति भावेनाह **सर्वेति** । मयटस्तादात्म्यार्थत्वे प्रमाणमुक्तमेव ॥ ११ ॥

*भा०दी०*— **प्रमाणमुक्तमिति** । यस्येत्यर्थः । 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इत्युक्तं सप्तमेऽध्याये इत्यर्थः ॥ ११ ॥

*भा०र०*— **केनचित्** 'सर्वाश्चर्यप्रायम्' इति भाषमाणेन **शङ्करेण** 'सर्वैराश्चर्यैः प्रचुरम्' इति व्याचक्षाणेन केशवसाक्षिणा च । **गतार्थत्वादिति** 'सर्वैराश्चर्यैः प्रचुरम्' इत्यत्र सर्वशब्देनैव प्राचुर्यस्य लाभेन पुनर्मयटो न प्रयोजनं परव्याख्यान इति भावः । तदात्मकत्वार्थे मयडनुशासनं न प्रसिद्धव्याकरणेऽस्ति ? इत्यत आह **मयट इति** । **उक्तं** 'त्रिभिर्गुणमयैर्भावैः' इत्यत्र 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति सप्तमे ॥ ११ ॥

**गीता**

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥**

*वि०वि०*— किञ्च दिवि आकाशे । सूर्यसहस्रस्य युगपदुत्थितस्य या युगपदुत्थिता भाः प्रभा भवेत् तर्हि सा महात्मनो विश्वरूपस्य भासः । प्रभायाः कश्चित् सदृशी स्यात् । नान्योपमाऽस्तीत्यर्थः । अत्र सहस्रशब्दोऽनन्तवाची । तदपि 'पाकशासनविक्रमः' इत्यादिवत् प्रत्यायनार्थमेव । भगवतोऽपरिमिततेजःस्त्वात् ॥ १२ ॥

*सा०सं०*— किञ्च **दिवि** आकाशे । **सूर्यसहस्रस्यानन्तसूर्यराशेः** युगपदुत्थितस्येति शेषः । प्रभा **युगपदुत्थिता स्यात्** । सा प्रभा **तस्य महात्मनो** विश्वरूपस्य । **भासः** प्रभायाः । **सदृशी स्यात्** । नान्याऽस्त्युपमेत्यर्थः ॥ १२ ॥

*अ०प्र०*— विश्वरूपदीप्तेः निरुपमत्वमाह **दिवीति** ।

दिवि[१], सूर्यसहस्रस्य[२], युगपत्[३], उत्थिता[४], यदि भाः[५], भवेत्[६], तर्हि तस्य[७], महात्मनः[८], भासः = प्रभायाः कथञ्चित् सा प्रभा[१०] सदृशी[११] स्यादित्यन्वयः ॥

तथारूपं दर्शयांमासेति पूर्वेणान्वयः । अत्रापि सहस्रशब्दोऽनन्तवाची । तदपि पाकशासनविक्रमो राम इतिवत् । परज्ञापनार्थमेव भगवतो परिच्छिन्न-तेजस्त्वात् दिवि = आकाशे[२], सूर्यसहस्रस्य = कल्पान्ते द्वादशादित्याः यथैकदेवोत्पद्यन्ते तथा दिवि अन्तरिक्षे यदि सूर्याणां सहस्रस्य[३], युगपदुत्थिता = एकस्मिन् काले समुदाये नोदयादुत्थिता उत्थितस्य[४], या भा भवेत् = या प्रभा भवेत्[५], तर्हि तस्य महात्मनः = विश्वरूपस्य[६], भासः = प्रभायाः कथञ्चित् सा प्रभा[१०] सदृशी स्यात् इत्यस्य काङ्क्षा न स्यादित्यर्थः । वस्तुतो निरुपमेति यावत् । नान्योपमास्तीत्यर्थः । एतादृशं रूपं दर्शयामासेति पूर्वेण ॥ १२ ॥

भाष्यम्

**सहस्रशब्दोऽनन्तवाची । तदपि 'पाकशासनविक्रमः' इत्यादिवत् प्रत्यायनार्थमेव । तथा हि ऋग्वेदखिलेषु– "अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्ततेजाश्च ततस्ततोऽपि" इति । महातात्पर्याच्च प्राबल्यम् । न च परिमाणोक्त्या किञ्चित् प्रयोजनम् ॥ १२ ॥**

***प०टी०—*** 'दिविसूर्यसहस्रस्य' इति भगवत्तेजसः परिमितत्वमुच्यत इत्यत आह **सहस्रेति** । अस्तु वा सहस्रशब्दस्य प्रसिद्धार्थत्वम् । तथाऽपि न विरोध इत्याह **तदपीति** । साक्षात्परिमितत्वमेवार्थः किं न स्यात् ? इत्यत आह **तथा हीति** । ननु वचनत्वाविशेषात् केन कस्य बाधः ? इत्यत आह **महातात्पर्येति** । कथं परिमाणोक्त्या महातात्पर्यविरोधः ? इत्यत आह **न चेति** । मोक्षार्थं प्रवृत्तशास्त्राणां परिपूर्णे ब्रह्मणि परिमाणवाचित्वे किञ्चित्प्रयोजनं नास्ति, किमु मोक्षः । इत्यर्थः ॥ १२ ॥

***प्र०दी०—*** 'दिवि सूर्यसहस्रस्य' इति विश्वरूपस्य सहस्रसूर्योपमप्रभत्वमुच्यते । तत्र सहस्रशब्दो दशशतवाचीति प्रतीतिनिरासार्थमाह **सहस्रेति** । अनन्तसूर्योपमप्रभत्वमपि भगवतो न वास्तवम् । निरुपमत्वात् । किं तर्हीत्यत आह **तदपीति** । **प्रत्यायनार्थं** बुद्धिप्रवेशनार्थं **एव** उच्यते । यथा भगवतो दाशरथेः पाकशासनोपमपराक्रमत्वमित्यर्थः ।

सहस्रशब्दस्य प्रसिद्धार्थपरित्यागः कुतः ? इत्यत आह **तथा हीति** । **ततस्ततः** 'सूर्यादेरपि विलक्षणः' इति शेषः । कुतः श्रुत्या गीतावाक्यस्य बाधः ? इति चेत् । 'शतं सहस्रं इत्यपरिमितनामानि' इति गीतावाक्यस्य सावकाशत्वेन दौर्बल्यात् । श्रुतेः निरवकाशत्वेन प्राबल्यात् । इतश्च श्रुतेः प्राबल्यमित्याह **महातात्पर्याच्चेति** । समस्तागमानां महाप्रयोजनाय यद्भगवति महातात्पर्यं,

श्रुतेस्तदानुकूल्यात्, गीतावाक्यस्य तत्प्रातिकूल्यादित्यर्थः । कथं गीतावाक्यस्य तत्प्रातिकूल्यम् ? इति चेत् । किं भगवतः परिमितप्रभत्वमेव वस्तुतः ? उत अपरिमितप्रभस्याप्यत्र सहस्रसूर्योपम-प्रभत्वमुच्यते ? नाद्यः । सकलश्रुतिस्मृतीतिहासपुराणविरोधात् । द्वितीये त्वपरिमितस्य परिमा-णोक्त्या किञ्चिदपि प्रयोजनं न सिद्ध्यति । कुतो महत् ? इत्याह **न चेति** ॥ १२ ॥

*भा०र०*— 'निभ-सङ्काश-नीकाश-प्रतीकाश-उपमादयः' इत्युक्तेः, उपमशब्दः सदृशार्थः । उपमाशब्दस्य दीर्घान्तस्यापि 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वे 'उपमप्रभत्वम्' इति युक्तम् । **तदपि** अनन्तसूर्योपमप्रभत्वमपीति भाष्यपदार्थः । 'बुद्धिप्रवेशार्थम्' इत्यत्र बुद्धेः प्रवेशो विषयी-करणलक्षणः । पाकशासनस्य = देवेन्द्रस्य विक्रमः = पराक्रम इव पराक्रमो यस्येति विग्रहा-भिप्रायेणोक्तम् **पाकशासनोपमपराक्रमत्वमिति** । पाकशासनपराक्रमोपमपराक्रमत्वमित्यर्थः । *भावप्रदीपिकायां तु* अस्तु वा सहस्रशब्दस्य प्रसिद्धार्थत्वम् । तथापि न दोष इत्याह 'तदपीति' इत्यवतारितं 'तदपि' इति भाष्यम् । **प्रसिद्धार्थः** दशशतानि । 'सूर्यादितोऽप्यनन्ततेजाः परमः' इत्युक्ते सावधिकानन्तसूर्योपमतेजस्त्वं न निवारितं स्यात्, इत्यतः प्रमाणे शेषमाह **विलक्षण इति शेष इति** । भाष्ये 'इति'शब्दात्परं 'श्रूयते' इत्यध्याहृत्य 'तथाहि' इत्यत्रत्य'हि'शब्देनान्वयो द्रष्टव्यः । एवं च 'प्रसिद्धार्थपरित्यागः कुतः ?' इति गमनिका टीका सुघटा भवति । 'दौर्बल्यात्', 'प्राबल्यात्' इति पञ्चम्यन्तशब्दद्वयस्य 'श्रुत्या गीतावाक्यस्य बाधः' इत्यन्वयः । महाप्रयोजनाय मोक्षरूपाय **तत्प्रातिकूल्यं** महातात्पर्यप्रातिकूल्यम् । **अत्र** गीतायां **किञ्चित्** अल्पं **महत्** मोक्ष-रूपम् ॥ १२ ॥

*गीताक्षरार्थस्तु*—

अनन्तरवृत्तान्तं धृतराष्ट्रं प्रति सञ्जय आहेत्युच्यते **सञ्जय उवाच– 'एवमुक्त्वा'** इत्यादिभिः षड्भिः श्लोकैः **एवं** 'पश्य मे पार्थ रूपाणि' इत्यादिनोक्तप्रकारेण । महान् योगः येषां ते महायोगाः ब्रह्माद्याः, तेषामपीश्वरः । तदिदमुपपादयितुमुक्तम् **हरिरिति** । यज्ञे दीयमानहविर्भागहरणकर्तृत्वात् **हरिः** । हरतेरिकारप्रत्ययः । अप्राकृतहरितवर्णशालित्वाच्च 'हरिः' इत्युच्यते । अप्राकृतविग्रहस्य साकारस्यैवानन्तपूजास्थानेषु स्वरूपेणैव युगपत्सन्निधाने किं वक्तव्यम् 'महायोगेश्वरत्वम्' इति विभावितं भवति । **ऐश्वरम्** ईश्वरस्य विद्यमानम् अनन्यसाधारणं रूपं दर्शयामास ॥ ९ ॥

तदेव रूपमुच्यते **अनेकेति** । अनेकशब्दोऽनन्तवाची । अनेकानि = अनन्तानि वक्त्राणि नयनानि च यस्य तत् तथा । 'दृश्यन्तेऽत्र' इत्यधिकरणे ल्युट्, अनेकेषाम् अद्भुतानां दर्शनम् ।

अनेकम् अद्भुतानां दर्शनं यस्मिन्निति वा । अनेकानि दिव्यानि = अलौकिकानि आभरणानि यस्य तत् तथा । दिव्यानि अनेकानि उद्यतानि वैरिवध उन्नमनवन्ति आयुधानि यस्य तत् तथा ॥१०॥

धरतीति धरम्, दिव्यानां माल्यानां = पुष्पाणाम् अम्बराणां च धरं = धर्तृ दिव्यो गन्धः = परिमलो यस्य तत् दिव्यगन्धम् अनुलेपनम् = अङ्गरागो यस्य तत् तथा । **सर्वाश्चर्यमयं** तादात्म्ये मयट्, सर्वाश्चर्यात्मकं देवं क्रीडादिगुणकम् **अनन्तं** देशतः कालतो गुणतश्च परिच्छेदहीनं **विश्वतोमुखं** 'विश्वतः' सार्वविभक्तिकस्तसिः प्रथमार्थे, विश्वानि = अनन्तानि मुखानि यस्य तत् तथा । 'अनेकवक्त्रनयनम्' इत्यनेन लब्धस्यापि पुनरुक्तिरादरेण तात्पर्यद्योतनार्था, सर्वदिगवस्थित-मुखमिति वा । 'रूपं दर्शयामास' इत्यनुषङ्गः ॥ ११ ॥

विश्वरूपस्य निरुपमस्यापि प्रत्यायनर्थम् अनन्तसूर्योपमत्वमुच्यते **दिवीति** । **दिवि** अन्तरिक्षे सूर्याणां सहस्रस्य = अनन्तस्य युगपदुत्थितस्य यदि **युगपदुत्थिता भाः** प्रभा या तर्हि **सा महात्मनः** विश्वरूपस्य **भासः** प्रभायाः कथञ्चित् **सदृशी स्यात्** । एवमनन्तसूर्योपमप्रभत्वमपि भगवतो न वास्तवम्, निरूपमत्वात् । किमर्थं तर्ह्येतदुच्यत इति चेत् 'पाकशासनविक्रमो दाशरथिः' इतिवत् प्रत्ययनार्थमेव । परमार्थतस्तु 'अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्ततेजाश्च ततस्ततोऽपि' इति शास्त्रात् सूर्यादेरपि विलक्षणो निरुपम एव भगवानिति भावः । 'एवंविधं रूपं दर्शयामास' इति पूर्वेणान्वयः ॥ १२ ॥

**गीता**

## तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
## अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥

***वि०वि०***— तत्र रूपे । एकदेशे स्थितम् । अनेकधा प्रविभक्तम् । देवमनुष्यादिनानाभेदेन विकासेन चावस्थितम् । कृत्स्नं जगदपश्यत् ॥ १३ ॥

***सा०सं०***— ततः किं जातमित्यत आह **तत्रेति** । भगवता प्रदर्शिते सति **देवदेवस्य शरीरे** विश्वरूपे । देवदानवमानवादिभेदेनानेकधा **प्रविभक्तम्** । **कृत्स्नं जगदेकस्थम्** एकदेशस्थम् । **तदाऽपश्यत्** ॥ १३ ॥

***अ०प्र०***— ततः किं वृत्तमित्यपेक्षायां सञ्जय आह **तत्रेति** ।

हे धृतराष्ट्र ! तदा[१], पाण्डवः[२], अनेकधा[३], प्रविभक्तं[४], यत्कृत्स्नं[५], जगत्[६], देवदेवस्य[७], तत्र[८], शरीरे[९], तत्रापि एकस्थं[१०] अपश्यदित्यन्वयः ॥

श्रुतेस्तदानुकूल्यात्, गीतावाक्यस्य तत्प्रातिकूल्यादित्यर्थः । कथं गीतावाक्यस्य तत्प्रातिकूल्यम् ? इति चेत् । किं भगवतः परिमितप्रभत्वमेव वस्तुतः ? उत अपरिमितप्रभस्याप्यत्र सहस्रसूर्योपम-प्रभत्वमुच्यते ? नाद्यः । सकलश्रुतिस्मृतीतिहासपुराणविरोधात् । द्वितीये त्वपरिमितस्य परिमा-णोक्त्या किञ्चिदपि प्रयोजनं न सिद्ध्यति । कुतो महत् ? इत्याह **न चेति** ।। १२ ।।

*भा०र०*— 'निभ-सङ्काश-नीकाश-प्रतीकाश-उपमादयः' इत्युक्तेः, उपमशब्दः सदृशार्थः । उपमाशब्दस्य दीर्घान्तस्यापि 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वे 'उपमप्रभत्वम्' इति युक्तम् । **तदपि** अनन्तसूर्योपमप्रभत्वमपीति भाष्यपदार्थः । 'बुद्धिप्रवेशार्थम्' इत्यत्र बुद्धेः प्रवेशो विषयी-करणलक्षणः । पाकशासनस्य = देवेन्द्रस्य विक्रमः = पराक्रम इव पराक्रमो यस्येति विग्रहा-भिप्रायेणोक्तम् **पाकशासनोपमपराक्रमत्वमिति** । पाकशासनपराक्रमोपमपराक्रमत्वमित्यर्थः । *भावप्रदीपिकायां तु* अस्तु वा सहस्रशब्दस्य प्रसिद्धार्थत्वम् । तथापि न दोष इत्याह 'तदपीति' इत्यवतारितं 'तदपि' इति भाष्यम् । **प्रसिद्धार्थः** दशशतानि । 'सूर्यादितोऽप्यनन्ततेजाः परमः' इत्युक्ते सावधिकानन्तसूर्योपमतेजस्त्वं न निवारितं स्यात्, इत्यतः प्रमाणे शेषमाह **विलक्षण इति शेष इति** । भाष्ये 'इति'शब्दात्परं 'श्रूयते' इत्यध्याहृत्य 'तथाहि' इत्यत्रत्य'हि'शब्देनान्वयो द्रष्टव्यः । एवं च 'प्रसिद्धार्थपरित्यागः कुतः ?' इति गमनिका टीका सुघटा भवति । 'दौर्बल्यात्', 'प्राबल्यात्' इति पञ्चम्यन्तशब्दद्वयस्य 'श्रुत्या गीतावाक्यस्य बाधः' इत्यन्वयः । महाप्रयोजनाय मोक्षरूपाय **तत्प्रातिकूल्यं** महातात्पर्यप्रातिकूल्यम् । **अत्र** गीतायां **किञ्चित्** अल्पं **महत्** मोक्ष-रूपम् ।। १२ ।।

*गीताक्षरार्थस्तु*—

अनन्तरवृत्तान्तं धृतराष्ट्रं प्रति सञ्जय आहेत्युच्यते **सञ्जय उवाच– 'एवमुक्त्वा'** इत्यादिभिः षड्भिः श्लोकैः **एवं** 'पश्य मे पार्थ रूपाणि' इत्यादिनोक्तप्रकारेण । महान् योगः येषां ते महायोगाः ब्रह्माद्याः, तेषामपीश्वरः । तदिदमुपपादयितुमुक्तम् **हरिरिति** । यज्ञे दीयमानहविर्भागहरणकर्तृत्वात् **हरिः** । हरतेरिकारप्रत्ययः । अप्राकृतहरितवर्णशालित्वाच्च 'हरिः' इत्युच्यते । अप्राकृतविग्रहस्य साकारस्यैवानन्तपूजास्थानेषु स्वरूपेणैव युगपत्सन्निधाने किं वक्तव्यम् 'महायोगेश्वरत्वम्' इति विभावितं भवति । **ऐश्वरम्** ईश्वरस्य विद्यमानम् अनन्यसाधारणं रूपं दर्शयामास ।। ९ ।।

तदेव रूपमुच्यते **अनेकेति** । अनेकशब्दोऽनन्तवाची । अनेकानि = अनन्तानि वक्त्राणि नयनानि च यस्य तत् तथा । 'दृश्यन्तेऽत्र' इत्यधिकरणे ल्युट्, अनेकेषाम् अद्भुतानां दर्शनम् ।

अनेकम् अद्भुतानां दर्शनं यस्मिन्निति वा । अनेकानि दिव्यानि = अलौकिकानि आभरणानि यस्य तत् तथा । दिव्यानि अनेकानि उद्यतानि वैरिवध उन्नमनवन्ति आयुधानि यस्य तत् तथा ॥१०॥

धरतीति धरम्, दिव्यानां माल्यानां = पुष्पाणाम् अम्बराणां च धरं = धर्तृ दिव्यो गन्धः = परिमलो यस्य तत् दिव्यगन्धम् अनुलेपनम् = अङ्गरागो यस्य तत् तथा । **सर्वाश्चर्यमयं** तादात्म्ये मयट्, सर्वाश्चर्यात्मकं देवं क्रीडादिगुणकम् **अनन्तं** देशतः कालतो गुणतश्च परिच्छेदहीनं **विश्वतोमुखं** 'विश्वतः' सार्वविभक्तिकस्तसिः प्रथमार्थे, विश्वानि = अनन्तानि मुखानि यस्य तत् तथा । 'अनेकवक्त्रनयनम्' इत्यनेन लब्धस्यापि पुनरुक्तिरादरेण तात्पर्यद्योतनार्था, सर्वदिगवस्थित-मुखमिति वा । 'रूपं दर्शयामास' इत्यनुषङ्गः ॥ ११ ॥

विश्वरूपस्य निरुपमस्यापि प्रत्यायनर्थम् अनन्तसूर्योपमत्वमुच्यते **दिवीति** । **दिवि** अन्तरिक्षे सूर्याणां सहस्रस्य = अनन्तस्य युगपदुत्थितस्य यदि **युगपदुत्थिता भाः** प्रभा या तर्हि **सा महात्मनः** विश्वरूपस्य **भासः** प्रभायाः कथञ्चित् **सदृशी स्यात्** । एवमनन्तसूर्योपमप्रभत्वमपि भगवतो न वास्तवम्, निरूपमत्वात् । किमर्थं तर्ह्येतदुच्यत इति चेत् 'पाकशासनविक्रमो दाशरथिः' इतिवत् प्रत्ययनार्थमेव । परमार्थतस्तु 'अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्ततेजाश्च ततस्ततोऽपि' इति शास्त्रात् सूर्यादेरपि विलक्षणो निरुपम एव भगवानिति भावः । 'एवंविधं रूपं दर्शयामास' इति पूर्वेणान्वयः ॥ १२ ॥

**गीता**

## तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
## अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥

***वि०वि०*—** तत्र रूपे । एकदेशे स्थितम् । अनेकधा प्रविभक्तम् । देवमनुष्यादिनानाभेदेन विकासेन चावस्थितम् । कृत्स्नं जगदपश्यत् ॥ १३ ॥

***सा०सं०*—** ततः किं जातमित्यत आह **तत्रेति** । भगवता प्रदर्शिते सति **देवदेवस्य शरीरे** विश्वरूपे । देवदानवमानवादिभेदेनानेकधा **प्रविभक्तम्** । **कृत्स्नं जगदेकस्थम्** एकदेशस्थम् । **तदाऽपश्यत्** ॥ १३ ॥

***अ०प्र०*—** ततः किं वृत्तमित्यपेक्षायां सञ्जय आह **तत्रेति** ।

हे धृतराष्ट्र ! तदा[१], पाण्डवः[२], अनेकधा[३], प्रविभक्तं[४], यत्कृत्स्नं[५], जगत्[६], देवदेवस्य[७], तत्र[८], शरीरे[९], तत्रापि एकस्थं[१०] अपश्यदित्यन्वयः ॥

तदा[1], पाण्डवः = अर्जुनः[2], अनेकधा = प्रविभक्तं नाम देव-मनुष्य-स्थावराद्यनेकभूतेषु अन्तर्यामित्वेन एकप्रकारेण पृथक्तया स्थितं[4], यत् कृत्स्नं = समस्तं जगत्[5], देवदेवस्य = देवानामपि अदृश्यस्य विश्वरूपस्य हरेः[7], तत्र = तस्मिन्[8], शरीरे[9], एकस्थं = तत्रापि एकस्थं[10] तदवयवत्वेन एकत्रावयवे सविशदमवस्थितं[10] अपश्यत्[11] ॥ १३ ॥

**गीता**

## ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
## प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

***वि०वि०—*** ततो दृष्ट्वा विश्वरूपानुवादव्याजेन स्तोतुमारभन्ते **तत इति** ॥ १४ ॥

***सा०सं०—*** दर्शनानन्तरं किमकरोदित्यत आह **तत** इति । दर्शनानन्तरम् ॥

***अ०प्र०—*** एवं दृष्ट्वा किं कृतवानित्यत आह **तत इति** ।

ततः[1], विस्मयाऽऽविष्टः[2], सः[3], धनञ्जयः[4], हृष्टरोमा सन्[5], कृताञ्जलिर्भूत्वा[6], शिरसा देवं[8], प्रणम्य[9], अभाषतेत्यन्वयः ।

ततः = विश्वरूपदर्शनानन्तरं[1], विस्मयाविष्टः = विस्मयेन आविष्टो व्याप्तः सात्त्विकसुखाविर्भावयुक्तः[2], सः = धनञ्जयोऽर्जुनः[4], हृष्टरोमा सन् = हृष्टानि उत्पुलकितानि रोमाणि यस्य स तथा आनन्दाद्यष्टभावैराप्लुत इत्यर्थः[5], कृताञ्जलिर्भूत्वा = सम्पुटीकृतहस्तो भूत्वा[6], शिरसा = उत्तमाङ्गेन[7], देवं = विश्वरूपधरं[8], प्रणम्य = भूमौ साष्टाङ्गं प्रणम्य[9], अभाषत = विज्ञापयामासेत्यर्थः ॥ १४ ॥

***भा०र०—*** ***गीताश्लोकद्वयार्थस्तु—***

ततः किमासीत् ? इत्यत उच्यते **तत्रेति** । तस्मिन् = भगवता प्रदर्शिते **देवदेवस्य शरीरे** विश्वरूपे । **अनेकधा** चेतनाचेतनभेदेन देवमानवादिभेदेन वा **प्रविभक्तं कृत्स्नं जगद् एकस्थम्** । एकदेशस्थितमेव तदाऽपश्यत् ॥ १३ ॥

दर्शनानन्तरं किमकरोत् ? इत्यत उच्यते **तत इति** । हृष्टानि = पुलकितानि रोमाणि यस्यासौ तथोक्त इति ॥ १४ ॥

**गीतातात्पर्यनिर्णयः**

**"आत्मानमव्ययम्", "परमं रूपमैश्वरम्", "सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम्" इत्यादिरूपविशेषणाच्च रूपस्येश्वरसाक्षात्स्वरूपत्वं, नित्यत्वं, तत एव चिदानन्दाद्यात्मकत्वं च सिद्धम् ।**

*प्रका०*— विश्वरूपाध्याये भगवत्स्वरूपं निरूप्यते कीदृशमित्यपेक्षायामाह **आत्मानमित्यादिना** ।

***न्या०दी०*— अत्र ध्यानार्थं विश्वरूपस्थितिरुच्यत इत्यध्यायप्रतिपाद्यस्य स्फुटं प्रतीयमानत्वादनुक्तिः । तत्र विश्वरूपस्य प्रागुत्तरं चादृष्टत्वात् तदानीमेव किञ्चित्प्रधानादिकं उपादानीकृत्य भगवता निर्मायार्जुनाय प्रदर्श्य विश्वरूपं नाशितमिति शङ्कां निवारयति आत्मानमिति ॥ दर्शयात्मानमव्ययमित्यात्मप्रदर्शनप्रार्थनानन्तरं दर्शयामास पार्थाय परमं रूपमैश्वरमिति विश्वरूपप्रदर्शनस्योक्तत्वात् विश्वरूपस्य साक्षादीश्वरस्वरूपत्वं सिद्धम् । अन्यथा प्रदर्शनस्य प्रार्थनाननुगुणत्वप्रसङ्गात् । देवमित्युक्त्या साक्षादपि तत्सिद्धम् । अव्ययं परमं सर्वाश्चर्यमयम् अनन्तं विश्वतोमुखम् इत्यादीश्वरविशेषणयुक्ततया विश्वरूपस्योक्तत्वाच्च तस्य साक्षादीश्वरस्वरूपत्वं सिद्धम् । साक्षादीश्वरस्वरूपत्वे च तस्य नित्यत्वं चिदानन्दाद्यात्मकत्वं च सिद्धम् । भगवतो नित्यत्वाच्चिदानन्दाद्यात्मकत्वात् । अतो विश्वरूपमचेतनोपादानकं निर्मायेत्युक्तमिति भावः ।**

*भा०दी०*— **ध्यानार्थमिति** । विष्टभ्याहमिति पूर्वत्र सङ्क्षेपेणोक्तस्य व्यासरूपोपासनस्य बुद्ध्यावनारोहेणाशक्यतया विस्तरेण श्रुते सत्येव ध्यानं सुशकमिति ध्यानार्थं प्रागुक्तव्यासरूपस्थितिः विस्तरेणात्र उच्यत इत्यर्थः । अनेन पूर्वानन्तरता च सिद्धेति भावः ॥ **प्रागुत्तरत्र चेति** । पूर्वोत्तरकाल(सम्बन्ध)मित्यर्थः । अग्रे साध्यत्रयोक्तेः केन किं सिद्धमित्यत आह **दर्शयेत्यादिना** ॥ **इत्युक्त्येति** । क्रीडादिगुण(क)त्वरूपभगवल्लक्षणोक्त्येत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**"मम देहे" इत्युक्तत्वाच्च आदित्यादीनां भेदः सिद्धः । "मे रूपाणि", "सर्वतोऽनन्तरूपम्", "द्रष्टुमिच्छामि ते रूपम्" इत्यादेश्च एकस्यैवाभिन्नानन्तरूपत्वं च ।**

*न्या०दी०*— **ननु विश्वमेव रूपं विश्वरूपम् । शशिसूर्यनेत्रमित्यादेः । अतः कथं साक्षाद्भगवत्स्वरूपं स्यादित्यत आह ममेति ॥ "पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा । मम देहे गुडाकेश" इत्यादिना विश्वस्य विश्वरूपाश्रितत्वेनोक्तत्वात् ततस्तस्य भेदसिद्धेर्युक्तं विश्वरूपस्य साक्षाद्भगवत्स्वरूपमिति भावः । शशिसूर्यनेत्रमित्यस्य शशिसूर्याश्रयनेत्रत्वमर्थः । ननु विश्वरूपस्यानन्तरूपसमुदायत्वात् न भगवत्स्वरूपत्वं युक्तम् । एकेनानेकभेदस्य विरुद्धत्वादित्यत आह मे रूपाणीति ॥ न विश्वरूपस्यानन्तरूपसमुदायत्वात् ईश्वररूपत्वायोगः । "पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।", "पश्यामि त्वां सर्वतोऽनन्तरूपम्" इत्यादेरनन्तरूपाणां प्रदर्शितत्वावगमाद् "द्रष्टुमिच्छामि ते रूपम्" इत्यादेरेकरूपप्रदर्शनस्यैव प्रार्थितत्वावगमाच्चैकस्यैव अनन्तरूपत्वसिद्धेः । न च एतद्विरुद्धम् । तेषामनन्तरूपाणामपि परस्परभिन्नत्वादिति भावः ।**

*भा०दी०*— मम देह इत्यस्य पूर्वेणाप्यन्वयमुपेत्याह "**मरुतस्तथा । मम देह**" इति ॥

**गीतातात्पर्यनिर्णयः**

**"एकं रूपं हरेर्नित्यमचिन्त्यैश्वर्ययोगतः ।**
**बहुसङ्ख्यागोचरं च विशेषादेव केवलम् ॥**
**अभावो यत्र भेदस्य प्रमाणावसितो भवेत् ।**
**विशेषो नाम तत्रैव विशेषव्यवहारवान् ॥**

*प्रका०*— "दर्शयात्मानमव्ययम्" इति प्रार्थनानन्तरं "दर्शयामास पार्थाय परमं रूपमैश्वरम्" इत्युक्तत्वात् रूपस्य भगवदात्मकत्वं सिद्ध्यति । भगवदात्मकत्वे रूपस्य दर्शयात्मानमिति प्रार्थनमसङ्गतमित्युत्तरं स्यात् । अव्ययं अनन्तं विश्वतोमुखमित्यादीश्वरलक्षणविशिष्टत्वादिरूपस्येश्वरात्मत्वं तत एव चिदानन्दाद्यात्मकत्वं सिद्ध्यति न चात्र विश्वमीश्वररूपमुच्यते । पश्यादित्यानित्यादिवचनविरोधात् । "इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् । मम देहे गुडाकेशे"त्यादिना जगतो भगवद्देहगतत्वेनोक्तत्वात् । तच्चेश्वरमेकमपि अनेकरूपात्मकं द्रष्टुमिच्छामीति रूपमित्यारभ्य "पश्यामि पार्थ रूपाणि शतशोऽथ सहस्रशः" इत्युक्तत्वात् । "अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपमित्युक्तत्वात् । अन्यथा एकं द्रष्टुमिच्छतोऽनेकरूपप्रदर्शनमसङ्गतं स्यात् । तदेतत् व्युत्पादयति **एकं रूपं** इत्यादि ब्रह्मतर्कवचनेन ।

***न्या०दी०***— अनन्तरूपाण्यभिन्नानीत्ययुक्तम् । रुपाणामैक्येऽनन्तत्वायोगादित्याशङ्कां ब्रह्मतर्कवाक्येन परिहरति **एकमिति** ॥ ''विशेषादेव केवलम्'' इत्युपपादकान्तरम् । भेदाभावे कथं विशेषमात्रेण व्यवहारविशेष इत्यत आह **अभाव इति** ॥ यत्र वस्तुनि भेदाभावः प्रमाणावसितो भवेत् तत्र व्यवहारविशेषनिर्वाहक एव हि विशेषो नामतः । अतो विशेषादेव प्रमाणावसितभेदाभावेषु भगवद्रूपेषु व्यवहारविशेषो युक्त इति भावः । भेदाभावेऽपि विशेषादेव भगवद्रूपेषु व्यवहारविशेषो भवति चेत् गवाश्वादावपि विशेषादेव व्यवहारविशेषः स्यादित्यतो वाऽऽह **अभाव इति** ॥ यत्र भेदाभावः प्रमाणावसितो भवेत् तत्रैव विशेषो व्यवहारविशेषनिर्वाहकोऽङ्गीक्रियते । गवाश्वादौ तु भेदस्यैव प्रमाणावसितत्वात् न व्यवहारविशेषनिबन्धन इति भावः ।

***भा०दी०***— **उपपादकान्तरमिति** । अचिन्त्यैश्वर्ययोगत्वापेक्षयेत्यर्थः ॥ **विशेषत इति** । विशेषवत इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

### विशेषोऽपि स्वरूपं स स्वनिर्वाहक एव च ।

***प्रका०***— हरेरेकं रूपं रूपाणीति बहुवचनगोचरतां गच्छति । अचिन्त्यत्वात् विशेषबलाच्च भेदरहितेषु व्यवहारनिर्वाहकत्वात् विशेषस्यापि विशेष्यस्वरूपत्वात् विशेषविशेष्यव्यवहारोऽपि विशेषनिबन्धनः विशेषस्य विशेष्यात्स्वतोऽन्यविशेषाभावेऽपि स्वनिर्वाहकत्वात् विशेषित्वं युज्यते । स्वनिर्वाहकत्वाद्विशेषस्य द्रव्यरूपेण सर्वदावस्थानं विशेषरूपेण कादाचित्कत्वं च युज्यते । एवं कादाचित्कः क्वचित् स्थायीति विविधो विशेषः तथा देवदत्तस्यासनम् शयनमुत्थानमित्येवमादिको विशेषः कादाचित्क इत्यर्थः ।

***न्या०दी०***— नन्वयं विशेषो विशेषिणो भिन्नोऽभिन्नो वा ? आद्ये भेदानवस्था । द्वितीये विशेषविशेषिव्यवहारो न स्यात् । न च तत्र विशेषादेव व्यवहारविशेषनिर्वाहः । विशेषानवस्थाप्रसङ्गात् इत्यत आह **विशेषोऽपीति** ॥ विशेषोऽपि विशेषिस्वरूपमतो न भेदानवस्था । भेदाभावेऽपि विशेषादेव विशेषव्यवहारसिद्धिः । विशेषस्य स्वस्यैव स्वस्मिन् व्यवहारविशेषनिर्वाहकत्वेन विशेषान्तरानङ्गीकारात् न विशेषानवस्थाऽपीति भावः ।

*भा०दी०*— **न च तत्रेति** । विशेषविशेषिणोर्भेदाभावेऽप्ययं विशेषी विशेषोऽयमिति व्यवहारो विशेषान्तरादित्यर्थः । **विशेषव्यवहारेति** । अयं विशेषोऽयं विशेषीति व्यवहारेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**द्रव्यात्मना स नित्योऽपि विशेषात्मैव जायते ॥**

***न्या०दी०*— तमेव विशेषं विभज्य निरूपयति द्रव्येति ॥ एतच्च चेतनाचेतनसाधारणं वाक्यं यथाक्रमं योजनीयम् । चेतने कश्चिद्विशेषो जायते, कश्चिन्नित्य इत्येवं विशेषो द्विविधो भवति । न च वाच्यं द्रव्यात्मकत्वेन विशेषस्य नित्यत्वान्न जननमिति । चेतनद्रव्यात्मकत्वेन नित्यस्यापि व्यक्तिविशेषविवक्षाया जननोक्तिसम्भवात् । अचेतने च विशेषिद्रव्यस्यैव विशेषोपादानत्वात् उपादानविशेषिद्रव्यात्मनाऽयावद् द्रव्यभाव्यपि कार्यरूपेण कश्चिद्विशेषो जायते । कश्चिद् यावद्द्रव्यभावीति द्विविधो विशेष इति भावः ।**

*भा०दी०*— तामेव योजनामाह **चेतन इति** ॥ **विशेषोपादानत्वादिति** । विशेषं प्रत्युपादानकारणत्वादित्यर्थः । अयावद्द्रव्यभाव्यपि इति विभागः ॥ **कार्येति** । विशेषकार्यरूपेणेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**नित्या एव विशेषाश्च केचिदेवं द्विधैव सः ।**
**वस्तुस्वरूपमस्त्येवेत्येवमादिष्वभेदिनः ॥**

*प्रका०*— स्थायिविशेषं वस्तुषूदाहरति **वस्त्विति** । वस्तुस्वरूपत्वास्तित्वादयो विशेषा द्रव्येण अत्यन्ताभेदिनः । एवं स्थायिविशेषः । कादाचित्कविशेषश्च सर्ववस्तुषु अनुभवसिद्धः इत्यर्थः ।

***न्या०दी०*— चेतनाचेतनयोः प्रत्येकं द्विविधविशेषान् तत्तत्स्थलेषु उदाहरति वस्त्विति ॥ चेतनवस्तुस्वरूपमस्तीत्यत्र चेतनत्ववस्तुत्वस्वरूपत्वास्तित्वविशेषा नित्याभिव्यक्ताः । चेतनः करोति भुङ्क्ते गच्छतीत्यत्र करणगमनभोजनविशेषा व्यक्तयव्यक्तियुताः। ते द्विविधा अपि विशेषिणाऽत्यन्ताभेदिनः । तथा चूतफलस्वरूपमस्तीत्यत्र चूतत्वफलत्वादिविशेषा यावद्द्रव्यभाविनो विशेषिणाऽत्यन्ता भिन्नाः । पीतं चूतफलमित्यत्र पूतत्वादिविशेषाः कादाचित्का विशेषिणा भिन्नाभिन्ना इति भावः ।**

**गीतातात्पर्यनिर्णयः**

**विशेषोऽनुभवादेव ज्ञायते सर्ववस्तुषु ।**
**न चाविशेषितं किञ्चिद् वाच्यं लक्ष्यं तथा मितम् ॥**
**विशिष्टस्य स्वतोऽन्यत्वे स्वस्यामेयत्वहेतुतः ।**
**नैव ज्ञेयं विशिष्टं च मानाभावाच्च नो भवेत् ॥**

*प्रका०*— तदेतत् स्फुटीकरोति **न च अविशेषितमिति** । विशिष्टात्मतयैव वस्तुप्रतीतिः नान्यथा अतो विशिष्टादन्यत्वे विशेष्यस्वरूपस्य अज्ञेयत्वं स्यात् । जायमानो विशिष्टाकारः कस्येत्युक्ते विशेष्यस्वरूपस्येति व्यवहारो न स्यात् । अज्ञातस्य व्यवच्छेदकत्वाभावात् । अमेयत्वादेव विशेष्यस्वरूपस्याभावश्च स्यात् ।

***न्या०दी०*— एवंविधविशेषसद्भावे किं मानमित्यत आह विशेष इति ॥ तदेव स्फुटीकरोति न चेति ॥ ननु वस्तुनि यावान् विशिष्टाकारस्तस्य विशेष्यस्वरूपादन्यत्वेन विशेष्यस्वरूपस्य निर्विशेषत्वात् कथं विशेषः सर्ववस्तुषु ज्ञायत इत्युक्तमित्यत आह विशिष्टस्येति ॥ भवेदेतद्यदि विशिष्टं विशेष्यस्वरूपादन्यद् भवेत् । न चैतदस्ति । विशिष्टस्य विशेष्यस्वरूपादन्यत्वे विशेष्यस्वरूपस्यामेयत्वप्रसङ्गात् । विशेषवत्येव प्रमाणप्रवृत्तेरुक्तत्वात् । विशेष्याज्ञाने च विशिष्टाज्ञानं च प्रसज्यते । व्यावर्तकाज्ञाने व्यावर्त्यस्य सम्यग् ज्ञातुमशक्यत्वात् । विशेष्यस्य विशिष्टव्यावर्तकत्वादिति भावः । विशेष्यस्वरूपस्यामेयत्वे बाधकान्तरं चाह मानेति ॥ वस्तुसिद्धेर्मानाधीनत्वाद् विशेष्यस्वरूपस्यामेयत्वे तदभावश्च स्यादिति भावः ।**

*भा०दी०*— **उक्तत्वादिति** । न चाविशेषितं किञ्चिन्मि(न्म)तमिति पूर्ववाक्ये अर्थादुक्तत्वादित्यर्थः । यद्वा स्वरूपस्य च सिद्धत्वाद् व्यर्थैव श्रुतिरित्यादिना द्वितीये उक्तत्वादित्यर्थः ॥ **विशेष्यस्य विशिष्टव्यावर्तकत्वादिति** । ज्ञायमानोऽयं नीलः पीतो दण्डीत्यादिविशिष्टाकारः कस्येत्युक्ते चैत्रस्येत्याद्युक्तेरिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**स्वयमित्यपि हि स्वत्वविशेषेण विवर्जितम् ।**
**न ज्ञेयं तद्विशेष्यं च तथैवेत्यनवस्थितिः ॥**

*प्रका०*— स्वरूपत्वविशेषणविशिष्टस्वरूपमपि विशिष्टमेव ज्ञायते । स्वरूपत्वविशेषणविशिष्टादन्यत् विशेष्यस्वरूपमित्युक्ते तदप्येवं स्वरूपत्वविशेषणविशिष्टमिति तद्विशिष्यस्वरूपमन्यदित्यनवस्था स्यादित्यर्थः ।

***न्या०दी०*— इतोऽपि न विशेष्यस्वरूपं निर्विशेषमित्याह स्वयमिति ॥ यद्विशेष्यस्वरूपं तस्य तावद्विशेष्यस्वरूपत्वं विशेषोऽङ्गीकार्य एव । विशेष्यस्वरूपत्वविशेषवर्जितस्य विशेष्यस्वरूपमिति ज्ञातुं व्यवहर्तुं वाऽशक्यत्वात् । अतो विशेष्यस्वरूपमपि न निर्विशेषमिति भावः । ननु यद्विशेष्यस्वरूपत्वविशेषविशिष्टं तस्मिन् विशिष्टे यद्विशेष्यस्वरूपं तद्विशिष्टादन्यदेव । अतो निर्विशेषमेवेत्यत आह तदिति ॥ यत्तस्मिन् विशिष्टे विशेष्यस्वरूपं तद्विशिष्टादन्यदपि विशेष्यस्वरूपत्वविशेषसहितमेव । अतो न निर्विशेषमिति भावः । तस्मिन्नपि विशिष्टे यद्विशेष्यस्वरूपं तद्विशिष्टादन्यदेव । अतो निर्विशेषमित्यङ्गीकारेऽनवस्थामाह इतीति ॥**

*भा०दी०*— **तस्मिन्विशिष्ट इति** । विशेष्यस्वरूपत्वविशिष्टे इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**अभेदे न विरोधोऽस्ति ज्ञाताज्ञातं यतोऽखिलम् ।**
**तदेव ज्ञातरूपेण ज्ञातमज्ञातमन्यथा ॥**

*प्रका०*— ननु विशेषणविशेष्यस्वरूपयोरभिन्नत्वे विशेष्यस्वरूपवत् विशिष्टाकारस्य विज्ञातत्वापातात् । विशेष्यस्वरूपमनूद्य किं विशिष्टमिति प्रश्नः न युक्तः स्यादित्याशङ्क्याह **अभेद इति** ।

***न्या०दी०*— यथा विशिष्टविशेष्यस्वरूपयोर्भेदाभ्युपगमेऽनवस्थोच्यते तथा तयोरभेदाङ्गीकारेऽपि तत्प्राप्तौ सोऽपि पक्षस्त्याज्य एव स्यात् । विशिष्टविशेष्यस्वरूपयोरभेदे च विशेष्यस्वरूपज्ञाने विशिष्टाकारस्यापि ज्ञातत्वप्रसङ्गेन विशेष्यस्वरूपानुवादेन विशिष्टाकारप्रश्नानुपपत्तिः स्यादित्यत आह अभेद इति ॥ एकमेव वस्तु अनूद्याकारेण ज्ञातं पृच्छ्यमानाकारेणाज्ञातमिति प्रत्येकमखिलवस्तूनां ज्ञातत्वाज्ञातत्वात् न प्रश्नानुपपत्तिः । विशिष्टाकारस्य विशेष्यस्वरूपाभिन्नत्वेन न भेदसापेक्षानवस्थाऽपीति भावः ॥**

*भा०दी०*— **तत्प्राप्ताविति** । अनवस्थादिदोषप्राप्तावित्यर्थः ॥ **प्रश्नानुपपत्तिरिति** । चैत्रः किंविशिष्ट इति प्रश्नायोग इत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**अभिन्नस्य विशिष्टत्वान्न दोषद्वयमप्युत ।**
**एकत्वानुभवाच्चैव विशेषानुभवादपि ॥**

*प्रका०*— विशिष्टविशेष्यस्वरूपयोरभिन्नत्वात् अनवस्थादोषो न विद्यते । विशेषसद्भावात् प्रश्नासम्भवदोषश्च न विद्यते इत्यर्थः ।

*न्या०दी०*— **अभिन्नस्य विशिष्टत्वादिति** ॥ यद्विशेष्येणाभिन्नं तत्स्वरूपं तस्यैव विशिष्टत्वादित्यर्थः । विशिष्टविशेष्ययोरत्यन्ताभेदे कथमाकारभेदेनापि ज्ञातत्वाज्ञातत्व-मित्याशङ्कां परिहरन्नुक्तं विवृणोति **एकत्वेति** ॥ विशिष्टविशेष्ययोरेकत्वानुभवात् नान-वस्थादोषः । अभेदेऽपि विशेषानुभवात् तद्बलेनैकस्यैव ज्ञातत्वाज्ञातत्वानुभवात् न प्रश्ना-सम्भवदोषोऽपीत्यर्थः ।

*भा०दी०*— अभिन्नमित्यस्यार्थः तत्स्वरूपमिति ।

**गीतातात्पर्यनिर्णयः**

**तज्ज्ञानानुभवाच्चैव न दोषद्वयसम्भवः ।**
**भेदाभेदौ च तौ नैव कर्तृभोक्तृविशेषणे ॥**

*प्रका०*— भेदाभेदावेव सर्वत्र युक्तौ विशिष्टविशेष्ययोः न त्वत्यन्ताभेदः कुत्रापीति न वाच्यम् । अहं कर्तेत्यादिषु अत्यन्ताभेददर्शनात् इत्याह **भेदाभेदौ चेति** ।

*न्या०दी०*— ननु विशिष्टविशेष्ययोः भेदाभेदौ किं न स्याताम् । तथात्वे भेदेन प्रश्नासम्भवस्य परिहर्तुं शक्यत्वादभेदेनानवस्थादेश्च परिहर्तुं शक्यत्वादिति चेत् । किं विशिष्टविशेष्ययोः क्वचिद्भेदाभेदावङ्गीक्रियेते उत सर्वत्रापि ? आद्ये सम्प्रतिपत्तिः । अयावद्द्रव्यभाविविशेषणविशिष्टस्य विशेष्येण भेदाभेदाङ्गीकारात् । द्वितीयं दूषयति **भेदा-भेदाविति** । तौ परेणाङ्गीकृतौ । सर्वत्र विशिष्टविशेष्ययोरिति शेषः ॥ **कर्तृभोक्तृविशेषण इति** । कर्तृत्वभोक्तृत्वे विशेषणे यस्य विशिष्टस्य तस्मिन्नित्यर्थः । कर्तृत्वभोक्तृत्वादि-यावद्द्रव्यभाविविशेषणविशिष्टविषये कर्ता भोक्ता मदन्योऽहं चेति विशेषेण भेदाभेदानु-भवाभावादिति भावः । एतेन कर्तृभोक्त्रादिविशिष्टविशेष्ययोरभेदप्रतिपादनेनैव यदुक्तं

**चेतनविशेषाणामाविर्भावतिरोभाववतां कर्तृत्वादीनां विशेषिणाऽभिन्नत्वं तदपि समर्थितं भवति ।**

*भा०दी०*— अनवस्थादेश्चेत्यत्र आदिपदेन विशेष्यस्य निर्विशेषत्वं अज्ञातत्वम्, अत एव तदसत्त्वमिति दोषत्रयस्य ग्रहः ॥ **अहं चेति** । अन्य इति योज्यम् ॥ **यदुक्तमिति** । द्रव्यात्मना स नित्योऽपीत्यत्रेति योज्यम् ॥ **समर्थितमिति** । मदन्य इत्यनुभवाभावस्योक्तत्वादिति भावः ॥

**गीतातात्पर्यनिर्णयः**

**मदन्य इत्यनुभवो यतो नैवास्ति कस्यचित् ।**
**भेदो विशेषणस्यापि नान्तरस्य क्वचिद् भवेत् ॥**
**शुद्धस्वरूप इत्यादावभेदस्यैव दर्शनात् ।**
**अपृथग्दृष्टिनियमाद् बलज्ञानादिकस्य च ॥**

*प्रका०*— कर्ताऽहमन्यश्चासावित्यनुभवाभावात् । कर्तृत्वभोक्तृत्वविशेषणवच्छुद्धस्वरूपो मुक्तता । अत्र शुद्धस्वरूपत्वादिविशेषणस्य विशेष्येणाभेद एव आन्तरविशेषणत्वेनाभेददर्शनात् । तथा बलज्ञानादिविशेषणस्यापि विशेष्येणात्यन्ताभेदः पृथग्दृष्ट्यभावात् यथा शुक्लः पट इत्यत्र शौक्ल्येनात्यन्ताभेदः पटस्य दृश्यते न त्वौपाधिकेन काार्ष्ण्येन । एवं देहोपाधिकधर्माणामुपाधिनिवृत्तौ निवर्तमानानां जीवाभेदः ।

**न्या०दी०— अथ नित्याभिव्यक्तानां स्वरूपत्वादीनां चाभेदं साधयति भेद इति ॥ नित्याभिव्यक्तस्येति शेषः । आन्तरस्येति ॥ देहोपाधित्वं विना चेतनगतस्येत्यर्थः । शुद्धस्वरूप इत्यादौ शुद्धस्वरूपत्ववस्तुत्वादीनां नित्याभिव्यक्तविशेषाणां शुद्धस्वरूपो मुक्त इति सामानाधिकरण्येनाभेदस्यैव दर्शनाद्विशिष्टविशेष्ययोरभेदे विशेषणाभेदस्य नियतत्वादिति भावः । आविर्भावतिरोभाववतां कर्तृत्वादिविशेषाणां विशेषिचैतन्यैक्यमर्थतः पूर्वं सिद्धम् । अथ गुणत्वेन पराभ्युपगतानां तादृशानामेव ज्ञानादिविशेषाणामपि विशेष्यैक्यं साधयति अपृथगिति ॥ पृथक्त्वेन दर्शनाभावनियमादित्यर्थः ।**

*भा०दी०*— **नित्याभिव्यक्तानाम्** धर्मिणा सहैव ज्ञातानामित्यर्थः ॥ **आविर्भावतिरोभावेति** । कादाचित्कप्रतीतिकानामित्यर्थः ॥ **पूर्वमिति** । भेदाभेदौ च तौ नैव कर्तृभोक्तृविशेषणे । मदन्य इत्यनुभवो यतो नैवेत्युक्तेरर्थादैक्यं सिद्धमित्यर्थः । तादृशानां आविर्भावतिरोभाववताम् इत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**ऐक्यं बाह्यविशेषाणां पृथग्दृष्टचैव तन्न तु ।**

*न्या०दी०*— ननु यथोच्यते शुद्धस्वरूप इत्यादि यथा च कर्ता भोक्ता बलवान् विद्वानिति तथा कृष्णः स्थूल इत्यादि चोच्यते । अतो देहनिमित्तानां कार्ष्ण्यादिविशेषाणामपि चैतन्यैक्यं स्यादित्यत आह **बाह्येति** । नास्माभिरुभयविधविशेषविशिष्टविशेष्ययोः सामानाधिकरण्यमात्राद्विशेषाणां चैतन्यैक्यमुच्यते । किन्तु भेदादर्शने सति सामानाधिकरण्येन । न चात्र कृष्णदेवदत्तयोः भेदादर्शनं, येन च कार्ष्ण्यं देवदत्तस्वरूपं स्यात् । भेदस्यैव दृष्टत्वादिति भावः ।

*भा०दी०*— **उभयविधविशेषेति** । स्वाभाविकान्योपाधिकरूपोभयविधविशेषेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**विशेषहेत्वभावेऽपि द्वैविध्यं कल्प्यते यदि ।**
**कल्पनागौरवाद्यास्तु दोषास्तत्रातिसङ्गताः ॥**

*प्रका०*— अत्रात्मनः कर्तृत्वभोक्तृत्वादिरौपाधिको भिन्नधर्मः, ज्ञानादिः स्वाभाविकधर्म इति निर्हेतुककल्पनं, कल्पनागौरवानुभवविरोधोपहतम् । ज्ञानमौपाधिकं भिन्नधर्मः स्यात् अविशेषादित्यतिप्रसङ्गोपहतं च । तदेतदाह **विशेषेति** ।

*न्या०दी०*— एके तु शुद्धस्वरूपत्वादीनां नित्याभिव्यक्तानामेव विशेषाणां चैतन्यैक्यं, न तु कर्तृत्वादीनामिति मन्यन्ते । तान् निराकरोति **विशेषेति** ॥ शुद्धस्वरूपत्वादीनामेव चैतन्यैक्यं न तु कर्तृत्वादीनामिति द्वैविध्यं किं यत्किञ्चिद्धेतुबलेन कल्प्यते तद्विना वा ? नाद्यः । तददर्शनात् । न द्वितीयः । कर्तृत्वादीनामप्यैक्योपपत्तौ वृथा द्वैविध्यकल्पने कल्पनागौरवप्रसङ्गात् । अप्रामाणिकप्रमाणविरुद्धकल्पनप्रसक्तेश्च । यदि कल्पनागौरवादिदोषानङ्गीकृत्यापि कर्तृत्वादीनां भिन्नत्वमुच्यते तर्हि शुद्धस्वरूपत्वादयोऽपि विशेषा भिन्ना एवेत्यतिप्रसङ्गः स्यात् । परस्य दोषभयाभावादिति भावः । एवं चेतने विशेषादेरत्यन्ताभेदः समर्थितः । तन्न्यायेनाचेतनेऽपि यावद्द्रव्यभाविनो विशेषादेर्विशेषिणाऽत्यन्ताभेदो द्रष्टव्यः ।

*भा०दी०*— **विशेषादेः** इत्यादिपदेन विशिष्टाकारग्रहः ॥

**गीतातात्पर्यनिर्णयः**

**नैकत्वं नापि नानात्वं नियमादस्त्यचेतने ।**
**भेदाभेदावनुभवादतस्तत्रान्यथागतेः ॥**

*प्रका०*— चेतनेष्वेव त्वगुणादिभिर्भेदाभेदाभावेनैकप्रकारत्वं नाचेतनेषु तत्र भेदाभेदयोरनुभवसिद्धत्वात् । अन्यथा गत्यभावादित्याह **नैकत्वमिति** ।

***न्या०दी०*— अयावद्द्रव्यभाविविशेषस्य यौ भेदाभेदावुक्तौ तौ समर्थयति नैकत्वमिति । एकत्वं नानात्वं च नास्तीत्युक्तेऽनिर्वचनीयत्वशङ्का स्यात् । तन्निरासाय नियमादित्युक्तम् । अत एकैकस्याभावादिति भावः । अनुभवादन्यथा गत्यभावाच्च नैकत्वम्, नापि नानात्वमिति सम्बन्धः ।**

*भा०दी०*— **भेदाभेदावुक्ताविति** । भेदाभेदौ च तौ नैव कर्तृभोक्तृविशेषण इत्युक्त्या कर्तृत्वादिविशेषणेतरविशेषणे अर्थाद्भेदाभेदौ प्राप्तौ इत्युक्तावित्युक्तं, उक्तप्रायावित्यर्थः ॥ **समर्थयति इति** । अनुदात्तेत्त्वनिबन्धनमात्मनेपदमनित्यमिति चक्षिङो ङित्करणेन ज्ञापनात् समर्थयतीति साधु । अत एव "प्रार्थयन्ति शयनोत्थितं प्रियाः" इति रघुवंशे प्रयोगः । अत इत्यस्य व्याख्या **एकैकस्येति** । भेदमात्रस्याभेदमात्रस्य वेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**एकोऽहमन्यतोऽन्यश्चेत्येवमेव व्यवस्थितौ ।**
**भेदाभेदौ चेतनेषु तस्मान्नैकप्रकारता ॥**

*प्रका०*— गत्यन्तराभावेन एतदेव प्रतिपादयति **एकमित्यादिना** ।

***न्या०दी०*— ननु चेतनेऽपि भेदाभेदसद्भावेन चेतनाचेतनयोरेकप्रकारत्वात् अचेतन इति किं विशिष्याभिधीयत इत्यत आह एक इति । अहं मदभिन्नो घटादेर्भिन्न इति चेतने भिन्नप्रतियोगिकावेव भेदाभेदावनुभूयेते । अचेतने त्वेकप्रतियोगिकावेव । अतो न चेतनाचेतनयोरेकप्रकारतेत्यर्थः ।**

**गीतातात्पर्यनिर्णयः**

एकमित्येव यज्ज्ञातं बहुत्वेनैव तत् पुनः ।
पटाद्यं ज्ञायते यस्माद् भेदाभेदौ कुतो न तत् ॥

*प्रका०*— तन्तूनां परस्परभेदेन पटरूपेणाभेदात् तन्तुभ्योऽन्यस्य पटस्यादर्शनात् पटोत्पत्तेः प्राक्केवलतन्तूनां सद्भावात् तन्तूपटयोर्भेदाभेदौ युक्तौ । कर्ताऽहं ज्ञाताऽहमित्यादौ एकैकविशेषेणाभेद आत्मनो दृश्यते । न च तद्वदेकैकस्मिन् तन्तौ पटपदप्रयोगोऽस्ति । एवं तन्तोरपि स्वावयवभेदाभेदौ तन्त्वयवयवस्यापि स्वावयवभेदाभेदौ इत्यनवस्थितिरेवानुभवसिद्धा । न च परमाणुर्निरवयवः इति वाच्यम् । पूर्वापरादिभागभेदेन तस्य सावयवत्वावगमात् । न च पूर्वादिदिगुपाधिसम्बन्धवशात् परमाणोः पूर्वापराद्यविद्यमानभागकल्पनमिति वाच्यम् । निरवयवस्योपाधिसम्बन्धासम्भवात् कृत्स्न-परमाणौ सम्बध्यमानोपाधेर्भागवत्वासम्भवेन सिद्धैकदेशसम्बन्धस्यावश्यम्भावित्वात् । एवं पूर्वा-परादिभेदेन सांशत्वं रूपादिधर्मस्याप्यपरिहरमित्यर्थः ।

**न्या०दी०— कथमचेतने भेदाभेदावनुभवसिद्धावित्यतः तन्त्वाद्यवयवेभ्यः पटाद्यव-यविनो भेदाभेदसद्भावेऽनुभवकथनेन तन्त्वादीनां पटत्वादिविशेषैर्भेदाभेदसद्भावेऽनुभवः प्रदर्शित एव भवतीति मन्वान आह एकमिति ॥ तन्तूनां पटरूपेणैकत्वस्य परस्परं भेदस्य चानुभवादेकैकतन्तोः पटेन भेदाभेदावनुभूयेते । एकैकतन्तोः पटेनात्यन्ताभेदेऽन्योन्यभेदा-नुभवायोगादिति भावः ।**

*भा०दी०*— नन्वचेतने विशेषविशेषिणोः भेदाभेदादावनुभवे पृष्टे तन्तुपटयोरस्तदनुभवोक्ति-रसङ्गतेत्यतरस्तां सङ्गमयति **तन्त्वाद्यवयवेभ्य** इत्यादिना ।

**गीतातात्पर्यनिर्णयः**

**तन्तुभ्योऽन्यः पटः साक्षात् कस्य दृष्टिपथं गतः ।**
**अनन्यश्चेत् तन्तुभावे पटाभावः कुतो भवेत् ॥**

**न्या०दी०— गत्यन्तराभावं चाह तन्तुभ्य इति ॥ यद्येकैकतन्तोः पटोऽत्यन्तभिन्न-स्तर्ह्येकैकतन्तुभ्यः पटः पृथक् दृश्येत । न चैतदस्ति । नाप्येकैकतन्तुना पटोऽत्यन्ता-भिन्नः । यथा स्वसंस्थानविशेषणावस्थितैकैकतन्तुभावे पटाभावानुपपत्तेरिति भावः ।**

*भा०दी०*— एकैकतन्तोः इति पञ्चमी ।

**गीतातात्पर्यनिर्णयः**

**न चात्मनि विशेषोऽत्र दृष्टान्तत्वं गमिष्यति ।**
**शुद्धोऽहंप्रत्ययो यस्मात् तत्राभेदप्रदर्शकः ॥**

*न्या०दी०*— सर्वावयवसमुदायस्य स्वयमबहुत्वात् तद्भावेऽवयव्यभावाभावात् संस्थानविशेषेणावस्थितानामेवावयवत्वात् अवयविनाऽत्यन्ताभेदो द्रष्टव्यः । यथाऽऽत्मगतानां कर्तृत्वादिविशेषाणां बहुत्वेऽप्येकेन आत्मना अत्यन्ताभेदः तथा बहुत्वेऽपि तन्तूनां एकेन पटेन अत्यन्ताभेदः किं न स्यादित्यत आह **न चेति** । किमनेनोक्तस्य व्यभिचारश्चोच्यते उतात्मगतविशेषदृष्टान्तेन जडेऽप्यत्यन्ताभेदसाधनमात्रम् ? नाद्यः । अत्र कर्तृत्वादीनां बहुत्वाभावात् । व्यवहारविशेषस्य स्वनिर्वाहकविशेषेणैवोपपत्तेरुक्तत्वात् । नापि द्वितीयः । कर्ताऽहं भोक्ताऽहमित्येकैकविशेषविशिष्टस्यात्मनो भेदानुभवेनैकैकविशेषस्यापि केवलाभेदानुभवात् । एकैकस्मिंश्च तन्तौ पटप्रत्ययाभावादिति भावः ।

*भा०दी०*— मूलानुक्तं स्वयमाह **सर्वावयवसमुदायस्येति** । यद्वा तन्तुभ्योऽन्य इत्यर्थस्यैव संस्थानविशेषापन्नेभ्य इत्यर्थमुपेत्येयमुक्तिः ॥ **अबहुत्त्वादिति** । बहुत्वे हि एकत्वबुद्धिविषयपटेन अभेदो न युक्तः स्यादिति भावः । **तद्भावे** समुदायभावे ॥ **अवयविनेति** । संस्थानविशेषापन्नतन्तूनामवयवत्वेन व्यवहारभाजामेव अवयवित्त्वादिति भावः । एकैकतन्तुनाऽपि पटस्याभेद एव किं न स्यात्किं भेदाभ्युपगमेन । न च तेषां बहुत्वादेकेन पटेनाभेदायोगः । दृष्टान्तबलेन स्यादिति शङ्कते **यथाऽऽत्मगतानामिति** ॥ **उक्तस्येति** । अबहुत्वादेकेन पटेनात्यन्ताभेद इत्युक्तस्येत्यर्थः ॥ **उक्तत्वादिति** । द्रव्यात्मना स नित्योऽपीत्यादिव्याख्यावसर इति भावः ॥

**गीतातात्पर्यनिर्णयः**

**अत्रावयवभेदेन स्यादेव ह्यनवस्थितिः ।**
**न चानवयवं वस्तु क्वचित् स्यान्मानगोचरम् ॥**

*न्या०दी०*— किमचेतने पटादावन्त्यावयविन्येव अवयवावयविनोर्भेदाभेदाविति ? नेत्याह **अत्रेति** ॥ अचेतने पटादौ स्वावयवैर्भेदाभेदौ तदवयवस्यापि स्वावयवैर्भेदाभेदावित्येवम् अपर्यवसानमेव भवेदित्यर्थः । परमाणोर्नित्यत्वेन तत्र पर्यवसानसम्भवात् कथमनवस्थितिरित्यत आह **न चेति** ॥

*भा०दी०*— **अन्त्यावयविन्येवेति** । द्रव्यान्तरानारम्भके वस्तुनीत्यर्थः ॥ **भेदाभेदाविति** । एकैकावयवेनेति भावः ।

**गीतातात्पर्यनिर्णयः**

**पूर्वापरादिभेदेन यतोंऽशोऽस्यावगम्यते ।**
**उपाधिरप्येकदेशसम्बन्धः सन्तमेव हि ॥**

***न्या०दी०*—** न केवलं निरवयवत्वे प्रमाणाभावात् परमाणोः सावयवत्वम् । अपि तु पूर्वापरादिभागभेदेन सावयवत्वावगमाच्चेत्याह **पूर्वेति** ॥ स्वतः परमाणोरवयवाभावेऽपि पूर्वादिदिगुपाधिकृतावयवसद्भावात् तद्विषयोऽसाववगम इति चेत् किमुपाधिः परमाणोरेक-देशसम्बद्धो भवेत् तर्ह्येकदेशस्य प्रागेव सत्त्वात् प्रागेव सन्तमवयवभेदं ज्ञापयेदित्येव प्राप्तमित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**ज्ञापयेद् भेदमखिलं ग्रसन् स विभजेत् कथम् ।**
**तस्माद् गुणादिकमपि नास्त्यनंशतया क्वचित् ॥**

***न्या०दी०*—** द्वितीयं दूषयति **अखिलमिति** ॥ ननु गुणादीनां निरवयवत्वात् कथं "न चानवयवं वस्तु क्वचित् स्यात्" इत्युच्यत इत्यत आह **तस्मादिति** ॥ पूर्वापरादि-भागभेदेन अंशावगमादौपाधिकांशस्य निरस्तत्वादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**भावाभावव्यवहृतेर्विद्यमानेऽपि वस्तुनि ।**
**भेदाभेदौ गुणादेश्च जडे वस्तुनि संस्थितौ ॥**

***प्रका०*—** जडद्रव्यस्यावयवेन भेदाभेदवत् क्वचित् सति द्रव्ये सन्ततमुच्छिद्यमानेन गुणादिना भेदाभेदावङ्गीकर्तव्यौ । न च सुप्तौ बलादेरुच्छेदात्तेनापि चेतनस्य भेदाभेदाविति वाच्यम् । सुप्तोऽयं बलवान्विद्वानित्यादि व्यवहाराच्छक्तिरूपेण बलादेरङ्गीकारात् । पक्वचूतफले रक्तश्याममिदमिति व्यवहाराभावात् जडधर्मस्यासन्ततमुच्छिन्नस्य शक्तिरूपेणावस्थानमङ्गीक्रियते । तदाह **भावाभावे-ऽपीति** ।

***न्या०दी०*—** एवमवयवावयविनोर्भेदाभेदसमर्थनेन पटत्वादीनामयावद्द्रव्यभाविनां विशेषाणां तन्त्वादिविशेषिणा भेदाभेदौ समर्थितौ । अथ गुणादित्वेन पराभ्युपगतानाम्

अयावद्द्रव्यभाविनां रूपादिविशेषाणां तन्त्वादिविशेषिणा भेदाभेदौ साधयति भावेति । जडे वस्तुनि गुणक्रियादीनामयावद्द्रव्यभाविविशेषाणां स्वसद्भावदशायां भेदाभेदावेव युक्तौ । नीलं फलमिति तेषां सामानाधिकरण्येन भावव्यवहृतेरभेदस्याङ्गीकार्यत्वात् । वस्तुनि विद्यमानेऽपि कदाचिन्न नीलं फलमित्यभावव्यवहृतेर्भेदस्याप्यङ्गीकार्यत्वात् । अत्यन्ताभेदे वस्तुनि सति तद्विनाशासम्भवादिति भावः । विनाशानन्तरं तु भेद एवेति ज्ञातव्यं, स्वयमसतोऽभेदायोगात् ।

*भा०दी०*— भावव्यवहृतेरिति । नीलरूपस्य सत्त्वव्यवहारादित्यर्थः ॥ **विनाशानन्तरमिति** । नीलरूपादिनाशात्पूर्वं रूपिणा भेदाभेदौ रूपनाशानन्तरं विशेषात्यन्ताभेद एवेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**चेतने शक्तिरूपेण गुणादेर्भाव इष्यते ।**
**सुप्तोऽयं बलवान् विद्वानित्यादिव्यवहारतः ॥**

*न्या०दी०*— ननु यथा चेतने सुप्त्यादावविद्यमानानामपि बलज्ञानादीनामत्यन्ताभेदस्तथा अत्राप्यत्यन्ताभेद एव किं न स्यादित्यत आह **चेतन इति** ॥ सुप्तोऽयं बलवानित्यादिव्यवहारबलेन सुप्त्यादावपि बलादीनां शक्तिरूपेणावस्थानसिद्धेः युक्तोऽत्यन्ताभेदो, न तु श्यामतादीनाम् । तेषामत्यन्तोच्छेदादित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**न चैवं शक्तिरूपेण जडे व्यवहृतिः क्वचित् ।**

*न्या०दी०*— श्यामतादीनामपि शक्तिरूपेणावस्थानं किं न स्यादित्यत आह **न च इति** ॥ मन्यामहे नीलत्वादीनां शक्तिरूपेणावस्थानं यदि बलादीनामिव शक्तिरूपाभिप्रायेण तेषां व्यवहारो भवेत् । न हि पीते चूतफले नीलमिति व्यवहारोऽस्तीति भावः ।

**गीतातात्पर्यनिर्णयः**

**एकमेवाद्धितीयं तन्नेह नानाऽस्ति किञ्चन ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।**
**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ॥**

एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ।
इत्यादिश्रुतिमानाच्च परमैश्वर्यतस्तथा ।
सर्वं तु घटते विष्णौ यत् कल्याणगुणात्मकम् ॥"

—इत्यादि ब्रह्मतर्के ॥ १-१४ ॥

*प्रका०*— 'एकं रूपं हरेः' इत्यादिना यदचिन्त्यत्वादियुक्तिसमर्थितं तत् श्रुतिभिश्च साध्यते एकमेवेत्यादिना ।

*न्या०दी०*— यदुक्तं विशेषबलादेकं रूपं हरेर्बहुव्यवहारविषयतां यातीति तद्भवेद्यदि रूपाभेदः प्रमाणावसितो भवेत् । "अभावो यत्र" इत्युक्तत्वात् । न च तत्प्रमाणमुपलभ्यत इत्यत आह **एकमेवेति** ॥ यदुक्तमचिन्त्यैश्वर्ययोगतो दुर्घटमप्येतद् घटत इति, तदयुक्तम् । तथा सति परमैश्वर्यबलेन जीवाभेदादेरपि घटनापातादित्यत आह **परमेति** ॥ यत्कल्याण-गुणात्मकं तत्सर्वं प्रतीत्या दुर्घटमपि हरौ परमैश्वर्ययोगतो घटत इत्येवाङ्गीक्रियते, न तु जीवैक्यादिकमपीति । तथा सति परमैश्वर्यस्यैवानुपपत्तेरिति भावः ॥ १-१४ ॥

*भा०दी०*— **हरेर्बहुव्यवहारविषयतामिति** । शतशस्सहस्रश इत्यादि बहुसंख्यागोचर-त्वरूपव्यवहारविशेषविषयतामित्यर्थः ॥ **इत्युक्तत्वादिति** । "अभावो यत्र भेदस्य प्रमाणावसितो भवेत् । विशेषो नाम तत्रैव" इत्युक्तत्वादित्यर्थः ॥ **तथा सतीति** । जीवेनैक्ये सति प्रत्यक्षादि-विरोधपरिहाराय उभयगतधर्मत्यागेन निर्विशेषचितोरैवैकीभावस्य वाच्यत्वेन परमैश्वर्यायोगादिति भावः ॥ १-१४ ॥

**गीता**

**अर्जुन उवाच—**

**पश्यामि देवांस्तव देव देहे**
**सर्वांस्तथा भूतविशेषसङ्घान् ।**
**ब्रह्माणमीशं कमलासनस्थ-**
**मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥**

***वि०वि०***— स्तुतिप्रकारमाह **पश्यामीत्यादिना** । ब्रह्माणं चतुर्मुखम् । कमलासने ब्रह्मणि स्थितमीशं रुद्रम् । उक्तं च—

'विष्णुं समाश्रितो ब्रह्मा ब्रह्मणोऽङ्गतो हरः ।
हरस्याङ्गविशेषेषु देवाः सर्वेऽपि संस्थिताः ॥ इति ॥ १५॥

***सा०सं०***— किमभाषतेत्यतो दृष्टरूपानुवादपूर्वं स्तुतिमकरोदित्याह **अर्जुन उवाचेत्यादिना** । **सर्वान् देवान्** । सर्वान् प्राणिविशेषसमूहांश्च इत्यर्थः । **ब्रह्माणं** चतुर्मुखम् । कमलासने चतुर्मुखे स्थितम् **ईशं** रुद्रम् । तदुक्तं पाद्मे—

'विष्णुं समाश्रितो ब्रह्मा ब्रह्मणोऽङ्गतो हरः ।
हरस्याङ्गविशेषेषु देवाः सर्वेऽपि संस्थिताः ॥' इति ।

**तव देहे** । **देवानित्य**त्रापि परम्परयेति ज्ञेयम् । **दिव्यानद्भुतानुरगान्** सर्पांश्च **तव देहे पश्यामि** ॥ १५ ॥

***अ०प्र०***— एवं दृष्ट्वा किं अभाषत **पश्यामीति** सप्तदशभिः ।

हे देव ![१], तव[२], देहे[३], देवान्[४], पश्यामि[५], तथा[६], सर्वान्[७], भूतविशेषसङ्घान् पश्यामि[८], कमलासनस्थं[९], ब्रह्माणञ्च[१०] ईशं[११] ऋषींश्च[१२], दिव्यान्[१३], सर्वान्[१४], उरगांश्च पश्यामीति सर्वत्रान्वयितव्यम् । इत्यन्वयः ।

हे देव ! = अदृश्यादिशक्तेः[१], तव देहे देवान् = आदित्यादीन्[४], पश्यामि[५], तथा सर्वान् भूतविशेषसङ्घान् = भूतविशेषाणां जरायुजाण्डजादीनां सङ्घान् पश्यामि[८], तथा ऋषीन् = वसिष्ठादीन् पश्यामि[११] तथा दिव्यान् सर्वान् उरगान् = तक्षकादीन् पश्यामि तथा कमलासनस्थं = पृथ्वी-पद्मकर्णिकायां मेरौ स्थितं यद्वा, त्वन्नाभिपद्मासनस्थं ब्रह्माणं पश्यामि, ईशं = रुद्रं पश्यामि । यद्वा, ईशं तेषां देवादीनां स्वामिनं कमलासनस्थमिति वा । 'विष्णुं समाश्रितो ब्रह्मा ब्रह्मणोऽङ्गतो हरः । हरस्याङ्गविशेषेषु देवाः सर्वेऽपि संस्थिताः' इत्युक्तेः ॥ १५ ॥

भाष्यम्

**अनेकशब्दः अनन्तवाची । 'अनन्तबाहुम्' इति च स्वयं वक्ष्यति । 'सर्वतः पाणिपादं तत्' इत्यादि च । "विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत**

**विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥" इति ऋग्वेदे । "विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् । सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः ॥" इति यजुर्वेदे च ।**

*प०टी०*— 'अनेकवक्त्रनयनम्' इत्यत्र 'अनेक'शब्दो न द्व्याद्यर्थ इति सप्रमाणकमाह **अनेकेति** । 'विश्वतश्चक्षुः' इत्यादौ न चक्षुरादेरानन्त्यं श्रूयत इत्यत आह **विश्वेति** ।

*प्र०दी०*— 'अनेकबाहूदरवक्त्रनेत्रं' इत्यत्र अनेकशब्दस्य द्व्यादौ पर्यवसानात् विवक्षितमर्थमाह **अनेकेति** । अनेन 'अनेकवक्त्रनयनं' इत्यपि व्याख्यातम् । कुत एतत् ? इत्यत आह **अनन्तेति** । 'सर्वतः' इत्यस्यार्थः तात्पर्यनिर्णये अवगन्तव्यः । **इत्यादि च** वक्ष्यति । **बाहुभ्यां** प्रधानाभ्यां **पतत्रैः** पतत्त्रसदृशैरितरबाहुभिः **सं धमति** अग्न्यादिभूतानि संयोजयति इति प्रत्येकमन्वयः । **सं नमति** इत्यस्याप्ययमेवार्थः ।

*भा०दी०*— **तात्पर्यनिर्णय इति** । 'सर्वतः पाणिपादादिः यतः पाण्यादिशक्तिमान् । केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः । अणोरणुतरैः रूपैः पाणिपादादिसंयुतैः । सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान्' इत्यनेन त्रयोदशोक्तादवगन्तव्य इत्यर्थः । 'इत्यादि च' इति भाष्ये 'वक्ष्यति' इत्यनुषङ्गमाह **इत्यादि च वक्ष्यतीति** । **प्रत्येकमिति** । 'बाहुभ्यां सं धमति' 'पतत्रैः सन्धमति' इति प्रत्येकमित्यर्थः ।

*भा०र०*— **एतत्** अनन्तवाचित्वम् । सर्वतः पाणिपादत्वं प्रकृतानुपयुक्तं किमित्युच्यते ? इत्यत प्राह **सर्वत इत्यस्यार्थ इति** । 'सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान् । केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः' इति श्लोके केशादिसर्वावयवेषु पाणिपादादिशक्तिमत्त्वस्य कृष्णकेशावतारे कृष्णे दृष्टत्वात् 'सर्वतः पाणिपाद्यवयवं ब्रह्म' इत्येकमर्थमुक्त्वा, 'अणोरणुतरै रूपैः पाणिपादादिसंयुतैः । सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान्' इति श्लोके पाणिपादादिसकलावयवयुक्तैः परमाणुरूपैः सर्वत्र स्थितत्वात् 'सर्वपाणिपादादिमद् ब्रह्म' इत्यर्थान्तरमुक्तम् । तत्र द्वितीयेऽर्थे अणूनामपि रूपाणां पाणिपादादियुक्तानां सर्वत्रावस्थानोक्त्या अवयवानामप्यानन्त्यम् अर्थसिद्धमिति भगवतः पाणिपाद्यनन्तावयवसद्भावे वचनमिदं प्रमाणीकृतमिति भावः । " 'सर्वतः पाणिपादम्' इत्यादेः 'अनन्तपाणिपादम्' इत्यर्थः, 'सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव च' इति वक्ष्यमाणाभिधानादवगन्तव्यः" इत्यनुक्तिस्तु, 'विश्वतश्चक्षुः' इत्येतत् समानन्यायेन शिष्यैरेवोहनीयत्वाभिप्रायेण ।

भाष्यपदमनूद्य अनुवर्तयितव्यं पदं दर्शयति **इत्यादि च वक्ष्यतीति**। चशब्दः 'वक्ष्यति' इत्यस्य अनुकर्षणार्थ इति भावेनैवमुक्तमित्यपि **आहुः**। 'प्रधानाभ्याम्' इति शेषपूरणम्। 'परत्र परशब्दः प्रयुज्यमानः सादृश्यं गमयति' इति भावेनोक्तम् **पतत्त्रसदृशैरिति**। पतत्त्रशब्देन च पक्षिपक्ष उच्यते। छन्दसि व्यवहितानामप्युपसर्गत्वादाह **सन्धमतीति**। 'ध्मा = शब्दाग्नि-संयोगयोः' इति धातोराह **अग्न्यादिभूतानीति**। द्यावाभूम्यादिजननार्थम् अग्न्यादीनां त्रिवृद्भावमापादयतीति भावः। 'छन्दसि परेऽपि' इति 'सम्' इत्यस्य उपसर्गत्वे आवृत्त्यैव उपसर्गस्य क्रियावृत्तिर्भविष्यतीति भावेनोक्तम् **प्रत्येकमन्वय इति**। 'बाहुभ्यां सन्धमति', 'पतत्त्रैः सन्धमति' इति प्रत्येकमुपसर्गाभ्यां क्रियापदान्वय इत्यर्थः। **अयमेवार्थ इति**। अग्न्यादिभूतानि सन्नतानि करोति = एकीभावयतीत्यर्थ इत्यर्थः।

भाष्यम्

**विश्वशब्दश्च अनन्तवाची। "सर्वं समस्तं विश्वं चानन्तं पूर्णमेव च" इत्यभिधानात्। "अनन्तपादं तमनन्तबाहुमनन्तवक्त्रं पुरुरूपमेकम्" इति च बाभ्रव्यशाखायाम्। महत्त्वाद्युक्तिस्तु तदात्मकत्वेनापि भवति। अन्यथा "अनादिमत् परं ब्रह्म" इत्याद्ययुक्तं स्यात्। एकत्र तु अनन्तान्यस्य रूपाणीत्यनन्तरूपः। अन्यत्र तु अपरिमाण इति। उक्तं ह्युभयमपि "परात् परं यन्महतो महान्तम्। यदेकमव्यक्तमनन्तरूपम्" इति यजुर्वेदे।**

***प०टी०***— स्पष्टश्रुतिं चात्राह **अनन्तेति**। अनन्तबाह्वादिमत्त्वे 'रूपं महत् ते' इत्यवान्तर-परिमाणं कथम्? इत्यत आह **महत्त्वेति**। द्विभुजादिरूपिणः कथं सर्वगतत्वम्? देहस्यान्तवत्त्व-नियमादित्यत आह **अन्यथेति**। 'पश्यामि त्वां सर्वतोऽनन्तरूपम्', 'त्वया ततं विश्वमनन्तरूप' इति 'अनन्तरूप'शब्दस्य सप्रमाणकमर्थभेदमाह **एकत्रेति**।

***प्र०दी०***— एतयोर्मन्त्रयोः प्रकृतानुपयोगादयुक्तमुदाहरणमित्यत आह **विश्वशब्दश्चेति**। तथा च प्रथमार्थे तसिः इत्युक्तं भवति। स्पष्टार्थां चात्र श्रुतिमाह **अनन्तपादमिति**। यदि भगवान् अनन्तबाह्वादिः तदा परममहत्परिमाणः स्यात्। अन्यथा तदयोगात्। न च तद्युक्तम्। 'रूपं महत्ते' इति महत्त्वमात्रोक्तेः। तथा 'बहुवक्त्रनेत्रं' इति बहुत्वमात्रोक्तेः, अनन्तबाह्वादित्वोक्तिश्चानुपपन्नेत्यत आह **महत्त्वादिति**। स्यादयं विरोधो यदि भगवद्रूपस्य महत्त्वमात्रं तदवयवानां च बहुत्वमात्रमुच्येत।

न चैवम् । अवच्छेदकाश्रवणात् । महत्त्वबहुत्वोक्तिस्तु परममहत्त्वात्मकत्वेनानन्तावयवत्वेन च सह सम्भवति । परममहति महत्त्वस्यानन्ते च बहुत्वस्यान्तर्भावादित्यर्थः ।

अवच्छेदकानुक्तावप्यवान्तरमहत्त्वादिग्रहणे को दोषः ? इत्यत आह **अन्यथेति** । तत्र परममहत्त्वस्यानन्तावयवत्वस्य चोक्तेरिति भावः । 'पश्यामि त्वा सर्वतोऽनन्तरूपं त्वया ततं विश्वमनन्तरूप' इति अनन्तशब्दद्वयस्य माहात्म्यातिशयसूचनायार्थभेदमाह **एकत्र त्विति** । अपरिमाणः अपरिच्छिन्नः इति अनन्तरूपः इति सम्बन्धः ।

स्यादिदं व्याख्यानं, यदीदं द्वयं प्रामाणिकं स्यादित्यत आह **उक्तं हीति** । **महान्तं** महत् । 'महतो महान्तम्' इति 'अनन्तं अपरिच्छिन्नपरिमाणं रूपमस्य' इत्युक्तार्थे प्रमाणम् । एकं अभिन्नमपि । **अनन्तरूपमिति** । अनन्तान्यसङ्ख्यानि अस्य रूपाणि इत्यत्र ।

*भा०दी०*– **प्रकृतेति** । अनेकशब्दोऽनन्तवाचीति प्रकृतार्थेत्यर्थः । (इत्यादि च इति भाष्ये)। **विश्वशब्दश्चेतीति** । उदाहृतश्रुतिद्वयगत इति ज्ञेयम् । **अवच्छेदकेति** । महत्तत्त्वतोऽहङ्कारादितत्त्वतो वा त्रिगुणं चतुर्गुणमित्यादिरूपेण वा 'पृथिव्या ज्यायान् नु दिवो ज्यायान्' इत्यादिरूपेण अवच्छेदकाश्रवणादित्यर्थः । **तत्रेति** । 'अनादिमत्परं ब्रह्म' इत्याद्युक्तिप्रकरणे 'बहिरन्तश्च भूतानाम्' इति परममहत्त्वस्य, 'सर्वतः पाणिपादं तत् सर्वतोक्षिशिरो मुखम्' इति प्रकृत्याः अनन्तावयवत्वस्य त्रयोदशोक्तेरित्यर्थः । 'महान्तम्' इत्यस्य रूपविशेषणत्वादाह **महान्तं महदिति** । **इत्यत्रेति** । 'प्रमाणम्' इत्यनुषङ्गः ।

*भा०र०*— **प्रथमार्थ इति** । 'विश्वतः = विश्वं चक्षुः = अक्षि यस्यासौ विश्वतश्चक्षुः' इति प्रथमाविभक्त्यर्थे तसिप्रत्यय इत्यर्थः । **अनन्तबाह्वादिरिति** । यद्यपि श्रुतावनन्तपादत्वम् आदौ श्रुतम् इति तदेवादावुपादातव्यम्, तथापि 'अनन्तबाहुम् इति च वक्ष्यति' इति भाष्यकारवचनाभिप्रायेणैवमुक्तम् । **परमेति** । परममहत् परिमाणं यस्य स परममहत्परिमाण इति विग्रहः । **अन्यथा** परममहत्त्वलक्षणपरिमाणाभावे । **तदयोगात्** अनन्तबाह्वादित्वायोगात् । **तत्** परममहत्परिमाणत्वम् । **अवच्छेदकेति** । 'घटात्', 'गजात्, 'गिरेः महत्' इति, 'चतुर्वक्त्रात् षड्वक्त्रात् दशवक्त्रात् बहुवक्त्रनेत्रम्' इत्येवम् अवध्यश्रवणात्, परममहत्परिमाणत्वमेव भगवद्रूपस्य, तदवयवानां चानन्तत्वमेव सिद्ध्यतीति भावः । 'महत्त्वादि' इत्यत्र आदिशब्दार्थः **बहुत्वेति** । **तत्र** भाष्योपात्ते 'अनादिमत् परं ब्रह्म' इति वचने । ब्रह्मशब्देन देशापरिच्छेदसिद्ध्या महत्त्वपरिमाणस्य प्राप्तेस्तत्र परत्वविशेषणबलात् परममहत्त्वस्य, तथा 'बहिरन्तश्च भूतानाम्' इति आदिपदोपात्तवचने परममहत्त्वस्य, 'सर्वतः पाणि-

पादं तत्' इत्यत्र अनन्तावयवत्वस्य चोक्तेरित्यर्थः । 'सर्वतः पाणिपादम्' इत्यत्र सर्वशब्दस्यानन्तार्थत्वादिति भावः ।

*भा०र०*— **अनन्तशब्दद्वयस्य** 'पश्यामि त्वां सर्वतोऽनन्तरूपं', 'विश्वमनन्तरूप' इति गीतागतानन्तरूपशब्दद्वयस्येत्यर्थः । परममहत्त्वपरिमाणस्योक्तत्वाद् अपरिमाणत्वोक्तिः विरुद्धा ? इत्यतोऽपरिमाणशब्दार्थमाह **अपरिच्छिन्न इति** ।

इतिपदमनूद्यान्वयं दर्शयति **इतीति** । **इदं द्वयम्** अनन्तरूपत्वम्, अपरिच्छिन्नरूपत्वमितीदं द्वयम् । 'यत्' इत्यस्य क्लीबत्वाद् श्रुतौ 'महान्तम्' इत्यत्र लिङ्गविभक्तिव्यत्ययः इति भावेनोक्तं **महान्तं महदिति** । 'मह = पूजायाम्' इत्यत उणादिके झप्रत्यये 'झोऽन्तः' इत्यन्तादेशे धातोः छान्दसे आकारे च 'महान्तम्' इति वेदे रूपम् इति भावेन महदिति व्याख्यातमित्यपि आहुः । नारायणानुवाकभाष्ये तु महान् अन्तः = आभोगो यस्य तत् महान्तमिति व्युत्पाद्य क्लीबत्वं निर्व्यूढम् । 'महतो महान्तम्' इत्यंशस्य 'अनन्तरूपम्' इत्यस्य चापरिच्छिन्नत्वे प्रमाणत्वमिति स्पष्टयितुमुक्तं **महतो महान्तमिति** । 'अस्येति' इत्यनन्तरं चशब्दो योज्यः । एकं 'परंज्योतिः' इत्यत्रत्यम् 'एकं स्वस्मिन्नभेदतः' इति भागवततात्पर्यं मनसि निधाय 'एकमभिन्नमपि' इत्युक्तम् । 'अनन्तरूपम्' इत्येतद् अनन्तसङ्ख्याकरूपत्वेऽपि प्रमाणमिति योजयति **अनन्तरूपमिति अनन्तान्यसङ्ख्यानीति** । **इत्यत्र** उक्तार्थे प्रमाणमिति सम्बन्धः ।

भाष्यम्

**अव्यक्तस्यानन्तत्वादेव महतो महत्त्वे अपरिमेयत्वं सिद्ध्यति । "महान्तं च समावृत्य प्रधानं समवस्थितम् । अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते" इति आदित्यपुराणे । तानि च एकैकानि रूपाणि अनन्तानीति च एकत्र भवति।**

*प०टी०*— महतो महत्त्वे प्रकृतिसाम्यमेव स्यात् । नानन्त्यमित्यत आह **अव्यक्तस्येति** । अव्यक्तमहत्त्वे प्रमाणमाह **महान्तं चेति** । 'पश्यामि त्वां सर्वतोऽनन्तरूपम्' इत्यस्य प्रकारान्तरेण सप्रमाणकमर्थभेदमाह **तानि चेति** ।

*प्र०दी०*— ननु 'महतो महान्तम्' इति महत्तत्त्वात् महत्त्वमेवोच्यते । न त्वनन्तत्वम् । ततश्च 'यदेकमव्यक्तं' इत्यव्यक्तव्यापित्ववचनात् तत्साम्यमेव सिद्ध्यतीत्यत आह **अव्यक्तस्येति** । **महतो महत्त्वे** अव्यक्तव्यापित्वे चेत्यपि ग्राह्यम् ।

अव्यक्तस्यानन्तत्वं कुत इत्यत आह **महान्तं चेति** । **अनन्तस्य** विष्णोः प्रतिमाभूतस्य **तस्य अन्तः** परिमाणं परिच्छेदः कार्यतः **सङ्ख्यानं** सङ्ख्यापरिच्छेदः **अपि न विद्यते** ।

प्रकारान्तरेण अनन्तरूपशब्दद्वयस्यार्थभेदमाह **तानि चेति** । एकस्यानन्तरूपशब्दस्यानन्तसङ्ख्यारूपार्थत्वे स्थिते सति **एकत्र** अनन्तरूपशब्दे । **तानि च** अनन्तसङ्ख्यानि **रूपाणि** प्रत्येकमपरिच्छिन्नपरिमाणानीत्यर्थो **भवति** इत्यर्थः ।

*भा०र०*— **अनन्तत्वम्** अपरिच्छिन्नत्वम् । 'महतः' इत्यवच्छेदकश्रवणादिति भावः । **साम्यमेव** न तु निरवधिकमहत्त्वम् इत्येवकारः । अवच्छेदकश्रवणेऽपि परममहत्त्वोपगमे को दोषः ? इत्यत आह **यदेकमव्यक्तमित्यव्यक्तव्यापित्ववचनादिति** । अव्यक्तशब्देनैव 'आनुमानिकम्' इति न्यायेन अव्यक्तशरीरकस्य तद्व्याप्तिमत एव भगवतोऽभिधानाभ्युपगमाद्, अव्यक्तं यावद्देशव्यापि तावद्देश-व्याप्तिलाभेन परिच्छेदेऽव्यक्तसाम्यमेव सिद्ध्यति, न तु ततोऽधिकपरिमाणमिति, परममहत्त्वं इष्टं लभ्यत इति भावः । भाष्ये शेषोक्तिः **अव्यक्तव्याप्तित्वे चेति** । अनन्तत्वाद् = अपरिच्छिन्नत्वाद् अपरिमेयत्वं = अपरिच्छिन्नत्वम्, भगवतः सिद्ध्यतीति भाष्यार्थः ।

अव्यक्तस्यानन्तत्वं कथम् ? इत्यतस्तद्घटयति **अनन्तस्य विष्णोः प्रतिमाभूतस्येति** । **तस्य** प्रधानस्य । अन्तशब्दस्य विनाशार्थत्वं निर्णयार्थत्वं वा न प्रकृतानुसारि इत्यतो विवक्षितमर्थमाह **परिमाणं परिच्छेद इति** । मूलप्रकृतेरेकत्वसङ्ख्याशालित्वात् कथं 'सङ्ख्यानं न विद्यते' इत्युक्तम् ? इत्यतः तद्घटयति **कार्यत इति** । अन्तशून्यस्याप्यव्याकृताकाशस्य एकत्वेन सङ्ख्यानमस्ति, तद्वत् सङ्ख्यानं वा न विद्यत इति विकल्पार्थो वाशब्दः । **अनन्तसङ्ख्यारूपार्थत्वे** अनन्तसङ्ख्यालक्षणार्थकत्वे ।

भाष्यम्

**"असङ्ख्याताः ज्ञानकास्तस्य देहाः सर्वे परीमाणविवर्जिताश्च" इति हि ऋग्वेदखिलेषु । "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः । उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ" इति च । "कृष्णस्य गर्भजगतोऽतिभरावसन्नपार्ष्णिप्रहारपरिरुग्णफणातपत्रम्" इति च भागवते ।**

***प०टी०***— **ज्ञानका** ज्ञानानन्दस्वरूपाः । हृद्गतादिरूपस्य सर्वगतत्वादि युक्तिविरुद्धम् । अत उपचारमात्रमित्यत आह **यावानिति** ।

***प्र०दी०***— अत्र प्रमाणमाह **असङ्ख्याता इति** । ज्ञानकाः ज्ञानानन्दात्मकाः । अयं बहिः व्याप्तः **आकाशः** परमात्मा **यावान्** यावत्परिमाणः **तावान्** एव **एषः अन्तर्हृदये** स्थितः परमात्मा इत्यर्थः । गर्भे जठरे जगत् यस्यासौ तथोक्तः । **अवसन्नः** अवनतः । गर्भजगत्त्वेन अपरिच्छिन्नपरिमाणत्वं लभ्यते ।

***भा०र०***— **अत्र** रूपाणां प्रत्येकमपरिच्छिन्नपरिमाणत्वे । ज्ञानं कम् = आनन्दश्च येषां स्वरूपतया स्तः, इति मत्वर्थीयाच्प्रत्ययान्तत्वम् अभिप्रेत्यार्थमाह **ज्ञानानन्दात्मका इति** । 'परीणाम' इति भाष्ये परेः 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घः । आकाशाधिकरणन्यायेन महायोगविद्वद्रूढिभ्याम् आकाशशब्दस्य भगवद्वाचित्वादाह **आकाशः परमात्मेति** । 'यत्तदेतेभ्यः परिमाणे वतुप्' इति स्मरणादाह **परिमाणवानिति** । 'अग्निश्च वायुश्च' इति श्रुतौ 'समाहितौ' इति व्यत्यासेन अन्वयः । अवसन्नशब्दस्य प्रसिद्धार्थत्वं बहुमानविरुद्धमिति विवक्षितमर्थमाह **अवनत इति** । तस्य प्रकृतोपयोगसिद्धये आह **गर्भजगत्त्वेनेति** ।

भाष्यम्

**न च तदयुक्तम् । अचिन्त्यशक्तित्वाद् ईश्वरस्य । "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" इति च श्रीविष्णुपुराणे । "नैषा तर्केण मतिरापनेया" इति श्रुतिः ।**

***प०टी०***— अत्रैव प्रमाणमाह **अचिन्त्या इति** ।

***प्र०दी०***— कृष्णादीनामप्यपरिच्छिन्नपरिमाणत्वं वदन्तो वक्तव्याः । तत्राल्पपरिमाणप्रतीतिः सा किं भ्रान्तिरुत प्रमितिरिति । तत्र आद्ये क्रियादेः द्विभुजचतुर्भुजादेश्च मिथ्यात्वं स्यात् ।

न द्वितीयः । युगपदेकत्राल्पानल्पपरिमाणसमावेशस्यायुक्तत्वात् । अतोऽपरिच्छिन्नपरिमाणोक्तिरुपचारमात्रमिति चेत् । किमिदमनेकपरिमाणत्वस्यायुक्तत्वं किमन्यत्रादर्शनेन असम्भावितत्वम्, उत 'नायमल्पानल्पपरिमाणोपेतो द्रव्यत्वात्' 'नायं परममहत्परिमाणोऽल्पपरिमाणत्वात् पटवत्' इत्यादियुक्तिविरुद्धत्वम्, अथातिप्रसङ्गदुष्टत्वम्, किं वा अप्रामाणिकत्वम् ? नाद्य इत्याह

**न चेति** । अघटितघटनाशक्त्युपेते किं नामासम्भावितमिति भावः । न द्वितीयः । ईश्वरस्य युक्त्यगोचरत्वेन तदनवकाशादिति भावेनाह **अचिन्त्या इति** । **एषा** ब्रह्मविषया । **अपनेया** निराकार्या ।

*भा०दी०*— शङ्कते **कृष्णादीनामिति** । **क्रियादेरिति** । गमनागमनगृहप्रवेशकटकाद्याभरणधारणादेरित्यर्थः । **अतिप्रसङ्गदुष्टत्वमिति** । रणे 'बहिरन्तश्च भूतानाम्' इति परममहत्त्वस्य । **अपाणिपादेति** । विकल्पनानन्तरं विरुद्धधर्माणां भगवत्यश्रुतत्वमिति कल्प्येत ।

*भा०र०*— 'पश्यामि त्वाम्' इत्याद्युक्त्यभिप्रायेण शङ्कते **कृष्णादीनामपीति** । 'ईश्वरस्याचिन्त्यशक्तित्वात्' इत्यस्य तात्पर्यम् **अघटितेति** । 'अयुक्तम्' इत्यस्य तात्पर्यम् **असम्भावितमिति** । 'श्रुतेस्तु शब्दमूलत्वात्' इत्यधिकरणन्यायेनाह **युक्त्यगोचरत्वेनेति** । 'भावाः' धर्माः अणुत्वमहत्त्वादयः तान् विरुद्धतया तर्केण न योजयेत्' इति भाष्यार्थः । श्रुतिगततर्कशब्दार्थः **युक्त्येति** । **ब्रह्मविषया** ब्रह्मगतविरुद्धधर्मावगाहिनी ।

भाष्यम्

## अतिप्रसङ्गस्तु महातात्पर्यवशाद् वाक्यबलाच्चापनेयः ।

*प०टी०*— यद्ययुक्तमप्यचिन्त्यशक्त्या घटते, तर्हि हरेर्ब्रह्माद्यभेदः स्यादित्यत आह **अतिप्रसङ्गस्त्विति** ।

*प्र०दी०*— अतिप्रसङ्गोऽपि 'किं यदीश्वरो विरुद्धपरिमाणद्वयोपेतः स्यात् तदा निर्दुःखो दुःखी च स्यात्' इतीश्वरमधिकृत्य स्यात् ? उत 'प्राणादयोऽपि तथा स्युः । ततश्च 'अणुश्च इत्यादिका तद्विषयवाक्यव्यवस्था नाङ्गीक्रियते' इत्यन्यदधिकृत्य स्यात् ? आद्यं दूषयति **अतिप्रसङ्गस्त्विति** । अविशेषमाश्रित्य ह्ययमतिप्रसङ्गः । न चासावस्ति । निर्दोषानन्तगुणत्वे हरेः श्रुतीनां महातात्पर्येण दुःखादेः तद्विरोधात् परिमाणद्वयस्य तु तदविरोधात् दुःखादेरप्रामाणिकत्वात् परिमाणद्वयस्य तूक्तवक्ष्यमाणवाक्यसिद्धत्वादिति भावः ।

*भा०दी०*— 'अणुश्च' इत्यादिकेति । 'अणवश्च' इत्यादिसूत्रग्रहः । 'अणुश्च' इति सूत्रे 'प्राण एव अधस्तात्' इति 'प्राणा एव अणवः' इति प्राणव्याप्तत्वाणुत्वश्रुत्योः बाह्यान्तरवायुरूपप्राणरूपविषयतया व्यवस्था उक्ता । 'अणवश्च' इति सूत्रे 'अणुभिः पश्यति' इति 'दिवीव चक्षुराततम्' इति श्रुत्या प्राणानामणुत्वव्याप्तत्वश्रुत्योः स्वरूपप्रकाशविषयतया व्यवस्थोक्तेत्यर्थः । **उक्तेति** । 'अनन्तरूप' इत्याद्युक्तवाक्येत्यर्थः । **वक्ष्यमाणेति** । 'व्याप्तं त्वयैकेन दिशश्च सर्वाः' इत्यादि वक्ष्यमाणवाक्येत्यर्थः ।

*भा०र०*— **तथा स्युः** विरुद्धधर्मवन्तः स्युः । अत्रेष्टापत्तिपरिहारायोक्तं **ततश्चेति** । **तद्विषयेति** । 'अणुश्च' इति सूत्रे 'प्राण एवाधस्तात् प्राण उपरिष्टात्' इत्यादिना प्राणस्य व्याप्तिः प्रतीयते । 'अणुनैतत्सृज्यते अणुनैतद्धार्यते' इत्यणिमा च । एवं विरुद्धार्थप्रतिपादकयोर्वाक्ययोरप्रामाण्यपरिहाराय 'स वा एषोऽणुर्महान्नाम, अन्तर्वा अणुः बहिर्महान्' इत्यादिना व्यास्यणुत्वयोर्व्यवस्थाऽङ्गीकृता, सा च न स्यात्, इति । **अन्यत्** प्राणादिवस्तु **अधिकृत्य** इत्यर्थः । 'हरेरेव' इत्येवशब्दो 'निर्दोषानन्तगुणत्व एव' इति सम्बध्यते । **तद्विरोधात्** महातात्पर्यविरोधात् । **परिमाणद्वयस्य** अणुत्वमहत्त्वलक्षणपरिमाणद्वयस्य ।

भाष्यम्

**न हि घटवत् कश्चिदपि पदार्थो न दृष्ट इत्येतावता प्रमाणदृष्टः सन् निराक्रियते । केषुचित् पदार्थेषु वाक्यव्यवस्थाऽचिन्त्यशक्तित्वाभावाद् अङ्गीक्रियते । "गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का । चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीताः । एवं परेऽन्यत्र श्रुताश्रुतानां गुणागुणानां च क्रमाद् व्यवस्था ॥" इति जाबालखिलश्रुतिश्च ।**

*प०टी०*— न केवलमचिन्त्यशक्त्या न युक्तिविरोधः, किन्तु पदार्थवैचित्र्याच्चेत्याह **न हीति**। पदार्थवैचित्र्ययुक्त्या विरुद्धघटने क्वापि विरुद्धवाक्यानां विषयव्यवस्था न कार्येत्यत आह **केषुचिदिति** । विष्णोरेवाचिन्त्यशक्तिर्नान्येषामित्यत्र प्रमाणमाह **गुणा इति** ।

*प्र०दी०*— विपर्ययापर्यवसायी चायं प्रसङ्ग इति भावेनाह— **न हीति** । यदि घटः पृथुबुध्नोदराकारः स्यात् तर्हि **पदार्थो न** स्यात् । तथाविधस्य पदार्थस्य कस्याप्यदृष्टत्वादिति प्रसङ्गो यथा न युक्तः । भवति च पदार्थः, तस्मात् पृथुबुध्नोदराकारो न भवतीति विपर्ययस्य प्रमाणबाधितत्वेन अपर्यवसानात् । तथात्वेन तस्य धर्मिग्राहकप्रमाणदृष्टत्वात् । तथा प्रकृतेऽपीति । एतेनानुमानानां कालात्ययापदिष्टत्वं चोक्तं भवति ।

प्राणादिकमधिकृत्यातिप्रसङ्ग इति द्वितीयं निराकरोति— **केषुचिदिति** । अत्रापि सम्भावनाहेतुभाव-अभावाभ्यां विशेषादविशेषोऽसिद्ध इति भावः ।

चतुर्थं निरस्यति **गुणा इति** । **श्रुताः अश्रुताः** अपि **सुविरुद्धाः** अन्यत्र सह **अदृष्टाः** । **अविरुद्धाश्च** । तथा गुणा इव दोषाः श्रुताश्च अश्रुताश्च **नैव सन्ति** । किन्तु **अज्ञैः** मिथ्यादृष्टिभिः

**हि तथा** सन्तीति **प्रतीताः । एवं परे** ईश्वरे स्थितिः । ततः **अन्यत्र तु श्रुताश्रुतानां** प्रमाणान्तर-सिद्धानां च गुणादोषाणां **व्यवस्था** अवस्थानम् । तत्र **क्रमात्** उत्तमेषु गुणबाहुल्यं दोषाल्पत्वम्, मध्यमेषूभयसाम्यं, अवरेषु दोषबाहुल्यं गुणाल्पत्वमिति । तदेवमसम्भावनाद्यभावान्न भगवत्यपरि-च्छिन्नपरिमाणत्वोक्तेरुपचरितत्वं कल्प्यम् ।

***भा०दी०***— **अत्रापीति** । ईश्वर इव प्राणादावपि अणुत्वमहत्त्वाभ्युपगमविषयेऽपि अचिन्त्य-शक्तिकत्वरूपसम्भावना हेतुभावाभावाभ्यामित्यर्थः ।

***भा०र०***— **प्रसङ्गः** तर्कः । विपर्यये पर्यवसानस्य तर्काङ्गत्वादिति भावः । कुत एतत् ? इत्यत आह **भवति चेति** । **तथात्वेन** पृथुबुध्नोदराकारत्वेन । **प्रकृतेऽपि** न युक्तः । **एतेन** अतिप्रसङ्गे धर्मिग्राहकप्रमाणविरोधकथनेन । अनुमानानां 'नायम् अल्प-अनल्प...' इत्यादिटीको-क्तानुमानद्वयस्य, आदिपदोपात्तस्य ईश्वरो न विरुद्धधर्मद्वयवान् वस्तुत्वात् सम्प्रतिपन्नवत्, 'नेश्वरो महापरिमाणवान् क्रियावत्त्वात्' इत्यादिरूपानुमानस्य वेत्यर्थः । **कालात्ययापदिष्टत्वं** बाधित-विषयत्वम् । ईश्वरस्य युक्त्यगोचरत्वेन तदनवकाशादिति पूर्वोत्तरदूषणसमुच्चयार्थश्चकारः ।

**अत्रापि** प्राणादिपक्षेऽपि **सम्भावनाहेतुभावाभावाभ्याम्** अचिन्त्यशक्तिकत्वरूपस्य विरुद्ध-धर्मवत्त्वे सम्भावनाहेतोर्भगवति भावात् प्राणादावभावादित्यर्थः ।

**चतुर्थं** अप्रामाणिकत्वकल्पम् । 'अश्रुता अपि' इत्यनन्तरं 'रमादिचिन्त्यास्तदचिन्त्याः' इति तत्त्वप्रकाशिकोक्तार्थोऽनुसन्धेयः । विरोधस्य सहानवस्थानरूपत्वात् ईश्वरे सहावस्थितानां कथं विरुद्धत्वम् ? इत्यत आह **अन्यत्र सहादृष्टा इति** । चशब्दसमुच्चेयमाह **अविरुद्धा इति** । 'ज्ञाना-नन्दादयः सन्ति' इति सम्बन्धः । तथाशब्दलब्धमर्थमाह **इव दोषा इति** । अत्रापिशब्दार्थोक्तिश्च **अश्रुताश्चेति** । अज्ञैः = ज्ञानिविरुद्धैरित्यस्यार्थः **मिथ्यादृष्टिभिरिति** । स्मिनो वैकल्पिकत्वात् 'परे' इति युक्तं भाष्ये । तस्यार्थः **ईश्वर इति** । 'स्थितिः' इति शेषोक्तिः । 'व्यवस्था' इति वक्ष्य-माणस्यार्थोक्तिर्वा । 'श्रुताश्रुतानाम्' इत्यत्र द्वन्द्वे अश्रुतानां = श्रुतिभिन्नप्रमाणसिद्धानाम् इत्यर्थ इति भावेनाह **प्रमाणान्तरसिद्धानां चेति** । 'गुणागुणानाम्' इत्यस्यार्थः **गुणदोषाणामिति** । अत्र व्यवस्थाशब्दः केषुचिद्गुणा एव, केषुचिद्दोषा एव' इति विभागार्थको न भवति, देवादिष्वपि दोषदर्शनादिति भावेनान्यथा तदर्थमाह **व्यवस्था अवस्थानमिति** । 'क्रमादेवं मन्तव्यम्' इत्युक्त-क्रममेवाह **उत्तमेष्वित्यादि** । भाष्ये 'श्रुतेश्च' इत्यनन्तरं 'नाप्रामाणिकत्वं परममहत्त्वादेः' इति शेषो वक्तव्यः ।

**असम्भावनाद्यभावादिति** । अचिन्त्यशक्तिसद्भावेन असम्भावनाऽभावात्, युक्तिविरोधाभावात्, अतिप्रसङ्गदोषाभावात् अप्रामाणिकत्वाभावाच्चेत्यर्थः ॥ १५ ॥

**गीता**

**अनेकबाहूदरवक्त्रनेत्रं**
**पश्यामि त्वां सर्वतोऽनन्तरूपम् ।**
**नान्तं न मध्यं न पुनस्तवादिं**
**पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥**

***वि०वि०***— अनन्तरूपमसङ्ख्यातरूपम् । हे विश्वरूप पूर्णरूप ! सर्वं समस्तं विश्वं च । 'अनन्तं पूर्णमेव च' इत्यभिधानात् । अन्ताद्यभावेनैव मध्याभावःसिद्धः । पुनर्न मध्यमित्युपचारपरिहारायोक्तम् ॥ १६ ॥

***सा०सं०***— **अनेकबाहूदरवक्त्रनेत्रम्** इत्यत्रापि 'अनेकनयनम्' इत्यत्रेवानेकशब्दो अनन्तवाची प्रागुक्तानुवादरूपत्वादपौनरुक्त्यम् । **सर्वतः** सर्वस्मिन् देशे । अनन्तानि अपरिमितानि रूपाणि यस्य तम् । हे **विश्वरूप** पूर्णरूप । "सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव च" इत्युक्तेः । **विश्वेश्वर** जगत्पते । **तवादिं मध्यम् अन्तं** वा **न पश्यामि** । नञः त्रिरुक्तिरादरार्था । अत एवाद्यन्तयोरभावादेव मध्याभावसिद्धौ पुनर्मध्यं नेत्युपचारनिवृत्त्यर्थम् ॥ १६ ॥

***अ०प्र०***— अनेकबाहूदरवक्त्रनेत्रं[१], सर्वतः[२], अनन्तरूपं[३], त्वां[४], पश्यामि[५], हे विश्वेश्वर ![६], हे विश्वरूप ![७], तव तु[८], आदिं पुनः मध्यं[११] अन्तं च[१२], न पश्यामीत्यन्वयः ॥

अन्वयः— अनेकानि अनन्तानि बाह्वादीनि बाहवः उदराणि वक्त्रानि नेत्राणि च यस्य तादृशं[१], सर्वतः = सर्वत्र देशकालेषु बाह्वादिषु अवयवेषु च[२], अनन्तरूपं = अनन्तान्यसङ्ख्यानि रूपाणि यस्य तं[३], एतादृशं त्वां[४], पश्यामि = पश्यामीति सर्वत्रान्वयः[५], हे विश्वेश्वर ![६], हे विश्वरूप ![७], तव तु आदिं[९], पुनः मध्यं[११] अन्तं च[१२], न पश्यामि सर्वगतत्वात्[१३], हे विश्वरूप ! = 'पूर्णरूप-सर्वसमस्तविश्वं च अनन्तपूर्णमेव चे'त्यभिधानात् आद्यन्ताभावोक्त्यैव मध्याभावस्य सिद्धत्वेऽपि पुनर्न मध्यमित्युक्तिः आद्यन्ताभावोक्तेरुपचारत्वपरिहारार्थः ॥ १६ ॥

भाष्यम्

**उपचारत्वपरिहाराय 'न मध्यम्' इति । अन्यथा आद्यन्ताभावेनैव तत्सिद्धेः । विश्वरूपः पूर्णरूपः । "स विश्वरूपोऽनूनरूपो यतोऽयं सोऽनन्तरूपो न हि नाशोऽस्ति तस्य" इति शाण्डिल्यशाखायाम् ॥ १६ ॥**

*प०टी०*— इतश्च नोपचारो भगवद्रूपस्य सर्वगतत्वाभिधान इत्याह **उपचारत्वेति** । मध्याभावमात्रपरोऽयंशब्द इत्यत आह **अन्यथेति** । विश्वं रूपं यस्येत्यन्यथाप्रतीतिनिरासाय 'विश्वरूप'पदं सप्रमाणकं पूर्वोक्तपूर्णगुणदृढीकरणपरतया व्याचष्टे **विश्वेति** ॥ १६ ॥

*प्र०दी०*— अर्जुनेनापि तन्निराकृतमिति भावेनाह **उपचारत्वेति** । 'नान्तं न पुनस्तवादिं पश्यामि' इत्याद्यन्ताभावोक्तेरुपचरितत्वपरिहाराय 'न मध्यम्' इत्युक्तम् । मध्यनिराकरणार्थमेव तत् किं न स्यादित्यत आह **अन्यथेति** । उपचारत्वपरिहारार्थत्वाभावे । 'तद्वैयर्थ्यं स्यात्' इति शेषः । कुतः ? आद्यन्तसापेक्षत्वात् मध्यस्य तदभावोक्त्यैव तदभावसिद्धेः । 'विश्वं महदादिकं रूपं स्वरूपमस्य' इति प्रतीतिं सप्रमाणकं निवारयति **विश्वरूप इति** । एतच्चाभ्यासरूपमिति मन्तव्यम् ॥१६॥

*भा०दी०*— पूर्वोक्तानन्तरूपपदेन विश्वरूपपदस्यापौनरुक्त्याय तात्पर्यद्योतकाभ्यासोऽयमित्याह **एतच्चेति** । 'विश्वरूप' इति पुनर्वचनमभ्यासात्मकमित्यर्थः ॥ १६ ॥

*भा०र०*— 'नान्तं न मध्यं न पुनस्तवादिम्' इत्यस्य कृष्णं प्रति अर्जुनवाक्यत्वादाह **अर्जुनेनापीति** । **तत्** उपचरितत्वम् । उपचारशब्दिताया गौण्या वृत्तेः शब्दधर्मत्वादाह **आद्यन्ताभावोक्तिरिति** । **तत्** 'मध्यम्' इति वचनम् । **परिहारार्थत्वाभावे** परिहारप्रयोजकत्वाभावे । 'तत्सिद्धेः' इति हेतोः साध्यं पूरयति **तद्वैयर्थ्यं स्यादिति शेष इति** । वैयर्थ्यमुपपादयितुं शङ्कामाह **कुत इति** । **तदभावसिद्धेः** मध्याभावसिद्धेः, इत्यनन्तरं 'इत्यर्थः' इति शेषः । पूर्वार्धे 'अनन्तरूपम्' इति पूर्णत्वापरपर्यायानन्तत्वसिद्धेः । विश्वरूपपदेन पूर्णत्वोक्तौ पुनरुक्तिः स्यात् । ततः प्रातीतिकं व्याख्यानं न युक्तम् ? इत्यत आह **एतच्चाभ्यासरूपमिति** । अनन्तरूपपदोक्तापरिच्छिन्नत्वरूपपरिपूर्णत्वे तात्पर्यज्ञापनायैव गीतायां विश्वरूपपदम् अभ्यासरूपतया प्रयुक्तम्, न तु महदादिविश्वात्मकत्वद्योतनाय इति भाष्यकारीयं व्याख्यानमेव युक्तम् । विश्वरूपः = अनूनरूपः = पूर्णरूप इति प्रमाणसिद्धत्वात् । प्रातीतिकव्याख्यानं तु अप्रामाणिकत्वात् 'विश्वेश्वर' इति पूर्वपदविरुद्धत्वाच्च नादरणीयमिति भावः । तथाच तात्पर्यनिर्णये 'अन्यत् तात्पर्यज्ञापनाभ्यासरूपम्' इति ।

**असम्भावनाद्यभावादिति** । अचिन्त्यशक्तिसद्भावेन असम्भावनाऽभावात्, युक्तिविरोधाभावात्, अतिप्रसङ्गदोषाभावात् अप्रामाणिकत्वाभावाच्चेत्यर्थः ॥ १५ ॥

**गीता**

**अनेकबाहूदरवक्त्रनेत्रं**
**पश्यामि त्वां सर्वतोऽनन्तरूपम् ।**
**नान्तं न मध्यं न पुनस्तवादिं**
**पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥**

***वि०वि०*— अनन्तरूपमसङ्ख्यातरूपम् । हे विश्वरूप पूर्णरूप ! सर्वं समस्तं विश्वं च । 'अनन्तं पूर्णमेव च' इत्यभिधानात् । अन्ताद्यभावेनैव मध्याभावःसिद्धः । पुनर्न मध्यमित्युपचारपरिहारायोक्तम् ॥ १६ ॥

***सा०सं०*— **अनेकबाहूदरवक्त्रनेत्रम्** इत्यत्रापि 'अनेकनयनम्' इत्यत्रेवानेकशब्दो अनन्तवाची प्रागुक्तानुवादरूपत्वादपौनरुक्त्यम् । **सर्वतः** सर्वस्मिन् देशे । अनन्तानि अपरिमितानि रूपाणि यस्य तम् । हे **विश्वरूप** पूर्णरूप । ''सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव च'' इत्युक्तेः । **विश्वेश्वर** जगत्पते । **तवादिं मध्यम् अन्तं** वा **न पश्यामि** । नञः त्रिरुक्तिरादरार्था । अत एवाद्यन्तयोरभावादेव मध्याभावसिद्धौ पुनर्मध्यं नेत्युपचारनिवृत्त्यर्थम् ॥ १६ ॥

***अ०प्र०*— अनेकबाहूदरवक्त्रनेत्रं[१], सर्वतः[२], अनन्तरूपं[३], त्वां[४], पश्यामि[५], हे विश्वेश्वर ![६], हे विश्वरूप ![७], तव तु[८], आदिं पुनः मध्यं[११] अन्तं च[१२], न पश्यामीत्यन्वयः ॥

अन्वयः— अनेकानि अनन्तानि बाह्वादीनि बाहवः उदराणि वक्त्रानि नेत्राणि च यस्य तादृशं[१], सर्वतः = सर्वत्र देशकालेषु बाह्वादिषु अवयवेषु च[२], अनन्तरूपं = अनन्तान्यसङ्ख्यानि रूपाणि यस्य तं[३], एतादृशं त्वां[४], पश्यामि = पश्यामीति सर्वत्रान्वयः[५], हे विश्वेश्वर ![६], हे विश्वरूप ![७], तव तु आदिं[९], पुनः मध्यं[११] अन्तं च[१२], न पश्यामि सर्वगतत्वात्[१३], हे विश्वरूप ! = 'पूर्णरूप-सर्वसमस्तविश्वं च अनन्तपूर्णमेव चे'त्यभिधानात् आद्यन्ताभावोक्त्यैव मध्याभावस्य सिद्धत्वेऽपि पुनर्न मध्यमित्युक्तिः आद्यन्ताभावोक्तेरुपचारत्वपरिहारार्थः ॥ १६ ॥

भाष्यम्

**उपचारत्वपरिहाराय 'न मध्यम्' इति । अन्यथा आद्यन्ताभावेनैव तत्सिद्धेः । विश्वरूपः पूर्णरूपः । "स विश्वरूपोऽनूनरूपो यतोऽयं सोऽनन्तरूपो न हि नाशोऽस्ति तस्य" इति शाण्डिल्यशाखायाम् ॥ १६ ॥**

*प०टी०*— इतश्च नोपचारो भगवद्रूपस्य सर्वगतत्वाभिधान इत्याह **उपचारत्वेति** । मध्याभावमात्रपरोऽयंशब्द इत्यत आह **अन्यथेति** । विश्वं रूपं यस्येत्यन्यथाप्रतीतिनिरासाय 'विश्वरूप'पदं सप्रमाणकं पूर्वोक्तपूर्णगुणदृढीकरणपरतया व्याचष्टे **विश्वेति** ॥ १६ ॥

*प्र०दी०*— अर्जुनेनापि तन्निराकृतमिति भावेनाह **उपचारत्वेति** । 'नान्तं न पुनस्तवादिं पश्यामि' इत्याद्यन्ताभावोक्तेरुपचरितत्वपरिहाराय 'न मध्यम्' इत्युक्तम् । मध्यनिराकरणार्थमेव तत् किं न स्यादित्यत आह **अन्यथेति** । उपचारत्वपरिहारार्थत्वाभावे । 'तद्वैयर्थ्यं स्यात्' इति शेषः । कुतः ? आद्यन्तसापेक्षत्वात् मध्यस्य तदभावोक्त्यैव तदभावसिद्धेः । 'विश्वं महदादिकं रूपं स्वरूपमस्य' इति प्रतीतिं सप्रमाणकं निवारयति **विश्वरूप इति** । एतच्चाभ्यासरूपमिति मन्तव्यम् ॥१६॥

*भा०दी०*— पूर्वोक्तानन्तरूपपदेन विश्वरूपपदस्यापौनरुक्त्याय तात्पर्यद्योतकाभ्यासोऽयमित्याह **एतच्चेति** । 'विश्वरूप' इति पुनर्वचनमभ्यासात्मकमित्यर्थः ॥ १६ ॥

*भा०र०*— 'नान्तं न मध्यं न पुनस्तवादिम्' इत्यस्य कृष्णं प्रति अर्जुनवाक्यत्वादाह **अर्जुनेनापीति** । **तत्** उपचरितत्वम् । उपचारशब्दिताया गौण्या वृत्तेः शब्दधर्मत्वादाह **आद्यन्ताभावोक्तिरिति** । **तत्** 'मध्यम्' इति वचनम् । **परिहारार्थत्वाभावे** परिहारप्रयोजकत्वाभावे । 'तत्सिद्धेः' इति हेतोः साध्यं पूरयति **तद्वैयर्थ्यं स्यादिति शेष इति** । वैयर्थ्यमुपपादयितुं शङ्कामाह **कुत इति** । **तदभावसिद्धेः** मध्याभावसिद्धेः, इत्यनन्तरं 'इत्यर्थः' इति शेषः । पूर्वार्धे 'अनन्तरूपम्' इति पूर्णत्वापरपर्यायानन्तत्वसिद्धेः । विश्वरूपपदेन पूर्णत्वोक्तौ पुनरुक्तिः स्यात् । ततः प्रातीतिकं व्याख्यानं न युक्तम् ? इत्यत आह **एतच्चाभ्यासरूपमिति** । अनन्तरूपपदोक्तापरिच्छिन्नत्वरूपपरिपूर्णत्वे तात्पर्यज्ञापनायैव गीतायां विश्वरूपपदम् अभ्यासरूपतया प्रयुक्तम्, न तु महदादिविश्वात्मकत्वद्योतनाय इति भाष्यकारीयं व्याख्यानमेव युक्तम् । विश्वरूपः = अनूनरूपः = पूर्णरूप इति प्रमाणसिद्धत्वात् । प्रातीतिकव्याख्यानं तु अप्रामाणिकत्वात् 'विश्वेश्वर' इति पूर्वपदविरुद्धत्वाच्च नादरणीयमिति भावः । तथाच तात्पर्यनिर्णये 'अन्यत् तात्पर्यज्ञापनाभ्यासरूपम्' इति।

प्रमाणे 'नहि नाशोऽस्ति' इत्युक्त्या अनन्तरूपपदस्य अनन्तशब्दितनाशशून्यत्वम् अर्थान्तरमपि विभावितं भवति ॥ १६ ॥

**गीता**

**किरीटिनं गदिनं चक्रिणं च**
**तेजोराशिं सर्वतो दीप्तिमन्तम् ।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-**
**द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥**

*वि०वि०*— अनलार्कद्युतिमित्युक्ते परिमितत्वशङ्का स्यात् । तन्निरासायोक्तम् **अप्रमेयमिति** ॥ १७ ॥

*सा०सं०*— दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिः प्रकाशो यस्य तमित्युक्त्या प्राप्तपरिमितशङ्का-व्युदासायोक्तम् **अप्रमेयमिति** । अमितद्युतिमित्यर्थः ॥ १७ ॥

*अ०प्र०*— किञ्च **किरीटिनमिति** । किरीटिनं[१], गदिनं[२], चक्रिणं च[३], सर्वतः[४], दीप्तिमन्तं[५], तेजोराशिं[६], तथा दुर्निरीक्ष्यं[७], तत्र हेतुः दीप्तानलार्कद्युतिं[८], अप्रमेयं[९], त्वां[१०] समन्तात्[११] पश्यामी-त्यन्वयः ।

किरीटिनं = मुकुटवन्तं यद्वा, अनन्ता किरीटादयोऽस्य सन्तीति किरीटिनं[१], गदिनं = गदावन्तं गदा अस्यास्तीति तथा[२], चक्रिणं = चक्रमस्यास्तीति चक्रिणं चक्रवन्तं[३], सर्वतो दीप्तिमन्तं = सर्वतो देशादौ दीप्तिमन्तं[५], तेजोराशिं = तेजःपुञ्जरूपं[६], तथा दुर्निरीक्ष्यं = दुःखेन निरीक्षितुं अशक्यं दिव्यज्ञानचक्षुषाऽपि निरीक्षितुमशक्यमिति भावः[७], तत्र हेतुः दीप्तानलार्कद्युतिं = दीप्तानां अनलानां अर्काणां च द्युतिरिव द्युतिर्यस्य तं तथा इत्यनेन प्राप्तां द्युतेः परिमितत्व-शङ्कामपाकरोति **अप्रमेयमिति** । अप्रमेयं = प्रकर्षेण मातुमशक्यं तव व्याप्तेः कान्तेश्च नास्त्यंत इति भावः । यद्वा, एतस्य विशिष्टविशेषणत्वात्सविशेषणे इति न्यायेन अपरिच्छिन्नद्युतिमित्यर्थः[९], यद्वा, एवंभूत इति निश्चेतुं अशक्यं[९], एतादृशं त्वां[१०] समन्तात् = समन्ततः[११] पश्यामि ॥ १७ ॥

भाष्यम्

**अनलार्कद्युतिम् इत्युक्ते मितत्वशङ्कामपाकरोति अप्रमेयमिति ॥ १७ ॥**

*प०टी०*— ननु पुनः 'अप्रमेय'पदेनापि पूर्णत्वोक्तेः पुनरुक्तिरित्यत आह **अनलेति** ॥१७॥

*प्र०दी०*— ननु'अनलार्कद्युतिम्' इत्युक्तत्वात् 'सहस्रशब्दोऽनन्तवाची' इत्याद्युक्तमयुक्तमिति चेन्न । एतदेव आशङ्क्य प्रत्यायनार्थमेवैतदुक्तम् । वस्तुतस्त्वपरिच्छिन्नद्युतिरेव भगवानिति स्वयमेवोक्तत्वादित्याह **अनलेति** । **इत्युक्ते** जातां द्युतेः **मितत्वशङ्काम्** । एतच्च सविशेषणविशेषणत्वात् द्युत्या सम्बध्यते ॥ १७ ॥

*भा०दी०*— **सहस्रेति** । 'दिवि सूर्यसहस्रस्य' इति गीतास्थसहस्रशब्दः अनन्तवाची इत्यादि प्राग्भाष्योक्तम् अयुक्तमित्यर्थः । **एतच्चेति** । अप्रमेयविशेषणत्वमित्यर्थः । **द्युत्येति** । 'सविशेषणे हि विधिनिषेधौ इति न्यायात् । तथा च द्युतेर्मितत्वशङ्कानिरासो व्यक्त इति भावः ॥ १७ ॥

*भा०र०*— **प्रत्यायनार्थं** बुद्धिप्रवेशार्थम् **एव एतत्** अनलार्कद्युतित्वमुक्तमित्यर्थः । 'उक्ते' इत्यन्तमनूद्य अनन्तरं पूरणीयमाह **जातां द्युतेरिति** । ननु 'अप्रमेयम्' इत्येतद् विश्वरूपविशेषणम्, तेन कथं द्युतेर्मितत्वशङ्कानिरासः ? नहि उत्पलविशेषणेन नैल्येन पद्मस्य नीलवस्तुव्यावृत्तिः सम्पादयितुं शक्या, इत्यत आह **एतच्चेति** । **'अप्रमेयम्'** इति विशेषणं **सविशेषणविशेषणत्वात्** विशिष्टविशेषणत्वात्, सविशेषणे भगवति अप्रमेयत्वविशेषणविधिः प्रवर्तमानो विशेष्ये तात्पर्याभावे विशेषणं उपसङ्क्रमति । यथा 'सप्तदशारत्नीत्वविधिः' वाजपेये तात्पर्याभावे तदन्तर्भूते तद्विशेषणे पशुयागे सङ्क्रामति, तथाऽप्रमेयत्वमपि अनन्तरूपविश्वरूपादिपदेनैव परिमितत्वाभावलाभेन भगवति तात्पर्यरहितं सत् तद्विशेषणं द्युतिम् उपसङ्क्रमति, नैल्यं तु न सविशेषणविशेषणम् इति वैषम्याद् भवति । तेन द्युतेर्मितत्वनिरास इति भावः ॥ १७ ॥

**गीता**

**त्वमक्षरं परमं वेदितव्यं**
**त्वमस्य विश्वस्य परं निधानम् ।**
**त्वमव्ययः शाश्वतधर्मगोप्ता**
**सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥**

***वि०वि०*— शाश्वतधर्मगोप्ता** वैदिकधर्माविता ॥ १८ ॥

***सा०सं०*— परं निधानं** मुख्याश्रयः । **शाश्वतधर्मगोप्ता** अनादिपरम्पराप्राप्तधर्मरक्षकः । **अव्ययो** ह्रासहीनः । **सनातनो**ऽनादिनित्यः । **पुरुषो मे मतः** ॥ १८ ॥

*अ०प्र०*— यस्मादेवं तवातर्क्यं ऐश्वर्यं तस्मात् **त्वमिति** ।

अथान्वयः— 'त्वं'पदं सर्वत्र योजनीयम् । त्वमेव[१], अक्षरं = सर्वथा नाशशून्यं अधिकं क्षरतीति वा क्षरं[२], परमं उत्तमं ब्रह्मप्रणवस्य परमित्यर्थः[३], वेदितव्यं = मुमुक्षुभिः ज्ञातव्यं ज्ञेयं वा वेदैः परिमार्गितव्यमित्यर्थः[४], त्वमेव[५], अस्य[६], विश्वस्य[७], परं = परम्[८], निधानं = निधीयतेऽस्मिन्निति निधानं प्रकृष्टाश्रयः । यद्वा, निक्षेपस्थानं[९], अत एव त्वमेव[१०] अव्ययः = नित्यः[११] शाश्वतधर्मगोप्ता = अविनाशी सकलधर्माणां संरक्षिता । यद्वा, शाश्वतस्य वेदादिविहितनित्यस्य धर्मस्य धर्मप्रवाहस्य गोप्ता पालकः सर्ववेदवेद्यः[१२], त्वमेव सनातनः = चिरन्तनः[१३], पुरुषः = पूर्णत्वात्पुरुषः तत्त्वातीतः[१४], मे = मम[१५], मतः[१६], पूर्वादृष्टोऽसि ॥ १८ ॥

**गीतातात्पर्यनिर्णयः**

**कमलासने ब्रह्मणि स्थितं रुद्रम्—**

**"विष्णुं समाश्रितो ब्रह्मा ब्रह्मणोऽङ्कगतो हरः ।**
**हरस्याङ्गविशेषेषु देवाः सर्वेऽपि संस्थिताः ॥"**

**—इति पाद्मे ॥ १५-१८ ॥**

*प्रका०*— "पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् । ब्रह्माणमीशं कमलासनस्थं ऋषींश्चे"त्यत्र कमलासनशब्देन विरिञ्च उच्यते । "विरिञ्चः कमलासन" इत्यभिधानात् । तदाह **कमलेति** ॥

***न्या०दी०*— दृष्टविश्वरूपो दृष्टानुवादव्याजेन स्तौति 'पश्यामि' इति । तत्र कमलरूपासने स्थितं ब्रह्माणमिति अल्पार्थत्वप्रतीतिनिरासाय कमलासनस्थपदं व्याचष्टे कमलेति ॥ कथं ब्रह्मणो ब्रह्मणि स्थितत्वमित्यतो रुद्रस्येशपदोदितस्येदं विशेषणमिति भावेनाह रुद्रमिति ॥ भवेदिदं व्याख्यानं यदि रुद्रस्य ब्रह्मणि स्थितत्वं भवेत्, तदेव कुत इत्यत आह विष्णुमिति ॥ १५-१८ ॥**

गीता

**अनादिमध्यान्तमनन्तवीर्य-**
**मनन्तबाहुं शशिसूर्यनेत्रम् ।**
**पश्यामि त्वां दीप्तहुताशवक्त्रं-**
**स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥**

***वि०वि०*— अनादिमध्यान्तं गुणानन्त्यापेक्षया । शशिसूर्याश्रयनेत्रं तन्नामकनेत्रं वा ।

'यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः ।
तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम् ॥' इति वचनात् ॥ १९ ॥

***सा०सं०*— **अनादिमध्यान्तम्** आदिमध्यान्तशून्यम् । गुणतोऽत्रादिमध्यान्तहीनत्वमुच्यते । 'नान्तं न मध्यम्' इत्यत्र देशतः । अतो न पौनरुक्त्यम् । शशिसूर्यौनेत्रयोर्यस्य तमिति वा, जन्यजनकभावेन वाऽभेदोक्तिः । देवानां बहुरूपत्वादनेकाश्रयत्वं युक्तमिति । 'चन्द्रमा मनसो जातः' (ऋक्संहिता) इति मनोजाततया तदाश्रयत्वमप्यविरुद्धम् । **दीप्तहुताशवक्त्रम्** इति जन्यजनकभावेनाश्रयाश्रयिभावेन वेति ध्येयम् ॥ १९ ॥

***अ०प्र०*— किञ्च, **अनादीति** ।

अनादिमध्यान्तं[१], अनन्तवीर्यं[२], अनन्तबाहुं[३], शशिसूर्यनेत्रं[४], दीप्तहुताशवक्त्रं[५], स्वतेजसा[६], इदं[७], विश्वं[८], तपन्तं[९], एतादृशं त्वां अहं[१०] पश्यामीत्यन्वयः ।

अनादिमध्यान्तं = आदिमध्यान्तरहितं नाम उत्पत्तिस्थितिलयरहितं यद्वा, गुणानन्त्ययुतं यद्वा, अनस्य आदिमध्यान्तकरं वा[१], अनन्तवीर्यं = अनन्तवीर्यप्रभावो यस्य तं[२], अनन्तबाहुं = अनन्ताः वीर्यवन्तो बाहवो यस्य तं[३], शशिसूर्यनेत्रं = चन्द्रादित्यौ यस्य तव नेत्राभ्यां उत्पद्यते स त्वं यद्वा, शश्याद्याश्रितं नेत्रादिकं यस्येति मध्यमपदलोपो वा । 'यस्माद्यज्जायते चाङ्गाल्लोकदेवादिकं हरेः । तन्नामवाच्यमगमद्यथा ब्रह्मादिकं मुखम्' इति वचनात् । यद्वा, शश्यादि शब्दवाच्यं नेत्रादिकं यस्येति वा[४], दीप्तहुताश-वक्त्रं = दीप्तो हुताशोऽग्निः वक्त्रेषु यस्य तं[५], स्वतेजसा इदं विश्वं तपन्तं = स्वस्य सर्वाङ्गप्रदीप्ततेजसा वदनज्वालायां च इदं विश्वं तपन्तं सन्तापयन्तं[९], एतादृशं त्वामहं[१०] पश्यामि ॥ १९ ॥

भाष्यम्

**'शशिसूर्यनेत्रम्' इत्यपि 'अहं क्रतुः' इत्यादिवत् । "तदङ्गजाः सर्वसुरादयोऽपि तस्मात् तदङ्गेत्यृषिभिः स्तुतास्ते" इति ऋग्वेदखिलेषु । "चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत" इति च । बहुरूपत्वाद् बह्वाश्रितत्वं च तेषां युक्तम् ॥ १९ ॥**

***प०टी०***— शशिसूर्यादीनां कथं भगवदङ्गैक्यमुच्यते ? इत्यत आह **शशीति** । भगवदङ्गजन्यत्वात् तदाश्रयत्वाच्चैक्यव्यपदेश इत्यर्थः । ननु कथं रुद्रादीनां मनोनयनादिबह्वाश्रयत्वजन्यत्वे ? इत्यत आह **बह्विति** ॥ १९ ॥

***प्र०दी०***— 'शशिसूर्यनेत्रं' इत्युक्तत्वात् कथं विश्वरूपशब्दस्यान्यथा व्याख्यानम् ? इत्यत आह **शशीति** । **इत्यादिवत्** व्याख्येयम् । जन्यजनकभावेन आश्रयाश्रयिभावेन वा अभेदोक्तिरित्यर्थः । कुत एतत् ? इत्यत आह **तदङ्गजा इति** । **तदङ्ग** इत्यविभक्तिको निर्देशः, सम्बुद्धिर्वा । अभेदे बाधकं चाह **चन्द्रमा इति** । **चक्षोः** चक्षुषः । नन्वत्र चन्द्रमसो मनोजातत्वं तदाश्रयत्वं चोच्यते । गीतायां तु नेत्राश्रयत्वादि । तथाऽन्यत्र 'दंष्ट्रार्यमेन्दू' इति । तत्कुतो न विरोध इत्यत आह **बह्विति** ॥ १९ ॥

***भा०दी०***— **अन्यत्र** 'दंष्ट्रार्यमेन्दूडुगणा द्विजानि' इति द्वितीयस्कन्धे आद्येऽध्याये ॥ १९ ॥

***भा०र०***— **शशीति** । 'शशिसूर्यनेत्रम्' इति चन्द्रसूर्ययोर्भगवन्नेत्रत्वं गीयते । तच्च विश्वरूपशब्दस्य 'पूर्णरूपार्थत्वे न युज्यते, युज्यते तु जगदात्मकत्वार्थे, इति कथं भाष्यकारीयं व्याख्यानमित्यर्थः । भाष्यपदमनूद्य शेषमाह **इत्यादिवद् व्याख्येयमिति** । शशिसूर्यौ = शशिसूर्यसत्ताप्रतीत्यादिकारणे नेत्रे यस्य, शशिसूर्यौ = शशिसूर्याश्रयौ नेत्रे यस्येति वा व्याख्येयमित्यर्थः । तदेतदाह **जन्यजनकभावेनेति** । **जनकभावः** सत्ताप्रतीत्यादिकारणत्वम् । दृष्टश्च जन्यजनकभावे अभेदव्यपदेशः— 'ब्राह्मणोऽस्य मुखमासीत्' इत्यत्र, 'इग्यणः सम्प्रसारणम्' इति सूत्रे सम्प्रसारणात् जातो वर्णः सम्प्रसारणं इत्यादौ । आश्रयाश्रयिभावेनैक्यव्यपदेशश्च 'तत्त्वमसि' इत्यत्र, 'समर्थः पदविधिः' इति सूत्रे समर्थपदाश्रितत्वात् पदविधिरुपचारेण समर्थपदेनोच्यत इत्यत्र च । यद्यपि 'अहं क्रतुः' इत्यत्र, 'रसोऽहम्' इत्यत्र, 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इत्यत्र च क्रत्वादिसत्ताप्रतीत्यादिकारणत्वात्, तद्विधोक्तृत्वात्, तत्रोपास्यत्वाच्च 'क्रतुरहम्' इत्याद्यैक्यव्यपदेश

इत्युक्तम्, न पुनराश्रयाश्रयिभावेनापि तद्व्यपदेश उक्तः । तथापि सत्ताप्रतीत्यादिकारणेनात्राभेदोक्तिः 'तदङ्गजाः' इति प्रमाणादाश्रयितव्येति तद्दृष्टान्तोक्तिः । आश्रयाश्रयिभावेनाभेदकथनं तु 'प्रतिमा-पेक्षयाऽङ्गानि भूरादीनि स्वरूपतः । तदाश्रितानि तज्जानि बह्वङ्गत्वं बहुत्वतः' इति भागवततात्पर्यो-दाहृतप्रमाणानुसारेणेति मन्तव्यम् ।

'तदङ्गानि स्तुताः' इति वक्तव्ये 'तदङ्ग' इति कथमुक्तम् ? इत्यत आह **तदङ्गेत्यविभक्तिक इति** । 'न लोपः प्रातिपदिकान्तस्य' इत्यादाविव लुप्तविभक्तिक इत्यर्थः । 'सुपां सुलुक्' इति स्मरणादिति भावः । **सम्बुद्धिर्वेति** । चन्द्रसूर्यादिदेवानुद्दिश्य प्रत्येकं 'हे विष्णवङ्ग' इत्येवं सम्बो-धनानुकूलप्रथमैकवचनान्तेन सम्बोध्य, स्तुताः शशिसूर्यादिदेवा इत्यर्थः इति वा व्याख्येयमित्यर्थः। उपलक्षणमेतत् । तदङ्गप्रातिपदिकात् परस्य जसः 'सुपां सुलुक्' इत्यादिना आदादेशे 'विश्वा भूतानि' इत्यादाविव 'तदङ्गा = तदङ्गानि' इत्यर्थ इत्यादि द्रष्टव्यमित्यपि आहुः । न केवलम् अमुख्याभेदस्याङ्गीकार्यत्वे साधकम्, मुख्याभेदाङ्गीकारे बाधकं चेति चशब्दः ।

'चक्षेः शिच्च' इत्युसिप्रत्यये शितोऽनार्धधातुकतया ख्याञादेशाभावे 'चक्षुषः' इति स्यात्, कथं 'चक्षोः' इति ? इत्यत आह **चक्षोश्चक्षुष इति** । वेदे रूपम् अनुकूलप्रत्ययोत्पादनेनोह्यमिति हृदयम् । 'तदाश्रितानि तज्जानि' इत्युदाहृतप्रमाणं मनसि निधायोक्तं **मनोजातत्वं तदाश्रयत्वं चेति** । 'नेत्राश्रयत्वादि' इत्यत्र आदिशब्देन नेत्रजन्यत्वं ग्राह्यम् । इदं च सिद्धान्तरीत्या । भाष्योक्तं बहुरूपं घटयितुमाह **तथाऽन्यत्रेति** । 'सूर्याचन्द्रमसौ दंष्ट्राऽऽश्रितौ' इति भागवत इत्यर्थः । भाष्ये 'तेषाम्' इत्यस्य सूर्यादिदेवानामित्यर्थः ॥ १९ ॥

**गीतातात्पर्यनिर्णयः**

**द्यावापृथिव्योरन्तरमेकेनैव रूपेण व्याप्तम् । "नान्तं न मध्यम्" इत्युक्तत्वात् पुनः "अनादिमध्यान्तम्" इति गुणानन्त्यापेक्षया । "त्वया ततं विश्वमनन्तरूप" इति कालापेक्षया । स्वयमन्तं विद्यमानमपि न पश्यतीत्याशङ्क्य "त्वया ततम्" इत्याह । अन्यत् तात्पर्यज्ञापनाय अभ्यासरूपम् । "सर्वं समाप्नोषि ततोऽसि सर्वः" इति "सर्वं खल्विदं ब्रह्म" इत्यादिषु सर्वशब्दव्याख्यानरूपम् ॥ १९ ॥**

*प्रका०*— "द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः" इत्यत्रैकशब्दस्य सार्थक्यमाह एकेनैव रूपेण व्याप्तमिति । सर्वा दश दिशो रूपान्तरैर्भगवता व्याप्ता इत्यर्थः ।

अस्मिन्वाक्येऽप्यपरिमितत्वमुच्यते विष्णोः । **अनादिमध्यान्तमिति** । तत्परिमाणेतरगुणानन्त्यापेक्षया युज्यते । ''नान्तं न मध्यं न पुनस्तवादि पश्यामि विश्वेश्वरे''ति पूर्वमुक्तत्वात् परिमाणानवधिकत्वस्य । कालतश्चानन्त्यमुत्तरत्रोच्यते विष्णोः ''त्वयाततं विश्वमनन्तरूपे''त्यत्रानन्तरूपशब्देन तदाह **नान्तमिति** । त्वयाततं विश्वमित्यस्यार्जुनवाक्यस्याभिप्रायमाह **स्वयमिति** । अन्यदप्यस्मिन्नध्याये यदर्जुनवचनं ''पश्यामि त्वां सर्वतोऽनन्तरूपमि''त्यादि तद्देशतः कालतो गुणतश्च विष्णोरपरिमितत्वे तात्पर्यम् । अभ्यासस्य तात्पर्यज्ञापकत्वात् । न च वाच्यं ''नमोऽस्तु ते सर्वत एव सर्वे''त्यर्जुनेन विष्णोः सर्वात्मकत्वमुक्तमिति । ''सर्वं समाप्नोषि ततोऽसि सर्व'' इत्युक्तत्वात् । अनेन ''सर्वं खल्विदं ब्रह्मे''त्यादिवाक्यगतसर्वशब्दो व्याख्यातो भवति । तदेतदाह **अन्यदित्यादिना** ॥

***न्या०दी०***— **''द्यावापृथिव्योः'' इत्यत्र त्वयेत्युक्त्यैवेकेनेति सिद्धत्वात् किमर्थं पुनरेकेनेत्युच्यत इत्यतस्तस्य सार्थक्यमाह द्यावापृथिव्योरिति ॥ ''अनादिमध्यान्तम्'' इति परिमाणानन्त्यमुच्यत इत्यन्यथाप्रतीतिनिरासायाह नान्तमिति ॥ अनादिमध्यान्तमित्यत्र परिमाणेतरगुणानन्त्यमेवोच्यते, न तु परिमाणानन्त्यम् । तस्य ''नान्तं न मध्यम्'' इत्यनेन उक्तत्वादित्यर्थः । ''त्वया ततं विश्वमनन्तरूपम्'' इत्यत्रानन्तरूपेति पुनरुक्तिरित्यत आह त्वयेति ॥ तर्हि ''नान्तं न मध्यं न पुनस्तवादिं पश्यामि'' इति परिमाणानन्त्यस्योक्तत्वात् ''त्वया ततं विश्वम्'' इति पुनरुक्तिरित्यत आह स्वयमिति । नान्तं पश्यामीत्युक्ते नेश्वरस्य परिमाणानन्त्यं सिद्ध्यति । विद्यमानमन्तं स्वयं न पश्यतीत्यपि प्रतीतेः । तन्निवृत्त्यर्थं न केवलमहं पश्यामि, किन्तु त्वया ततं विश्वमित्युक्तत्वेन सप्रयोजनत्वान्न पुनरुक्तिरिति भावः । तथापि ''पश्यामि त्वां सर्वतोऽनन्तरूपं'', ''द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः'' इत्यादि पुनरुक्तिरित्यत आह अन्यदिति । एतद्वाक्यजातस्य विष्णोर्देशतः कालतो गुणतश्चानन्त्ये स्वस्य महातात्पर्यज्ञापनायाभ्यासरूपत्वान्न पुनरुक्तिदोष इति भावः । 'अनन्तवीर्यामितविक्रमस्त्वं', 'सर्वं समाप्नोषि' इति पुनरुक्तिशङ्का पूर्वोक्त्यैव गर्भस्रावेण गता । तथापि तस्य प्रयोजनान्तरमाह सर्वमिति ॥ ''सर्वं खल्विदं ब्रह्म'' इत्यादेः सर्वस्य जगतो ब्रह्मात्मकत्वात् ''त्वमस्य विश्वस्य परं निधानम्'' इत्याद्ययुक्तमित्याशङ्क्य तच्छ्रुतिगतसर्वशब्दस्य ब्रह्मैवार्थः, सर्वव्याप्तत्वादित्यत्रोच्यते । अतो न पौनरुक्त्यमिति भावः । ननु स्वयमेव ''नमोऽस्तु ते सर्वत एव सर्व'' इति सर्वशब्देन सम्बोध्य ''सर्वं समाप्नोषि'' इति किमर्थमसौ व्याख्याय इत्यतो वाऽऽह सर्वमिति ॥ नात्र**

स्ववचनं व्याक्रियते, येन वैय्यर्थ्यं स्यात् । किन्तु "सर्वं खल्विदं ब्रह्म", "सर्वं ह्येतद् ब्रह्म" इत्यादिवाक्येषु श्रुतसर्वशब्दमनूद्य तद्व्याख्यानमिदं स्वोक्तस्थापनार्थमिति भावः ॥ ॥ १९ ॥

*भा०दी०*— परिमाणतो परिच्छिन्नरूपेति मत्वाऽऽह **अनन्तरूपेति पुनरुक्तिरिति** ॥ **पूर्वोक्त्यैवेति** । अभ्यासरूपमित्युक्त्यैवेत्यर्थः । **परं निधानम्** उत्तमाश्रय इत्यर्थः । मयेदं व्याप्त-मित्यादिः आदिपदार्थः । **अत्रोच्यते** गीतायामुच्यत इत्यर्थः ॥ **असाविति** । सर्वशब्द इत्यर्थः ॥ **स्वोक्तस्थापनायेति** । परं निधानमित्याद्युक्तस्थापनायेत्यर्थः ॥ १९ ॥

**गीता**

**द्यावापृथिव्योरिदमन्तरं हि**
**व्याप्तं त्वयैकेन दिशश्च सर्वाः ।**
**दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं**
**लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥**

*वि०वि०*— द्यावापृथिव्योरन्तरमेकेनैव रूपेण व्याप्तम् । विश्वरूपदर्शनस्य भयहेतुत्वं न सर्वेषां सर्वदा । किन्तु केषुचित् कारणविशेषेषु कदाचिदेव । उक्तं च–

'त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् ।
दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुसारतः ॥
प्रायः सहैव पार्थेन प्रायो भीताश्च तेऽखिलाः ।
दर्शनाभ्यासतो दृष्टिरानन्दोद्रेकता भवेत् ॥
तस्मिन्काले च भूमेश्च भारहारार्थमुद्यमात् ।
उग्रत्वमिव सर्वत्र न भीतिर्ब्रह्मदर्शिनाम् ॥
अर्जुनादधिका ये तु येषां भीतिर्न चाभवत् ।
श्रीब्रह्मरुद्रपूर्वाणां कृष्णाया भीमरामयोः ॥' इति ।

अथवा, विश्वरूपदर्शनार्थं यतमानानां लोकत्रयस्थानां पुंसाम् । तददृष्ट्वाऽपि चेतसि निरूप्य स्थितानां भये जाते सति तद्द्रष्टुरर्जुनस्याहमिवैतेऽपि दृष्ट्वा बिभ्यतीति बुद्धिर्जाता । अतो लोकत्रयं दृष्ट्वा प्रव्यथितमित्याह—

अस्मिन्वाक्येऽप्यपरिमितत्वमुच्यते विष्णोः । **अनादिमध्यान्तमिति** । तत्परिमाणेतरगुणानन्त्यापेक्षया युज्यते । "नान्तं न मध्यं न पुनस्तवादि पश्यामि विश्वेश्वरे"ति पूर्वमुक्तत्वात् परिमाणानवधिकत्वस्य । कालतश्चानन्त्यमुत्तरत्रोच्यते विष्णोः "त्वयाततं विश्वमनन्तरूपे"त्यत्रानन्तरूपशब्देन तदाह **नान्तमिति** । त्वयाततं विश्वमित्यस्यार्जुनवाक्यस्याभिप्रायमाह **स्वयमिति** । अन्यदप्यस्मिन्नध्याये यदर्जुनवचनं "पश्यामि त्वां सर्वतोऽनन्तरूपमि"त्यादि तद्देशतः कालतो गुणतश्च विष्णोरपरिमितत्वे तात्पर्यम् । अभ्यासस्य तात्पर्यज्ञापकत्वात् । न च वाच्यं "नमोऽस्तु ते सर्वत एव सर्वे"त्यर्जुनेन विष्णोः सर्वात्मकत्वमुक्तमिति । "सर्वं समाप्नोषि ततोऽसि सर्व" इत्युक्तत्वात् । अनेन "सर्वं खल्विदं ब्रह्मे"त्यादिवाक्यगतसर्वशब्दो व्याख्यातो भवति । तदेतदाह **अन्यदित्यादिना** ॥

***न्या०दी०***— "द्यावापृथिव्योः" इत्यत्र त्वयेत्युक्त्यैवेकेनेति सिद्धत्वात् **किमर्थं पुनरेकेनेत्युच्यत इत्यतस्तस्य सार्थक्यमाह द्यावापृथिव्योरिति** ॥ "अनादिमध्यान्तम्" इति **परिमाणानन्त्यमुच्यत इत्यन्यथाप्रतीतिनिरासायाह नान्तमिति** ॥ अनादिमध्यान्तमित्यत्र **परिमाणेतरगुणानन्त्यमेवोच्यते, न तु परिमाणानन्त्यम् । तस्य "नान्तं न मध्यम्" इत्यनेन उक्तत्वादित्यर्थः । "त्वया ततं विश्वमनन्तरूपम्" इत्यत्रानन्तरूपेति पुनरुक्तिरित्यत आह त्वयेति** ॥ **तर्हि "नान्तं न मध्यं न पुनस्तवादिं पश्यामि" इति परिमाणानन्त्यस्योक्तत्वात् "त्वया ततं विश्वम्" इति पुनरुक्तिरित्यत आह स्वयमिति । नान्तं पश्यामीत्युक्ते नेश्वरस्य परिमाणानन्त्यं सिद्ध्यति । विद्यमानमन्तं स्वयं न पश्यतीत्यपि प्रतीतेः । तन्निवृत्त्यर्थं न केवलमहं पश्यामि, किन्तु त्वया ततं विश्वमित्युक्तत्वेन सप्रयोजनत्वान्न पुनरुक्तिरिति भावः । तथापि "पश्यामि त्वां सर्वतोऽनन्तरूपं", "द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः" इत्यादि पुनरुक्तिरित्यत आह अन्यदिति । एतद्वाक्यजातस्य विष्णोर्देशतः कालतो गुणतश्चानन्त्ये स्वस्य महातात्पर्यज्ञापनायाभ्यासरूपत्वान्न पुनरुक्तिदोष इति भावः । 'अनन्तवीर्यामितविक्रमस्त्वं', 'सर्वं समाप्नोषि' इति पुनरुक्तिशङ्का पूर्वोक्त्यैव गर्भस्रावेण गता । तथापि तस्य प्रयोजनान्तरमाह सर्वमिति** ॥ "सर्वं खल्विदं **ब्रह्म" इत्यादेः सर्वस्य जगतो ब्रह्मात्मकत्वात् "त्वमस्य विश्वस्य परं निधानम्" इत्याद्ययुक्तमित्याशङ्क्य तच्छ्रुतिगतसर्वशब्दस्य ब्रह्मैवार्थः, सर्वव्याप्तत्वादित्यत्रोच्यते । अतो न पौनरुक्त्यमिति भावः । ननु स्वयमेव "नमोऽस्तु ते सर्वत एव सर्व" इति सर्वशब्देन सम्बोध्य "सर्वं समाप्नोषि" इति किमर्थमसौ व्याख्याय इत्यतो वाऽऽह सर्वमिति** ॥ नात्र

स्ववचनं व्याक्रियते, येन वैय्यर्थ्यं स्यात् । किन्तु "सर्वं खल्विदं ब्रह्म", "सर्वं ह्येतद् ब्रह्म" इत्यादिवाक्येषु श्रुतसर्वशब्दमनूद्य तद्व्याख्यानमिदं स्वोक्तस्थापनार्थमिति भावः ॥ ॥ १९ ॥

*भा०दी०*— परिमाणतो परिच्छिन्नरूपेति मत्वाऽऽह **अनन्तरूपेति पुनरुक्तिरिति** ॥ **पूर्वोक्त्यैवेति** । अभ्यासरूपमित्युक्त्यैवेत्यर्थः । **परं निधानम्** उत्तमाश्रय इत्यर्थः । मयेदं व्याप्तमित्यादिः आदिपदार्थः । **अत्रोच्यते** गीतायामुच्यत इत्यर्थः ॥ **असाविति** । सर्वशब्द इत्यर्थः ॥ **स्वोक्तस्थापनायेति** । परं निधानमित्याद्युक्तस्थापनायेत्यर्थः ॥ १९ ॥

**गीता**

**द्यावापृथिव्योरिदमन्तरं हि**
**व्याप्तं त्वयैकेन दिशश्च सर्वाः ।**
**दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं**
**लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥**

*वि०वि०*— द्यावापृथिव्योरन्तरमेकेनैव रूपेण व्याप्तम् । विश्वरूपदर्शनस्य भयहेतुत्वं न सर्वेषां सर्वदा । किन्तु केषुचित् कारणविशेषेषु कदाचिदेव । उक्तं च–

'त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् ।
दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुसारतः ॥
प्रायः सहैव पार्थेन प्रायो भीताश्च तेऽखिलाः ।
दर्शनाभ्यासतो दृष्टिरानन्दोद्रेकता भवेत् ॥
तस्मिन्काले च भूमेश्च भारहारार्थमुद्यमात् ।
उग्रत्वमिव सर्वत्र न भीतिर्ब्रह्मदर्शिनाम् ॥
अर्जनादधिका ये तु येषां भीतिर्न चाभवत् ।
श्रीब्रह्मरुद्रपूर्वाणां कृष्णाया भीमरामयोः ॥' इति ।

अथवा, विश्वरूपदर्शनार्थं यतमानानां लोकत्रयस्थानां पुंसाम् । तददृष्ट्वाऽपि चेतसि निरूप्य स्थितानां भये जाते सति तद्द्रष्टुरर्जुनस्याहमिवैतेऽपि दृष्ट्वा बिभ्यतीति बुद्धिर्जाता । अतो लोकत्रयं दृष्ट्वा प्रव्यथितमित्याह—

'दृष्ट्वा देवं मोदमाना अदृष्ट्वाऽप्येतद्भयाद्बिभ्यतोऽदृष्टवत्ते ।
पश्यन्ति तन्यस्तचक्षुर्मुखांस्तु तस्मिन्नेवैते मनसो गतत्वात् ॥'

इति च श्रुतिः ॥ २० ॥

*सा०सं०*— **द्यावापृथिव्योरिदमन्तरं** मध्यम् । **एकेन त्वया** एकरूपेण व्याप्तम् । रूपान्तरैस्तु **सर्वा दिशो** व्याप्ता इत्यर्थः । त्वयेत्येकवचनेनैवैकेनेति लाभे पुनरेकेनेत्युक्तिः एकेन रूपेण द्यावापृथिव्यन्तरव्याप्तिसूचनाय । हे **महात्मन्** । **तवेदमुग्रं** भयङ्करम् । **अद्भुतं रूपं दृष्ट्वा लोकत्रयम्** । **प्रव्यथितं** अतिभीतं पश्यामीत्यन्वयः । भूमेर्भारहाराय प्रवृत्तत्वादुग्रमिव न तूग्रमेव । तदुग्रत्वमपि केषाञ्चित् संहार्यत्वकारणविशेषादनभ्यासरूपकारणद्वा । अभ्यासे तु आनन्द एव तद्दर्शनाद्भवति । अत्र **लोकत्रय**पदेन लोकत्रयस्थभक्तवर्गग्रहः । अभक्तानां तद्दृष्टेरेवाभावात् । यद्वा, तद्रूपमदृष्ट्वाऽपि मनसा तदनुसन्धायैव बिभ्यज्जनं दृष्ट्वाऽर्जुनोऽहमिव एतेऽपि दृष्ट्वा बिभ्यतीति बुद्ध्वा **लोकत्रयं प्रव्यथितं पश्यामी**त्याहेति ज्ञेयम् । अस्मिन् पक्षे लोकत्रयशब्दो भक्ताभक्तवर्गपरः ॥२०॥

*अ०प्र०*— किञ्च, **द्यावापृथिव्योरिति** ।

हे महात्मन् ! हि यस्मात्[१], द्यावापृथिव्योः[२], इदं अन्तरं[४], एकेन[५], त्वया[६], व्याप्तं[७], सर्वाः[८], दिशश्च व्याप्ताः[९], तस्मात् लोकत्रयं[१०], अद्भुतं[११] उग्रं[१२], तवेदं[१३], रूपं[१४], दृष्ट्वा[१५], प्रव्यथितं[१६], पश्यामीति पूर्वस्यैवानुषङ्गः ।

हे महात्मन् = पूज्यरूप अपरिच्छिन्नरूपेति वा, हि यस्मात्कारणात्[१], द्यावापृथिव्योः = द्यावाभूम्योः[२], इदं = पुरोवर्ति[३], अन्तरं = मध्यं अन्तरिक्षं[४], एकेन = अभिन्नेन रूपेण एकशब्देन तेषां रूपाणां भेदो नास्तीत्याह[५], त्वया[६], व्याप्तं = समाकुलं[७], सर्वाः दिशश्च व्याप्ताः = त्वया एकेनैव विश्वरूपेण सर्वदिशाचक्रं दशदिशश्च व्याप्ताः परिपूरिताः[९], तस्मात् लोकत्रयं = त्रिलोकस्थं तद्दर्शनयोग्यं प्रतिबन्धकशून्यं भक्तकुलं[१०] अद्भुतं = उग्रं तवेदं रूपं दृष्ट्वा[१५], प्रव्यथितं = अतिभीतं[१६], एतादृशं रूपं पश्यामीति पूर्वस्यैव अनुषङ्गः ॥ २० ॥

**गीतातात्पर्यनिर्णयः**

**"त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् ।**
**दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुरूपतः ॥**
**प्रायः सहैव पार्थेन प्रायो भीताश्च तेऽखिलाः ।**
**दर्शनाभ्यासतो दृष्टिरानन्दोद्रेकता भवेत् ॥**

तस्मिन् काले तु भूमेश्च भारहारार्थमुद्यमात् ।
उग्रत्वमिव सर्वत्र न भीतिर्ब्रह्मदर्शिनाम् ॥
अर्जुनादधिका ये तु तेषां भीतिर्न चाभवत् ।
श्रीब्रह्मरुद्रपूर्वाणां कृष्णाया भीमरामयोः ॥"

इत्याग्नेयवचनात् "दृष्ट्वाऽद्भुतं रूपम्" इत्यादि युज्यते ॥ २० ॥

*प्रका०*— "दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन्" इत्यादेरर्थं सर्वशङ्कोद्धारेणाह **त्रिलोकेष्वित्यादिना** ॥

*न्या०दी०*— ननु "मन्यसे यदि तच्छक्यं मया द्रष्टुं" इति स्वस्यापि यद्दर्शनमसुलभमुक्तं तादृशरूपदर्शनं कथं लोकत्रयस्य "दृष्ट्वाऽद्भुतं रूपं" इत्यादिनाऽर्जुनेनोच्यते । 'सुखमात्यन्तिकं' इत्यादौ भगवद्दर्शनस्य परमानन्दहेतुत्वेनोक्तत्वात् कथं विश्वरूपदर्शनस्य व्यथाहेतुत्वमुच्यत इत्यत आह **त्रिलोकेष्विति** ॥ किं विश्वरूपदर्शनं सदा भयङ्करमित्यत आह **दर्शनेति** ॥ किमेवं सर्वरूपेष्वपि प्रथमतो भीतिर्भवतीत्यत आह **तस्मिन्निति** ॥ उग्रत्वमिवातो भीतिरिति शेषः । तर्हि सर्वेषामपि भयसम्भवात् किमर्थमुच्यते प्रायो भीता इत्यत आह **अर्जुनादिति** ॥ एतद्वचनबलेन लोकत्रयशब्दस्य तत्र स्थितविश्वरूपदर्शनयोग्यप्रतिबन्धकहीनभक्तविषयत्वात् भगवतः किञ्चिदुग्रत्वात्तद्दर्शिनां भयस्यापि सम्भवात् "दृष्ट्वाऽद्भुतं" इत्यादिवाक्यमुपपन्नमिति भावः ।

*भा०दी०*— **लोकत्रयस्येति** । अर्जुनेन उच्यत इत्यन्वयः ॥ केनोच्यत इत्यत उक्तं **दृष्ट्वेति** । **सुखमात्यन्तिकमित्यादाविति** । षष्ठे सुखमात्यन्तिकं यत्तत् इत्यादौ इत्यर्थः । योग्यत्वेऽपि सति प्रतिबन्धके तद्दर्शनाभावादाह **प्रतिबन्धकहीनेति** ।

**गीता**

**अमी हि त्वां सुरसङ्घा विशन्ति**
**केचिद्भीताः प्राञ्जलयो गृणन्ति ।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः**
**स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥**

'दृष्ट्वा देवं मोदमाना अदृष्ट्वाऽप्येतद्भयाद्बिभ्यतोऽदृष्टवत्ते ।
पश्यन्ति तन्यस्तचक्षुर्मुखांस्तु तस्मिन्नेवैते मनसो गतत्वात् ॥'

इति च श्रुतिः ॥ २० ॥

*सा०सं०*— **द्यावापृथिव्योरिदमन्तरं** मध्यम् । **एकेन त्वया** एकरूपेण व्याप्तम् । रूपान्तरैस्तु **सर्वा दिशो** व्याप्ता इत्यर्थः । त्वयेत्येकवचनेनैवैकेनेति लाभे पुनरेकेनेत्युक्तिः एकेन रूपेण द्यावापृथिव्यन्तरव्याप्तिसूचनाय । हे **महात्मन्** । **तवेदमुग्रं** भयङ्करम् । **अद्भुतं रूपं दृष्ट्वा लोकत्रयम्** । **प्रव्यथितं** अतिभीतं पश्यामीत्यन्वयः । भूमेर्भारहाराय प्रवृत्तत्वादुग्रमिव न तूग्रमेव । तदुग्रत्वमपि केषाञ्चित् संहार्यत्वकारणविशेषादनभ्यासरूपकारणद्वा । अभ्यासे तु आनन्द एव तद्दर्शनाद्भवति । अत्र **लोकत्रय**पदेन लोकत्रयस्थभक्तवर्गग्रहः । अभक्तानां तद्दृष्टेरेवाभावात् । यद्वा, तद्रूपमदृष्ट्वाऽपि मनसा तदनुसन्धायैव बिभ्यज्जनं दृष्ट्वाऽर्जुनोऽहमिव एतेऽपि दृष्ट्वा बिभ्यतीति बुद्ध्वा **लोकत्रयं प्रव्यथितं पश्यामी**त्याहेति ज्ञेयम् । अस्मिन् पक्षे लोकत्रयशब्दो भक्ताभक्तवर्गपरः ॥२०॥

*अ०प्र०*— किञ्च, **द्यावापृथिव्योरिति** ।

हे महात्मन् ! हि यस्मात्[१], द्यावापृथिव्योः[२], इदं अन्तरं[४], एकेन[५], त्वया[६], व्याप्तं[७], सर्वाः[८], दिशश्च व्याप्ताः[९], तस्मात् लोकत्रयं[१०], अद्भुतं[११] उग्रं[१२], तवेदं[१३], रूपं[१४], दृष्ट्वा[१५], प्रव्यथितं[१६], पश्यामीति पूर्वस्यैवानुषङ्गः ।

हे महात्मन् = पूज्यरूप अपरिच्छिन्नरूपेति वा, हि यस्मात्कारणात्[१], द्यावापृथिव्योः = द्यावाभूम्योः[२], इदं = पुरोवर्ति[३], अन्तरं = मध्यं अन्तरिक्षं[४], एकेन = अभिन्नेन रूपेण एकशब्देन तेषां रूपाणां भेदो नास्तीत्याह[५], त्वया[६], व्याप्तं = समाकुलं[७], सर्वाः दिशश्च व्याप्ताः = त्वया एकेनैव विश्वरूपेण सर्वदिशाचक्रं दशदिशश्च व्याप्ताः परिपूरिताः[९], तस्मात् लोकत्रयं = त्रिलोकस्थं तद्दर्शनयोग्यं प्रतिबन्धकशून्यं भक्तकुलं[१०] अद्भुतं = उग्रं तवेदं रूपं दृष्ट्वा[१५], प्रव्यथितं = अतिभीतं[१६], एतादृशं रूपं पश्यामीति पूर्वस्यैव अनुषङ्गः ॥ २० ॥

**गीतातात्पर्यनिर्णयः**

**"त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् ।
दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुरूपतः ॥
प्रायः सहैव पार्थेन प्रायो भीताश्च तेऽखिलाः ।
दर्शनाभ्यासतो दृष्टिरानन्दोद्रेकता भवेत् ॥**

तस्मिन् काले तु भूमेश्च भारहारार्थमुद्यमात् ।
उग्रत्वमिव सर्वत्र न भीतिर्ब्रह्मदर्शिनाम् ॥
अर्जुनादधिका ये तु तेषां भीतिर्न चाभवत् ।
श्रीब्रह्मरुद्रपूर्वाणां कृष्णाया भीमरामयोः ॥"

इत्याग्नेयवचनात् "दृष्ट्वाऽद्भुतं रूपम्" इत्यादि युज्यते ॥ २० ॥

***प्रका०***— "दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन्" इत्यादेरर्थं सर्वशङ्कोद्धारेणाह **त्रिलोकेष्वित्यादिना** ॥

***न्या०दी०***— ननु "मन्यसे यदि तच्छक्यं मया द्रष्टुं" इति स्वस्यापि यद्दर्शनमसुलभमुक्तं तादृशरूपदर्शनं कथं लोकत्रयस्य "दृष्ट्वाऽद्भुतं रूपं" इत्यादिनाऽर्जुनेनोच्यते । 'सुखमात्यन्तिकं' इत्यादौ भगवद्दर्शनस्य परमानन्दहेतुत्वेनोक्तत्वात् कथं विश्वरूपदर्शनस्य व्यथाहेतुत्वमुच्यत इत्यत आह **त्रिलोकेष्विति** ॥ किं विश्वरूपदर्शनं सदा भयङ्करमित्यत आह **दर्शनेति** ॥ किमेवं सर्वरूपेष्वपि प्रथमतो भीतिर्भवतीत्यत आह **तस्मिन्निति** ॥ उग्रत्वमिवातो भीतिरिति शेषः । तर्हि सर्वेषामपि भयसम्भवात् किमर्थमुच्यते प्रायो भीता इत्यत आह **अर्जुनादिति** ॥ एतद्वचनबलेन लोकत्रयशब्दस्य तत्र स्थितविश्वरूपदर्शनयोग्यप्रतिबन्धकहीनभक्तविषयत्वात् भगवतः किञ्चिदुग्रत्वात्तद्दर्शिनां भयस्यापि सम्भवात् "दृष्ट्वाऽद्भुतं" इत्यादिवाक्यमुपपन्नमिति भावः ।

***भा०दी०***— लोकत्रयस्येति । अर्जुनेन उच्यत इत्यन्वयः ॥ केनोच्यत इत्यत उक्तं **दृष्ट्वेति** । **सुखमात्यन्तिकमित्यादाविति** । षष्ठे सुखमात्यन्तिकं यत्तत् इत्यादौ इत्यर्थः । योग्यत्वेऽपि सति प्रतिबन्धके तद्दर्शनाभावादाह **प्रतिबन्धकहीनेति** ।

**गीता**

**अमी हि त्वां सुरसङ्घा विशन्ति**
**केचिद्भीताः प्राञ्जलयो गृणन्ति ।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः**
**स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥**

*वि०वि०*— अमी मुक्ताः सुरसङ्घाः । त्वां विशन्ति । 'प्रवेशो निर्गमश्चैव मुक्तानां स्वेच्छया भवेत्' इति वचनात् ॥ २१ ॥

*सा०सं०*— अन्यदपि स्वदृष्टमाहार्जुनः **अमी हीति** । **सुरसङ्घाः** मुक्तदेववर्गाः । 'प्रवेशो निर्गमश्चैव मुक्तानां स्वेच्छया भवेत्' इति वचनात् । तेन 'पश्यामि देवांस्तव देव देहे' इत्यनेन न पौनरुक्त्यम् । अत्र मुक्तानां तत्रामुक्तानामुक्तेः, **पुष्कलाभिर्गुणपूर्णाभिः स्तुतिभिः स्तुवन्ति** ॥२१॥

*अ०प्र०*— किञ्च, **अमी हीति** ।

अमी[१], सुरसङ्घाः[२], त्वां[३], विशन्ति[४], केचित्[५], भीताः सन्तः[६], प्राञ्जलयो[७], गृणन्ति[८], ऋषयः[९], देवसङ्घाश्च[१०] त्वां[११] स्वस्तीत्युक्त्वा[१४], पुष्कलाभिः[१५], स्तुतिभिः[१६], स्तुवन्ति[१७], एतादृशं त्वां पश्यामीति अन्वयितव्यम् ।

अमी = ते च[१], सुरसङ्घाः = मुक्ताः देवानां समूहाः[२], त्वां विशन्ति = स्वेच्छया शरणं प्रविशन्ति यद्वा, प्रवेशमाप्नुवन्ति । तदुक्तम्— 'प्रवेशो निर्गमश्चैव मुक्तानां स्वेच्छया भवेत् ॥' इत्युक्तेः[४],

केचित् = अज्ञानेन विषयासक्ताः इन्द्रादिसुरगणांश्च स्वस्वविषयासक्तिं ज्ञात्वा भीताः सन्तः यद्वा, अमूनां मध्ये केचित् भीताः = दूरत एव स्थिता सन्तः[६], प्राञ्जलयः = कृतसम्पुटकर-युगलाः । यद्वा, बद्धाञ्जलयः त्वां[७], गृणन्ति = 'भो भो मङ्गल मङ्गल जयजय रक्षरक्ष' इति प्रार्थयन्ते[८], तथा ऋषयः = वसिष्ठादयः[९], देवसङ्घाः = ब्रह्मादिदेवानां समूहाः[१०] त्वां स्वस्तीत्युक्त्वा = मङ्गलमस्तु इति उक्त्वा दूरत एव[१४], पुष्कलाभिः = बह्वीभिः अर्थतो विस्तृताभिः[१५], स्तुतिभिः ऋगादिस्तोत्रैः[१६], स्तुवन्ति = स्तोत्रं कुर्वन्ति[११] एतादृशं त्वां पश्यामीत्यर्थः ॥ २१ ॥

**गीता**

**रुद्रादित्या वसवो ये च साध्या**
**विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसङ्घा**
**वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥**

*वि०वि०*— उष्मपाः पितरः 'ऊष्मभागा हि पितरः' इति श्रुतेः । गन्धर्वादीनां सङ्घाः ॥२२॥

*सा०सं०*— ऊष्मपाः पितरः 'ऊष्मभागा हि पितरः' इति श्रुतेः । गन्धर्वादीनां सङ्घाः ॥ ॥ २२ ॥

*अ०प्र०*— किञ्च, रुद्रेति ।

रुद्राश्च[१], आदित्याश्च वसवश्च[३], ये च साध्या नाम देवाः[४], विश्वेदेवाः[५], अश्विनौ देवौ[६], मरुद्गणाः[७], उष्मपाश्च = उष्माणं पिबन्तीति उष्मपाः पितरः– उष्मभागा हि पितरः इत्यादिश्रुतेः । स्मृतिश्च— यावदुष्णम्भवेदन्नं यावदश्नन्तिवाग्यता । पितरस्तावदश्नन्ति यावन्नोक्ता हरेर्गुणाः ॥[८], गन्धर्वाश्च[९], यक्षाश्च[१०] असुराश्च[११] सिद्धानां सङ्घाश्च[१२], ते सर्वे[१३], एवं[१४], विस्मिताः सन्तः[१५], त्वां[१६], वीक्ष्यन्ते[१९], एतादृशं त्वां पश्यामीत्यन्वयो योजनीयः ॥ २२ ॥

**गीता**

**रूपं महत्ते बहुवक्त्रनेत्रं**
**महाबाहो बहुबाहूरुपादम् ।**
**बहूदरं बहुदंष्ट्राकरालं**
**दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥ २३ ॥**

*वि०वि०*— रूपेत्यादिना ॥ २३ ॥

*सा०सं०*— बहुदंष्ट्राभिः करालं विरूपम् । **लोका**ः भक्तवर्गाः । भक्ताभक्तवर्गार्थत्वे तु लोकत्रयमित्यत्रेवाभिप्रायो ध्येयः । **तथाऽहमपि प्रव्यथित**ः ॥

*अ०प्र०*— रूपमिति ।

हे महाबाहो ![१], पूर्वोक्ताः सर्वे लोकाः[२], बहुवक्त्रनेत्रं[३], बहुबाहूरुपादं[४], बहूदरं[५], बहुदंष्ट्राकरालं[६], एतादृशं ते[७], महद्रूपं[८], दृष्ट्वा[१०] प्रव्यथिताः[११] तथा[१२], अहमपि प्रव्यथितोऽस्मि[१३] ॥

हे महाबाहो ! पूर्वोक्ताः सर्वे लोकाः[२], बहुवक्त्रनेत्रं = बहूनि वक्त्राणि नेत्राणि च यस्मिन् तत्[३], बहुबाहूरुपादं = बहवो बाहवः उरवश्च पादाश्च यस्मिन् तत् तथा[४], बहूदरं बहूनि उदराणि यस्मिन् तत्[५], बहुदंष्ट्राकरालं = बह्वीभिः दंष्ट्राभिः करालं विकृतं भयङ्करं[६], रौद्रमित्यर्थः[६], एतादृशं

ते तव महद्रूपं = महत् अत्यूर्जितं यद्वा, महतोऽपि महत्– 'परात्परं यन्महतो महान्त' इति श्रुतेः। रूपं[९], दृष्ट्वा = दर्शनं प्राप्य[१०] प्रव्यथिताः = अतिभीताः[११] किं बहुनोक्तेन तथा[१२], अहमपि प्रव्यथितोऽस्मि[१३] ॥ २३ ॥

**गीता**

**नभःस्पृशं दीप्तमनेकवर्णं**
**व्यात्ताननं दीप्तविशालनेत्रम् ।**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा**
**धृतिं न विन्दामि शमं च विष्णो॥ २४ ॥**

***वि०वि०—*** व्यात्ताननं विवृतमुखम् ॥ २४ ॥

***सा०सं०—*** **व्यात्ताननं** विवृतमुखम् । **अन्तरात्मा** मनः । **न विन्दामि** न प्राप्नोमि । **शमं** सुखं च । न विन्दामि । न प्राप्नोमि । विष्णुशब्दार्थ उक्तः दशमेऽध्याये ॥ २४ ॥

***अ०प्र०—*** न केवलं भीतोऽहमित्येतावत् एवमपि तु **नभःस्पृशमिति** ।

नभःस्पृशं[१], दीप्तं[२], अनेकवर्णं[३], व्यात्ताननं[४], दीप्तविशालनेत्रं[५], एवंभूतं हि[६], त्वां[७], दृष्ट्वा[८], प्रव्यथितान्तरात्मा सः अहं[९], धृतिं[१०] शमं च[११] हे विष्णो ![१२], न विन्दामि[१३] इत्यन्वयः ।

नभःस्पृशं = नभः स्पृशतीति नभस्पृक् नभसा स्पृष्टं नभसाप्यस्पृशं वा अन्तरिक्षव्यापिनमित्यर्थः[१], दीप्तं = तेजोयुक्तं[२], अनेकवर्णं = अनेके वर्णाः यस्य तं[३], व्यात्ताननं = व्यात्तानि निवृत्तानि आननानि यस्य तं यद्वा, अतिवृत्ताननं[४], दीप्तविशालनेत्रं = दीप्तानि विशालानि नेत्राणि यस्य तम् । यद्वा, दीप्तानि महाप्रलयाग्निरिवोज्वलिततेजसा भयस्यापि भयप्रदानि विशालानि विस्तृतानि नेत्राणि नेत्रपङ्क्त्यो यस्मिन् तत्[५], एवंभूतं हि[६], त्वां दृष्ट्वा[७-८], प्रव्यथितान्तरात्मा = प्रकर्षेण विकल्पं प्राप्तं, यद्वा, प्रव्यथितः अन्तरात्मा मनो यस्य तं तथा सः अहं[९], धृतिं = धैर्यं[१०] शमं च = उपशमं च उपशमं विश्रान्तिं च[११] हे विष्णो[१२], न विन्दामि = न लेभे ॥ २४ ॥

**गीता**

**दंष्ट्राकरालानि च ते मुखानि**
**दृष्ट्वैव कालानलसन्निभानि ।**

**दिशो न जाने न लभे च शर्म**
**प्रसीद देवेश जगन्निवास ॥ २५ ॥**

***वि०वि०***— दंष्ट्राभिः करालानि विरूपाणि ॥ २५ ॥

***सा०सं०***— **दंष्ट्राकरालानि** दंष्ट्राभिर्विरूपाणि । **कालेति** प्रलयकालाग्निसन्निभानि समप्रभाणि । **न जाने न** जानामि । **शर्म** सुखं **च न विन्दामि** । **जगन्निवास** जगदाधार ॥२५॥

***अ०प्र०***— किञ्च, **दंष्ट्राकरालानीति** ।

भो देवेश ![1], दंष्ट्राकरालानि[2], कालानलसन्निभानि[3], ते[4], मुखानि[5], दृष्ट्वैव[6], दिशो न जाने[7], शर्म च[8], न लेभे[9], भो जगन्नवास ![10] प्रसीद[11] ॥

भो देवेश ![1], दंष्ट्राकरालानि = दंष्ट्राभिः करालानि वोष्ठाभ्यां अना-च्छादिताभिः विकृतानि[2], कालानलसन्निभानि = कालानलः प्रलयाग्निः तत्सदृशानि[3], ते = तव[4], मुखानि[5], दृष्ट्वा एव[6], दिशो न जाने = विभ्रमात् दशदिशो भयावेशेन न पश्ये[7], शर्म च न लेभे = सुखं च न लेभे अहं कः इति न जाने[8], भो जगन्निवास[10] प्रसीद = प्रसन्नो भव । विश्वरूपमुपसंहृत्य मां भयादुद्धरेति भावः ॥ २५ ॥

**गीतातात्पर्यनिर्णयः**

**मुक्ताः सुरसङ्घाः विशन्ति ।**

**"प्रवेशो निर्गमश्चैव मुक्तानां स्वेच्छया भवेत् ॥"**

**—इति ब्रह्माण्डे ॥ २१-२५ ॥**

***प्रका०***— "अमी हि त्वां सुरसङ्घा विशन्ती"त्येतन्मुक्तसुरविषयमित्याह **मुक्ता इति** ॥

***न्या०दी०***— "पश्यामि देवांस्तव देव देहे" इत्युक्तत्वात् "अमी हि त्वा सुरसङ्घा विशन्ति" इति पुनरुक्तिरित्यत आह **मुक्ता इति** । अत्र "अमी सुरसङ्घाः" इति पारोक्ष्येण निर्दिष्टा मुक्ताः । तत्रामुक्ता इत्यपौनरुक्त्यमिति भावः । भवेदपुनरुक्तिर्यद्येतत् मुक्तविषयं स्यात् । तदेव कुतः ? परोक्षनिर्देशस्यामुक्तेष्वपि सम्भवादिति चेन्न । "त्वां विशन्ति" इति स्वेच्छयैव भगवत्प्रवेशोक्तिरिति भावेनाह **विशन्तीति** ॥ तथापि कुतो मुक्तविषयत्वमस्येत्यत आह **प्रवेश इति** ॥ २१-२५ ॥

**गीता**

**अमी च त्वां धृतराष्ट्रस्य पुत्राः**
**सर्वे सहैवावनिपालसङ्घैः ।**
**भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ**
**सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥**

*सा०सं०*— **त्वा** त्वाम् । **सूतपुत्रः** कर्णः । **योधमुख्यैः** योधेषु भटेषु प्रधानैः । **अस्मदीयैः** सह ॥ २६ ॥

*अ०प्र०*— अमी[१], धृतराष्ट्रस्य पुत्राः[२], सर्वे[३], अवनिपालसङ्घैः[४], सह[५], तथा भीष्मद्रोणौ[७], असौ[८], सूतपुत्रः[९], अस्मदीयैरपि[१०] योधमुख्यैः सह[१३], त्वां विशन्तीत्युक्ते तव वक्त्राणि विशन्तीति उत्तरेणान्वयः ।

अमी[१], धृतराष्ट्रस्य पुत्राः = दुर्योधनादयः[२], सर्वे[३], अवनिपालसङ्घैः सह = अवनिपालानां जयद्रथादीनां राज्ञां सहैव[५], तथा = भीष्मद्रोण[७], असौ[८], सूतपुत्रः = कर्णश्च[९], न केवलं ते एव; अपि तु अस्मदीयैरपि = योद्धारो ये अस्मदीयाः तैः तथा[११] योधमुख्यैः = योधमुख्याः शिखण्डि-धृष्टद्युम्नादयः तैश्च सह[१३], त्वां विशन्तीत्युक्ते तव वक्त्राणि विशन्तीति उत्तरेणान्वयः ॥ २६ ॥

**गीता**

**वक्त्राणि ते त्वरमाणा विशन्ति**
**दंष्ट्राकरालानि भयानकानि ।**
**केचिद्विलग्ना दशनान्तरेषु**
**सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥**

*वि०वि०*— सूतपुत्रः कर्णः । भगवन्मुखप्रवेशादुन्मुखचेष्टानामपि भगवन्मुखचेष्टयैव तत्र प्रवेशात् 'प्रलयोदकं प्रजाः विशन्ति' इतिवदुपचारेण । अमी दुर्योधनादयः । वक्त्राणि विशन्तीति प्रयोगः । सेनामध्ये भगवन्मुखानामुभयाभिमुखत्वात् सहास्मदीयैरपि इत्युक्तम् । येषामुत्तरक्षणे मरणं

ते । दन्तमध्येषु संलग्नाश्चूर्णितैरुत्तमाङ्गैः शिरोभिरुपलक्षिताः दृश्यन्ते । यथा भिन्नं घटादिकं पृथगपतितमज्ञैरदृष्टमपि सूक्ष्मदृष्टिभिर्ज्ञायते, यथा पुरूरवसो जरा अश्विभ्यामेव दृष्टा तथेति ॥ २६ - २७ ॥

***सा०सं०***— ते प्रागुक्तधृतराष्ट्रपुत्रादयः । ते तव । **वक्त्राणि विशन्ति** इत्यत्र तेषां भगवन्मुखाभिमुखचेष्टाभावेऽपि भगवानेवानेकमुखैः सेनाद्वयस्थयोधान् ग्रसित्वा तिष्ठतीत्युपचारेण विशन्तीत्युक्तिः ज्ञेया । एवमग्रेऽपि । **केचित्** तस्मिन् मुहूर्त एव मरिष्यमाणाः । **केचिद्दशनान्तरेषु विलग्नाः** । **चूर्णितैः** । शतशः सूक्ष्मरेखोपेतशीर्णघटवत् शतशः । सूक्ष्मरेखोपेततया **भिन्नैः उत्तमाङ्गैः** शिरोभिरुपलक्षिताः सन्तः । **दृश्यन्ते** मयेत्यर्थः । मन्ददृष्टीनामन्येषां तथा दृष्ट्यभावेऽप्यर्जुनस्य दिव्यदृष्टिमत्त्वात् तथा दर्शनं युक्तमिति ज्ञेयम् । यथाऽन्यैरदृष्टस्यापि पुरूरवसो जराऽश्विभ्यां दृष्टा तथेति । व्यक्तमेतद्विष्णुधर्मे एकोनविंशोऽध्याये ।

***अ०प्र०***— किञ्च, **वक्त्राणीति** ।

अमी पूर्वोक्तदुर्योधनादयः त्वरमाणा[१], ते[२], भयानकानि[३], दंष्ट्राकरालाणि[४], वक्त्राणि[५], विशन्ति[६], तेषां मध्ये केचित्[७], दशनान्तरेषु[८], चूर्णितैः[९], उत्तमाङ्गैः = उपलक्षिता[१०] विलग्नाः सन्तः[११] सन्दृश्यन्ते[१२] ॥

अमी पूर्वोक्तदुर्योधनादयः त्वरमाणाः = धावन्तः[१], ते = तव[२], भयानकानि = भयङ्कराणि[३], दंष्ट्राकरालाणि = दंष्ट्राभिः विकृतानि[४], वक्त्राणि[५], विशन्ति[६], तेषां मध्ये केचित्[७], दशनान्तरेषु = दन्तसन्धिषु[८], चूर्णितैः = चूर्णीकृतैः[९], उत्तमाङ्गैः = शिरोभिः उपलक्षिताः[१०] विलग्नाः = संश्लिष्टाः सन्तः[११] सन्दृश्यन्ते ॥ २७ ॥

**गीता**

**यथा नदीनां बहवोऽम्बुवेगाः**
**समुद्रमेवाभिमुखा द्रवन्ति ।**
**तथा तवामी नरलोकवीरा**
**विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥**

***वि०वि०***— विज्वलन्ति दीप्यमानानि मुखानि विशन्ति ॥ २८ ॥

*सा०सं०*— विज्वलन्ति दीप्यमानानि वक्त्राणि ॥ २८ ॥

*अ०प्र०*— प्रवेशमेव दृष्टान्तेनाह **यथेति** ।

नदीनां[१], बहवः[२], अम्बुवेगाः[३], समुद्रमेव[४], अभिमुखाः सन्तो[५], यथा[६], द्रवन्ति[७], तथा अमी ये[९], नरलोकवीराः[१०] अभिविज्वलन्ति[११] तव[१२], वक्त्राणि[१३], विशन्तीत्यन्वयः ।

नदीनां = अनेकमार्गप्रवृत्तानां[१], बहवः अम्बुवेगाः = बहवः वारिणां प्रवाहाः[३], समुद्रमेव अभिमुखाः = समुद्राभिमुखाः सन्तो[५], यथा द्रवन्ति = त्वरया गच्छन्ति समुद्राभिमुखाः सन्तो समुद्रं प्रविशन्ति[७], तथा = तद्वत्[८], अमी ये = नरलोकवीराः भीष्मादयः[१०] अभिविज्वलन्ति = सर्वतः दीप्यमानानि[११] तव[१२], वक्त्राणि = मुखानि[१३], विशन्ति = प्रविशन्ति ॥ २८ ॥

**गीता**

**यथा प्रदीप्तं ज्वलनं पतङ्गा**
**विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोका-**
**स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥**

*वि०वि०*— पतङ्गाः शलभाः ॥ २९ ॥

*सा०सं०*— **तवापि वक्त्राणि समृद्धवेगाः** इत्यत्र भगवता अतितीव्रं ग्रस्य मानत्वात् तथोपचर्यत इति भावः ॥ २९ ॥

*अ०प्र०*— अवशत्वेन प्रवेशेन नदीवेगदृष्टान्त उक्तः । बुद्धिपूर्वकं प्रवेशदृष्टान्तमाह **यथेति**।

यथा[१], समृद्धवेगाः[२], पतङ्गाः[३], नाशाय[४], प्रदीप्तं[५], ज्वलनं[६], विशन्ति[७], तथैव[८], लोकाः[९], समृद्धवेगाः सन्तो[१०] तवापि[११] वक्त्राणि[१२], नाशाय[१३], विशन्ति इत्यन्वयः ।

यथा[१], समृद्धवेगाः = समृद्धो वेगो येषां ते तथा[२], पतङ्गाः = शलभाः[३], बुद्धिपूर्वकं[३], नाशाय = मरणायैव[४], प्रदीप्तं = प्रज्वलितं[५], ज्वलनं =अग्निं[६], विशन्ति[७], तथैव[८], लोकाः = जनाः[९], समृद्धवेगाः सन्तो[१०] तवापि[११] वक्त्राणि = मुखानि[१२], नाशाय = स्वनाशाय[१३], विशन्ति = प्रविशन्ति[१४] ॥ २९ ॥

गीता

**लेलिह्यसे ग्रसमानः समन्तात्**
**लोकान्समग्रान्वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य जगत्समग्रं**
**भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥**

*वि०वि०*— कोपेन रुधिरावसिक्तमोष्ठपुटादिकम् । लेलिह्यसे पुनःपुनर्लेहनं करोषि ॥ ३० ॥

*सा०सं०*— **समग्रान् लोकान्** जनान् **ज्वलद्भिर्वदनैः समन्ताद्ग्रसमानः** मुखान्तःकुर्वाणः **लेलिह्यसे** । कोपेन रुधिरासिक्तमोष्ठपुटादिकं जिह्वाग्रेणास्वादयसीव असकृत् स्पृशसि । हे **विष्णो !** **तवोग्राः** तीक्ष्णाः । **भासः** प्रभाः । **तेजोभिः** प्रकाशनशक्तिभिः । **समग्रं जगदापूर्य** व्याप्य । **प्रतपन्ति** देहादिपदार्थेषूष्मानं जनयन्ति ॥ ३० ॥

*अ०प्र०*— किञ्च, हे भगवन् !, ज्वलद्भिः[१], वदनैः[२], ग्रसमानः[३], समग्रान् लोकान्[४], समन्तात्[६], लेलिह्यसे[७], किञ्च हे विष्णो ![८], तव[९], भासः[१०] तेजोभिः[११] समग्रं[१२], जगत्[१३], आंपूर्य[१४], उग्राः सन्तः[१५], प्रतपन्ति[१६] ।

ज्वलद्भिः वदनैः[२], ग्रसमानः = गिलन्[३], समग्राँल्लोकान् = सर्वनितान्वीरान्[४], समन्तात् = सर्वतः[६], लेलिह्यसे = तत्स्थजिह्वाभिः कोपेन रुधिरावशिष्टपुटादिकं पुनःपुनः आस्वादनं करोषि अतिशयेन भक्षयसि[७], किञ्च हे विष्णो ![८], तव[९], भासः = दीप्तयः[१०] तेजोभिः = विस्फुरणैः[११] समग्रं = समस्तं[१२], जगत् = चराचरविश्वं[१३], आपूर्य = व्याप्य[१४], उग्राः सन्तः = तीव्राः सत्यः[१५], प्रतपन्ति = जगत्सन्तापयन्ति[१६] ॥ ३० ॥

भाष्यम्

"मातापित्रोरन्तरङ्गः स एकः रूपेण चान्यैः सर्वगतः स एकः" इति वारुणश्रुतेः । एकेनैव रूपेण द्यावापृथिव्योरन्तरं व्याप्तो भवति । "पश्य मे पार्थ रूपाणि" इति बहूनि रूपाणि प्रतिज्ञातानि । मातापितरौ च पृथिवीद्यावौ । "मा नो माता पृथिवी दुर्मतौ धात्", "मधु द्यौरस्तु नः पिता" इत्यादिप्रयोगात् ।

***प०टी०***— द्यावापृथिव्योरित्येकरूपमेव श्रूयते । अतः कथमनन्तरूपत्वम् ? इत्यत आह **मातापित्रोरिति** । एवं श्रुतिसद्भावात् द्यावापृथिव्योरन्तरमेकेनैव रूपेण व्याप्तो रूपान्तरेण दिशश्च सर्वा इत्येवार्थः । इतश्चानन्तत्वमित्यत इत्याह **पश्येति** । एतच्छ्रुतौ द्यावापृथिवीव्याप्तिर्न श्रूयत इत्यत आह **मातापितरौ चेति** ।

***प्र०दी०***— 'द्यावापृथिव्योरिदमन्तरं हि' इत्यत्र 'त्वया' इत्यनेनैवैकत्वस्य सिद्धत्वात् 'एकेन' इति व्यर्थमित्यतः प्रमाणपूर्वकं तदभिप्रायमाह **मातापित्रोरिति** । बहुत्वेऽपि स **एकः** अभिन्नः । अनेन **दिशश्च सर्वाः** रूपान्तरैरित्युक्तं भवति । तदयुक्तम् । विश्वरूपस्य 'द्रष्टुमिच्छामि ते रूपं' इत्यादिनैकत्वावगतेरित्यत आह **पश्येति** । ऐक्यापेक्षयैकवचनमिति भावः । 'मातापित्रोः' इति श्रुतिः प्रकृतानुपयोगिनी कथमुदाहृता । 'द्यावापृथिव्योः' इत्यनभिधानादित्यत आह **मातापितरौ चेति** । **माता** पृथिवी **नः** अस्मान् **दुर्मतौ मा धात्** न दध्यात् । **नः** अस्माकं **मधु** सुखहेतुः **अस्तु** ।

***भा०दी०***— **विश्वरूपेति** । पुनर्वचनमित्याद्यात्मकेत्यर्थः । **अनेन** अन्यैः सर्वगत इति कथनेनेत्यर्थः ।

***भा०र०***— अभेदोक्तेः प्रसक्तिं दर्शयितुमुक्तं **बहुत्वेऽपीति** । बहुरूपत्वेऽपीत्यर्थः । 'एकं स्वस्मिन्नभेदतः' इत्यन्यत्रोक्तेरिति भावः । **अनेन** 'सर्वगतः' इत्यनेन । **रूपान्तरैः** व्याप्ताः । 'इत्यादिना' इत्यत्रादिशब्देन 'परमं रूपमैश्वरम्' इत्याद्येकवचनान्तपदग्रहः । **ऐक्यापेक्षया** रूपाणामभेदेन तदपेक्षया, 'इच्छामि ते रूपम्' इत्यादि एकवचनम् इति न तद् बहुरूपविरोधीत्यर्थः । **दुर्मतौ** दुष्टबुद्धिविषये । दुष्टबुद्धियुक्तान् न कुर्यात् इत्यर्थः ।

भाष्यम्

**न तु नियमतो भयप्रदं तत्स्वरूपम् । नारदस्य तदभावात् । केषाञ्चित् तथा दर्शयति भगवान् । "प्रीयन्ति केचित् तस्य रूपस्य दृष्टौ बिभेति कश्चिदभ्यसे सर्वतृप्तिः" इति हि वारुणशाखायाम् ।**

**न तु तं सर्वे पश्यन्ति । अदृष्ट्वाऽपि तन्निरूप्य भये द्रष्टुस्तथा प्रतिभाति । तथा च गौतमखिलेषु— "दृष्ट्वा देवं मोदमाना अदृष्ट्वाऽप्येतद्भयाद् बिभ्यतो दृष्टवत् ते । पश्यन्ति तन्न्यस्तचक्षुर्मुखांश्च तस्मिन्नेवैते मनसो गतत्वात्" इति ।**

*प०टी०*— ननु 'दृष्ट्वा हि त्वा प्रव्यथितान्तरात्मा' इति भगवद्दर्शनं दुःखहेतुतयोच्यत इत्येतत्सप्रमाणकं परिहरति **न त्विति** । **अभ्यसे** अभ्यास इत्यर्थः । ननु 'दृष्ट्वा लोकाः प्रव्यथिता' इति सर्वेषां भगवद्दर्शनमुच्यते । तत्कथम् ? इत्यत आह **न त्विति** । दृष्टपूर्वविश्वरूपाणां तदा दर्शनाभावेऽपि **तन्निरूप्य भये** जाते **द्रष्टुरर्जुनस्य** द्रष्टा बिभेतीति **भातीत्यर्थः** । अत्र प्रमाणमाह **तथा चेति** । देवं दृष्ट्वा मोदमानास्ते नान्यत् पश्यन्ति । अदृष्ट्वाऽप्येतद्भयात् दृष्टवद्बिभ्यतः, तस्मिन्नेव तन्यस्तचक्षुर्मुखानित्यन्वयः ॥ २०-३० ॥

*प्र०दी०*— 'दृष्ट्वाऽद्भुतम्' इत्यादिना विश्वरूपदर्शनस्य भयहेतुत्वमुच्यते । तन्न सर्वेषां सर्वदा । किन्तु केषाञ्चित्कारणविशेषात् कदाचिदेवेति सप्रमाणकं तदभिप्रायमाह **न त्विति** । **अभ्यसे** अभ्यासे सति **सर्वेषां तृप्तिः** आनन्द एवेत्यर्थः । एवं तद्दर्शनस्य भयहेतुत्वनियमाभाव-मभिधाय लोकत्रयस्य दर्शनाभावं चाह **न त्विति** । किन्तु 'त्रिलोकेषु स्थितैर्भक्तैः' इत्युक्तप्रकारेण कैश्चिदेव । तदभिप्रायश्च लोकत्रयशब्द इति भावः । प्रकारान्तरेण लोकत्रयम् इत्यस्याभिप्रायमाह **अदृष्ट्वाऽपीति** । विश्वरूपदर्शनार्थं यतमानानां लोकत्रयस्थानां पुंसां तत् **अदृष्ट्वाऽपि** चेतसि **निरूप्य** स्थितानां **भये** जाते सति तद्द्रष्टुरर्जुनस्य **तथा**ऽहमिव एतेऽपि दृष्ट्वा बिभ्यतीति **प्रतिभाति** इति अतः लोकत्रयं दृष्ट्वा 'प्रव्यथितम्' इत्याह इत्यर्थः ।

अत्र श्रुतिसम्मतिम् आह **दृष्ट्वेति** । **देवं** विश्वरूपं दृष्ट्वा **मोदमानाः ते** एतेऽर्जुनादयः तद्ध्यायिनः **पश्यन्ति** । कथम्भूतान् ? **अदृष्ट्वाऽपि** तन्निरूप्य **एतद्भयाद् बिभ्यतो** भयचिह्नवतः **तस्मिन्नेव** विश्वरूपे **मनसो गतत्वात् तन्न्यस्तचक्षुर्मुखांश्च दृष्टवत्** दृष्टवन्त इवेत्यर्थः ॥२०-३०॥

*भा०दी०*— **अभ्यसे** इत्यनुवादः, **अभ्यासे सति** इति व्याख्यानम् । 'न तु तं सर्वे पश्यन्ति' इति भाष्ये आकाङ्क्षितं तात्पर्योक्तवचनेन पूरणाय आह **किन्त्विति** । "त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् । दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुसारतः" इत्युक्तप्रकारेणेत्यर्थः । **निरूप्य** अनुसन्धायेत्यर्थः ॥ २०-३० ॥

*भा०र०*— **कारणविशेषात्** अनभ्यासरूपकारणविशेषात् । अभिपूर्वाद् 'असु = क्षेपणे' इत्यतो 'घञर्थे कविधानम्' इति कप्रत्यये वेदे अभ्यसशब्द इति भावेनाह **अभ्यसे अभ्यास इति**। 'न तु' इत्यादिपूर्वभाष्यनिष्कर्षं दर्शयन् 'न तु तम्' इत्युत्तरत्र भाष्यमवतारयति **एवमिति** । **तद्दर्शनस्य** विश्वरूपदर्शनस्य । **इत्युक्तप्रकारेणेति** । 'त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् । दृष्टं विष्णोर्विश्वरूपं, स्वयोग्यत्वानुसारतः' इति तात्पर्यनिर्णयोदाहृतप्रमाणोक्तप्रकारेणेत्यर्थः । **कैश्चि-**

**देवेति** । 'दृष्टः' इति शेषः । भाष्यानुसारेण 'किं तु केचिदेव पश्यन्ति' इति प्रथमायां वक्तव्यायामपि कैश्चिदेव' इति तृतीयाप्रयोगः 'त्रिलोकेषु' इत्युदाहृतप्रमाणानुसारादिति द्रष्टव्यम् । **तदभिप्रायः** लोकत्रयस्थितविश्वरूपदर्शनयोग्यप्रतिबन्धकहीनभक्तविशेषाभिप्रायः ।

**पुंसां** योग्यपुरुषाणाम् । **निरूप्य** अनुसन्धाय । **तद्द्रष्टुः** भयवत्पुरुषद्रष्टुः । भाष्यगततथापदार्थः **तथाऽहमिवेति** । **प्रतिभातीत्यत इति** । 'प्रतिभाति' इति हेतोः । 'लोकत्रयं प्रव्यथितम्' इत्याह अर्जुन इत्यर्थः । **तद्ध्यायिनः** पुंसः । 'भयाद्बिभ्यतः' इति कथम् ? अभेदात्, इत्यत उक्तम् **भयचिह्नवत इति** । 'दृशिर् = प्रेक्षणे' इत्यतः क्तवतुप्रत्यये दृष्टवच्छब्दः । तस्मात् 'देवपथादिभ्यश्च' इति स्वार्थे विहितकन्प्रत्ययस्य लुपि, 'सुपां सुलुक्' इति द्वितीयाया लुकि च 'दृष्टवत इव' इत्यर्थको 'दृष्टवत्' इति शब्द इति भावेनाह **दृष्टवत् दृष्टवन्त इवेति** । यद्वा 'तत्र तस्येव' इति लक्षणस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वात्, 'घटवदिति युज्यते' इति विष्णुतत्त्वनिर्णयटीकारीत्या इह द्वितीयासमर्थाद्वतिः । दृष्टशब्दश्च 'दृष्टं = दर्शनमेषाम्' इति मत्वर्थीयाच्प्रत्ययान्ततया दर्शनवत्पुरुषपर इति व्याख्येयम् ।

केचित्तु 'पूर्ववत्सनः' इति सूत्रे 'पूर्ववत्' इति वतिस्तृतीयान्तात्, न पञ्चम्यन्तात्, लक्षणाभावात् । तथा च 'ब्राह्मणेन तुल्यं वैश्यादधीतः' इत्युक्ते 'ब्राह्मणादिव वैश्यादधीतः' इति पञ्चम्यर्थोऽवगम्यते, तथेहापि, 'पूर्वस्मादिव सन्नन्तादपि आत्मनेपदम् इत्यर्थो लभ्यते' इति हरदत्तवचनाद् अत्रापि 'ब्राह्मणेन तुल्यं पश्यति' इत्यत्र यथा द्वितीया तृतीयार्थमन्तर्भावयति, तथा 'दृष्टवत्' इत्यत्र दृष्टैः = दर्शनवद्भिस्तुल्यं पश्यन्ति = दृष्टवत इव पश्यन्ति' इत्यर्थो लभ्यत इति भावेन 'दृष्टवत् = दृष्टवत इव' इत्युक्तमिति व्याचक्षते । अन्ये तु 'वत्' इति न वतिप्रत्ययः । किन्तु अव्ययप्रातिपदिकान्तरमेव साम्यार्थकम् । 'वत्-वा-यथा-तथा-इव-एवम्' इत्यमरपाठात् । प्रातिपदिकाव्ययपर्याये प्रत्ययग्रहणस्यानुचितत्वाच्च । एवं च दृष्टशब्दस्याजन्तस्य 'वत्' इति साम्यार्थकाव्ययेन 'सुप् सुपा' इति समासे दृष्टवच्छब्द एव 'दृष्टवन्त इव' इत्यर्थक इति भावेनैवमुक्तमिति वदन्ति । *अपरे तु* क्तवतु प्रत्ययान्तो दृष्टवच्छब्दो लुप्तविभक्तिकः । लुप्तोपमा चात्र विवक्षितेति भावेन 'दृष्टवत इव' इत्युक्तम् इत्याहुः ॥ २०-३० ॥

**गीतातात्पर्यनिर्णयः**

**अन्यचेष्टां कुर्वतामपि भगवच्चेष्टयैव प्रलयोदके प्रजानां प्रवेशवत् प्रवेशो युज्यते । सेनामध्यतो भगवन्मुखानामुभयाभिमुखत्वाच्चोभे सेने तत्र प्रविशतः ।**

**ये तु तस्मिन्नेव मुहूर्ते मरिष्यन्ति तेषां दशनान्तरे चूर्णितमपि शिरः सूक्ष्मदृष्टिगोचरत्वान्मानुषदृष्ट्या तथा न दृश्यते । यथा भिन्नमपि घटादिकं यावत् पृथङ् न पतति तावन्मन्ददृष्टीनां न ज्ञायते । यथा पुरूरवसो जराऽश्विभ्यामेव दृष्टा ॥ ॥ २६-३० ॥**

*प्रका०*— "अमी च त्वा धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः । भीष्मद्रोणः सूतपुत्रस्तथाऽसौ सहास्मदीयैरपि योधमुख्यैः । वक्त्राणि ते त्वरमाणा विशन्ति" इत्येतत् घटयति **अन्यचेष्टामित्यादिना** । युद्धोपक्रमकाल एव केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैरि"त्युक्तं घटयति **ये त्वित्यादिना** । दिव्यदृष्टित्वादर्जुनेन तथा सन्दृश्यन्ते इत्यत्र विष्णुधर्मोक्तं दृष्टान्तमाह **यथेति** । स्नानात्पूर्वं दृष्टस्य स्नानकालकृतजरास्नातस्यालङ्कृतस्यापि पुरूरवसोऽङ्गेऽश्विभ्यां दृष्टेत्यर्थः ॥

***न्या०दी०***— **ननु धृतराष्ट्रपुत्रादीनां भगवन्मुखप्रवेशोन्मुखचेष्टाऽभावात् कथं "अमी च त्वा धृतराष्ट्रस्य पुत्राः" इत्याद्युच्यत इत्यत आह अन्येति । भगवन्मुखप्रवेशानुन्मुखचेष्टानामपि भगवन्मुखचेष्टयैव तत्र प्रवेशादुपचारेण विशन्तीति प्रयोगो युज्यते । प्रलयोदकप्रवेशानुन्मुखचेष्टानां प्रजानां तच्चेष्टयैव तत्र प्रवेशे "प्रविष्टा उदकं प्रजाः" इति प्रयोगवदित्यर्थः । भगवन्मुखचेष्टयैव तत्र प्रवेशश्चेत् धार्तराष्ट्रसेनाया एव भवेत् । भगवन्मुखानां तदभिमुखत्वात् । अतः "सहास्मदीयैः" इत्ययुक्तं स्यादित्यत आह सेनेति ॥ ननु युद्धोपक्रम एव चूर्णितोत्तमाङ्गतयाऽन्यैरदृष्टाः कथमर्जुनेन मया तथा सन्दृश्यन्त इत्युच्यते "केचिद्विलग्नाः" इत्यादिनेत्यत आह ये त्विति ॥ तस्मिन्नेव मुहूर्ते मरिष्यमाणानामेवात्र ग्रहणात् युद्धोपक्रम एवैवमुक्तिर्युक्ता । विशीर्णत्वेनापतितस्य सूक्ष्मदृष्टिगोचरत्वादन्येषां तथा दर्शनं च युक्तम् । "दिव्यं ददामि ते चक्षुः" इत्यादेरर्जुनस्य दिव्यदृष्टित्वादन्यादृष्टदर्शनं च युक्तमिति भावः । अन्येषां तददर्शने दृष्टान्तमाह यथेति ॥ दिव्यदृष्टित्वादर्जुनस्यान्यादृष्टदर्शने दृष्टान्तमाह यथेति ॥ एतच्च विष्णुधर्मे विस्तरेणोक्तम् ॥ २६-३० ॥**

*भा०दी०*— **विष्णुधर्मे विस्तरेणोक्तमिति** । एकोनविंशाध्याये । पुरूरवसो रूपं द्रष्टुमागतौ अश्विनौ प्रति पुरूरवो राजा तैलाभ्यक्तोऽस्मि, स्नात्वा भूषणभूषित आगमिष्यामि, तदा मद्रूपं द्रष्टव्यमित्युक्ते "अप्रसाधितमेवाशु भवन्तं वसुधाधिपम् । पश्यावो भूषितं त्वां वै पश्चात्सङ्क्रन्दनान्वितम्" इत्यश्विभ्यामुक्ते तूर्णं बहिर्निर्गतं राजानम्

"अङ्गोपाङ्गादिकं सर्वं नृपतेस्तदपश्यताम् ।
शिरोललाटबाह्वास्यनयनादिविलोकनम् ॥
कृत्वा चिरं महीपालमूचतुस्तावरिन्दमौ ।
प्रविश्य स्नात्वा भूपाल यथार्हैश्च विभूषणैः ॥
विभूषिततनुं भूयः त्वां द्रक्ष्यावो नरेश्वर ॥"

इत्यश्विभ्यामुक्तो राजा गृहं प्रविश्य स्नातोऽनुलिप्तः वस्त्रालङ्कारभूषणभूषितोऽश्विनोः समीपमागतः । तदा तौ तद्रूपं दृष्ट्वा हासं चक्रतुः । राज्ञा हासकारणे पृष्टे

"शृणु भूपाल सकलमावयोर्हासकारणम् ।
युष्मद्दर्शनसम्भूतं क्षणापचयहेतुकम् ॥
अस्नातस्याभवत्पूर्वं यादृशी ते सरूपता ।
साम्प्रतं तादृशी नेयं भूषितस्यापि भूषणैः ॥
दिव्येन चक्षुषा भूप कालस्यास्य च तस्य च ।
वपुःपरिणतिं स्वस्मात् पश्यावोऽपचयप्रदाम् ॥"

इत्यादिनेति भावः ॥ २६-३० ॥

**गीता**

**आख्याहि मे को भवानुग्ररूपो**
**नमोऽस्तु ते देववर प्रसीद ।**
**विज्ञातुमिच्छामि भवन्तमाद्यं**
**न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥**

***वि०वि०***— विष्णो इति सम्बोधनात्त्वमक्षरमित्याद्युक्तेश्च विष्णुं तद्धर्मांश्च जानन्नेव गुणकर्मविशेषविज्ञानार्थं पृच्छति **को भवानिति** ॥ ३१ ॥

***सा०सं०***— भगवत्स्वरूपं तदीयगुणकर्माणि जानन्नप्यर्जुनः अज्ञातगुणकर्मविशेषज्ञानार्थं पृच्छति **आख्याहीति** । **उग्ररूपो भवान्** कः किंधर्मकः किमर्थमुग्ररूप इत्यर्थः ॥ ३१ ॥

*अ०प्र०*— यत एवं, तस्मात् **आख्याहीति** ।

भवान्[१], उग्ररूपः[२], कः[३], इति मे[४], आख्याहि[५], ते नमोऽस्तु[७], हे देववर ![८], प्रसीद[९], भवन्तं[१०] आद्यं[११] विज्ञातुं[१२], इच्छामि[१३], यतः तव प्रवृत्तिं[१४], न हि प्रजानामि[१५] इत्यन्वयः ।

भवान्[१], उग्ररूपः[२], कः = किं धर्मविशेषः[३], इति मे = मम[४], आख्याहि = कथय[५], ते = तुभ्यं[६], नमोऽस्तु हे देववर ![८], प्रसीद = प्रसन्नो भव, हे अनन्तबाहो चतुर्भुजेन सौम्यरूपेण भवेत्यर्थः[९], भवन्तं[१०] आद्यं = पुरुषं[११] विज्ञातुं = विशेषेण ज्ञातुं[१२], इच्छामि[१३], यतः तव प्रवृत्तिं = चेष्टां किमर्थमेवं प्रवृत्तोऽसीति[१४], न हि प्रजानामि = न जानामीति[१५], यद्वा एवंभूतस्य तव प्रवृत्तिं वार्तामपि न जानामीति वा ॥ ३१ ॥

भाष्यम्

**धर्मान्तरज्ञानार्थमेव को भवानिति पृच्छति आख्याहीति । यथा कश्चित् कश्चित् नामादिकं जानन्नपि जातिज्ञानार्थं पृच्छति कस्त्वम् इति । यदि तमेव न जानाति तर्हि 'विष्णो' इत्येवं सम्बोधनं न स्यात् । 'त्वमक्षरम्' इत्यादि च ॥३१॥**

*प०टी०*— अतिभयङ्करत्वान्नायं विष्णुरित्यभिप्रेत्य पृच्छतीत्यन्यथाप्रतीतिनिरासाय प्रश्नार्थमाह **धर्मान्तरेति** । धर्मज्ञानार्थं 'कीदृशः ?' इति विहाय 'कः ?' इति प्रश्नः कुत्र दृष्टः ? इत्यत आह **यथेति** । स्वरूपमेव पृच्छत इति किं न स्यात् ? इत्यत आह **यदीति** ॥ ३१ ॥

*प्र०दी०*— स्वरूपमेवाज्ञात्वा तद्धर्मान् वाऽयं पृच्छतीत्यन्यथाप्रतीतिनिरासार्थमाह **धर्मान्तरेति** । तर्हि 'किं धर्मान्तरो भवान्' इति प्रश्नेन भाव्यम् । 'को भवान्' इति तु न युज्यत इत्यत आह **यथेति** । **अन्येषां व्यवहारात् नाम** प्रत्यक्षेण रूपादिकं **जानन्नपि** जातिज्ञानार्थं यथा **कश्चित् कश्चित्** कस्त्वमित्येव **पृच्छति** । तथाऽर्जुनो भगवन्तं तद्धर्मांश्च जानन् अपि धर्मान्तरज्ञानार्थं को भवानित्येव पृच्छतीत्यर्थः । **प्रश्नव्याख्यानस्य** वर्तमानत्वात् वर्तमाननिर्देशः । उग्रं रूपं दृष्ट्वा रुद्रो वा यमो वाऽयमिति स्वरूप एव सन्दिहानस्य प्रश्नः किं न स्यादित्यत आह **यदीति** । तत्स्वरूपमेवेत्यर्थः । 'भासस्तवोग्राः प्रतपन्ति विष्णो' इति ।

तर्हि (ननु) धर्मविषयोऽयं प्रश्नोऽस्तु । ततश्चान्तरशब्दो न युक्त इत्यत आह **त्वमिति** । यदि भगवद्धर्मान्न जानीयात् तर्हि 'त्वमक्षरं परमम्' इत्यादि वर्णनं न स्यात् । अतो भगवन्तं तद्धर्मांश्चाक्षरत्वादीन् ज्ञात्वा तदन्यधर्मज्ञानार्थमेव प्रश्न इत्येवमुक्तमित्यर्थः ॥ ३१ ॥

नमोऽस्तु[१६], एकवारं सहस्रवारं अनन्तानन्तवारमित्यस्यायं भावः । भक्तिश्रद्धादरातिरेकेण नमस्कारेषु तृप्तिमनधिगच्छन् अनन्तवारं प्रणमतीत्यर्थः ॥ ३९ ॥

**गीता**

**नमः पुरस्तादथ पृष्ठतस्ते**
**नमोऽस्तु ते सर्वत एव सर्व ।**
**अनन्तवीर्यामितविक्रमस्त्वं**
**सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥**

*वि०वि०*— हे सर्व ! परिपूर्ण ! अत एव तव कार्यकारणशब्दवाच्यत्वं युज्यते । 'सर्वं खल्विदं ब्रह्म' इत्यादि श्रुतेः सर्वजगदात्मनस्तत्सन्निधानत्वादिकं अयुक्तमित्याशङ्क्य श्रुतिगतसर्व-शब्देन न सर्वात्मत्वमभिप्राय इत्याह **सर्वमिति** । एवं यत्र यत्र परमात्मनो जीवजडैक्यमुच्यते तत्र तत्र सर्वव्यापकत्वादिकमेव तादात्म्यव्यवहारालम्बनम्, न सर्वथैक्यमिति द्रष्टव्यम् ॥ ४० ॥

*वा०ल०*— "सर्वत एव सर्व" इति स्वोक्तसम्बुद्धेः स्वयमेवार्थमाह **सर्वं समाप्नोषि इति** ॥ ४० ॥

*सा०सं०*— सर्वतः दक्षिणोत्तरादिसर्वपार्श्वेभ्यः । नमोऽस्तु ते । हे सर्व परिपूर्ण । ननु 'सर्वं खल्विदं ब्रह्म' (छां. ३-१४-१) इति श्रुतौ, इदं सर्वं च जगद्ब्रह्मेति सर्वस्य जगतो ब्रह्मात्मक-त्वोक्तेः 'त्वमस्य विश्वस्य परं निधानम् । त्वया ततमिदं विश्वम्' इत्याद्ययुक्तमित्यतः श्रुतिगत-सर्वशब्दार्थमाह **सर्वमिति** । **सर्वं** विश्वं **समाप्नोषि** व्याप्नोषि । यतः **ततः सर्वोऽसि** । 'सर्वं खल्विदं ब्रह्म' (छां. १-१४-१), 'पुरुष एवेदं सर्वम्' (तै.आ. ३-१२) इत्यादि श्रुतिस्थसर्वशब्द-वाच्योऽसि । इदं ब्रह्म सर्वं खलु सर्वजगद्व्यापि खल्वित्यादिरूपेण श्रुत्यर्थो ज्ञेयः । न तु जगदा-त्मकत्वेन इत्यभिप्रायः ॥ ४० ॥

*अ०प्र०*— हे सर्व ![२], ते पुरस्तात्[३], नमः[४], अथ[५], पृष्ठतः[६], नमः[७], ते सर्वतः एव[९], नमोऽस्तु[१०] अनन्तवीर्यः[११] तथा अमितविक्रमः[१२], त्वं[१३], सर्वं[१४], समाप्नोषि[१५], ततः[१६], सर्वोऽसि[१८] इत्यन्वयः ।

हे सर्व ! = सर्वान्तयामिन्, परिपूर्ण वा[१], ते = तुभ्यं[२], पुरस्तात् = पुरोऽवयवेषु यद्वा पुरः-स्थिताय[३], नमोऽस्तु[४], अथ[५], पृष्ठतः = पश्चादवयवेषु[६], नमोस्तु[७], ते[८], सर्वत एव = प्रत्येका-

वयवानां सर्वत एव अन्तर्यामित्वेन स्थितानां त्वद्रूपाणां निर्देष्टुमशक्तोऽहं तस्मात् हे सर्वनियामक[९], सर्वतः = सर्वत्र रूपाणां यद्वा, सर्वतः सर्वासु अपि दिक्षु यद्वा, सर्वावयवेषु अपि = ते पुनः पुनः = नमोऽस्तु[९], नमोऽस्तु[१०] अनन्तवीर्यं = सामर्थ्यं यस्य तथा[११] अमितविक्रमः = अमितो विक्रमो यस्य स तथा[१२], यद्वा, अनन्तवीर्यश्चासौ अमितविक्रमश्च[१२], एवम्भूतस्त्वं[१३], सर्वं जगत्[१४], यतः समाप्नोषि = वीर्यसामर्थ्यविक्रमपराक्रमरसर्वात्मकत्वात् सर्व इत्युच्यते इति भ्रान्तिं निराकरोति **सर्वमिति** । सर्वं जगत्सर्वं अन्तर्बहिश्च सम्यक् व्याप्तोऽसि । यद्वा, सर्वं ज्ञानानन्दवीर्यौदार्यादिगुणजातं वा कालं वा प्राप्तः स्वाधीनतया सर्वं प्राप्नोषीति वा । यतः कारणात् ततः तस्मात् कारणात्[१६], सर्वः असि = सर्व इत्युच्यते[१८], तदुक्तं सर्वं खल्विदं ब्रह्मेत्यादौ । न तु जगदात्मकत्वेनेत्यर्थः । अनेन जीवादीनां ब्रह्मैक्यवाचिश्रुतयोऽपि सर्वव्यापित्वादि गौणैक्यवाचका एव । न तु मुख्यैकवाचका इत्युक्तं भवति ॥ ४० ॥

**गीता**

**सखेति मत्वा प्रसभं यदुक्तं**
**हे कृष्ण हे यादव हे सखेति ।**
**अजानता महिमानं तवेदं**
**मया प्रमादात् प्रणयेन वाऽपि ॥ ४१ ॥**

*वि०वि०*— एतादृशमाहात्म्यं भगवन्तं प्रति यदपराद्धं तत्क्षन्तव्यमित्याह **सखेत्यादिना** । हे सखेति सन्धिः छान्दसः । तव महिमानम् इदं पूर्वोक्तं जगत्स्रष्टृत्वादिकम् । अजानता बलिष्ठत्वाद्यल्पमहिमज्ञानेऽपीदृशं जगत्प्रभावादिमहामाहात्म्यमजानता इत्यर्थः ॥ ४१ ॥

*सा०सं०*— एतादृशमाहात्म्यं भगवन्तं प्रति यदपराद्धं तत्क्षन्तव्यमित्याह **सखेत्यादिना** । इदं प्रागुक्तं जगत्स्रष्टृत्वादिकं महिमानम् । अजानता मया, प्रमादात् पारवश्यात्, प्रणयेन वा स्नेहेन वा । सखेति मत्वा । हे कृष्ण हे यादव हे सखेति । प्रसभम् अबहुमानम् । यथा तथा यदुक्तं तत् । क्षामये क्षमापये इत्यग्रेतनेनान्वयः । हे सखे ! इति विच्छिद्य वक्तव्ये सन्धिश्छान्दसः ॥

*अ०प्र०*— एवं स्तुत्यादिना प्रसन्नं प्रति स्वापराधं क्षमापयति **सखेति** द्वाभ्याम् ।

हे अनन्तरूपेति पूर्वेण । हे अनन्तरूप !, तव[१], महिमानं[२], इदं[३], अजानता[४], मया[५], प्रमादात्[६], प्रणयेन वापि[७], सखेति[८], मत्वा[९], हे कृष्ण ![१०] हे यादव ![११] हे सखेति ![१२], इत्येवं प्रसभं[१३], यदुक्तं[१४], तत्सर्वं क्षमापयेति उत्तरेणान्वयः ॥

हे अनन्तरूप !, तव[१], महिमानं[२], इदं[३], विश्वरूपं च दृष्टं[४], अजानता मया[५], प्रमादात् = अनवधानात्[६], प्रणयेन वापि = स्नेहेन वाऽपि[७], सखेति मत्वा = प्राकृतसखेति ज्ञात्वा यद्वा, शरीरसम्बन्धीति च यत्कृतं तदनुचितमेव[८], हे कृष्ण !, हे यादव !, हे सखेति !, इत्यत्र एकारस्य छान्दसः पूर्वरूपसवर्णरूपः यद्वा, स्वशब्दवाच्येन सुखज्ञानेन्द्रियादिना सह वर्तत इति सखः । तस्य सम्बुद्धिर्हे सखेति इति । वा पदं विच्छिद्य अतिसखे अप्राकृतसखेति समाधेयं इत्येवं[१२], प्रसभं = हठेन तिरस्कारेण वा[१३], यदुक्तं = दुर्वचः[१४], तत्सर्वं क्षमापयेत्युत्तरेण ॥ ४१ ॥

भाष्यम्

**कथं 'स्थाने' इति ? तदाह कस्मादित्यादिना । पूर्णश्चासौ आत्मा चेति महात्मा ।**

**आत्मशब्दश्चोक्तो भारते— "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावः तस्मादात्मेति भण्यते" इति ।**

**तत्परं सदसतः परम् । "असच्च सच्चैव (च) यद् विश्वं सदसतः परम्" इति च भारते ॥ ३७-४१ ॥**

*प०टी०*— सर्वे समस्यन्तीत्यादि युक्तमित्युक्तम् । तत्कथं युक्तम् ? इत्यत उत्तरश्लोकमवतारयति **कथमिति** । युक्तत्वप्रदर्शनपरतया 'महात्म'पदं व्याचष्टे **पूर्णश्चेति** । कोऽर्थ 'आत्म'-शब्दस्य इत्यत आह **आत्मेति** । **उक्तः** व्याख्यातः । सदसच्छब्दस्तन्नियामकत्वाद्यभिप्रायेणेति भावेन 'तत्पर'शब्दार्थं सप्रमाणकमाह **तदिति** ॥ ३७-४१ ॥

*प्र०दी०*— 'सर्वे नमस्यन्ति' इत्येतद्युक्तमिति स्वयमेवोक्त्वा 'कस्माच्च ते न नमेरन्' इति विरुद्धं कथं पृच्छति ? इत्यत आक्षेप एवायमिति ज्ञापयितुं तन्निवर्त्याशङ्काप्रदर्शनपूर्वकमवतारयति **कथमिति** । **इति** 'शङ्कायाम्' इति शेषः । **तत्** तस्या उत्तरम् । 'महात्मन् अक्षुद्रचित्त इत्यल्पार्थ-प्रतीतिनिरासार्थमाह **पूर्णश्चेति** । 'आत्मा जीवः' इति प्रतीतिं वारयितुमाह **आत्मेति** । **उक्तः** निरुक्तः ।

**यत्** यस्मात् । आप्नोतेः मनिन् । पकारस्य च तकारः । आङ्पूर्वाद् दाञः स **एव** प्रत्ययः। आकारलोपः, तत्वम् । आङ्पूर्वाददो मन् । तत्वं च । इह देहे । **सन्ततो भावः** नित्या सत्ता । आङ्पूर्वात् तनोतेः ड्मन् ।

सदसदात्मकं विश्वं त्वमेवेति सत्तादिप्रदत्वादेवोच्यते । न त्वन्यथा । तथा सति उत्तरवाक्यविरोधादिति भावेन तत्पठित्वा सप्रमाणकं व्याचष्टे **तत्परमिति** ॥ ३७-४१ ॥

*भा०दी०*— **युक्तमितीति** । स्थानपदेनेत्यर्थः । 'तदाह' इत्यत्र 'तत्' इत्यनूद्य तस्या इति प्रकृतिपदमुक्त्वा 'आह' इत्यतःपूर्वम् 'उत्तरम्' इति शेषमाह **तत् तस्या उत्तरमिति** । शङ्काया इत्यर्थः । 'तस्मात्' इत्यग्रे श्रवणात् सर्वोऽपि यच्छब्दप्रतिनिरुक्तिहेत्वर्थः इति भावेनाह **यत् यस्मादित्यादिना** । अर्थचतुष्टयेऽपि क्रमेण व्युत्पत्तिं दर्शयति **आप्नोतेः इत्यादिना** । 'मनिन्' इति पाठः साधुः । 'मन्' इत्येव पाठे तु 'हलन्त्यम्' इति नकारलोपेन भाव्यतया नकारान्तशब्दता अस्य न स्यात् । **दाञ इति** । 'डुदाञ् दाने' इति धातोरित्यर्थः । **तत्वमिति** । दकारस्य तकारभाव इत्यर्थः। **तनोतेरिति** । 'तनु विस्तारे' इति धातोः 'अद् भक्षणे' इति दातोः ड्मन्प्रत्यये डित्वात् टिलोपे आत्मेति रूपमिति भावः । **उत्तरवाक्ये** तत्परमिति वाक्येत्यर्थः ॥ ३७-४१ ॥

*भा०र०*— 'स्थाने' इत्येदन्ताव्ययार्थः 'युक्तम्' इति विरुद्धम् । 'न नमेरन्' इत्यत्र यत्प्रतीतम् अनमनम्, तत् कस्मान्निमित्तात् ? इति । नमस्काराभावं सहेतुकं पृच्छतीत्यर्थः। **तस्याः** शङ्कायाः। भाष्ये 'पूर्णश्च' इत्यतः पूर्वं 'महान्' इति वक्तव्यम् । तदर्थः 'पूर्ण इति' इति व्याख्याने व्याससमासयोरवैरूप्यं भवतीति द्रष्टव्यम् । **निरुक्तः** प्रकृतिप्रत्यययोरर्थप्रदर्शनेन व्याख्यातः । **आप्नोतेः** 'आप्लृ = व्याप्तौ' इति धातोः **मन्**प्रत्ययः, 'मनिन् सर्वधातुभ्यः' इति शास्त्रविहितमनिन्प्रत्यय इत्यर्थः । 'मुक्तानुबन्धस्तु' टीकोक्तः । ननु 'आप्मा' इति स्यात् ? इत्यत आह **पकारस्येति** । पृषोदरादिभावात् पकारस्य तकारो विकार इति भावः । **दाञः** 'डुदाञ् = दाने' इत्यस्मात् **स एव मन् प्रत्ययः** । **आकारलोपः** धात्वाकारलोपः । **तत्त्वं** दकारस्य तकारः, पृषोदरादित्वात् । **अदेः** 'अद = भक्षणे' इति धातोः **मन्** मनिन् **तत्त्वं** धातुदकारस्य तकारादेशः । **तनोतेः** 'तनु = विस्तारे' इत्यतः ड्मन् । मनिन्प्रत्ययो डित्कर्तव्यः । 'कार्यात् विद्यादनुबन्धम्' इति वचनात् । डित्वाच्च टिलोपे आत्मा = नित्यसत्ताशालीति लभ्यत इति भावः । **सत्तादिप्रदत्वात्** सदसत्सत्ताप्रतीत्यादिप्रदत्वादेव । **अन्यथा** सदसत्स्वरूपाभेदेन ॥ ३७-४१ ॥

**गीतातात्पर्यनिर्णयः**

**वायुर्बलज्ञानयोगात् शशाङ्कोऽतिसुखाङ्कितः ।**
**इन्द्रः स परमैश्वर्यादिति नानाभिधो हरिः ॥"**

—इति च ॥ ३९-४१ ॥

*प्रका०*— "वायुर्यमोग्निरि"त्यत्र वाय्वादिशब्दा योगवृत्त्या विष्णौ वर्तन्ते इत्येतद्दर्शयितु-मर्थान्तरमुदाहरति **वायुरिति** ॥

***न्या०दी०*— वायुर्यमोऽग्निरित्याद्यर्जुनस्तुतिवाक्ये वाय्वादीनां भगवदभेद उच्यत इत्यन्यथाप्रतीतिनिरासाय वाय्वादिशब्दानां भगवति योगवृत्तिं स्मृत्यैव दर्शयति वायुरिति ॥ वबयोरभेदाद् वकारो बलवाची । अय पय गताविति धातोः आयुशब्दो ज्ञानवाची । इदि परमैश्वर्य इति धातुः ॥ ३९-४१ ॥**

*भा०दी०*— **इति धातोरिति** । उण् प्रत्यये आयुरिति रूपमिति भावः ॥ **इति धातुः इति** । तस्मादप्रत्यये इदित्वान्नुमागमे इन्द्रेति रूपमिति भावः ॥

**गीता**

**यच्चापहासार्थमसत्कृतोऽसि**
**विहारशय्यासनभोजनेषु ।**
**एकोऽथ वाऽप्यच्युत तत्समक्षं**
**तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥**

*वि०वि०*— एको मुख्यः । सर्वोत्तमोऽपि त्वमसत्कृतोऽसि । यत्सख्यादिना कृतम् । अथवा, क्रीडादिसमयेऽपहासार्थं कृतम् । तत्तदपराधजातम् । समक्षं तव पुरतः । क्षामये । अप्रमेयत्वाद्भवतो निन्दादिना हानिर्नास्ति, भक्तैः प्रमादादिना कृतमपराधं पुरतः प्रणामादिना क्षन्तुमर्हसि इत्यर्थः ॥ ॥ ४२ ॥

*सा०सं०*— किञ्च अथवेति पक्षान्तरे । हे **अच्युत** सर्वगुणैश्च्युतिहीन । **विहारः** क्रीडा तदादिषु । **एकोऽपि** त्वं सर्वोत्तमोऽपि । असत्कारानर्होऽपि इति यावत् । **यदपहासार्थमसत्कृतोऽसि** अवमतोऽसि । **तत्** । **अप्रमेयम्** । **त्वाम्** । **समक्षं** त्वत्पुरतोऽहं क्षमापये क्षमस्वेति प्रार्थये । **एकशब्दे** 'ए' शब्दः एकवाची । 'क'शब्दस्तु करोतेरन्तर्णीतण्यर्थात् केवलाद्वा डप्रत्यये क इति कर्तृवाची कारयितृवाची च । ए एकोऽसहाय एव कः कर्ता कारयिता चेत्येकः **सर्वोत्तमः** । अन्यनिरपेक्षकर्तृत्वादिमत एव सर्वोत्तमत्वादिति । अत्र एकशब्दः सर्वोत्तमपरो ध्येयः ॥ ४२ ॥

*अ०प्र०*— किञ्च, **यच्चेति** ।

हे अच्युत ![1], यच्च[2], अपहासार्थं[3], विहारशय्यासनभोजनेषु[4], असत्कृतोऽसि[5], एकः[6], अथवा[7], तत्समक्षं[8], तत्[9], अप्रमेयं[10] त्वां[11] अहं[12], क्षमयेत्यन्वयः ।

हे अच्युत = नाशरहित ![1], यच्च = मातुलेयत्वाच्छालकत्वाच्च[2], अपहासार्थं = उपहासाय विनोदार्थं वा[3], विहारशय्यासनभोजनेषु = विहारश्च शय्या च आसनं च भोजनानि च तेषु तथा क्रीडादिषु[4], असत्कृतोऽसि = निःशङ्कया यदुक्तमेवमसत्कृतोपराधाः बहवः सन्ति भोजनादिषु किमुत हे कृष्णेत्यादि नामग्रहणेन तिरस्कृतोऽसि[5], यस्मात्तस्मात् हे अच्युत एकः = एकोऽपराधः एकः सर्वाधिको ज्ञेयः । एकरोतीत्युक्तेः एकत्वादेकरोतीति कः एचासौ कश्च एकः । यद्वा, एकः एकलः सखीन्विना रहसि स्थित इत्यर्थः[6], अथवा तत्समक्षं = तेषां परिहसतां सतां सखीनां समक्षं पुरोऽपि तथा च प्रत्यक्षमपरोक्षं वा यदसत्कृतोऽसि[8], तत् = सर्वं अपराधजातं[9], अप्रमेयं = अचिन्त्यप्रभावं[10] त्वां = पुरुषोत्तमं[11] अहं[12], क्षामय = क्षमां कारयामि । यद्वा, एकरसर्वोत्तमत्वात् सत्कारानर्ह इति यद्यप्यवहसादेः त्वमेव स्वतन्त्रकर्ता तथापि वा ममापि त्वदधीनकर्तृत्वात् मत्कृतमपराधजातं समक्षं प्रत्यक्षं त्वत्पुरत इदानीं अचिन्त्यशक्तिं त्वां प्रति क्षामये = क्षमापयामीत्यर्थः ॥ ॥ ४२ ॥

**गीता**

**पिताऽसि लोकस्य चराचरस्य**
**त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो**
**लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥**

*वि०वि०*— एतदेव स्पष्टयति **पितेत्यादिना** ॥ ४३ ॥

*सा०सं०*— असत्कारानर्हतामेव गुणान्तरोक्त्या व्यनक्ति **पिताऽसीत्यादिना** । **त्वमस्य चराचरस्य लोकस्य पिताऽसि** जनकोऽसि । अत एव **पूज्यः** । **गरीयान् गुरुः** । अत्यन्तं गुरुश्च । **अप्रतिमप्रभाव** अनुपमैश्वर्य ॥ ४३ ॥

*अ०प्र०*— असत्कारानर्हत्वादिकं विशदमाह । यद्वा, अचिन्त्यप्रभावमेव आह **पितेति** ।

हे अप्रतिमप्रभाव![1], चराचरस्य[2], अस्य[3], लोकस्य[4], त्वं[5], पिताऽसि[6], अत एव पूज्यः[7], गरीयान्[8], गुरुश्च[9], अतो लोकत्रयेऽपि[10] त्वत्समः[11] अन्यो[12], नास्ति[13], अभ्यधिकः[14], कुत इत्यन्वयः ।

हे अप्रतिमप्रभाव ! = न विद्यते प्रतिमा उपमा यस्य सोऽप्रतिमः । तथाविधः प्रभावो यस्य सः तथा[१], यद्वा, अनन्तकल्याणगुणगणस्य सत्त्वं अप्रतिमप्रभावः तस्माददि्वतीयः[१], असदृशसामर्थ्य इत्यर्थः[१], चराचरस्य = स्थावरजङ्गमात्मकस्य[२], अस्य = पुरोवर्ति[३], लोकस्य[४], त्वं पिताऽसि = जनकोऽसि[६], अत एव पूज्यः = पूजार्हः[७], गरीयान् = गुरोरपि गुरुतरः[९], अत्युत्तमगुरुर्मूलगुरुरित्यर्थः । अतो लोकत्रयेऽपि = त्रिलोक्यामपि[१०] त्वत्समः = य एवं पितृत्वादिमहिमानस्तस्य तव समः सम एव तावत्[११] अन्यो नास्ति = परमेश्वरस्यान्यस्याभावात् अन्यो नास्त्येव[१३], अभ्यधिकः कुतः = त्वत्तोऽधिकः पुनः कुतः स्यात्[१४], यद्वा, यत्र न त्वत्समः तत्रान्योऽभ्यधिकः कुतो वर्तते तस्माल्लोकत्रयान्तर्यामित्वेन तव महिमा वर्णितुं न शक्य इति भावः ॥ ४३ ॥

**गीता**

**तस्मात्प्रणम्य प्रणिधाय कायं**
**प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेव सख्युः**
**प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥**

***सा०सं०***— यस्मादुक्तमहामहिमा **तस्मात्** । **कायं** भूमौ **प्रणिधाय** । **ईशमीड्यं** स्तुत्यम्। **त्वा** त्वाम् । **प्रणम्य** । **प्रसादये** । हे **देव** । पित्रादिः पुत्रादेरिवापराधम् । **सोढुमर्हसि** ॥ ४४ ॥

***अ०प्र०***— यस्मादप्रतिमप्रभावत्वादिना सर्वोत्पादकस्तस्मात् । **तस्मादिति** ।

तस्मात्[१], अहं[२], कायं[३], प्रणिधाय[४], प्रणम्य[५], ईशमीड्यं[६], त्वां प्रसादये[७], हे देव !, यथा[८], पुत्रस्य = अपराधं[९], पिता इव[१०] यथा सख्युः[११] सखा इव[१२], तथा प्रियायाः[१३], प्रियः यथापराधं सहते[१४], तथा ममापराधान् सोढुं[१५], अर्हसि[१६] इत्यन्वयः ।

यस्मादप्रतिमप्रभावत्वादिना सर्वोत्पादकस्तस्मात्[१], अहं = अर्जुनः[२], कायं प्रणिधाय = शरीरं दण्डवद्भूमौ साष्टाङ्गं यथा भवति तथा प्रकर्षेण निधाय[३], प्रणम्य = नत्वा[४], सगद्गदं किमर्थमित्युक्ते पूर्वकृतापराधं समुद्रादुद्धरेति तस्मात् ईशं = ब्रह्मादीश्वराणां ईशं जगतः स्वामिनं[५], ईड्यं = वेदादिवर्णनीयं स्तुत्यं वा एतादृशं[६], त्वां प्रसादये = अविगणय्य मया बहवोऽपराधाः कृताः । तस्मादहं त्वां प्रसादये = प्रसादयामि प्रसीदेति त्वां प्रार्थय इति भावः । विश्वसुहृदं त्वां इति

अनुवर्तनीयम्[९], हे देव तत्रापि यथा[८], पुत्रस्य अपराधान् पिता इव = कृपया पिता यथा सहते[१०], यथा सख्युः अपराधान्[११] सखा इव निरुपाधिर्बन्धुर्यथा सहते[१२], तथा प्रियायाः = स्वपतेः यथा स्वसङ्कटं सर्वं निवेदयति तदा अपराधान् तत्प्रियार्थं[१३], प्रियश्च यथाऽपराधान् सहते[१४], यथा पिता सखा प्रियः = पुत्रस्य सख्युः प्रियायाः अपराधान् कृपया सोढुं क्षन्तुं अर्हति तथा ममापराधान् त्वं सोढुं क्षमितुं[१५], अर्हसि = समर्थोऽसि[१६] इत्यर्थः ॥ ४४ ॥

**गीता**

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा**
**भयेन च प्रव्यथितं मनो मे ।**
**तदेव मे दर्शय देव रूपं**
**प्रसीद देवेश जगन्निवास ॥ ४५ ॥**

***वि०वि०***— तदेव रूपं दर्शय ॥ ४५ ॥

***सा०सं०***— एवं क्षमाप्य प्रार्थयते **अदृष्टेति** । हे देव ! पूर्वमदृष्टमदृष्टपूर्वम् । **तव रूपं दृष्ट्वा** । **हृषितोऽस्मि** । **तथा भयेन च मे मनः प्रव्यथितं** प्रचलितम् । अतो हे **देवेश** ! **जगन्निवास** । **तदेव रूपं मे दर्शय प्रसीद** ॥ ४५ ॥

***अ०प्र०***— एवं स्वकृतमपराधं क्षमापयित्वा दृष्टचररूपं प्रार्थयते अदृष्टपूर्वमिति द्वाभ्याम् । तत्रादौ **अदृष्टपूर्वमिति** ।

अस्यान्वयः— हे देव ![१], अदृष्टपूर्वं ते रूपं[२], दृष्ट्वा[३], हृषितोऽस्मि[४], भयेन च[५], मे[६], मनः = यस्मात्प्रव्यथितं[८], तस्मात् मे[९], तदेव[१०] रूपं[११] दर्शय[१२], हे देवेश ![१३], भो जगन्निवास ![१४], प्रसीदेत्यन्वयः ।

हे देव ![१], अदृष्टपूर्वं ते रूपं दृष्ट्वा = अदृष्टपूर्वं अदृष्टं अदृष्टपूर्वं[२], एवं तव विश्वरूपं दृष्ट्वा = विश्वरूपं केनाप्यदृष्टं सत्यमेव विशेषतो ब्रह्मादिभिरपि अश्रुतपूर्वमित्यर्थः[३], हृषितोऽस्मि = हृष्टोस्मि[४], भयेन च[५], मे[६], मनः[७], यस्मात् = प्रव्यथितं प्रचलितं प्रकर्षेण व्यथायुक्तं जातं[८], तस्मात् मे = मम व्यथा निवृत्तये[९], तदेव = पूर्वं दृष्टं अभ्यस्तं[१०] रूपं = चतुर्भुजात्मकं श्रीकृष्णरूपमेव मम विश्रान्तिकरं तरस्मात्[११] दर्शय[१२], हे देवेश ![१३], भो जगन्निवास[१४], प्रसीद = प्रसन्नो भव[१५] इत्यर्थः ॥ ४५ ॥

**गीतातात्पर्यनिर्णयः**

एकः सर्वोत्तमोऽप्यसत्कृतः ।

"एकः सर्वाधिको ज्ञेय एक एव करोति यत् ॥"

—इति च ॥ ४२-४५ ॥

*प्रका०*— "यच्चापहासार्थमसत्कृतोऽसि विहाय शय्यासनभोजनेषु । एकोऽथवाऽप्यच्युते"-त्यत्र एकशब्दार्थमाह **एक इति** ॥

*न्या०दी०*— "असत्कृतोऽसि विहारशय्यासनभोजनेषु । एकोऽथवाऽपि" इत्यत्र यद्यप्यहं त्वमेक एव । तथापि लोकव्यवहारानुसारेण क्षामय इत्यन्यथाप्रतीतिनिरासायाह **एक इति** ॥ तर्ह्यन्वयो नोपपद्यत इत्यतस्तं दर्शयति **अपीति** ॥ सर्वोत्तमत्वेनासत्कारा-योग्योऽप्यसत्कृतोऽसीत्येवोच्यते । नान्यत् । अर्जुनस्य भगवदैक्ये मानाभावादिति भावः । एकशब्दः कथं सर्वोत्तमवाचीत्यत आह **एक इति** ॥ एकत्वाद् एः, करोति इति क इत्यर्थः । अन्यनिरपेक्षतया हि कर्ता सर्वोत्तमः ॥ ४२-४५ ॥

*भा०दी०*— करोतीति क इति । कृञो डप्रत्ययः । प्रत्युतेत्यस्येत्येवोच्यत इत्यनेनान्वयः ॥ ४२-४५ ॥

**गीता**

**किरीटिनं गदिनं चक्रहस्त-**
**मिच्छामि त्वां द्रष्टुमहं तथैव ।**
**तेनैव रूपेण चतुर्भुजेन**
**सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥**

*वि०वि०*— 'तेनैव रूपेण भव' इति अनन्तरूपगोपनेन तदेव प्रकाशय इत्यर्थः ॥ ४६ ॥

*सा०सं०*— तदेवेत्युक्तं रूपमाह किरीटिनमिति । यथा विश्वरूपं दृष्टवानस्मि **तथैव तेनैव** पूर्वदृष्टेन **चतुर्भुजेन रूपेण त्वां द्रष्टुमिच्छामि** । हे **सहस्रबाहो** अनन्तबाहो । **विश्वमूर्ते** गुणपूर्णविग्रह इति वा । विश्वस्मिन् मूर्तिर्यस्येति वाऽर्थः ॥ ४६ ॥

*अ०प्र०*— तदेव रूपं दर्शयन्नाह **किरीटिनमिति** ।

अथान्वयः— हे सहस्रबाहो ![१], अहं[२], त्वां[३], किरीटिनं[४], गदिनं[५], चक्रहस्तं[६], यतः द्रष्टुं[७], इच्छामि[८], अतः तेनैव[९], चतुर्भुजेन[१०] रूपेण[११] हे सहस्रबाहो = हे विश्वमूर्ते तथैव[१३], भवेत्यन्वयः ॥

हे सहस्रबाहो = सहस्रशब्दोऽत्रानन्तवाची । अनन्ताः बाहवो यस्य स तथा च[१], अहं[२], त्वां[३], किरीटिनं = मुकुटवन्तं[४], गदिनं = गदावन्तं[५], चक्रहस्तं = जगच्चक्रं वा कालसुदर्शनायुधं वा यस्य हस्ते तं[६], एतादृशं त्वां यतः = कारणादहं द्रष्टुं[७], इच्छामि = यथा पूर्वं दृष्ट्वान् तथा द्रष्टुमिच्छामि[८], अतः = कारणात्, हे विश्वमूर्ते त्वं तेनैव = रूपेण किरीटादियुक्तेन चतुर्भुजेन चतुर्भिः विश्वादिभिः अनिरुद्धादिभिर्वा हव्यादिभुक् इति वा । प्रलये चतुरो वर्णादीन् भुङ्क्ते । तैरिदानीं उपजीव्य इति वा । चतुर्भुजः तेन चतुर्भुजेन रूपेण सौम्य-रूपेण तथैव भव = आविर्भव तदनेन श्रीकृष्णं अर्जुनः पूर्वमेव किरीटादियुक्तमेव पश्यतीति गम्यते । यत्तु पूर्वमुक्तं विश्वरूपदर्शने किरीटिनं गदिनं चक्रिणं पश्यामीति तच्च बहुकिरीटाद्यभिप्रायेण । यद्वा, एतावन्तं कालं त्वं किरीटिनं गदिनं चक्रिणं च सुप्रसन्नमपश्यत् । तमेवेदानीं तेजोराशिं दुर्निरीक्ष्यं पश्यामीत्येवं तत्र वचनं वक्ति इत्यविरोधः ॥ ४६ ॥

**गीतातात्पर्यनिर्णयः**

**तेनैव रूपेण भवेति अनन्तरूपगोपनेन तदेव प्रकाशयेत्यर्थः ।**

**"पञ्चाननं चिन्त्यमचिन्त्यरूपं**
**पद्मासनं गोपितविश्वरूपम् ॥"**

**इति हि वैहायससंहितायाम् ॥ ४६ ॥**

*प्रका०*— "तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते" इत्यस्यार्थमाह तेनैवेति ॥

***न्या०दी०***— "तेनैव रूपेण भव" इत्यर्जुनप्रार्थनावाक्ये विश्वरूपं विहाय पूर्वतनं गृहाणेत्युच्यत इत्यन्यथाप्रतीतिनिरासायाह **तेनैवेति** ॥ यदा रूपान्तरं प्रतीयते तदा विश्व-रूपत्याग एव किं न स्यात्, किं तद्गोपनेनेत्यत आह **पञ्चाननमिति** ॥ नरसिंहरूपेऽपि गोपितविश्वरूपत्वोक्तेर्न रूपान्तरप्रतीतौ विश्वरूपत्याग इति भावः ॥ ४६ ॥

**गीता**

**श्रीभगवानुवाच—**

**मया प्रसन्नेन तवार्जुनेदं**
**रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं**
**यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥**

*वि०वि०—* भक्त्यतिशयोत्पादनाय विश्वरूपदर्शनस्य दौर्लभ्यं दर्शयन् भगवानुवाच **मयेत्यादिना** । आत्मयोगात् स्वसामर्थ्यात् । विश्वं पूर्णगुणम्, 'विश्वनामा स भगवान् यतः पूर्णगुणः प्रभुः' इति वचनात् । अनन्तं देशकालापरिच्छिन्नम् । यत् मेरूपम् । त्वयैवेंद्रशरीरेण दृष्टम् । त्वदन्येनाधमेन । त्वयैव वा । न दृष्टपूर्वम् । उक्तं च—

'विश्वरूपं प्रथमतो ब्रह्माऽपश्यच्चतुर्मुखः ।
तच्छतांशेन रुद्रस्तु तच्चतांशेन वासवः ॥

यथेन्द्रेण पुरा दृष्टमपश्यत्सोऽर्जुनोऽपि सन् ।
तदन्ये क्रमयोगेन तच्छतांशांशदर्शिनः ॥' इति ॥ ४७ ॥

*सा०सं०—* भक्त्यतिशयोत्पादनाय विश्वरूपप्रदर्शनस्य दौर्लभ्यमाह **मयेति** । हे **अर्जुन** ! **प्रसन्नेन मया** । **आत्मयोगात्** स्वरूपसामर्थ्यात् । **परम्** उत्तमम् । **इदं रूपं तव दर्शितम्** । तद्विशिनष्टि । **तेजोमयं** प्रचुरतेजस्स्वरूपम् । **विश्वं** पूर्णम् । **अनन्तं** देशकालापरिच्छिन्नम्, **आद्यं त्वदन्येन न दृष्टपूर्वम्** इत्यस्य त्वत्तोऽधमैरदृष्टपूर्वमित्यर्थः । तैरपि स्वयोग्यतानुरोधेन दृष्टत्वेऽपि अर्जुनवन्न दृष्टमित्यदृष्टत्वोक्तिः । तथा त्वया त्विन्द्रशरीरेण दृष्टपूर्वमित्यपि त्वदन्येनेति विशेषणालभ्यते । **यन्मे रूपं दर्शितम्** इत्यन्वयः । अत्र विश्वरूपस्य **परम्** इत्युत्तमत्वोक्तिः अज्ञजनापेक्षयैव । ब्रह्मादीनां कृष्णाद्यवतारेष्वपि परत्वधीसत्वादिति ॥ ४७ ॥

*अ०प्र०—* मया प्रसन्नेनेति एवं प्रार्थितः सन् तमाश्वासयन् श्रीभगवानाह **मयेति** त्रिभिः ।

हे अर्जुन ![१] प्रसन्नेन[२], मया कृपया[३], तेजोमयं[४], विश्वं[५], अनन्तं[६], आद्यं[७], यत् मे रूपं[८], त्वदन्येन[९], न दृष्टपूर्वं तत्[१०] इदं परं[१२], रूपं[१३], आत्मयोगात्[१४], तव[१५], दर्शितं[१६] इत्यन्वयः ।

हे अर्जुन ![1], प्रसन्नेन मया कृपया[2], तेजोमयं = ज्ञानतेजव्याप्तं[3], विश्वं = विश्वान्तर्यामिनं[4], अनन्तं = आदिमध्यान्तरहितं तस्मादचलं[5], आद्यं = सर्वेषामाद्यं[6], यन्मे विश्वरूपं[7], त्वदन्येन = त्वत्तो अन्यः त्वदन्यः तेन तथा[8], न दृष्टपूर्वं = पूर्वं न दृष्टं न दृष्टपूर्वं न श्रुतं चेति भावः[10] एतादृशं तत् = इदं परं इत्युक्तं चेत् पूर्वं बहूनां प्रसन्नोऽस्मि तेषां सायुज्यादिकं दत्तं कस्यापि विश्वरूपं न दर्शितं इदानीं त्वत्प्रीत्या सर्वसाधारणप्रसन्नतां विस्मृत्यात्यन्तं गोप्यं[12], रूपं = विश्वरूपमपि[13], आत्मयोगात् = आत्मनो ध्यानात्[14], तव[15], दर्शितं[16], इत्यर्थः । यद्वा आत्मयोगात् मम योगमायासामर्थ्यात् विश्वं पूर्णं विश्वनामा स भगवान् यतः पूर्णगुणः प्रभुः इति विशिष्यते गुणादिभिः गुणादीन् विशतीति वा विश्वं यत् एतत् अनन्तं यत् तत् त्वया इन्द्रशरीरेण दृष्टं मे मम रूपं त्वदन्येन अधमेन त्वतादृशभक्तादन्येन न दृष्टपूर्वं न पूर्वं दृष्टं तत् यद्वा, त्वया अर्जुनरूपेण वा दृष्टम् । तदुक्तम्—

विश्वरूपं प्रथमतो ब्रह्मापश्यच्चतुर्मुखः ।
तच्छतांशेन रुद्रस्तु तच्छतांशेन वासवः ॥
यथेन्द्रेण पुराऽपश्यत् सोऽर्जुनोऽपि तथैव सन् ।
तदन्ये क्रमयोगेन तच्छतांशांशदर्शिनः ॥ इति ॥ ४७ ॥

**गीतातात्पर्यनिर्णयः**

**"विश्वनामा स भगवान् यतः पूर्णगुणः प्रभुः" इति पाद्मे ।**

**"त्वदन्येन न दृष्टपूर्वम्" इत्यनेन तेनैवेन्द्रशरीरेण दृष्टमिति ज्ञायते । त्वदन्येनेति त्वदवरापेक्षया । तैरपि तद्वन्न दृष्टमित्येव ।**

***न्या०दी०***— भक्त्यतिशयोत्पादनाय विश्वरूपदर्शनस्य दौर्लभ्यमुच्यते 'मया' इति । तत्र "तेजोमयं विश्वम्" इति विश्वात्मकत्वं भगवद्रूपस्योच्यत इत्यन्यथाप्रतीतिनिरासाय विश्वशब्दं स्मृत्यैव व्याचष्टे **विश्वेति** ॥ "यन्मे त्वदन्येन न दृष्टपूर्वम्" इत्यर्जुनेतरैर्विश्वरूपस्यादृष्टत्वमुच्यते इत्यन्यथाप्रतीतिनिरासायाह **त्वदिति** ॥ नात्र विश्वरूपस्यार्जुनेतरैरदृष्टत्वमुच्यते । प्रत्युतेतःपूर्वं केनापि न दृष्टमित्यनुक्त्वा त्वदन्येनेत्युक्तत्वात् तेनैवेतःपूर्वम् इन्द्रशरीरेण दृष्टमित्येवोच्यत इत्यर्थः । तर्हि ब्रह्मादिभिरपि न दृष्टमित्यपि नाशङ्कनीयम् । त्वदन्येनेत्यर्जुनादधमविवक्षयोक्तत्वादित्याह **त्वदिति** ॥ नैतावताऽर्जुनाधमैः न दृष्टमिति कल्पनीयम् । अधमैरप्यर्जुनवन्न दृष्टमित्यभिप्रायेणैवादृष्टत्वस्योक्तत्वादित्याह **तैरिति** ॥

**गीतातात्पर्यनिर्णयः**

"विश्वरूपं प्रथमतो ब्रह्माऽपश्यच्चतुर्मुखः ।
तच्छतांशेन रुद्रस्तु तच्छतांशेन वासवः ॥
यथेन्द्रेण पुरा दृष्टमपश्यत् सोऽर्जुनोऽपि सन् ।
तदन्ये क्रमयोगेन तच्छतांशादिदर्शिनः ॥" इति ब्रह्माण्डे ॥ ४७ ॥

*प्रका०*— "तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम्" इत्यस्य अर्थमाह **विश्वेत्यादिना** ॥

*न्या०दी०*— भवेदेवैतद् व्याख्यानं यदि विश्वरूपं ब्रह्मादिभिरिन्द्रेणार्जुनादधमैश्च दृष्टं, इन्द्रेण चार्जुनवदेव दृष्टं, अर्जुनादधमैस्तद्वन्न दृष्टमित्येतत्सिध्येत्, तदेव कुत इत्यत आह **विश्वरूपमिति** ॥ इन्द्रस्याधिकदर्शित्वेऽल्पदर्शित्वे वा विशिष्य त्वयेन्द्रशरीरेण दृष्टमित्युक्तिर्न सम्भवति । आधिक्येऽनुक्तेराधम्ये निषेधस्य चादर्शनात् ॥ ४७ ॥

*भा०दी०*— त्वयेन्द्रशरीरेण दृष्टमिति विशिष्य कस्मान्नोच्यते किं त्वदन्येत्यादिवक्रोक्त्येत्यत आह **इन्द्रस्येत्यादि** ॥ ४७ ॥

**गीता**

**न वेदयज्ञाध्ययनैर्न दानै-**
**र्न च क्रियाभिर्न तपोभिरुग्रैः ।**
**एवं रूपः शक्य अहं नृलोके**
**द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥**

*सा०सं०*— ननु अर्जुनादवरैः स्वतोऽर्जुनवन्न दृष्टमपि विश्वरूपं वेदादिसाधनैरर्जुनेनेव तदवरैरपि तथा दृश्यतामित्यत आह **न वेदेति** । वेदानां यज्ञानां चाध्ययनैरग्निहोत्रादि**क्रियाभिः** । **उग्रैः** कृच्छ्रचान्द्रायणादि**तपोभिः** । **एवंरूपः** । प्राक् प्रदर्शितविश्वरूपः । **अहम्** । **नृलोके** । **त्वदन्येन** त्वत्तोऽवरेण । त्वद्वद्**द्रष्टुं न शक्य** इत्यर्थः । सर्वात्मनाऽर्जुनादन्येनादृष्टार्थत्वे 'दृष्ट्वाऽद्भुतं रूपम्' इति प्रागुक्तविरोध इति ज्ञेयम् ॥ ४८ ॥

*अ०प्र०*— ननु मदन्येन वेदादिसाधनैरपि तथा दृश्यतां कुतस्तस्य दुर्लभत्वमित्यत आह **नेति** ।

हे कुरुप्रवीर ![१], वेदयज्ञाध्ययनैः न[२], दानैर्न[३], क्रियाभिर्न[४], उग्रैः[५], तपोभिर्न[६], एतैः चतुर्भि-रुपायैः त्वदन्येन[७], नृलोके[८], एवंरूपः[९], अहं[१०] द्रष्टुं[११] शक्यः[१२] ॥

हे कुरुप्रवीर ![१], वेदयज्ञाध्ययनैः = वेदाध्ययनातिरेकेण यज्ञाध्ययनस्याभावात् यज्ञशब्देन यज्ञविद्याः कलाः सूत्राद्यालक्ष्यन्ते वेदानां यज्ञविद्यानां कल्पसूत्रादीनां च अध्ययनैः न[२], दानैर्न[३], क्रियाभिः = अग्निहोत्रादिभिः न च[४], उग्रैः तपोभिर्न = उग्रतपांसि कृच्छ्रचान्द्रायणादिभिः न[६], एतैरपि चतुर्भिरुपायैः त्वदन्येन = अधमयोग्येन नृलोके त्वद्भिन्नमनुष्यलोके[८], एवंरूपोहं = एवं पूर्वोक्तरूपोऽहं[१०] द्रष्टुं न शक्यः[१२], अपि तु त्वमेव मत्प्रसादेन दृष्ट्वा कृतार्थोऽसि ॥ ४८ ॥

**गीता**

**मा ते व्यथा मा च विमूढभावो**
**दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं**
**तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥**

*वि०वि०*— ननु मदन्येनापि वेदादिसाधनैरपि तथा दृश्यतामित्यत आह **न वेदेति** । वेदा-दिभिरपि त्वदवरेणैवं द्रष्टुमशक्यः । अन्यथा 'दृष्ट्वाद्भुतं रूपम्' इत्यादिविरोधः ॥ ४९ ॥

*सा०सं०*— 'अदृष्टपूर्वम्' इत्यादिना प्रार्थितस्योत्तरमाह **मा त इति** । **घोरं** संहर्तृरूपम् । **ईदृगीदृशम्** अनन्तबाह्वादिरूपम् । **दृष्ट्वा** । **ते व्यथा** । **माऽस्तु** । **विमूढभावो** विमूढत्वं च माऽस्तु । व्यपगतभयः **प्रीतमनाश्च** सन् । **पुनस्त्वम्** । **तदेव रूपं** पूर्वदृष्टमेव रूपम् । **प्रपश्येति** ॥ ४९ ॥

*अ०प्र०*— एवमपि चेत्तवेदं रूपं घोरं दृष्ट्वा व्यथा भवति तर्हि तदेवं रूपं दर्शयामीत्याह **मा ते व्यथेति** ।

अन्वयः— हे पार्थ !, ईदृक्[१], मे[२], इदं[३], घोरं[४], रूपं[५], दृष्ट्वा[६], ते व्यथा[७], माऽस्तु[८], विमूढभावोऽपि[१०] माऽस्तु[११] त्वं[१२], व्यपेतभीः भूत्वा[१३], प्रीतमनाश्च सन्[१४], पुनः[१५], मे[१६], तदेव[१७], इदं[१८], रूपं[१९], प्रपश्य[२०] इत्यन्वयः ।

हे पार्थ !, ईदृक् = ईदृशं[7], मे = मम मदीयं[2], इदं = घोरं रूपं दृष्ट्वा[6], तिष्ठतः[4], ते = तव[5], व्यथा मास्तु = भयं माऽभूत् मा भैषीरिति भावः[9]। विमूढभावोऽपि = विमूढत्वं च[10] माऽस्तु = त्वं मूढो मा भवेदित्यर्थः[11] त्वं व्यपेतभीः भूत्वा = निर्गतभूयो भूत्वा व्यपगतभयः भूत्वा[13], प्रीतमनाश्च सन् पुनः मे = मम तदेव इदं रूपं = एतदभिन्नमेव दृष्टपूर्वं कृष्णरूपं[19], प्रपश्य = अवलोकय[16] ॥ ४९ ॥

भाष्यम्

## एकस्त्वमेव कारयिता नान्योऽस्ति, अथापि ॥ ४२-४९ ॥

***प०टी०***— त्वमहं चैकोऽथ वाऽपि लोकतः क्षमय इत्यन्यथाप्रतीतिनिरासाय, एकोऽथ वा' इत्येतद्व्याचष्टे **एक इति** । यद्यपि नावज्ञेयोऽसि सर्वोत्कृष्टत्वात् । तथाऽप्यसत्कृतोऽसीत्यर्थः ॥ ४२-४९ ॥

***प्र०दी०***— 'एकः परोक्षः' इति क्लिष्टं व्याख्यानमिति ज्ञापयितुं तदर्थमन्वयं च दर्शयति **एक इति** । आद्याक्षरग्रहणेन 'ए'शब्दः एकस्य द्योतकः । **क** इति कशब्दः कारयितृत्वद्योतकः । अन्तर्णीतण्यर्थात् करोतेर्डः । **अथापि** एवमसत्कारानर्होऽप्यसत्कृतोऽसि ॥ ४२-४९ ॥

***भा०दी०***— **अथापीति** । भाष्यपदानुवादः ॥ ४२-४९ ॥

***भा०र०***— 'एकः परोक्षः सन् असत्कृतोऽसि' इति शङ्करभाष्यं दूषयितुं भाष्यमित्याह **एक इति** । **क्लिष्टमिति** । 'एके मुख्यान्यकेवलाः' इत्यभिधानात्, 'एकशब्दोऽयं बह्वर्थः' इति भाष्यात्, 'मुख्य-असहाय-प्रधान-प्रथम-समानार्थः' इति कैयटवचनाच्च नानार्थः । तत्रान्यार्थायोगात् एकः = अन्यो यः कोऽपीत्यर्थः, 'परोक्षः' इति यावदिति वक्तव्यत्वात् क्लिष्टमित्यर्थः । **एशब्दः** एकशब्दस्य द्योतकः । कथम् ? **आद्यक्षरग्रहणेन** एकशब्दे आद्यक्षरम् एशब्दः, तद्ग्रहणेन । 'आसीत्' इत्यस्य द्योतकः 'आ इदम्' इत्यत्र 'आ' इति वर्णो यथेत्यर्थः । डः 'डप्रकरणे अन्येष्वपि दृश्यते' इति वचनप्राप्तडप्रत्ययः । 'एकः सर्वोत्तमो ज्ञेय एक एव करोति यत्' इत्येक इति तात्पर्ये । *भावप्रदीपिकायां तु*— " 'त्वमहं च एक एव, अथवा लोकरीत्या त्वां क्षामये' इति प्रतीतिनिरासाय एकोऽथवेति व्याचष्टे एक इति" इत्यवतारितम् 'एकस्त्वमेव' इति भाष्यम् । 'अथापि' इत्यनुवादः। 'एवम्' इति व्याख्या ॥ ४२-४९ ॥

*गीताक्षरार्थस्तु*—

ततो यद् वृत्तं तद् धृतराष्ट्रं प्रति सञ्जय आहेत्युच्यते **सञ्जय उवाच– एतच्छ्रुत्वेति** । एतत् पूर्वश्लोकत्रयात्मकं **केशवस्य** ब्रह्मरुद्रादिनियामकस्य **वचनं श्रुत्वा वेपमानः** कम्पमानः **किरीटी** अर्जुनः **सगद्गदं** भयाविष्टस्य दुःखाभिघातात्, स्नेहाविष्टस्य च हर्षोत्कर्षात् अश्रुपूर्णनेत्रत्वे सति यः श्लेष्मणा कण्ठावरोधः, तेन वाचः अपाटवं मन्दत्वं यत्र शब्दे स गद्गदः तेन सह वर्तत इति 'सगद्गदम्' इति क्रियाविशेषणम् । **भीतभीतः** भीतादपि भीतः पुनःपुनः भयाविष्टचेताः **प्रणम्य** प्रह्वो भूत्वा आह ॥ ३५ ॥

'आह' इत्येतदेवोच्यते **अर्जुन उवाच– 'स्थाने'** इत्याद्येकादशभिः । हे **हृषीकेश** अग्नीषोमसूर्येषु स्वकेशनियतैस्तदंशुभिर्जगतो बोधनस्थापनाभ्यां हर्षणात् हृषीकेश । हृष्यतेः कीप्रत्ययः । 'हृष्यः = हर्षहेतवः केशा अस्य' इति हृषीकेशः, तत्सम्बुद्धिः । 'हृषीकेश' इत्येतत् 'जगत्प्रहृष्यति' इत्यस्योपपादकम् । हृषीकाणां = इन्द्रियाणां ईश इति वा हृषीकेशः, तत्सम्बुद्धौ, पुरुषार्थोपयुक्तज्ञानक्रियाशक्तिप्रेरक' इति तात्पर्यम् । **तव प्रकीर्त्या** त्वन्माहात्म्यकीर्तनेन **जगत् प्रहृष्यति अनुरज्यते** अनुरागवत् **च** भवति इत्येतत् स्थाने 'युक्तमेव' इत्यर्थे अव्ययमिदम् । किञ्च **रक्षांसि भीतानि दिशः प्रद्रवन्ति** प्रतिद्रवन्ति, तच्च 'स्थाने' इत्यादि योज्यम् ॥ ३६ ॥

कथं स्थाने ? इत्याशङ्कायाम्, उत्तरमुच्यते **कस्मादिति** । महांश्चासौ आत्मा महात्मा, तत्सम्बुद्धिः **महात्मन्** । अत्र महच्छब्दः पूर्णवाची । आत्मशब्दश्च 'यच्चाप्नोति' इत्यादिस्मृतेः आप्ति-आदान-विषयानुभव-नित्यसत्तारूपार्थचतुष्टयवचनः । पूर्णात्मादिमन् इत्यर्थः । **ते कस्मात् न रमेरन्** त्वां न नमस्कुर्युः । तत्र हेत्वर्थगर्भविशेषणम् **गरीयसे** गुरुतराय । **ब्रह्मणः** चतुर्मुखस्यापि **आदिकर्त्रे** इति, **अनन्त** अपरिच्छिन्न । **सदसद्भावात्मकं** विश्वं **त्वमेव** त्वदधीनसत्तादिकमेव, **तत्परं** भावाभावात्मकविश्वाभ्यां परम् = उत्तमं **यद् अक्षरं** तदपि त्वमेव ॥ ३७ ॥

किञ्च **त्वम् आदिदेवः** देवानामादिः, पुरि शयनात् **पुरुषः**, **पुराणः** चिरन्तनः 'निधीयते-ऽस्मिन्' इति **निधानं** आश्रयः । **वेत्ता** वेदिता ज्ञाता **असि** । **वेद्यं** वेदनकर्म वस्तुजातं च, **त्वमेव** त्वदधीनमेव **वेद्यं** परमं वेद्यं स्वरूपात्मकं च त्वमेव । वेत्ता 'विद = विचारणे' इत्यस्मात् अनिट्कात् 'विचारयिता' इति वा । **परं धाम** तेजश्च त्वमेव । **अनन्तरूप** अनन्तम् = कालतो-ऽन्तहीनं रूपमस्येति अनन्तरूपः, तत्सम्बुद्धिः । 'नान्तं न मध्यं न पुनस्तवादिं पश्यामि' इति परिमाणानन्त्यस्योक्तत्वात्, 'त्वया ततं विश्वम्' इति पुनरुक्तिः ? इति चेन्न । 'नान्तं पश्यामि'

इत्युक्ते नेश्वरस्य परिमाणानन्त्यं सिद्ध्यति, 'विद्यमानम् अन्तं स्वयं न पश्यति' इत्यपि प्रतीतेः । तन्निवृत्त्यर्थं 'न केवलमहं न पश्यामि', किन्तु 'त्वया ततं च विश्वम्' इत्युक्तत्वेन सप्रयोजनत्वात् न पुनरुक्तिरिति तात्पर्यात् । तथापि 'पश्यामि त्वां सर्वतोऽनन्तरूपम्', द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः' इत्यादि पुनरुक्तिरिति चेन्न । एतद्वाक्यजातस्य विष्णोर्देशतः कालतो गुणतश्चानन्त्ये स्वस्य महातात्पर्यज्ञापनार्थाभ्यासरूपत्वेन सप्रयोजनत्वात् इत्युत्तरप्रस्थाने व्यक्तम् ॥ ॥ ३८ ॥

अपि च '**वायुः यमः अग्निः वरुणः शशाङ्कः प्रजापतिः** दक्षकश्यपादिः । वाय्वादेः सत्ता-प्रवृत्तिप्रतीतयस्त्वदधीनाः' इत्यर्थः । 'वायुर्बलज्ञानयोगाच्छशाङ्कोऽतिसुखाङ्कितः इति वचनात्, वाय्वादिशब्दमुख्यार्थ इति वा । **प्रपितामहः** पितामहः = चतुर्मुखः, तस्यापि पिता प्रपितामहः, चतुर्मुखजनक इत्यर्थः । बहुशो नमस्कारक्रियाभ्यावृत्तिगणनं कृत्वसुचोच्यते । 'पुनश्च भूयोऽपि' इति, श्रद्धाभक्त्यतिशयभरितत्वमात्मनो दर्शयति ॥ ३९ ॥

तथा **नमः पुरस्तात्** पूर्वस्यां दिशि **ते** तुभ्यं **नमोऽस्तु । सर्वतः** सर्वासु दिक्षु विद्यमानाय **ते नमः । सर्व** परिपूर्ण । अनन्तं वीर्यं = सामर्थ्यं अस्य, तत्सम्बुद्धिः । अमितो विक्रमः = पराक्रमो यस्य स तथा । वीर्यवानपि कश्चिच्छस्त्रादिविषये न पराक्रमते, मन्दपराक्रमो वा दृश्यते । त्वं तु अनन्तवीर्यश्च अमितविक्रमश्चेति स्तुतिः । ननु 'सर्वं खल्विदं ब्रह्म' इत्यादेः सर्वस्य जगतो ब्रह्मात्मकत्वात् 'त्वमस्य विश्वस्य परं निधानम्', 'त्वया ततं विश्वम्' इत्याद्ययुक्तम् ? इत्यतः श्रुतिगतसर्वशब्दो व्याक्रियते **सर्वं समाप्नोषि ततोऽसि सर्व इति** । यतस्त्वं सर्वं विश्वं व्याप्नोषि, ततः सर्वोऽसि = 'सर्वं खल्विदं ब्रह्म', 'पुरुष एवेदं सर्वम्', सर्वं ह्येतत् ब्रह्म' इत्यादिवाक्येषु श्रुतसर्वशब्दवाच्योऽसीत्यतः 'इदं ब्रह्म सर्वजगद्व्यापि खलु' इत्यादिरूपेण श्रुत्यर्थो ज्ञेयः, न तु जगदात्मकत्वेनेत्यभिप्रायः ॥ ४० ॥

एतादृशमाहात्म्यं भगवन्तं त्वां प्रति यद् अपराद्धम्, तत् क्षन्तव्यमित्युच्यते **सखेतीत्यादिना। सखा** समानवया इति **मत्त्वा प्रसभं** हठेन **यदुक्तम्– हे कृष्ण हे यादव हे सखेति**। सन्धिरार्षः। **तव महिमानं** माहात्म्यरूपं **इदम्** 'अहं सर्वस्य जगतः प्रभवः' इत्यादिनोक्तं जगत्स्रष्टृत्वादिकं **अजानता** बलिष्ठत्वाद्यल्पमहिमज्ञानेऽपीदृशं जगत्प्रभवादिमहामाहात्म्यं अपरिजानतेत्यर्थ इति **विवृतिकृतः** । *स्वामिनस्तु* 'इदं = इमं महिमानम्' इति लिङ्गव्यत्ययेन व्याकृतवन्तः । 'तव महिमानम्', 'इदं च विश्वरूपमजानता' इति कस्यचिद् व्याख्यानं चशब्दसंयोजनात् विश्वरूप-

दर्शनवतोऽर्जुनस्य तदपरिज्ञानकल्पनाचायुक्तम् । **मया प्रमादाद्** अनवधानात् **प्रणयेन** स्नेहेनापि **वा** यदुक्तम् ॥ ४१ ॥

किञ्च 'यच्चापहासार्थमसत्कृतोऽसि' इत्यत्र **एकः** आद्यक्षरग्रहणेन एशब्दः एकरस्य द्योतकः । अन्तर्णीतणयर्थात् करोतेः डप्रत्ययः, 'एकत्वाद् ए', 'कारयितृत्वात् कः' इति एकः = सर्वोत्तमः, सर्वव्यापारकारयिता च इत्यसत्कारानर्हत्वे हेतुः । **अथापि** एवमसत्कारानर्होऽपि **असत्कृतः** परिभूतः **असि** । **तत्** तदपराधजातं **समक्षं** तव पुरतः **क्षामये** क्षमां कारयामि । **अप्रमेयम्** अपरिमेयप्रभावम् ॥ ४२ ॥

असत्कारानर्हत्वादौ हेत्वन्तरोक्त्याऽपि विविच्योच्यते **पितेति** । **अस्य लोकस्य पूज्यश्च** । अतो **गरीयान्** गुरुतरो गुरुः, अत्युत्तमो गुरुः । कस्माद्गरीयान् गुरुः इत्येतदुच्यते **न त्वत्समो-ऽस्तीति** । **त्वत्समः** तव तुल्यो नास्ति, त्वत्सम एव तावदन्यो नास्ति, **कुतः** एव **अन्यो-ऽभ्यधिकः** स्यात् । न विद्यते प्रतिमा = उपमा यस्य सोऽप्रतिमः । तादृशः प्रभावः = महिमा यस्य तस्य सम्बुद्धिः । निरतिशयमहिमन् इत्यर्थः ॥ ४३ ॥

यत एवं **तस्मात् कायं प्रणिधाय** दण्डवन्निपात्य **प्रणम्य** भक्तिश्रद्धाद्यतिशयेन नत्वा **ईड्यं स्तुत्यं त्वां प्रसादये** प्रसादोन्मुखं करोमि । **सख्युः** मित्रस्यापराधं **सखा** निरुपाधिकसख इव, 'प्रियाया अर्हसि' इति वक्तव्ये 'प्रियायाऽर्हसि' इत्यार्षः सन्धिः । **सोढुं** क्षन्तुं **अर्हसि** 'अपराधम्' इति शेषः ॥ ४४ ॥

एवं क्षमामाप्य अभिमतं प्रार्थ्यते **अदृष्टपूर्वमिति** । इन्द्ररूपेण पूर्वं दृष्टत्वेऽपि, अर्जुनेन तदधमैर्वा **पूर्वमदृष्टं** तव रूपं **दृष्ट्वा हृषितोऽस्मि** । **प्रव्यथितं** प्रचलितम् । ततो मम व्यथानिवृत्तये **तदेव रूपं दर्शय** । तद्दर्शयितुं **प्रसीद** च ॥ ४५ ॥

किं तद्रूपम् ? उच्यते **किरीटिनमिति** । **गदिनं** शिखादित्वात् इनिः, गदावन्तम् । यस्मादेवं तस्मात् **तेनैव रूपेण भव** । 'अनन्तरूपगोपनेन तदेव प्रकाशय' इति तात्पर्यम् । **सहस्रबाहो** अनन्तबाहो **विश्वमूर्ते** पूर्णविग्रहेति ॥ ४६ ॥

भक्त्यतिशयोत्पादनाय भगवता विश्वरूपदर्शनस्य दौर्लभ्यमुच्यते **भगवानुवाच– मयेति** । **आत्मयोगात्** स्वसामर्थ्यात् **तेजोमयं** अलौकिकतेजःस्वरूपं **विश्वं** पूर्णगुणं **अनन्तं** देशकाला-परिच्छिन्नं **त्वदन्येन न दृष्टपूर्वम्** इत्यनेन 'तेनैवार्जुनेनेतःपूर्वमिन्द्रशरीरेण दृष्टम्' इत्युच्यत इति

ज्ञायते । 'त्वदन्येन' इत्यत्र अन्यशब्देन ब्रह्मादिविश्वरूपदर्शिव्यतिरिक्ताः अर्जुनाधमाः ग्राह्या इत्यन्यत्र स्पष्टम् । **यद् रूपं तत् तव परं दर्शितम्** इत्यन्वयः । तेन विश्वरूपेतरकृष्णादिरूपेष्वपरत्वशङ्का पराकृता भवति । यद्वा 'परम् = उत्तमम्' इति विश्वरूपे परत्वोक्तिरज्ञानिविवक्षया, न तु ब्रह्मादिमहाज्ञानिविवक्षया । तेषां कृष्णादावपि परत्वप्रतीतेः, इत्यन्यतोऽवसेयम् ॥ ४७ ॥

अर्जुनावराणां स्वतस्तथा दर्शनाभावेऽपि वेदादिसाधनैस्तथा तैर्दृश्यतामित्याशङ्क्य त्वदवरैर्वेदादिसाधनैरपि त्वद्वत् न द्रष्टुं शक्यत इत्युच्यते **न वेदयज्ञाध्ययनैरिति** । वेदैः यज्ञैः = अग्निहोत्रादिभिः अध्ययनैः = स्वाध्यायैः । **क्रियाभिः** नित्यनैमित्तिककर्मभिः । **उग्रैः** क्रूरैः **तपोभिः** कृच्छ्रादिभिः । **एवंरूपः** एवंविधं = अत्यद्भुतं रूपं अस्येति स तथा **नृलोके** मनुष्यलोके । **त्वदन्येन** त्वत्तोऽवरेण त्वद्वद् द्रष्टुं अशक्यः भगवतः सर्ववैलक्षण्यद्योतनाय 'शक्योऽहम्' इति सन्धिर्न कृतः ॥ ४८ ॥

'भयेन च प्रव्यथितम्' इत्यत्रोत्तरम् **मा ते व्यथेति** । **घोरं** संहर्तृतया क्रूरं **तदेवेदं रूपं** यत्त्वया प्रार्थितम् ॥ ४९ ॥

**गीतातात्पर्यनिर्णयः**

**वेदादिभिरपि त्वदवरेणैवं द्रष्टुमशक्यम् । अन्यथा "दृष्ट्वाऽद्भुतं रूपम्" इत्यादिविरोधः ॥ ४८-४९ ॥**

***प्रका०***— "न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः । एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येने"त्यस्यार्थमाह **वेदादिभिरिति** ॥

***न्या०दी०*— यद्यन्येषामपि विश्वरूपदर्शनमत्राभिप्रेतं स्यात्तर्हि "न वेदयज्ञाध्ययनैर्न दानैः" इत्युत्तरवाक्यविरोध इत्यत आह वेदेति ॥ नोत्तरवाक्येऽर्जुनादन्येषां विश्वरूपदर्शनाभाव उच्यते । किन्तु त्वदवरैस्त्वद्वन्न दृष्टमित्युक्तेः स्वतस्तथा दर्शनाभावेऽपि वेदादिसाधनैस्तथा तैर्दृश्यतामित्याशङ्क्य त्वदवरैर्वेदादिसाधनैरपि त्वद्वन्न द्रष्टुं शक्यत इत्येवोच्यत इति भावः । विश्वरूपस्यार्जुनादन्येनादृष्टत्वमेवार्थः किं न स्यादिति चेन्न । उदाहृतस्मृतिविरोधात् । अत्रापि "दृष्ट्वाऽद्भुतं रूपं", "दृष्टा लोकाः" इत्यादिपूर्ववाक्यविरोधः स्यादित्यत आह अन्यथेति ॥ ४८-४९ ॥**

***भा०दी०***— **उदाहृतस्मृतीति** । विश्वरूपं प्रथमत इत्यादिस्मृतीत्यर्थः ॥ ४८-४९ ॥

गीता

## सञ्जय उवाच—

**इत्यर्जुनं वासुदेवस्तथोक्त्वा**
**स्वकं रूपं दर्शयामास भूयः ।**
**आश्वासयामास च भीतमेनं**
**भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥**

*वि०वि०*— स्ववत्क्रीयते प्रदर्श्यते इति स्वकं रूपम् । विश्वरूपमज्ञानां स्वरूपवन्न दर्शयति । एतज्ज्ञानिनामपि तथैव दर्शयतीति विशेषः । अन्यथा 'द्रष्टुमिच्छामि ते रूपम्' इति विरुद्धं स्यात् । उक्तं च—

'परापरविभेदस्तु मुग्धदृष्टिमपेक्ष्य तु ।
प्रादुर्भावं स्वरूपाणां विश्वरूपस्य च प्रभोः ॥
अन्यथा न विशेषोऽस्ति व्यक्तिर्ह्यज्ञव्यपेक्षया ॥' इति ॥ ५० ॥

*सा०सं०*— ततः किं जातमिति धार्तराष्ट्रहार्दं निरसितुं संजय उवाच— **इत्यर्जुनम्** इत्यादिना । **इत्युक्त्वा** इत्यन्वयः । **तथा**शब्दः समुच्चये । **स्वकं रूपं दर्शयामास** चेत्यर्थः । स्वं स्वकीयतया प्रदर्शनीयमित्यर्थः । विश्वरूपं न स्वकीयं इदं तु स्वकीयमिति लोकभ्रान्तिविषयमिति यावत् । **भीतमेनम्** । **भूयः** । **आश्वासयामास च** । किं कृत्वा, **महात्मा सौम्यवपुर्भूत्वेति** ॥ ॥ ५० ॥

*अ०प्र०*— एवमुक्त्वा प्राक्तनमेव रूपं दर्शितवानिति **सञ्जय उवाच** – इतीति ।

अथान्वयः— धृतराष्ट्रं प्रति सञ्जय आह हे धृतराष्ट्र !, महात्मा[१], वासुदेवः[२], अर्जुनं प्रति[३], इति उक्त्वा[४], तथा[५], स्वकं रूपं[७], भूयः[८], दर्शयामास[९], पुनः[१०] भीतं[११] एनं[१२], सौम्यवपुः[१३], भूत्वा[१४], आश्वासयामास च[१५], इत्यन्वयः ।

महात्मा = महाविश्वरूपः महाकृपालुरिति वा[१], वासुदेवः = श्रीकृष्णः[२], अर्जुनं प्रति[३], तथेति = तव मनोगतानुरूपं करोमीति[४], उक्त्वा यथा पूर्वमासीत्[५], स्वकं रूपं = स्वीयं रूपं यद्वा,

स्वक्रियते प्रकाश्यते इति स्वकं रूपं किरीटादियुक्तं चतुर्भुजं रूपं कृष्णरूपं विश्वरूपं अज्ञानां स्वरूपवन्न प्रकाशयति एतच्च ज्ञानिनां स्वरूपवत्प्रकाशयति इति स्वकत्वेऽपि उभयोरेतावान् विशेषः । अन्यथा 'द्रष्टुमिच्छामि ते रूपम्' इति विरुद्धं स्यात् । तदुक्तम्—

परापरभेदस्तु मुग्धदृष्टिमपेक्ष्यते ।
प्रादुर्भावस्वरूपाणां विश्वरूपस्य च प्रभो ॥
अन्यथा न विशेषोऽस्ति व्यक्तिर्ह्यज्ञव्यपेक्षया । इति[७],

भूयः[८], दर्शयामास[९], पुनः भीतं एनं अर्जुनं[१२], सौम्यवपुः = प्रसन्नवपुर्भूत्वा[१४], आश्वासयामास च ॥ ५० ॥

भाष्यम्

**स्वकं रूपं तु भ्रान्तप्रतीत्या । अन्यथा तदपि स्वकमेव । प्रमाणानि तूक्तानि पुरस्तात् ॥ ५० ॥**

***॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये एकादशोऽध्यायः ॥***

***प०टी०***— कृष्णरूपस्य 'स्वकं रूपम्' इति स्वकीयत्वोक्तेर्न विश्वरूपो हरिरिति प्रतीतिं पराकरोति **स्वकमिति** । विश्वरूपस्यास्वकीयत्वमेव किं न स्यात् ? इत्यत आह **प्रमाणानीति** । द्वितीयाध्यायान्ते ॥ ५० ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां एकादशोऽध्यायः ॥*

***प्र०दी०***— 'स्वकं रूपं दर्शयामास' इति कृष्णरूपस्य स्वकत्वविशेषणात् विश्वरूपं न स्वकमिति प्रतीतिः स्यात् । अत आह **स्वकमिति** । कृष्णः स्वकं रूपं न विश्वरूपमिति भ्रान्त-प्रतीत्यनुवादेनोच्यत इत्यर्थः । कुत एतत् ? इत्यत आह **अन्यथेति** । प्रमाणप्रतीत्येत्यर्थः । कानि तानि प्रमाणानि ? इत्यत आह **प्रमाणानीति** । द्वितीयान्ते ॥ ५० ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां श्रीजयतीर्थमुनिविरचितायां प्रमेयदीपिकायां एकादशोऽध्यायः समाप्तः ॥*

*भा०दी०*— तस्यार्थः 'एवम्' इत्यादिभाष्यं योजयति **कृष्ण इत्यादिना** । 'उच्यते' इत्यन्वयः ॥ ५० ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां*
*राघवेन्द्रयतिकृतायां भावदीपे एकादशोऽध्यायः ॥*

*भा०र०*— 'भ्रान्तिप्रतीत्या' इति भाष्यं भ्रान्त्याकारं प्रदर्शयन् व्याचष्टे **स्वकं रूपं न विश्वरूपमिति भ्रान्तिरूपप्रतीत्यनुवादेनेति** । 'उच्यते' इति शेषः । **प्रमाणप्रतीत्या** प्रमाणरूपप्रतीत्या । **तदपि** विश्वरूपमपि । **स्वकं** स्वशब्दस्याकचि स्वकम्, स्वमित्यर्थः । 'द्वितीयान्ते' इत्यतःपूर्वं 'पुरस्तात्' इति भाष्यपदं योज्यम् । 'पुरतः' इत्यर्थप्रतीतिनिवारणायैवं व्याख्यातम् । तत्र ''परिपूर्णानि सर्वाणि समान्यखिलरूपतः । तथाऽप्यवेक्ष्य मन्दानां दृष्टिं त्वामृषयोऽपि हि । परावरं वदन्तो वै ह्यभक्तानां विमोहनम् ॥'' इति । ''कृष्णरामादि रूपाणि परिपूर्णानि सर्वदा । न चाणुमात्रं भिन्नानि तथाऽप्यन्यान् विमोहसि ॥'' इति । ''देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः । परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम् ॥'' इत्यादीनि प्रमाणान्युदाहृतानि ॥ ५० ॥

*गीताक्षरार्थस्तु*—

एवमुक्तो भगवान् अपेक्षितरूपम् अदर्शयदिति सञ्जय आहेत्युच्यते **सञ्जय उवाच— इत्यर्जुनमिति** । अर्जुनं प्रति **इति** उक्तप्रकारेण **उक्त्वा** कृष्ण एव 'स्वकं रूपं न विश्वरूपम्' इति भ्रान्तलोकप्रतीत्यनुवादेनोच्यते **स्वकं रूपमिति** । प्रमाणप्रतीत्या तु विश्वरूपमपि स्वकमेवेति मन्तव्यम् । **सौम्यवपुः** अक्रूरविग्रहः ॥ ५० ॥

**गीतातात्पर्यनिर्णयः**

**स्ववत् क्रियत इति स्वकं रूपम् । विश्वरूपमज्ञानां स्वरूपवन्न दर्शयति । एतदज्ञानामपि तथैव दर्शयतीति विशेषः । अन्यथा ''द्रष्टुमिच्छामि ते रूपम्'' इति विरुद्धं स्यात् ।**

*प्रका०*— स्वकं रूपं दर्शयेत्यत्र स्वकशब्दं व्याचष्टे **स्वकमिति** ॥

*न्या०दी०*— ''स्वकं रूपं दर्शयामास'' इति कृष्णरूपस्य विशिष्य स्वीयत्वोक्तेः यदुक्तं विश्वरूपस्य साक्षादीश्वरस्वरूपत्वं तदयुक्तमित्यत आह **स्ववदिति** ॥ नात्र स्वक-

शब्देन कृष्णरूपस्य स्वकीयत्वमुच्यते, येन विश्वरूपस्य स्वकीयत्वं न स्यात् । किन्तु स्ववत् स्वकीयवत् क्रियते प्रदर्श्यत इति व्युत्पत्त्या स्वकीयतया प्रदर्शनीयत्वमेवेत्यर्थः । ननूभयोरपि भगवदीयतया प्रदर्श्यमानत्वात् कृष्णरूपस्यैव कुतो विशेषोक्तिरित्यत आह **विश्वरूपमिति** ॥ सत्यमुभयं रूपं भगवदीयतया प्रदर्श्यत इति, किन्तु ज्ञानिनामेव । अज्ञानिनां तु कृष्णरूपमेव भगवदीयतया प्रदर्श्यते । न तु विश्वरूपमतोऽज्ञविवक्षया विशेषोक्तिर्युक्तेति भावः । अत एवाल्पज्ञानिविवक्षया स्ववदित्युक्तम् । किमर्थमेवं व्याख्येयम् ? विश्वरूपं भगवदीयमेव किं न स्यादित्यत आह **अन्यथेति** ॥

*भा०दी०*— **यदुक्तमिति** । एतदध्यायादाविति योज्यम् ।

**गीतातात्पर्यनिर्णयः**

"परावरविभेदस्तु मुग्धदृष्टिमपेक्ष्य तु ।
प्रादुर्भावस्वरूपाणां विश्वरूपस्य च प्रभोः ॥
अन्यथा न विशेषोऽस्ति व्यक्तिर्ह्यज्ञव्यपेक्षया ॥" इति च ॥ ५० ॥

*न्या०दी०*— कृष्णरूपविश्वरूपयोः स्वकीयत्वास्वकीयत्वप्रतीतिनिराकरणप्रसङ्गेन परमं रूपं दर्शयामासेति विश्वरूपस्य परत्वोक्त्या कृष्णरूपस्यापरत्वं स्मृत्यैव निराकरोति **परेति** ॥ **अन्यथा** स्वभावतः । तर्हि विश्वरूप एव परत्वं विदुषामपि कथं दृश्यत इत्यत आह **व्यक्तिरिति** । विश्वरूपे परत्वव्यक्तिर्नावताररूपेषु ॥ अतस्तथा दृष्टिर्युक्तेति भावः । इयं च व्यक्तिरल्पज्ञानिविवक्षयोच्यते । न तु ब्रह्मादिमहाज्ञानिविवक्षया । तेषां कृष्णादावपि परत्वस्य प्रतीतेरित्याह **अज्ञेति** ॥ ५० ॥

*भा०दी०*— **अन्यथा** इति अनुवादः । **स्वभावत** इति व्याख्या ॥ **परत्वमिति** । उत्तमत्वमित्यर्थः ॥ ५० ॥

**गीता**

**अर्जुन उवाच—**

**दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥**

*वि०वि०*— किञ्चित् मनुष्यवद्दृश्यमानत्वान्मानुषं रूपम् । दृष्ट्वा सचेताः प्रसन्नचित्तः । संवृत्तो जातोऽस्मि । प्रकृतिं पूर्वस्वभावं स्वस्थतां गतोऽस्मि ॥ ५१ ॥

*वा०ल०*— 'इदानीमस्मि' इत्यत्र, संवृत्तः सम्यक् चित्तवृत्तिमान् ॥ ५१ ॥

॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे एकादशोऽध्यायः ॥

*सा०सं०*— विश्वरूपतिरोधानेन कृष्णरूपदर्शनिनाश्वासितोऽस्मीत्याहार्जुनो **दृष्ट्वेति** । किञ्च मनुष्यवद्दृश्यमानत्वात् **मानुषम्** । **इदम्** । सौम्य क्रूरम् इदं **तव रूपं दृष्ट्वा इदानीं सचेताः** प्रसन्नचित्तः **संवृत्तो** जातः, **अस्मि** । **प्रकृतिं** पूर्वस्वभावं स्वस्थतां **गतोऽस्मी**त्युवाचेत्यन्वयः ॥ ॥ ५१ ॥

*अ०प्र०*— हे जनार्दन ![१], इदं = पुरोवर्ति[२], तव[३], सौम्यं[४], मानुषं अज्ञानां मनुष्यदृश्यमानं[५], रूपं[६], दृष्ट्वा अहं[७], सचेताः = प्रसन्नचित्तः[८], इदानीं[९], संवृत्तोऽस्मि = जातोस्मि[१०] प्रकृतिं च = स्वच्छतां स्वास्थ्यं च[११] गतः = प्राप्तोऽस्मि[१२] ॥ ५१ ॥

स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं दर्शयन् **श्रीभगवानाह सुदुर्दर्शमिति** ।

**गीतातात्पर्यनिर्णयः**

**किञ्चिन्मनुष्यवद् दृश्यमानत्वात् मानुषम् ॥ ५१ ॥**

*प्रका०*— "दृष्ट्वेदं मानुषं रूपम्" इत्यत्र मानुषशब्दार्थमाह **किञ्चिदिति** ॥

*न्या०दी०*— **ननु "दृष्ट्वेदं मानुषं रूपं" इति कृष्णरूपस्य मानुषत्वोक्तेः** कथं नावरत्वमित्यत आह **किञ्चिदिति** ॥ **अन्यथोदाहृतवाक्यविरोधः स्यादित्यर्थः** ॥ ५१ ॥

*भा०दी०*— उदाहृतवाक्येति । परापरविभेदस्त्वित्यादिवाक्येत्यर्थः ॥ ५१ ॥

**गीता**

**श्रीभगवानुवाच—**

**सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥**

शब्देन कृष्णरूपस्य स्वकीयत्वमुच्यते, येन विश्वरूपस्य स्वकीयत्वं न स्यात् । किन्तु स्ववत् स्वकीयवत् क्रियते प्रदर्श्यत इति व्युत्पत्त्या स्वकीयतया प्रदर्शनीयत्वमेवेत्यर्थः । ननूभयोरपि भगवदीयतया प्रदर्श्यमानत्वात् कृष्णरूपस्यैव कुतो विशेषोक्तिरित्यत आह **विश्वरूपमिति** ॥ सत्यमुभयं रूपं भगवदीयतया प्रदर्श्यत इति, किन्तु ज्ञानिनामेव । अज्ञानिनां तु कृष्णरूपमेव भगवदीयतया प्रदर्श्यते । न तु विश्वरूपमतोऽज्ञविवक्षया विशेषोक्तिर्युक्तेति भावः । अत एवाल्पज्ञानिविवक्षया स्ववदित्युक्तम् । किमर्थमेवं व्याख्येयम् ? विश्वरूपं भगवदीयमेव किं न स्यादित्यत आह **अन्यथेति** ॥

*भा०दी०*— **यदुक्तमिति** । एतदध्यायादाविति योज्यम् ।

**गीतातात्पर्यनिर्णयः**

"परावरविभेदस्तु मुग्धदृष्टिमपेक्ष्य तु ।
प्रादुर्भावस्वरूपाणां विश्वरूपस्य च प्रभोः ॥
अन्यथा न विशेषोऽस्ति व्यक्तिर्ह्यज्ञव्यपेक्षया ॥" इति च ॥ ५० ॥

*न्या०दी०*— कृष्णरूपविश्वरूपयोः स्वकीयत्वास्वकीयत्वप्रतीतिनिराकरणप्रसङ्गेन परमं रूपं दर्शयामासेति विश्वरूपस्य परत्वोक्त्या कृष्णरूपस्यापरत्वं स्मृत्यैव निराकरोति **परेति** ॥ **अन्यथा** स्वभावतः । तर्हि विश्वरूप एव परत्वं विदुषामपि कथं दृश्यत इत्यत आह **व्यक्तिरिति** । विश्वरूपे परत्वव्यक्तिर्नावताररूपेषु ॥ अतस्तथा दृष्टिर्युक्तेति भावः । इयं च व्यक्तिरल्पज्ञानिविवक्षयोच्यते । न तु ब्रह्मादिमहाज्ञानिविवक्षया । तेषां कृष्णादावपि परत्वस्य प्रतीतेरित्याह **अज्ञेति** ॥ ५० ॥

*भा०दी०*— **अन्यथा** इति अनुवादः । स्वभावत इति व्याख्या ॥ **परत्वमिति** । उत्तमत्वमित्यर्थः ॥ ५० ॥

**गीता**

**अर्जुन उवाच—**

**दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥**

*वि०वि०*— किञ्चित् मनुष्यवद्दृश्यमानत्वान्मानुषं रूपम् । दृष्ट्वा सचेताः प्रसन्नचित्तः । संवृत्तो जातोऽस्मि । प्रकृतिं पूर्वस्वभावं स्वस्थतां गतोऽस्मि ॥ ५१ ॥

*वा०ल०*— 'इदानीमस्मि' इत्यत्र, संवृत्तः सम्यक् चित्तवृत्तिमान् ॥ ५१ ॥

॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे एकादशोऽध्यायः ॥

*सा०सं०*— विश्वरूपतिरोधानेन कृष्णरूपदर्शनिनाश्वासितोऽस्मीत्याहार्जुनो **दृष्ट्वेति** । किञ्च मनुष्यवद्दृश्यमानत्वात् **मानुषम्** । **इदम्** । सौम्य क्रूरम् इदं **तव रूपं दृष्ट्वा इदानीं सचेताः** प्रसन्नचित्तः **संवृत्तो** जातः, **अस्मि** । **प्रकृतिं** पूर्वस्वभावं स्वस्थतां **गतोऽस्मीत्युवाचेत्यन्वयः** ॥ ॥ ५१ ॥

*अ०प्र०*— हे जनार्दन ![१], इदं = पुरोवर्ति[२], तव[३], सौम्यं[४], मानुषं अज्ञानां मनुष्यदृश्यमानं[५], रूपं[६], दृष्ट्वा अहं[७], सचेताः = प्रसन्नचित्तः[८], इदानीं[९], संवृत्तोऽस्मि = जातोस्मि[१०] प्रकृतिं च = स्वच्छतां स्वास्थ्यं च[११] गतः = प्राप्तोऽस्मि[१२] ॥ ५१ ॥

स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं दर्शयन् **श्रीभगवानाह सुदुर्दर्शमिति** ।

**गीतातात्पर्यनिर्णयः**

**किञ्चिन्मनुष्यवद् दृश्यमानत्वात् मानुषम् ॥ ५१ ॥**

*प्रका०*— "दृष्ट्वेदं मानुषं रूपम्" इत्यत्र मानुषशब्दार्थमाह **किञ्चिदिति** ॥

*न्या०दी०*— **ननु "दृष्ट्वेदं मानुषं रूपं" इति कृष्णरूपस्य मानुषत्वोक्तेः कथं नावरत्वमित्यत आह किञ्चिदिति ॥ अन्यथोदाहृतवाक्यविरोधः स्यादित्यर्थः ॥ ५१ ॥**

*भा०दी०*— **उदाहृतवाक्येति** । परापरविभेदस्त्वित्यादिवाक्येत्यर्थः ॥ ५१ ॥

**गीता**

**श्रीभगवानुवाच—**

**सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥**

***वि०वि०—*** यन्मे रूपं दृष्टवानसि, अस्य रूपस्य नित्यं दर्शनकाङ्क्षिणो देवा अपि इदानीं दृष्टवन्तः, तदिदं सुदुर्दर्शम् इति योजना ॥ ५२ ॥

***सा०सं०—*** भयङ्करं रूपं किमर्थं दर्शितवानसीत्यतः विश्वरूपदृष्टेर्महिमानमाह भगवान् **सुदुर्दर्शमिति । यन्मम रूपं दृष्टवानसि । अस्य रूपस्य । नित्यं दर्शनकाङ्क्षिणो** ये **देवाः** । तेऽपि यद्दृष्टवन्तस्तदिदं **सुदुर्दर्शम्** । केषाञ्चित् सुखेन दर्शनीयम् । केषाञ्चित् सुखेन दुःखेन च दर्शनीयमित्यर्थः । देवानामप्यपेक्षितत्वात् तव शत्रुवधे निमित्तमात्रत्वज्ञापनाय चैतद्रूपं दर्शितमिति भावः ॥ ॥ ५२ ॥

***अ०प्र०—*** मम[१], यत् रूपं[३], विश्वरूपं[३], दृष्टवानसि[४], तत् = इदं त्वद्दृष्टं[५], सुदुर्दर्शं = अत्यन्तं द्रष्टुमशक्यं[६], अतीव दुर्लभमित्यर्थः[६], यतः देवा अपि[७], अस्य = विश्वरूपस्य[८], नित्यं = सर्वदा[१०] दर्शनकाङ्क्षिणः = इच्छन्ति[११] इदानीं दृष्टवन्तः केवलं पुनरिदं पश्यन्तीत्यर्थः ॥ ५२ ॥

**गीतातात्पर्यनिर्णयः**

**ये दर्शनकाङ्क्षिणस्तैरपीदानीं दृष्टं प्रायः ॥ ५२ ॥**

***॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये एकादशोऽध्यायः ॥***

***प्रका०—*** "सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम । देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः" इत्यस्यार्थमाह **ये दर्शनकाङ्क्षिण इति** ॥

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां एकादशोऽध्यायः ॥*

***न्या०दी०—*** **ननु "सुदुर्दर्शमिदं रूपं" इत्यत्र देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिण एव वर्तन्ते, न तु पश्यन्तीत्युक्तत्वात् कथमर्जुनादुत्तमैरधमैश्च विश्वरूपस्य दृष्टत्वमुच्यत इत्यतस्तद्वाक्यं यथावद्योजयति य इति ॥ अनेन यन्मम रूपं दृष्टवानसि, अस्य रूपस्य नित्यं दर्शनकाङ्क्षिणो ये देवास्तेऽपि यद्दृष्टवन्तस्तदिदं सुदुर्दर्शमिति योजना सूचिता भवति । अन्यथोक्तविरोध इति भावः ॥ ५२ ॥**

***इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां एकादशोऽध्यायः समाप्तः ॥***

*भा०दी०*— **अन्यथोक्तेति** । दृष्ट्वाऽद्भुतं रूपं, विश्वरूपं प्रथमतो ब्रह्मापश्यदित्याद्युक्तिविरोध इत्यर्थः ॥ ५२ ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते एकादशोऽध्यायः ॥*

**गीता**

## नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
## शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥

*वि०वि०*— 'न वेदयज्ञा'दिना उक्तमर्थं स्पष्टयति **नाहमिति** ॥ ५३ ॥

*सा०सं०*— किञ्चातिदुर्लभदर्शनं ते मया कारितमिति भावेनाह **नाहमिति** । **यथा दृष्टवानसि** । **एवंविधो** विश्वरूपवानित्यर्थः ॥ ५३ ॥

*अ०प्र०*— तत्र हेतुमाह **नेति** ।

यथा त्वं[१], मां[२], दृष्टवानसि[३], तथाऽन्यैः वेदैः[४], तपसा[५], दानेन च[६], इज्यया च[७], एवंविधः[८], अहं[९], द्रष्टुं[१०] न शक्यः[११] स्पष्टार्थः । वेदादीनां मुख्योपायत्वाभावात् ॥ ५३ ॥

**गीता**

## भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
## ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५४ ॥

*वि०वि०*— वेदादीनां मुख्योपायत्वाभावात् । कस्तर्हि वेदादिसाध्यो मुख्योपाय इत्यत आह **भक्त्येति** । तत्त्वेन ज्ञातुं द्रष्टुं साक्षात्कर्तुं प्रवेष्टुं सायुज्यं प्राप्तुम् । अनन्यया असहायया भक्त्यैव शक्यः ॥ ५४ ॥

*सा०सं०*— केनोपायेन द्रष्टुं शक्य इत्यत आह **भक्त्येति** । वेदादितो विशेषद्योतकस्तुशब्दः । **अनन्यया**ऽन्यासाधारणया असहाययेति वा । **तत्त्वेन ज्ञातुं द्रष्टुं प्रवेष्टुं** सायुज्यं प्राप्तुं च शक्याऽहमिति ॥ ५४ ॥

***अ०प्र०***— कस्तर्हि वेदादिसाध्यो मुख्योपाय इत्यत आह **भक्त्येति** । हे अर्जुन ![१], अनन्यया[२], भक्त्या तु[३], एवंविधः[४], अहं[५], तत्त्वेन[६], ज्ञातुं[७], शक्यः[८], शास्त्रतः द्रष्टुं च प्रत्यक्षः[९], प्रवेष्टुं च सायुज्यादिकं प्राप्तुं शक्यः[१०] हे परन्तप ! नान्यैरुपायैः ज्ञातुं द्रष्टुं प्रवेष्टुं च न शक्य इत्यर्थः ॥

हे अर्जुन ![१], अनन्यया = अन्या न भवतीत्यनन्या तथा तया मदेकनिष्ठया[२], भक्त्या = यया सर्वेन्द्रियभावैः सह प्रेममनः श्रीहरिदासो भूत्वाऽऽत्मन्येव सञ्चरति सा भक्तिः । तया भक्त्या तु[३], अहं = एवंविधः एवंभूतः परिच्छिन्नविश्वरूपोऽहम् । यद्वा, अहं = दासोऽहं एवं विधोऽहं[५], तत्त्वेन याथार्थ्येन = परमार्थतो वा[६], ज्ञातुं[७], शक्यः[८], द्रष्टुं च = शास्त्रतः द्रष्टुं प्रत्यक्षः[९], यद्वा, प्रत्यक्षतश्च द्रष्टुं[९], प्रवेष्टुं च = सायुज्यादिकं प्राप्तुं शक्यः[१०] हे परन्तप !, नान्यैरुपायैः ज्ञातुं द्रष्टुं च प्रवेष्टुं च न शक्य इत्यर्थः = परत्वादिव्यक्तिर्विश्वरूपोर्जुनाद्यल्पज्ञानव्यपेक्षया ब्रह्मादेः कृष्णरूपेऽपि परत्वाभिव्यक्तेरित्यर्थः ॥ ५४ ॥

**गीता**

## मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
## निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥

***इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नाम एकादशोऽध्यायः ॥***

***वि०वि०***— एतदेव भक्तिस्वरूपं दर्शयन्नाह **मत्कर्मकृदिति** ॥ ५५ ॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य-विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां एकादशोऽध्यायः ॥ ११ ॥*

***सा०सं०***— अनन्ययेत्युक्त्या जातान्यत्यागभ्रान्तिं निराह **मत्कर्मकृदिति** । अहमेव परमो यस्य स तथा । मदुत्तमताज्ञानवानित्यर्थः । सङ्गवर्जितः फलस्नेहहीनः । यः सः । मामेतीति ॥५५॥

*॥ इति श्रीमत्सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते एकादशोऽध्यायः ॥*

***अ०प्र०***— भक्तिस्वरूपं दर्शयन् एतदेवाह । अतः सर्वशास्त्रसारं परमं रहस्यं **शृण्वित्याह** **मत्कर्मकृदिति** ।

हे पाण्डव !<sup></sup>[१], मत्कर्मकृत् = मदर्थं कर्म करोतीति मत्कर्मकृत् मदुद्देशेन मत्प्रेरणया मत्प्रीत्यर्थं स्वविहितकर्मकारी[२], मत्परमः = अहमेव पर इति ज्ञानवान् । यद्वा, अहमेव परः पुरुषार्थो यस्य सः मत्परमः[३], मद्भक्तः = ममैव भक्तिं आश्रितः[४], सङ्गवर्जितः = इहामुत्रफलादौ ईषणत्रयतृष्णायां च स्नेहशून्यः सङ्गवर्जितो वा । यद्वा, सङ्गोऽहङ्कारनिरहङ्कार इत्यर्थः[५], सर्वभूतेषु निर्वैरः = सर्वभूतेषु सत्सु वैररहितः[६], एवंभूतो यः[७], सः मद्भक्तः[८], मां एति = मां प्रति प्राप्नोति नान्य इति भावः ।

देवैरपि सुदुर्दर्शं तपोयज्ञादिकोटिभिः ।
भक्ताय भगवानेव विश्वरूपमदर्शयत् ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां एकादशोऽध्यायः ॥*

***भा०र०— गीताक्षरार्थस्तु—***

विश्वरूपगोपनेन कृष्णरूपं दर्शयता भवता आश्वासितोऽस्मि इत्युच्यते **अर्जुन उवाच– दृष्ट्वेदमिति** । किञ्चिन्मनुष्यवद् दृश्यमानत्वात् **मानुषं सौम्यं** अक्रूरम् । 'न जायते, अर्दयति संसारमिति च जनार्दनः' इति पूर्वमेव भाष्यकृता जनार्दनशब्दो व्याख्यातः । **सचेताः** प्रसन्नचित्तः **संवृत्तः** जातः **अस्मि** । **प्रकृतिं** स्वस्थतां **गतः** । 'गत्यर्थाकर्मक' इति कर्तरि क्तः । गतवानस्मि ॥ ५१ ॥

भयङ्कररूपं किमिति भवता प्रदर्शितम् ? इत्यतो विश्वरूपदृष्टेर्महिमोच्यते **भगवानुवाच– सुदुर्दर्शमिति** । **यत् मम रूपं** त्वं **दृष्टवानसि अस्य रूपस्य नित्यं** दर्शनकाङ्क्षिणो ये **देवास्तेऽपि यद्** अदृष्टवन्तः तत् **इदं सुदुर्दर्शं** 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति दृशेः खल्प्रत्यये सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शम् । केषाञ्चित्सुखेन केषाञ्चिद्दुःखेन दर्शनीयमित्यर्थः । देवैरपि यद्दर्शनं चिराभिलषितं तदिदं विश्वरूपं तव शत्रुवधे निमित्तत्वज्ञापनाय त्वां प्रति दर्शितमिति भावः । एवं योजने च 'देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिण एव वर्तन्ते, न तु पश्यन्ति, इत्युक्तत्वात् कथमर्जुनादुत्तमैरधमैश्च विश्वरूपस्य दृष्टत्वमुच्यते' इति शङ्का निरस्ता भवति ॥ ५२ ॥

'सुदुर्दर्शत्वं न वेदयज्ञाध्ययनैः' इत्युक्तम् । तद्विविच्यते **नाहमिति** । **मां यथा दृष्टवानसि** तथाविधविश्वरूपवान् **अहं वेदैः** तपआदिभिश्च न द्रष्टुं शक्यः ॥ ५३ ॥

तर्हि केनोपायेन द्रष्टुं शक्यः ? इत्यत उच्यते **भक्त्या त्विति** । इतरोपायवैशेष्यद्योतनाय तुशब्दः । "यादृशी तत्र भक्तिः स्यात् तादृश्यन्यत्र नैव चेत्, अनन्यभक्तिः" इति वचनात् । **अनन्यया** अनितरसाधारण्या **तत्त्वेन** याथात्म्येन **ज्ञातुं द्रष्टुम्** अपरोक्षीकर्तुं **प्रवेष्टुं** च ॥ ५४ ॥

भक्तिस्वरूपमेव प्रदर्श्यते **मत्कर्मकृदिति**। मत्तोषणार्थं कर्म कुर्वन्, अहमेव परमः = सर्वोत्तमो यस्य स तथा। **सङ्गवर्जितः** ऐहिकामुष्मिकफलस्नेहहीनः। सत्सु **सर्वभूतेषु निर्वैरः** निर्गतं वैरं शत्रुभावः **यः स भक्तः** स एव **मामेति** जानाति, अपरोक्षयति, प्रविशति चेति ॥ ५५ ॥

यो वासुदेवोऽर्जुनाय विश्वरूपमदर्शयत् ।
अनुग्रहेण सोऽयं मां कटाक्षेणाभिवीक्ष्यताम् ॥

श्रीमद्गीताभाष्यटीकैकादशाध्यायसेवया ।
तोषमायान्तु विबुधा गुणग्रहणभूषणाः ॥

श्रीमदानन्दतीर्थार्यहृदयाम्भोजवासिने ।
कृष्णाय कृष्णारमणप्रियायास्तु नमो नमः ॥

नमस्ते नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमस्ते नृसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमो व्यासनाम ॥

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ॥

विश्वरूपाध्यायभाष्यटीकायाः सेवयाऽनया ।
यदर्जितं महापुण्यं तदवाप्नोतु मे गुरुः ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित-श्रीमद्भगवद्गीताभाष्यटीकायां भावरत्नकोशसमाख्यायां सूरीन्द्रश्रीपादशिष्य-सुमतीन्द्रतीर्थविरचितायां एकादशोऽध्यायः समाप्तः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीवेदव्यासाय नमः ॥

॥ श्रीमदानन्दतीर्थगुरुभ्यो नमः ॥

# अथ द्वादशोऽध्यायः

**गीता**

## अर्जुन उवाच—

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥**

*वि०वि०*— अस्मिन्नध्याये भगवदव्यक्तोपासनयोर्मध्ये भगवदुपासनाधिक्यं निर्णीयते । 'अन्तवत्तु फलं तेषाम्' इति ब्रह्माद्युपासकानामन्तवत्फलवत्वस्योक्तत्वात् तेभ्यो भगवदुपासकानामुत्तमत्वं निर्णीतम् । लक्ष्म्यास्तु 'चतुष्कपर्दा युवतिः सुपेशा', 'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः', 'त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया' इत्यादिश्रुतिषु महामहिमत्वेन प्रसिद्धाया उपासनं 'श्रियं वसाना अमृतत्वमायन्' इत्यादौ मोक्षसाधनत्वं श्रूयते । अतो मार्गद्वयेनैकमेव फलं प्राप्नुवतां मध्ये के श्रेष्ठा इति विशेषादर्शनात् कस्यचित् संशयः स्यात् । तदनुग्रहार्थं सूक्ष्मयुक्तिज्ञानार्थं च भगवदुपासकानामुत्तमत्वं जानन्नप्यर्जुन उवाच **एवमिति** । एवं दृष्टश्रुतरूपम् । त्वाम् । ये भक्ताः । सततमुद्युक्ताः । एवं 'मत्कर्मकृत्' इत्याद्युक्तप्रकारेणोपासते । ये चाप्यक्षरमव्यक्तं चित्प्रकृतिमुपासते । तेषां मध्ये के योगवित्तमाः अतिशयेनोपायविदः । यद्यप्यव्यक्तादिशब्दाः भगवद्वाचकाः 'अव्यक्तोक्षर' इत्युक्तत्वात् । तथापि भगवत्प्रतियोगित्त्वेनोक्तत्वात् परब्रह्मणश्च भगवतोऽन्यस्याभावादत्र चित्प्रकृतिवाचिन एव । तथा 'कूटस्थोऽक्षर उच्यते' इत्यत्रापि अक्षरादन्यस्योत्तमत्वाभिधानात् अव्यक्ताक्षरादिशब्दाः पुराणादिषु चित्प्रकृतावपि प्रसिद्धाः ॥ १ ॥

*वा०ल०*— 'ये चाप्यक्षरमव्यक्तम्' इत्यत्र, अक्षरम् अक्षरनामकम्, अव्यक्तम् अव्यक्तसंज्ञं श्रीतत्त्वम् ॥ १ ॥

*सा०सं०*— देवदेव्युपासनयोर्मध्ये देवोपासनस्याधिक्यात् तदुपासनमाह अस्मिन्नध्याये । भगवदुपास्त्याधिक्यपरत्वादस्य भगवन्माहात्म्यपरषट्कान्तर्भावश्च । 'तमेवं विद्वान्' (तै.आ.

३-१२-७) इत्यादौ भगवदुपास्तेरिव 'श्रियं वसाना अमृतत्वमायन्' इत्यादि श्रुतौ श्रियं प्रत्युपासीना अमृतत्वं प्राप्ताः' इति श्रीदेव्युपास्तेरपि मुक्तिहेतुत्वावगमेन जायमानपरकीयसन्देहमाहृत्य विशेषयुक्तिबुभुत्सया पृच्छति **एवमिति** । न च देव्युपास्तेर्मुक्तिहेतुत्वमुपचरितम् । 'अन्तवत् तु फलं तेषाम्' इति साप्तमिकन्यायात् । अतो नास्य सन्देहहेतुत्वमिति शङ्क्यम् । ब्रह्मादिदेवानां जनिमृतिमत्त्वेन तदुपास्तेरन्तवत्फलकत्वेऽपि श्रियस्तु 'चतुष्कपर्दा' इत्यादौ नित्ययौवनज्ञानमयत्वदेवपूज्यत्वादिमहामहिम्नः श्रवणेन तदुपास्तेर्मुक्तिहेतुत्वसम्भवेन सन्देहहेतुत्वं मन्वानस्यायं प्रश्नः । ये भक्ताः **सततयुक्ताः** सततं ध्यानकर्मयोगवन्तः । **एवं** दृष्टश्रुतरूपं **त्वां,** एवं 'मत्कर्मकृत्' इत्याद्युक्तप्रकारेण **पर्युपासते** । **येऽपि चाक्षरनामकमव्यक्तं** चित्प्रकृतिं परिश्रद्धया भक्त्यादिपूर्वकमुपासते । तेषां मध्ये । **के योगवित्तमाः** मोक्षोपायज्ञेषु श्रेष्ठाः इत्युवाचार्जुनः इत्यन्वयः । एवमित्यस्य त्वामित्यत्रोपासत इत्यत्र चान्वयः । 'एवम्' इत्यस्य पूर्वपरामर्शित्वात् पूर्वानन्तर्यमप्यस्याध्यायस्य ध्येयम् । अत्राव्यक्तमित्येव वाच्ये अक्षरमिति तद्विशेषेणोक्तिः क्षरणवद्भ्यो ब्रह्मादिदेवान्तरेभ्यो वैलक्षण्यप्रदर्शनेन प्रश्नसम्भावनार्था ॥ १ ॥

***अ०प्र०— अ०प्र०—*** एवं अव्यक्तोपासनामार्गेण त्वदुपासनामार्गेण त्वदुपासनेन च मोक्षं प्राप्नुवतामुभयेषां भक्तानां मध्ये के श्रेष्ठा इति विशेषादर्शनात् कस्यचित्संशयः स्यात् तदनुग्रहार्थं सूक्ष्मयुक्तिज्ञानार्थं भगवदुपासकानां उत्तमत्वं जानन्नपि अर्जुनः पृच्छति । यद्वा, पूर्वाध्यायान्ते मत्कर्मकृन्मत्परमो इत्यनेन भक्तिनिष्ठस्य श्रेष्ठत्वमुक्तम् । 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति' इत्यादिना च तत्र तत्र तस्यैव श्रेष्ठत्वं वर्णितम् । तथा 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इत्यादिना च ज्ञाननिष्ठस्य श्रेष्ठत्वमुक्तम् । एवमुभयोः श्रेष्ठेऽपि विशेषजिज्ञासया भगवन्तमर्जुन उवाच **एवमिति** ।

अथान्वयः— हे योगेश्वर !, ये भक्ताः[१], एवं[२], सततयुक्तास्सन्तो[३], त्वां[४], पर्युपासते[५], ये चापि भक्ताः[६], अव्यक्तं[७], अक्षरं उपासते[८], तेषां मध्ये[९], के योगवित्तमाः[११] इत्यन्वयः ।

हे योगेश्वर !, ये भक्ताः[१], एवं = सर्वकर्मार्पणादिना श्रुतदृष्टस्वरूपं वा[२], सततयुक्तास्सन्तो = निरन्तरं संयुक्तचित्ताः त्वन्निष्ठास्सन्तो[३], त्वां = मत्कर्म-कृदित्याद्युक्तप्रकारेण विश्वरूपं सर्वज्ञं सर्वशक्तिं एतादृशं त्वां[४], पर्युपासते = ध्यायन्ति[५], ये चापि भक्ताः[६], अव्यक्तं अक्षरं = अव्यक्तं एतच्छब्दवाच्यं लक्ष्मीतत्त्वम्, यद्वा, मतान्तरे निर्विशेषं ब्रह्म[७], उपासते = ध्यायन्ति[८], तेषां = ज्ञानिनां चोभयेषां मध्ये[९], योगवित्तमाः = योगविदां श्रेष्ठाः अतिशयेन योगविदः[१०] के = श्रेष्ठा इति वक्तव्य इत्यर्थः[११], यद्वा, अव्यक्तादिशब्दाः भगवद्वाचकाः 'अव्यक्तोऽक्षर' इत्युक्तेः । 'अव्यक्तं

व्यक्तिमापन्नं', 'त्वमक्षरं परम्' इत्युक्तेः । तथाप्यत्र भगवत्प्रतियोगित्वेनोक्तत्वात् । लक्ष्मीवाचिन एव तथा 'कूटस्थोऽक्षर उच्यते' 'अक्षरात्परतः पर' इत्यादौ चित्प्रकृतिरेव अक्षरशब्दवाच्या । अक्षरादुत्तमस्य भगवतोऽभिधानात् । तथा महतः परमव्यक्तं उपास्यतां श्रियमव्यक्तसंज्ञां 'मर्त्यो भक्त्या मुच्यते कर्मबन्धैरि'त्यादौ तत्रैवाव्यक्तशब्दप्रयोगाच्चाविनाशित्वादियोगाच्च । न चात्र सगुण-निर्गुणत्वोपासकानां मध्ये के श्रेष्ठा इत्याशयेन प्रश्नादेः प्रवृत्तत्वादव्यक्तादिशब्दवाचां परं ब्रह्मेति वाच्यम् । भगवदन्यपरब्रह्मसत्वे मानाभावात् । 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्, नारायणं परं ब्रह्म परमं धाम परमं यो महत् ब्रह्म, वासुदेवात्मकं ब्रह्मे'त्यादि श्रुतिस्मृतिषु साकारस्य सगुणस्य भगवत एव परब्रह्मत्वोक्तेश्च तत्पक्षे एकस्यैव साधकस्य एकस्यैव मध्ये यस्य साकारत्व-ध्यानानन्तरं निराकारस्य ध्यानस्योक्तत्वात् अत्रोक्तौ ध्यातध्येयभेदौ अनुपपन्नौ स्याताम् । उत्तर-वाक्ये च साकारभगवद्ध्यातुरेवोत्तमत्वकथनानुपपत्तिश्चेति ॥ १ ॥

**गीतातात्पर्यनिर्णयः**

**साधननिर्णयोऽत्र ।**

*प्रका०*— "एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते । ये चाप्यक्षरमव्यक्तं तेषां के योग-वित्तमा" इति सन्दिह्य विष्णूपासनमेव मोक्षसाधनम्" इति निर्णीयते अस्मिन्नध्याये इत्याह **साधनेति** ।

***न्या०दी०*— एतदध्यायप्रतिपाद्यमर्थं दर्शयति साधनेति ॥ मोक्षसाधनयोरव्यक्त-भगवदुपासनयोर्मध्ये प्रागुक्तभगवदुपासनस्याधिक्यनिर्णयोऽस्मिन् अध्याये क्रियत इत्यर्थः ।**

*भा०दी०*— **प्रागुक्तेति** । मत्कर्मकृदित्यादिनोक्तेत्यर्थः । अनेन पूर्वानन्तर्यमपि अस्याध्या-यस्य सूचितं भवति ।

**गीतातात्पर्यनिर्णयः**

**"श्रिये जातः श्रिय आ निरियाय**
**श्रियं वयो जरितृभ्यो दधाति ।**
**श्रियं वसाना अमृतत्वमायन्**
**भवन्ति सत्या समिथा मितद्रौ ॥"**

*प्रका०*— तत्र तावत्सन्देहसिद्ध्यर्थं विष्णूपासनावदव्यक्तदेवतोपासनस्यापि मोक्षसाधनत्वं श्रुत्यादिभिः श्रावयति **श्रिये जात इति** । श्रिये श्रीसमाराधनार्थं यो जातो असौ श्रिये श्रीप्राप्त्यर्थम् आनिरियाय गेहान्निर्गतवान् भवति । श्रियं सम्पदं वेयः आयुः जरितृभ्यः स्तोतृभ्यः श्रीदेवी दधाति ददाति । श्रियं देवीं वसानाः उपासीनाः अमृतत्वं मोक्षम् आयन् प्राप्ता भवन्ति सत्या सत्यानि समिथा समीहितानि मितद्रौ मिथुने दम्पत्योः श्रियमुपासीनयोरित्यर्थः ।

**_न्या०दी०_— ननु भगवदुपासनस्येवाव्यक्तोपासनस्यापि यदि मोक्षसाधनत्वं क्वचि-दुक्तं स्यात् तदा "एवं सततयुक्ताः" इति सन्दिह्य प्रश्नो युज्यते । न च तदस्तीत्यतः कथं प्रश्न इत्यत आह श्रिय इति ॥ यः पुरुषः श्रीसमाराधनार्थं जातोऽसौ तदर्थमेव गृहान्निर्गतो भवति स श्रियं उपदेष्टृभ्यो गुरुभ्य एव स्वस्य वयो धत्ते । एवं श्रियमुपासीनाः पुरुष अमृतत्वं यान्ति । तस्मिन् गुरुशिष्याख्ये मिथुने समीहितानि सत्यानि भवन्तीत्यर्थः ।**

*भा०दी०*— सन्दिह्येत्यनन्तरं कृत इति योज्यम् । तेन ल्यबन्तोपपत्तिः । द्वितीयश्रिये इत्य-स्यार्थः **तदर्थमेवेति** । श्रीदेवीसमाराधनार्थमेवेत्यर्थः । श्रियं जरितृभ्य इत्यस्यार्थः **श्रियं उपदेष्टृभ्य इति** । श्रियं प्रति वसानाः वसन्त इति वा तामाच्छाद्य स्थिता इति वाऽर्थ इत्युपेत्य फलितमाह **उपासीना इति** । यान्तीति लकारव्यत्ययेनार्थोक्तिः । पद्मनाभतीर्थीये तु श्रियं सम्पदं वय आयुश्च जरितृभ्यः श्रीदेवी दधाति ददाति । मितद्रौ मिथुने दम्पत्योः श्रियमुपासीनयोः समिधा समीहितानि सत्यानि भवन्तीत्यर्थ उक्तः । भाष्यटीकायां तु मितद्राविद्यस्य समुद्रे क्षीराब्धावित्युक्तम् ॥

**गीतातात्पर्यनिर्णयः**

**"उपासिता मुक्तिदा सद्य एव**
**ह्यस्येशाना जगतो विष्णुपत्नी ।**
**या श्रीर्लक्ष्मीरौपला चाम्बिकेति**
**ह्रीश्चेत्युक्ता संविदग्र्या सुविद्या ॥" —इत्यादिश्रुतिभ्यः,**

*प्रका०*— 'उपासना मुक्तिदा' इत्यादिश्रुत्यन्तरेभ्यः ।

**गीतातात्पर्यनिर्णयः**

**"श्रीः सुतुष्टा हरेस्तोषं जनयेत् क्षिप्रमेव तु ।**
**अतुष्टा तदतुष्टिं च तस्माद् ध्येयैव सा सदा ॥**

अव्यक्तं प्रकृतिं प्राहुः कूटस्थं चाक्षरं च ताम् ।
प्रधानमिति च प्राहुर्महापुरुष इत्यपि ॥
तां ब्रह्म महदित्याहुः परं जीवं परां चितिम् ।
तस्यास्तु परमो विष्णुर्यो ब्रह्म परमं महत् ॥"

इति ब्रह्माण्डवचनाच्चाव्यक्तोपासनान्मोक्षशङ्कया पृच्छति ।

*प्रका०*— 'श्रीः सुतुष्टे'त्यादिपुराणवचनाच्चाव्यक्तादिशब्दाभिधेयश्रीदेव्युपासनस्यापि मोक्षसाधनत्वप्रतीतेः 'तेषां के योगवित्तमा' इत्यर्जुनप्रश्न इत्यर्थः ।

*न्या०दी०*— किं श्रिय उपासनं स्वातन्त्र्येणैव मोक्षसाधनमित्यतः श्रीप्रसादमुत्पाद्य ततो भगवत्प्रसादद्वारेणैवेति भावेन स्मृतिमाह **श्रीरिति** ॥ श्रीप्रसादस्य भगवत्प्रसादोत्पादकत्वं कुत इत्यतः श्रियोऽतिमहिमानमाह **अव्यक्तमिति** ॥ एवम्भूता चेत् श्रीस्तर्हि तत्प्रसादः स्वयमेव पुरुषार्थहेतुः किं न स्यात् ? ईश्वरप्रसादसाधनत्वं तस्य किमर्थमुच्यत इत्यत आह **तस्या इति** ॥ श्रियोऽपि विष्णोः परमत्वान्न तत्प्रसादस्य स्वातन्त्र्येण पुरुषार्थसाधनत्वं, किन्तु विष्णुप्रसादत्वेनैवेत्यर्थः । विष्णोः महद्ब्रह्मभूतश्रिय उत्तमत्वे हेतुमाह **य इति** ॥ एवं श्रुतिपुराणवाक्येभ्यो विष्णूपासनस्येवाव्यक्तोपासनस्यापि मोक्षसाधनत्वप्रतीतिजातया भगवदुपासनं वाऽव्यक्तोपासनं वा उत्तमं मोक्षसाधनमिति शङ्कया उत्तमसाधनं पृच्छतीत्यर्थः ।

### गीतातात्पर्यनिर्णयः

"कूटस्थोऽक्षर उच्यते" इत्युत्तरवचनात् "कूटस्थमचलम्" इत्यत्राप्युक्तेरव्यक्तशब्दश्चित्प्रकृतिवाची ।

*प्रका०*— 'कूटस्थमचलं ध्रुवम्' इत्युक्तस्याक्षरस्याव्यक्तस्य उपरि 'कूटस्थलेऽक्षर उच्यत' इत्यत्र लक्ष्मीप्रतिपादके प्रत्यभिज्ञायमानत्वात् अत्राव्यक्तशब्देन चेतनप्रकृतिरुच्यते न तु जडप्रकृतिरित्याह **कूटस्थ** इति ।

*न्या०दी०*— यदि भगवदुपासनस्येव श्रिय उपासनस्यापि मोक्षसाधनत्वं प्रतीयेत तर्हि तद्विषय एव प्रश्नः कर्तव्यः । अव्यक्तोपासनविषये किमर्थं क्रियत इत्यत आह **कूटस्थ**

**इति** । "कूटस्थोऽक्षर उच्यते" इत्युपरितनवाक्ये चित्प्रकृतावेव प्रयुक्तकूटस्थाक्षरशब्दयो-रत्राप्यव्यक्ते प्रयुक्तत्वेनाव्यक्तं चित्प्रकृतिरेव । अतः चित्प्रकृत्युपासनस्य मोक्षसाधनत्व-प्रतीत्या अव्यक्तोपासनविषये प्रश्नो युक्त एवेति भावः । एतेन "इत्यादिश्रुतिभ्यः", "अव्यक्तोपासनात्" इत्यस्याप्यनवद्यत्वं सिद्ध्यति ।

*भा०दी०*— **किमर्थं क्रियत इति** । प्रश्न इत्यनुषङ्गः ॥ **एतेनेति** । अव्यक्तस्य चित्प्रकृतित्वसमर्थनेनेत्यर्थः । अन्वयमुखेनानुवदति **इत्यादि श्रुतिभ्योऽव्यक्तोपासनादिति** ।

**गीतातात्पर्यनिर्णयः**

**अन्यथा "ये त्वां पर्युपासते", "ये चाप्यक्षरम्", "तेषां के योगवित्तमाः" इति भेदेन प्रश्नानुपपत्तिः ।**

*प्रका०*— अव्यक्तशब्दस्य विष्णावपि प्रयोगात् सोऽत्र अव्यक्तशब्देनोच्यतामित्याशङ्क्य परिहरति **अन्यथेति** ।

*न्या०दी०*— नन्वव्यक्तादिशब्दानां परब्रह्मणि मुख्यत्वादत्र तत्किं विवक्षितं न स्यादित्यत आह **अन्यथेति** ॥

**गीतातात्पर्यनिर्णयः**

**"परं ब्रह्म परं धाम पवित्रं परमं भवान्" इति तेनैवोक्तत्वात् ।**

*प्रका०*— "परं ब्रह्म परं धाम पवित्रं परमं भवान्" इत्यनेनार्जुनवाक्येन विष्णुरेव ब्रह्मेत्युक्तत्वात् विष्णूपासकानामव्यक्तशब्दवाच्यब्रह्मोपासकानां मध्ये योगवित्तमा इत्यर्जुनः पृच्छतीत्येतदपि न घटते इत्यर्थः ।

*न्या०दी०*— यद्यत्राव्यक्तशब्देन परब्रह्मोच्येत तर्हि त्वदुपासकाव्यक्तोपासकानां मध्ये क उत्तम इति भगवतोऽव्यक्तस्य च भेदेन अर्जुनप्रश्नोऽनुपपन्नः स्यादित्यर्थः । कुतोऽनुपपन्न इत्यतोऽर्जुनेनैव भगवतः परब्रह्मत्वस्योक्तत्वादित्याह **परमिति** ॥

*भा०दी०*— ननु पूर्वोत्तरार्धयोः कृष्णोपासक(पर)ब्रह्मोपासकविषयतया भेदेन अर्जुनप्रश्नोऽयुक्त इति भावेनाक्षिपति **कुतोऽनुपपन्न** इति ॥

**गीतातात्पर्यनिर्णयः**

**ये तु "ते मे युक्ततमा मताः", "मय्येव मन आधत्स्व" इत्यादौ भगवतोक्तेऽप्यव्यक्तोपासकानामाधिक्यं वदन्ति ते त्वपलापकत्वादेवातिसाहसिका इति सुशोच्या एव ।**

*प्रका०*— अत्राव्यक्तमिति यत्किञ्चित्परिकल्प्य तदुपासनं प्रधानं विष्णूपासनं तदङ्गभूतमिति ये वदन्ति तान्प्रत्याह **ये त्वित्यादिना** ।

***न्या०दी०*— अन्ये त्वत्राव्यक्तपदेन यत्किञ्चिच्छून्यापरनामकं निर्गुणं ब्रह्मोच्यत इति मन्वानाः तदुपासकेश्वरोपासकयोः कोऽधिक इति प्रश्नार्थं कल्पयित्वाऽव्यक्तोपासकानामेवाधिक्यं परिहारे कथ्यत इति वदन्ति । तान् प्रत्याह ये त्विति ॥ "ते मे युक्ततमा मताः" इति भगवता स्वोपासकानामुत्तमत्वमुक्त्वा 'मय्येव' इति मदुपासकानामेवोत्तमत्वात् मदुपासक एव भवेति स्फुटमुक्तत्वादव्यक्तोपासकानामाधिक्यं वदतामपलापकत्वमेव । ततश्च साहसिकत्वात् "अहो नष्टा एते" इति शोकविषयकत्वमेव न तु परिहारं वक्तुं प्रतिवादित्वमित्यर्थः ।**

**गीतातात्पर्यनिर्णयः**

**"न चलेत् स्वात् पदाद् यस्मा-**
**दचला श्रीस्ततो मता ॥"—इत्याग्नेये ।**

*प्रका०*— "ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम्" इत्यत्र अचलाऽनिर्देश्याऽव्यक्ताऽचिन्त्यादिशब्दान् देव्यां घटयति **न चलेदित्यादिना** ।

***न्या०दी०*— ननु चेष्टावत्याः श्रियोऽचलत्वम् "अचलं ध्रुवम्" इति कथमुच्यत इत्यतः स्मृत्यैव तद्घटयति नेति ॥**

**गीतातात्पर्यनिर्णयः**

**"सूक्ष्मत्वादप्रसिद्धत्वाद् गुणबाहुल्यतस्तथा ।**
**अनिर्देश्यौ तथाऽव्यक्तावचिन्त्यौ श्रीश्च माधवः ॥"**

**—इति नारदीये ।**

***न्या०दी०***— "अनिर्देश्यमव्यक्तमचिन्त्यं पर्युपासते" इति व्याहतम् । अनिर्देश्याव्यक्ताचिन्त्यस्योपासनायोगादित्यतः अनिर्देश्यत्वादिकमुपास्यत्वाविरोधे स्मृत्यैव घटयति **सूक्ष्मत्वादिति** ॥

**गीतातात्पर्यनिर्णयः**

**"अविष्णुज्ञैरतद्भक्तैस्तदुपासाविवर्जितैः ।**
**शपेदुपासिताऽप्येषा श्रीस्तांस्तद्धरितत्त्ववित् ॥**
**तद्भक्तस्तमुपास्यैव श्रियं ध्यायीत नित्यदा ।**
**तेन तुष्टा तु साऽच्छिद्रं दद्यात् विष्णोरुपासनम् ॥**

***प्रका०***— "ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः । क्लेशोधिकतरस्तेषामव्यक्तासक्तचेतसाम्" । इत्यव्यक्तोपासकानां क्लेशेन विष्णुप्राप्तिरिति यदुक्तं तद्विष्णुभक्तानामेव । न अविष्णुभक्तानामित्येतमर्थं श्रुत्या दर्शयति **अविष्णुज्ञैरिति** । श्रीसहितत्वेन ।

***न्या०दी०***— मदुपासका एवोत्तमा इत्युच्यते **मयीति** । त्वदुपासकानामिवाव्यक्तोपासकानामपि मोक्षसद्भावात् कथं तेषामुत्तमत्वमित्यतोऽव्यक्तोपासकानां मोक्षमङ्गीकृत्य सहेतुकं स्वोपासकानामुत्तमत्वमुच्यते 'ये त्वक्षरम्' इति । तत्रोच्यमानभगवत्प्राप्तिः न केवलशाक्तेयानामिति भावेन मयीत्यादिकं श्रुत्यैव व्याचष्टे **अविष्णुज्ञैरिति** । अत्र "ध्यायीत नित्यदा" इत्यन्तेन परीत्युपसर्गाभिप्राय उक्तो भवति । "तेन तुष्टा" इत्यनेन "ते प्राप्नुवन्ति मामेव" इत्यस्याभिप्राय उक्तो भवति ।

***भा०दी०***— **सहेतुकमिति** । क्लेशाभावरूपहेतुसहितमित्यर्थः । व्यक्तमेतदग्रे "सुष्ठ्वाचारादेः औन्येऽपी"त्यादिना ॥ **केवलशाक्तेयानामितीति** । भगवद्भक्त्यादिहीनश्रीदेवीमात्रोपासकानामित्यर्थः ।

**गीतातात्पर्यनिर्णयः**

**ततस्तद्दर्शनान्मुक्तिं यात्यसौ नात्र संशयः ।**
**तथाऽपि सर्वपरमां सर्वदोषविवर्जिताम् ॥**
**ज्ञात्वा श्रियं तत्परमं तत्पतिं पुरुषोत्तमम् ।**
**विज्ञायोपासते नित्यं ते हि युक्ततमा मताः ॥**

***न्या॰दी॰***— एवमव्यक्तोपासनस्य मोक्षसाधनत्वेऽपि न तदेवोत्तमं मन्तव्यमिति भावेनाह **तथापीति** । उपासते श्रिया सह इति शेषः । अनेन 'मय्यावेश्य' इत्युक्तार्थं भवति ।

**गीतातात्पर्यनिर्णयः**

यतः क्लेशोऽधिकस्तेषां पृथक् श्रियमुपासताम् ।
विष्णुना सहिता ध्याता सा हि तुष्टिं परां व्रजेत् ॥
अन्यथा तु पुनर्विष्णोः श्रीपतित्वेन चिन्तनम् ।
अच्छिद्रमेव कर्तव्यमिति मुक्तिश्चिराद् भवेत् ॥
तस्मादक्लेशतो मुक्तिः क्षिप्रं विष्णुमुपासताम् ॥"

—इति परमश्रुतिः ॥

***न्या॰दी॰***— अव्यक्तोपासकानामपि मोक्षसद्भावे कथं भगवदुपासकानामुत्तमत्वमित्यत आह **यत इति** ॥ अनेन 'क्लेशः' इति व्याख्यातं भवति । अनेन उक्तप्रकारेण पर्युपासनम् इन्द्रियग्रामातिनियमनं, सर्वत्र समबुद्धित्वं, सर्वभूतहितेरतत्वादिसुष्ठाचारमन्तरेण अव्यक्तप्रसादाभावात् परमश्रद्धामात्रयुक्तानां सुष्ठाचारादेरौन्येऽपि भगवत्प्रसादसम्भवात् क्लेशाधिक्यं ज्ञातव्यम् । इतश्च भगवदुपासनमेवोत्तममित्याह **विष्णुनेति** ॥ श्रिया सह भगवदुपासने द्वयोरपि परमप्रसादसम्भवेन अचिरात् मोक्षो भवति । पृथगव्यक्तोपासनपक्षे तु किञ्चिद्भगवदुपासनं कृत्वा बहुकालं पृथक् श्रियमुपास्य पुनः श्रिया सह निरन्तरं भगवदुपासनं कर्तव्यम् । ततो मुक्तिरिति चिरेणैव भवतीत्यतोऽपि भगवदुपासनमेवाधिकमिति भावः । अनेन "ये तु सर्वाणि" इत्येतदुक्तार्थं भवति । हेतुद्वयेनोक्तं विष्णूपासनस्याधिक्यमुपसंहरति **तस्मादिति** ॥ तेषामाधिक्यं चेति शेषः ॥

***भा॰दी॰***— **उक्तप्रकारेण पर्युपासनमिति** । हरितत्त्ववित् तद्भक्तस्तमुपास्यैव श्रियं ध्यायीतेत्युक्तप्रकारेणेत्यर्थः ॥ **औन्येऽपीति** । ऊनत्वेऽपीत्यर्थः ॥ **इतश्चेति** । भगवदुपास्तिरूपमुक्तिमार्गस्य मोक्षफलकत्वे श्रीदेव्युपास्तिमार्गस्येव विलम्बाभावहेतुतश्चेत्यर्थः ॥ **हेतुद्वयेनेति** । अक्लेशत्वाचिरत्वरूपहेतुद्वयेनेत्यर्थः । हेत्वर्थकेतिशब्दानन्तरं शेषमाह **तेषामित्यादि** । न केवलमक्लेशादिकमिति चार्थः ॥ १ ॥

गीता

**श्रीभगवानुवाच—**

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥**

*वि०वि०*— अव्यक्तोपासकेभ्यो मदुपासका एवोत्तमा इत्युत्तरं भगवानुवाच **मयीति** । ये मयि मन आवेश्य । नित्ययुक्ताः सततोद्योगिनः । परया श्रद्धया । आधिक्येनोपेता युक्ता मामुपासते । ते युक्ततमाः साधकोत्तमा मताः ॥ २ ॥

*सा०सं०*— अव्यक्तोपासकेभ्यो मदुपासका एवोत्तमा इत्याह **मयीति** । **ये मयि** सम्यक् **मन आवेश्य** । **नित्ययुक्ताः** नित्यं कर्मयोगध्यानयोगवत्त्वेन नित्ययुक्ताः । **परया श्रद्धयोपेताश्च** सन्तः । **मामुपासते** । **ते युक्ततमाः** मोक्षोपायवत्सु श्रेष्ठाः । **मे मताः** । इत्यर्थः ॥ २ ॥

*अ०प्र०*— एवमर्जुनेन पृष्टो भगवान् उपासकानां मध्ये तत्र प्रथमाः श्रेष्ठा इत्युत्तरं **श्रीभगवानुवाच** – **मयीति** ।

ये[१], मयि[२], मन[३], आवेश्य[४], नित्ययुक्ताः सन्तः[५], परया श्रद्धाया उपेताः[६], मां[९], उपासते[१०] ते[११] मे[१२], युक्ततमाः[१३], मताः[१४] ॥

हे अर्जुन !, ये = भक्ताः[१], मयि = परमेश्वरे सर्वज्ञत्वादिगुणविशिष्टे[२], मनः[३], आवेश्य = सर्वेन्द्रियैः सहितं मनः एकाग्रं कृत्वा[४], नित्ययुक्ताः सन्तः = सततोद्योगिनः यद्वा, परमास्तिक्येन मदर्थकर्मानुष्ठानादिना मन्निष्ठास्सन्तः[५], परया = प्रवर्धमानया भजनशीलया श्रेष्ठया वा[६], श्रद्धया = भक्त्या[७], उपेताः = युक्ताः[८], मां = अचिन्त्याद्भुतशक्तिं[९], उपासते = आराधयन्ति[१०] ते = भक्ताः[११] युक्ततमाः = मद्भक्तानां मध्ये श्रेष्ठा इति साधकोत्तमाः[१२], मे = मम[१३], मताः = अभिमताः सम्मता इत्यर्थः[१४] ॥ २ ॥

भाष्यम्

**अव्यक्तोपासनाद् भगवदुपासनस्य उत्तमत्वं प्रदर्श्य तदुपायं प्रदर्शयति अस्मिन्नध्याये ।**

*प०टी०*— अध्यायार्थमाह **अव्यक्तेति** ।

***प्र०दी०***— एतदध्यायप्रतिपाद्यमर्थमाह **अव्यक्तेति** । **अव्यक्तं श्रीः** । **तदुपायं** भगवदुपासनोपायम् । तदुपायप्रदर्शनं च भगवदुपासनाधिक्यसमर्थनार्थमित्येकार्थता । षट्कान्तर्भावश्च । अर्जुनस्य प्रश्नसङ्गतिप्रदर्शनेनैवानन्तर्यलक्षणाऽपि सङ्गतिर्ज्ञायते ।

***भा०दी०***— प्रतिपाद्यभेदेन अध्यायभेदमाशङ्क्य भगवदुपासनोत्तमतैव प्राधान्येन प्रतिपाद्यते । तदुपायस्तु तादर्थ्येन । अतो नानेन दोष इति भावेनाह **तदुपायप्रदर्शनं चेति** । **षट्केति** । भगवन्माहात्म्योक्तिपरत्वाद् अस्याध्यायषट्कस्य तदुपपादनेन उत्तमत्वोक्तेश्च तन्महिमोक्तौ पर्यवसानादिति भावः । **अर्जुनस्य प्रश्नसङ्गतीति** । 'एवं सततयुक्ताः' इति गीतायामेवंशब्देन दृष्टश्रुतरूपभगवत्परामर्शेन प्रश्नकरणस्य अग्रे भाष्ये व्याख्यानात् पूर्वानन्तर्यमस्य सिद्धमिति भावः ।

***भा०र०***— अस्मिन्नध्याय इति भाषणादाह **एतदिति** । द्वादशेत्यर्थः । अव्यक्तशब्देन प्रधानग्रहणेन स्याच्चेतनया तदुपासनमनुचितमिति तस्य भगवदुपासनाधिक्यं प्रत्यवधित्वभाषणमयुक्तमित्यत्राभिप्रेतमव्यक्तशब्दार्थमाह **अव्यक्तं श्रीरिति** । अभिमान्यधिकरणन्यायेन श्रीदेव्या अव्यक्तपदमुख्यार्थत्वाद्युक्तं तदुपासनस्यावधित्वभाषणमिति भावः । तच्छब्दस्य प्रकृतोभयपरत्वभ्रमं व्युदसितुमाह **तदुपायं भगवदुपासनोपायमिति** । ननु भगवदुपासनाधिक्ये तदुपायप्रदर्शने च तात्पर्ये अर्थभेदादध्यायस्यैकवाक्यता न स्यात् । किं च द्वितीयषट्कान्तर्भूतद्वादशाध्याये भगवन्महिमा वर्णनीया, यदभाषत, उत्तरैरध्यायैर्भगवन्माहात्म्यमाहेति । न हि भगवदुपासनोपायप्रदर्शनं भगवन्महिमा भवतीति, न षट्कान्तर्भावोऽस्येत्यत आह **तदुपायप्रदर्शनं चेति** । अव्यक्तोपासनाधिकोपासनविषयत्वमेव भगवतो महिमा तत्समर्थनार्थं प्रवृत्तं भगवदुपासनोपायप्रदर्शनम् । तच्छेष इति शेषिणः प्रधानस्यैकत्वादध्यायस्यैकवाक्यता द्वितीयषट्कान्तर्भावलक्षणसङ्गतिश्चास्याध्यायस्य युक्तेत्यर्थः । अस्याध्यायस्य पूर्वाध्यायानन्तर्यलक्षणापि सङ्गतिर्भाषितेत्याह **अर्जुनप्रश्नप्रदर्शनेनेति** । एवं शब्देन दृष्टश्रुतरूपं 'मत्कर्मकृत्' इत्यादि प्रकारश्च परामृश्यत इति भाषणेनैवंभूतं, त्वामेवंप्रकारेण उपेता उपासत इत्येवं शब्दार्थस्य विभावना । तस्य च पूर्वपरामर्शत्वात् पूर्वाध्यायोक्तविश्वरूपभगवदुपासने इतराधिक्यस्यात्र उच्यमानत्वात् पूर्वाध्यायानन्तरभावोऽस्याध्यायस्य ज्ञायत इत्यर्थः ।

भाष्यम्

**तदुपासनमपि मोक्षसाधनं प्रतीयते । "श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ" इति ।**

*प०टी०*— ननु ब्रह्माद्युपासनाभगवदुपासनयोराधिक्यमपृच्छन् अव्यक्तभगवदुपासनयोरुत्तमं किमिति पृच्छति ? इत्यत आह **तदिति** । मोक्षसाधनत्वे साम्यप्रतीत्या प्रश्न इत्यर्थः । श्रीसमाराधनार्थं जातस्तदर्थं गुरुसेवायै निर्याय स च श्रियं श्रियः स्तोतृभ्यो वयः शुश्रूषया ददाति । एवं श्रियं प्रतिवसन्तो बहवो गुरुशिष्याः मुक्तिमगमन् । तत्र च मिथुने द्वन्द्वे समीहितानि सत्यानि भवेयुरिति ।

*प्र०दी०*— ननु भगवदुपासनमिवाव्यक्तोपासनमपि यदि मोक्षसाधनत्वेन प्रमितं स्यात्, तदा तत्साधकाधिक्यविषयः संशयः स्यात् । तदेव कुतः ? तथाच कथमयं संशयमूलः अर्जुनस्य प्रश्नः । न हि भिन्नफलसाधनसाधकानां निर्धारणार्थः प्रश्नो युज्यते । किन्तु साध्यनिर्धारणार्थ एव । न च तथा प्रकृतो 'यावानर्थः' इत्यादिना निरस्तत्वादित्यत आह **तदुपासनमपीति** । **श्रियं** प्रति **वसाना** वसन्तः, तामाच्छाद्य स्थित्वा वा उपासीना इति यावत् । तेषां **समिथा** समीहितानि सत्यानि **भवन्ति** । **मितद्रौ** समुद्रे क्षीराब्धौ ।

*भा०दी०*— **तत्साधकेति** । अव्यक्तोपासनानुष्ठातुराधिक्यविषय इत्यर्थः । भिन्नश्रितत्वोपासनायां मोक्षेतरफलकत्वं मन्वान आह **न हीति** । **भिन्नेति** । भिन्नविभिन्नफले मोक्षतदितरफलके साधने भगवदव्यक्तयोरुपासने तत्साधकानां तदनुष्ठातॄणां मध्ये कोऽधिक इति निर्धारणार्थ इत्यर्थः। **साध्यनिर्धारणार्थ एवेति** । उपासनाजन्यफलद्वयमध्ये किमुपासनायाः फलमधिकमिति साध्यनिर्धारणार्थ एव प्रश्नो युज्यत इत्यर्थः । अस्तु तथैव प्रकृत इत्यत आह **न च तथेति** । कुतः ? इत्यत आह **यावानिति** । 'यावानर्थ उदपाने सर्वतः सम्प्लुतोदके' इत्यादिना द्वितीये एव मोक्षेतरफलस्यानुत्तमत्वोक्तेः, अव्यक्तोपासनस्य च मोक्षेतरफलकत्वात् साध्ये सन्देहस्यैवायोगेन तदुत्तमत्वनिर्धारणार्थोऽपि प्रश्नो न युक्त इत्यर्थः । 'वस निवासे' 'वस आच्छादने' इति धातुद्वयरूपमित्युपेत्य क्रमादर्थावाह **वसाना इत्यादिना** । वसतेरात्मनेपदं छान्दसमिति भावः । **क्षीराब्धाविति** । 'अमृतत्वमायन्' इत्यन्वय इति भावः ।

*भा०र०*— **तत्साधकाधिक्यविषय इति** । मोक्षसाधकानां भगवदुपासकानामव्यक्तोपासकानां च मध्ये भगवदुपासका श्रेष्ठाः, आहोस्विदव्यक्तोपासकास्तथेत्येवमाधिक्यविषयः । संशयः, साधकबाधकप्रमाणाभावेन स्यादित्यर्थः । तदेव अव्यक्तोपासनस्य मोक्षसाधनत्वमेव । कुतः प्रमाणात्, मास्तु संशयः अस्तु च प्रश्न इत्यत आह **तथाचेति** । प्रश्नस्य हि संशयो मूलं तदभावे स एवानुपपन्नः । कारणं विना कार्योदयस्यायोगादिति भावः । ननूपासनयोर्भिन्नफलकत्वेऽपि तत्साधनाधिक्यविषयकः संशयः किमिति न स्यादित्यत आह **न हीति** । भिन्नयोः फलयोः

यत्साधने क्लृप्ते तत्साधकानां तन्निष्पादयतां पुंसां निर्धारणार्थ इति । प्रश्नो हि निर्धारणार्थः निर्धारणं च जातिगुणक्रियादिभिः सजातीयसमुदायादेकदेशस्य विवेचनम् । न च भिन्नफलकत्वे द्वयोः साधनयोः साजात्यमिति कुतः तत्साधकानां सजातीयत्वम् । अतो न युक्तः प्रश्न इत्यर्थः । किन्निर्धारणार्थः प्रश्न इति पृच्छति **किं त्विति** । परिहरति **साध्येति** । साध्यं फलम् । नन्वेवं प्रकृते साध्यनिर्धारणार्थ एव साधकाधिकप्रश्नोऽस्त्वित्याशङ्क्य निराह **न चेति** । भगवदुपासकानां फल-मुत्तममुताव्यक्तोपासकानामिति साध्यनिर्धारणार्थः प्रश्नेन युज्यते । कुतः 'यावानर्थ उदपाने सर्वतः सम्प्लुतोदके । तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः' इति द्वितीयाध्याये ज्ञानफलं महासमुद्रो-दकमिव महज्ज्ञानेतरसाधनसाध्यं, फलं तु कृषीवलमिवात्यल्पमिति भगवज्ज्ञानसाध्यमोक्षेतरफल-स्याव्यक्तोपासनादिरूपसाधनसाध्यस्य मोक्षादवमत्वनिर्धारणेनाधिक्यगोचरसंशयस्यैव निरस्तत्वेन तन्मूलप्रश्नस्य कारणाभावादित्यर्थः । 'श्रियं वसाना' इत्यत्र श्रीदेव्युपासनस्य मोक्षसाधनत्वरूपप्रकृ-तार्थप्रत्यायकत्वसिद्धयेऽभ्याहरति **प्रतीति** । वस-निवास इत्यस्य आत्मनेपदं छान्दसमिति भावेनोक्तं **वसन्त इति** । प्रतिपदाध्याहारे वसाना इत्यनन्वितमित्यत उक्तं **वसन्त** इतीत्यपि केचित् । अध्याहारव्यत्ययाश्रयणानुशयादाह **तामाच्छाद्येति** । वस आच्छादन इत्यस्येदं रूपमिति भावः । व्याख्यानद्वयेऽपि तात्पर्योक्तिरूपासीना इति । **यावदिति** । तथा च प्रकृतसिद्धिरिति भावः । समीण इत्युणादौ सं शब्द उपपदे इणो धातोः यक् प्रत्यये समेति समीयते वासाविति समिथः अग्निः सम्भ्रमो वेति वैयाकरणैरुक्तत्वात् समिथशब्दः सम्भ्रमार्थः । सम्भ्रमशब्दश्च समीहितार्थ इति भावेन समिथशब्दात्परस्य ससम्छन्दस्य अकारादेशमुपेत्य तमनूद्य व्याचष्टे समिथा समीहितानीति । सम्पूर्वस्येह चेष्टायामितीत्यस्य पृषोदरादिभावेन समिथा समीहितानीत्युक्तमित्यप्याहुः । सप्तशब्दा-ज्जस आकारे छन्दसि सत्येति रूपमिति भावेनाह **सत्या सत्यानीति** । हरिमितयोर्द्रुव इत्युणादौ मितशब्दोपपदाद्द्रवतेः कुप्रत्ययो डिच्चेत्युक्तमितद्रुः समुद्र इत्यभिमानेन मितशब्दोपपदस्य द्रुगता-वित्यस्य मितद्रुरिति रूपम् । मितं द्रवतीति योगार्थस्य च वृद्धिह्रासराहित्येन गमनवति समुद्र एव सम्भवमभिप्रेत्याह **मितद्रौ समुद्र इति** । समुद्रमात्रे अमृतत्वमायातीति श्रुतमोक्षं प्राप्त्यनुपपत्तेरुक्तं क्षीराब्धाविति ।

भाष्यम्

**"अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते" इति च । अव्यक्तं च महतः परम् । "महतः परमव्यक्तम्" इत्युक्तपरामर्शोपपत्तेः ।**

**"उपास्य तां श्रियमव्यक्तसंज्ञां भक्त्या मर्त्यो मुच्यते सर्वबन्धैः" इति सामवेदे आग्निवेश्यशाखायाम् ।**

*प०टी०*— **अनाद्यनन्त**मित्यत्र अव्यक्तोपासनान्न मोक्षः श्रूयते इत्यत आह **अव्यक्तं चेति** । तं महतः परमिति परामर्शस्तदोपपद्यते, यदि महतः परमित्युक्तस्य भवेत्, अन्यस्य महतः परत्वेनाप्रकृतत्वादित्यर्थः ।

*प्र०दी०*— श्रीशब्दस्यान्यत्रापि प्रवृत्तेरव्यक्तविषयामेव श्रुतिं पठति **अनादीति** । **निचाय्य** सम्पूज्य निशाम्य वा । अत्रापि नाव्यक्तं श्रूयत इत्यत आह **अव्यक्तं चेति** । चोऽवधारणे । कुत एतत् ? परमात्मनोऽपि तत्सम्भवादित्यत आह **महत इति** । अत्र हि 'तं महतः परं' इति परामर्शो दृश्यते । स चोक्तस्यैव भवति । अव्यक्तमेव च 'महतः परमव्यक्तम्' इति महतः परत्वेनोक्तम् । अतोऽत्राप्यव्यक्तग्रहणे 'तम्' इत्ययं 'महतः परमव्यक्तम्' इत्युक्तस्य परामर्श इत्युपपद्यते । अन्यथा अनुक्तपरामर्शः प्रसज्यते । परमात्मा तु न महतः पर इत्युक्तः । किन्तु 'अव्यक्तात्पुरुषः परः' इत्येवेत्यर्थः । श्रुतिद्वयार्थसङ्ग्राहिकां स्पष्टां चात्र श्रुतिमुदाहरति **उपास्येति** ।

*भा०दी०*— **अन्यत्रापीति** । 'शंरूपे तु रतेर्वायौ श्रीरित्येव च कीर्त्यते' इति वाण्यामपि वृत्तेरित्यन्वयः ।

अथवा 'त्रैलोक्यां बुभुजे श्रियम्' इति षष्ठस्कन्धे ऐश्वर्येऽपि प्रयोगादिति भावः । **अव्यक्तविषयमिति** । पूर्वपक्षरीत्येति भावः । 'वायुदर्शन' इति धातुपाठेऽप्यनेकार्थत्वमुपेत्याह **सम्पूज्य इति** । **निशाम्येति** । श्रवणादिकृत्वेत्यर्थः । **तदिति** । 'यो बुद्धेः परतस्तु सः' इत्यादाविव अव्यक्तपुरुषस्यापि महतः परत्वसम्भवादित्यर्थः । **अत्र हीति** । विचार्यवाक्ये **अन्यथेति**विचार्यवाक्यस्थतच्छब्दस्य हरेः परामर्शः इत्यर्थः ।

*भा०र०*— प्रस्थानान्तरे तु यः पुरुषः श्रीसमाधानार्थे जातोऽसौ तदर्थमेव गृहान्निर्गतो भवति । सश्रिय उपदेष्टृभ्यः गुरुभ्य एव स्वस्ववयोदत्त इति श्रुतिशेषार्थमुक्त्वा मितद्रावित्यस्य गुरुशिष्याख्यमिथुने इत्यर्थः उक्तः । भावप्रदीपिकां च श्रीसमाराधनार्थं गुरुसेवायै निरयाय । स च श्रियं श्रियः जरितृभ्यः स्तोतृभ्यो वयः शुश्रूषया दधातीति श्रुतिशेषो व्याख्यातः । अन्यत्रापि 'शंरूपमाश्रिता वायुं श्रीरित्येव च कीर्तिता' इत्यादिना वाणीदेव्यादौ शोभासम्पत्तिपद्मासु श्रीर्लक्ष्मीत्यभिधानेन कान्तिसम्पत्त्यादौ च अव्यक्तविषयां श्रीदेवीमात्रपरां चापूपूजातिशामनयोरिति धातुव्याख्यानादाह **सम्पूज्य निशाम्य वेति** । निशामनं दर्शनमिति धातुवृत्ताव्याख्यानात् दृष्ट्वेत्यर्थः ।

एतदव्यक्तमेव महतः परमित्येतत् । तत्सम्भवात् = महतः परत्वं सम्भवात् । अत्र अनाद्यनन्तमिति वाक्ये परामर्शः तच्छब्देन । स च परामर्शः अयं शब्दः । अन्यथा महतः परमव्यक्तमित्युक्ता-वित्यस्य परामर्श इत्यनभ्युपगमे परमात्मनोऽपि तत्सम्भवादित्युक्तदोषमुद्धरति **परमात्मा त्विति** । **इत्येवेति** । अव्यक्तादपि परत्वेनोक्तो न पुनस्साक्षान्महतःपरत्वलिङ्गेन परमात्मन्यनवकाशेनात्र व्यक्तमेव प्रतिपत्तव्यमित्यर्थः ।

भाष्यम्

**महच्च माहात्म्यं तस्य वेदेषूच्यते— "चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते । तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्" इति । "चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते" इति च ।**

***प०टी०***— श्रूयमाणमव्यक्तोपासनस्य मोक्षसाधनत्वं स्तुतिमात्रं किं न स्यात् ? इत्यत आह **महच्चेति** । महामहिमत्वेनाप्राकृतत्वादित्यर्थः । **घृतप्रतीका** अतिस्निग्धदेहा । **वयुनानि** प्रति वसति, ज्ञानविषयो भवति ।

***प्र०दी०***— नन्वेवं प्रतीयमानमप्यव्यक्तोपासनस्य मोक्षसाधनत्वमुपचरितमेव । 'अन्तवत्तु फलं तेषाम्' इत्युक्तन्यायात् । अतो नास्य सन्देहहेतुत्वमित्यत आह **महच्चेति** । **तस्याः** श्रियः । युक्तं ब्रह्माद्युपासनस्य मोक्षसाधनतायामुपचरितत्वकल्पनम् । तेषां जननमरणादिमत्त्वेनासम्भवात् । श्रियस्तु महामाहात्म्यवत्त्वेन वेदोक्तत्वाद् असम्भवाभावाद् वास्तवमेव तदुपासनस्य मोक्षसाधनत्वमित्यर्थः । **सुपेशा** सुरूपा । **घृतप्रतीका** दीप्ताङ्गी । **वयुनानि** ज्ञानानि **वस्ते** आच्छादयति । ज्ञानालङ्कृता इति यावत् । **सुपर्णा** सुष्टु परमानन्दौ **वृषणा** सेचकौ, द्विरूपो भगवानेव । **यत्र** यस्यां विषये । अत्र नित्ययौवनं ज्ञानमयत्वं, सर्वदेवतापूज्यत्वं च प्रतीयते । एवमुत्तरत्र ।

***भा०दी०***— **इत्युक्तन्यायादिति** । 'कामैस्तैस्तैर्हृतज्ञानाः भजन्ते अन्यदेवताः' इत्युक्त-ब्रह्माद्यन्यदेवताभजकानां 'तेषाम्' इति परामृश्य 'अन्तवत्तु फलम्' इति सप्तमोक्तन्यायादित्यर्थः । **नास्येति** । अव्यक्तोपासनं मुक्तिसाधनमित्यस्योपासकाधिक्यविषयप्रश्नबीजसंशयहेतुत्वेत्यर्थः । भाष्ये शेषमाह **तस्याः श्रिय इति** । **एवमुत्तरत्रेति** । 'चतुःशिखण्डा' इति श्रुतावित्यर्थः ।

***भा०र०***— नन्वव्यक्तोपासनस्य मोक्षहेतुत्ववचनमुपचरितार्थकम् । अन्तवत्फलकोपासना-गोचरवस्तुविषयत्वाद्ब्रह्माद्युपासनस्य मोक्षहेतुत्ववचनवत् । न चासिद्धिः दृष्टान्ते साधनवैकल्यं चेति

वाच्यम् । 'अन्तवत्फलं तेषां तद्भवत्यल्पमेधसाम्' इति ब्रह्माद्युपासने अन्तवत्फलकत्वस्य भगवतैवोक्तत्वेन तत्समानन्यायेनाव्यक्तं भजतामपि फलमन्तवदेवेति निश्चयेन सन्देहायोगाद्भगवदुपासका अधिका उताव्यक्तोपासका अधिका इति प्रश्न एवानुपपन्न इति भावेन शङ्कते **नन्वेवमित्यादिना** । उपचरितं श्रुतिमात्रमेव वेदोक्तमहामाहात्म्यवदितरवस्तुगोचरत्वं जननमरणादिदोषवद्वस्तुगोचरत्वं वा उक्तानुमाने उपाधिरिति भावेन तस्य साध्यव्यापकतामुपपादयति **युक्तमिति** । असम्भवाज्जननमरणाद्यभावरूपा न तत्फलात्मकमोक्षसाधनत्वासम्भवात् तथा चोपाधिः साध्यव्यापक इति भावः । साधनाव्यापकतामाह **श्रियस्त्विति** । असम्भवाभावात् = मोक्षदानसामर्थ्यासम्भवाभावात् । वास्तवमेव न पुनरुपचरितम् । भाष्ये चतुष्कपर्देत्यस्य चत्वारः कपर्दाः जटाजूटशब्दिताः शिखण्डा यस्याः सा तथोक्ता वेणीचतुष्टयशालिनीत्यर्थः । यद्यपि 'कपर्दोऽस्य जटाजूट' इत्यमरः पिनाकिजटाबन्धे कपर्दशब्दमभ्यधत्त तथापि 'कपर्दस्तु जटाजूटे देवदेवस्य शूलिन' इत्युक्त्वा दृश्यते च जटाजूटमात्रेऽस्यच्चावराटक इत्यभिधत्केशवः । जटाजूटमात्रमपि कपर्दशब्दार्थ इत्युक्तवानिति मुक्त एवोक्तोऽर्थः । सुपेशा इत्यत्र पेशः शब्दः सकारान्तो रूपार्थक इति भावेनाह **सुपेशा सुरूपेति** । शोभनरूपेत्यर्थः । अत एव पेशः शब्दः षोडशसुरूपनामसु पठितः । तथा च केशवः 'पेशो रूपे हिरण्य इति, पेशःशब्दं रूपहिरण्यार्थमभ्यधत् घृक्षरणदीप्त्योरिति धातोरङ्गं प्रतीकोऽवयवः इत्यभिधानाच्चाह **दीप्ताङ्गीति** । घृता दीप्ताः प्रतीका अङ्गानि यस्याः सा घृतप्रतीकेति । असौ लक्ष्मीः व्यासस्य वेदव्यासस्य समा समानेत्यर्थः । अत एव उमर्जीये व्यासप्रतिमावदुन्नेयमित्याहुरित्युक्तम् । व्याससमासाविति भावः । भावप्रदीपिकायां तु स्निग्धदेहेत्यर्थ उक्तः । मायावयुनं ज्ञानमिति प्रज्ञानामसु पाठाद्वयुनं ज्ञानमितीशावास्यभाष्याच्चाह **वयुनानि ज्ञानानीति** । वस आच्छादन इति धातोराह **वस्ते आच्छादयतीति** । ज्ञानान्याच्छादयतीत्यस्य ज्ञानानि तिरोधापयतीति विरुद्धमतिकृत्यादाह **ज्ञानालङ्कृतेति** । भावप्रदीपिकायां तु वयुनानि प्रतिवस्ते वसति ज्ञानविषयो भवति इति व्याख्यातम् । सुपर्णेत्यत्र द्विवचनस्य सुपां सुलुक् इत्यादिना आकारादेशः । पृषोदरादिभावेन परशब्दान्यलोपः णोहि निवृत्तिवाचक इति वचनात् तकार आनन्दार्थ इति भावेन व्याचष्टे **सुपर्णा सुष्ठु परमानन्दाविति** । वृषू सेचन इति धातोः कनिन्युवृषितक्षिराणि धन्विसु प्रतिदिव इत्यौणादिके कनिन्प्रत्यये वाषपूर्वस्य नियमः इति पक्षे दीर्घाभावे द्विवचनस्य पूर्ववदाकारे च वृषणाविति रूपमिति भावेन तदर्थमाह **वृषणा सेचकाविति** । सर्वाभीष्टानां वर्षितारावित्यर्थः । नन्वेकस्यां श्रीदेव्यां निषेदतुर्निषण्णो बभूवतुरित्युक्तं सङ्गतत्वं कथं द्वयोः पुरुषयोर्युज्यत इत्यत आह **द्विरूपो भगवानेवेति** । तस्यां सङ्गतो भगवानेक एव । द्विवचनं तु गुहाधिकरणन्यायेन रूपद्वया-

भिप्रायेणोपपन्नमिति नोक्तचोद्यमिति भावः । यस्यां विषये यामुद्दिश्येत्यर्थः । अनेन किं महा-माहात्म्यमुक्तमित्यत आह **अत्रेति** । चतुष्कपर्देति श्रुतौ युवतिरित्यत्रावध्यनुक्तेर्नित्यतालाभ इति भावेनोक्तं **नित्ययौवनमिति** । वयुनानि वस्त इत्यस्य तात्पर्यं **ज्ञानमयत्वमिति** । 'यत्र देवा दधिरे भागधेयमि'त्यस्य तात्पर्यं **सर्वदेवपूज्यत्वमिति** । उत्तरत्र चतुःशिखण्डेति श्रुतौ रुद्रेभिरित्यस्य छन्दसि भिसऐस्त्वाभावः ।

भाष्यम्

**"अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः" इत्यारभ्य, "अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् । तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्या वेशयन्तीम् । मया सो अन्नमत्ति यो वि पश्यति यः प्राणिति य ईं शृणोत्युक्तम् । अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि । यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् । अहं रुद्राय धनुरातनोमि ब्रह्म-द्विषे शरवे हन्त वा उ । अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वऽन्तः समुद्रे । परो दिवा पर एना पृथिव्यै तावती महिना सम्बभूव" इत्यादि च ।**

**"त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया" इति च ।**

***प०टी०*— यत्र** यस्यां विषये । **चिकितुषी** कर्त्री । ज्ञानसाधनवस्तूनां सङ्गमनी । भूरि-स्थानेषु नित्येष्वादितः । **स्थात्राम्** इति भूरि विशन्ती नु त्राणाय मां देवा अचिन्तयन् कया... स मयेत्यादि । मामवमन्तारः **उपक्षयं** नाशं प्राप्नुवन्ति ।

***प्र०दी०*—** रुद्राद्यैः परिवृता । **राष्ट्री** राज्ञी । **यज्ञियानां** यज्ञार्हाणां वसूनां पदार्थानां देवानां वा । **सङ्गमनी** सङ्गमयित्री । **प्रथमा चिकितुपी** अनादितः सर्वत्र कृतनिवासा । **पुरुत्र** पुरुस्थानेषु । **व्यदधुः** कृतवन्तः पूजार्थं प्रतिष्ठापितवन्तः । **भूरिस्थात्रां** स्वतो भूरिस्थानेषु स्थिताम् । देवा-नावेशयन्तीम् । 'योऽन्नमत्ति स मयैवात्ति' इत्यादि । ये **अमन्तवः** निरपराधाः ते **मामुपक्षयन्ति** मत्समीपे वसन्ति । **श्रुधि** शृणु । **श्रुतः** प्रसिद्धः । **श्रद्धिवं** श्रद्धेयम् । **यमुग्रं** रुद्रं कर्तुं **कामये तं तमुग्रं कृणोमि** करोमीत्यादि । **सुमेधां** सुमेधसम् । 'रुद्राय' इत्यादि चतुर्थी द्वितीयार्थे । **ब्रह्मद्विषे** संहारकाले ब्राह्मणादिसर्वप्राणिद्विषम् । यद्वा **ब्रह्मद्विषां शरवे** हिंसकं **हन्तवा** उ हन्तुमेव । **अस्य**

जगतः पितरं हिरण्यगर्भं **मूर्धनि** सर्वाधिक्ये । **योनिः** कारणम् । 'दिवा' इत्यादि तृतीया पञ्चम्यर्थे । **एना** एतस्याः । **महिना** महिम्ना अहं **तावती** एतावती **सम्बभूव** इत्यादिना उच्यते ।

*भा०दी०*— 'इत्यादि चे'ति भाष्यस्य पूर्वेणान्वयमाह **इत्यादिनोच्यत इति** ।

*भा०र०*— एकादशरुद्रैरुरुक्रमव्यतिरिक्तैरेकादशादित्यैर्दशभिर्विश्वेदेवैश्च चरामीत्युक्ते श्रीदेव्याः स्वव्यापारेषु चरणे रुद्रादीनां तृतीयया हेतुत्वं प्रतीतं बहुमानविरुद्धमिति सहयुक्तेऽप्रधाने इति तृतीया, न पुनर्हेताविति भावेन तत्रापेक्षितमध्याहरति **रुद्राद्यैः परिवृतेति** । परिवारभूतै रुद्रैः सह चरामीति तात्पर्यम् । राजृदीप्तावित्यतः ष्ट्रन् सर्वधातुभ्यः इत्योणादिके ष्ट्रन्प्रत्यये, व्रश्चादिलक्षणे जकारस्य षत्वे, ष्टुनाष्टुरिति ष्टुत्वे, प्रत्ययस्य षित्वात् षिद्गौरादिभ्यश्चेति ङीषि च राष्ट्रीति रूपमिति भावेन तदनूद्यार्थमाह **राष्ट्री राज्ञीति** । यज्ञार्हाणामिति वदन् यज्ञशब्दादर्हार्थे यज्ञर्त्विग्भ्यां घखञौ इति घप्रत्यय इत्यभिसन्धत्ते 'वसु तोये धने मणौ' इत्यभिधानेन वसुशब्दस्य धनवाचिनोऽपि सामान्यवचनत्वमत्रेति भावेनाह **वसूनां पदार्थानामिति** । 'आदित्या वसवो रुद्रा विश्वे ऋभव इत्यपि । सर्वदेवसमाख्यास्याः द्वादशाष्टादिशेष्वपि' इति शब्दनिर्णयानुरोधेनार्थान्तरमाह **देवानां वेति** । सम्पूर्णाद्गमेः सङ्गम्यत्वे देवा अनवेति करणे ल्युटि सङ्गमनी शब्द इति भावेन तस्य फलितार्थमाह **सङ्गमयित्रीति** । कृत्यल्युटो बहुलमिति बहुलग्रहणादन्तर्णीतण्यन्ताद्गमेः कर्तरि ल्युटि सङ्गमनीशब्द इति भावेन तस्य फलितार्थमाह सङ्गमयित्रीत्यप्याहुः । प्रथमेत्यस्य तात्पर्यं **अनादित इति** । चिकितुषीत्यस्यार्थः **कृतनिवासेति** । सर्वत्रेति योग्यताबललब्धं, कित निवास इति धातोर्लिटि, तस्य क्वसुश्चेति क्वस्वादेशे, लिटि धातोरिति द्वित्वे हलादिशेषे, कुहोरिति ककारस्य चकारे उगित्वात् ङीपि, वसोः सम्प्रसारणमिति वस्योत्वे, सम्प्रसारणाच्चेति पूर्वरूपत्वे आदेशप्रत्यययोरिति प्रत्ययावयवसकारस्य षत्वे चिकितुषीति रूपमिति भावः ।

भावप्रदीपिकायां तु कितनिवास इत्ययं करणेऽपि प्रवर्तत इति भावेन प्रवृत्तं कर्ता चिकित्वानित्यृग्भाष्यं मनसि निधाय चिकितुषी कर्तरीति व्याख्यातम् । पुरुत्रा पुरुस्थानेषु स्थानेष्विति वदन् देवमनुष्य पुरु पुरुष मर्त्येभ्यो द्वितीयासप्तम्योर्बहुलमिति पुरुशब्द सप्तमीसमर्थान्तद्धितः । त्राप्रत्यय इत्यभिप्रैति विपूर्वाद्दाधातोः करोत्यर्थाल्लुटि व्युदधुरिति रूपम्, तदर्थः कृतवन्त इति । तां तथाभूतां मा मां देवाः बहुषु स्थानेषु कृतवन्त इत्यस्य तात्पर्यम् । पूजार्थं प्रतिष्ठापितवन्त इति । भूरिस्थानेषु स्थितामिति वदन् छन्दस्त्वात् त्रास्थावर्णयोः पौर्वापर्वव्यत्ययेन भूरि स्थात्रामिति पदमित्यभिसन्धत्ते भूरिशब्दात् त्राप्रत्ययस्तदेव मनुष्येत्यत्र बहुलग्रहणाद्बहुत्राजीवतो मन इत्यादौ बहुशब्दादिवोत्पादनीय इति हृदयम् ।

भूरिशब्दात्परस्य सप्तमीबहुवचनस्य सुपः सुलुगित्यादिना लुकि भूरिति रूपम् । तस्यार्थः **भूरिस्थानेष्विति** । देवानिति शेषः । **इत्यादीति** । यो विपश्यति विविधं पश्यति प्राणिति चेष्टते। य एवोक्तं श्रुणोति स मयैव मदनुग्रहेणैव विपश्यतीत्यवं योज्यमित्यर्थः । त इति श्रवणाद्यच्छब्द-मध्याहरति **ये इति** । आगोऽपराधो मन्तुश्चेत्यभिधान्मन्तुशब्दोऽपराधवचन इति तदर्थमाह **अम-न्तवो निरपराध इति** । क्षिनिवासगत्योरिति धातोराह **वसन्तीति** । भावप्रदीपिकायां तु माम् अवमन्तारः उपक्षियन्ति नाशं प्राप्नुवन्तीति व्याख्यातम् । शुश्रुणुपृकृवृभ्यश्छन्दसीति हेर्द्धिः विकरणाभावश्चेति वेदे श्रुधीति रूपम् । तदर्थमाह **शृण्विति** । वेदपदमनूद्यार्थमाह **श्रुतः प्रसिद्धेति**। ज्ञानभक्तिवैराग्यादिगुणसम्पन्नतया प्रख्यातोऽतिसाधुवर्गसम्बोधनं, श्रद्धिवमिति पदं श्रद्धेयमिति व्याकुर्वन् एकारस्य इकारो यकारस्य वकारो विकार इत्यभिसन्धत्ते ।

अहं अग्रणीः स्वयं साक्षादिदं वक्ष्यमाणं वदामि देवैर्मानुषैरपि जुष्टं सत्यमित्युपकालितं किं तदित्यत उच्यते **यं कामये इति** । उग्रकपर्दी श्रीकण्ठ इत्यभिधानात् उग्रो भस्मधरो नग्नः कपालीति शिवस्य च विशेषनामानीति वचनाच्चाह **उग्रं रुद्रमिति** । कृणोमि व्यत्यये बहुलमिति विकरणव्यत्ययः करोमीत्यर्थः । **इत्यादीति** । यं ब्रह्माणं कर्तुं कामयेऽयं च ऋषिं कर्तुं कामयितुं ब्रह्माणमृषिं करोमीत्येवं योजनीयमित्यर्थः । शोभना मेघा यस्यासौ तथेति बहुव्रीहौ नित्यमसुच्-प्रजामेधयोरित्यसुच् प्रत्ययविधानादाह **सुमेधसमिति** । वेदे अमिपूर्वरूपमकृत्वा सवर्णदीर्घ एवाश्रित इति भावः । धनुरातनोमि ज्याकर्षणेन विस्तारयामीत्युक्तधनुरुन्मुक्तशरलक्ष्यत्वं घटयितुं तस्याग उच्यते **संहारकाल इति** । विष्णुतत्त्वनिर्णयटीकायां पञ्चममुखच्छेदात् ब्रह्मद्विषमिति व्याख्यातम् ।

षष्ठ्यर्थे चतुर्थी वक्तव्येति वचनमनुरुन्धानः एकवचनं बहुवचनार्थ इति भावेनाह **ब्रह्मद्विषा-मिति** । शृ हिंसायामित्यतः कर्तरि डुप्रत्यय इति भावेनोक्तं **हिंसकमिति**। हन्तेस्तुमर्थेति वैप्रत्ययः। उशब्दश्चैवात्र इति भावेनाह **हन्तुमेवेति** । न तु भीषयितुमित्येवकारतात्पर्यम् अहं जनाय जनस्य समदं हर्षं कृणोमि करोमि । अहं द्यावापृथिवी पदोपलक्षितानूर्ध्वाधरलोकान् धारणाय विवेश । छन्दसि लुट्लट्लिट् इत्यपरोक्षेऽपि लिट् सर्वाधिक्ये सर्वोत्कृष्टतयेति यावत् । सुवे जनयामि । न केवलं पदे स्थापयामि । एवंभूतायाः ममापि योनिः कारणम् । समुद्रे अप्सु अपामन्तस्तिष्ठति, स्त्रीणां पतिनामग्रहणमनुचितमिति शिक्षणाय नारायण इत्यनुक्त्वा आपो नारा इत्यादिनोक्तम् । तदर्थमेवाहेति विष्णुतत्त्वनिर्णयटीका । स्वात्मानं प्रति नारायणस्य कारणत्वमुपपादयितुं उक्तं **ततो वितिष्ठ इति** । यस्मादहं ततः परमेश्वराद्वितिष्ठे उत्थितादुत्पन्ना तस्मादसौ मम योनिः अहं तु विश्वानि = भुवनानि तद्विवरणमनूद्यामुपरितनलोकान् उत अधस्तनलोकांश्च वर्ष्मणा = बलेन शरीरेण

च उपस्पृशामि = वशीकरोमि व्याप्नोमि चेत्यृग्भाष्यटीका । अहं विश्वा भुवनानि आभरमाणोऽपि वातो वायुरिव प्रवामि । वा गतिगन्धनयोः । सञ्चरामि । सर्वमुत्पाद्य तत्र वर्तमानापि तद्दोषलिप्ता न भवामि इति तात्पर्यमिति स्वामिनः । उक्तं स्वमाहात्म्यं भगवदाधिक्योक्तिपूर्वकमुपसंहारं तं परो दिवेत्यर्धर्चं व्याचष्टे **दिवेत्यादीति** । सुपां सुपो भवन्तीति वक्तव्यादिति भावः । योयं मयो निरन्तरः समुद्र उक्तो भगवान् स दिवः पर उत्तमः । द्वितीयायै स्वेन इति तृतीयैकवचने एतच्छब्दस्य एनादेशे टायाश्च डादेशे निष्पन्नस्य एनेत्यस्य एनयेत्यर्थे तृतीयायाः पञ्चम्यर्थत्वात्तदनूद्यार्थमाह **एना एतस्या इति** । पर इत्यन्वयः । एतावती परिमिता सम्बभूव पूर्वपदपरोक्षेऽपि लिटि सम्भूतवतीत्यर्थः । 'इत्यादि च' इति भाष्यपदमनूद्य तस्य वेदेषूच्यत इत्यत्रत्येनोच्यत इत्यनेनान्वय इत्याह **इत्यादिनोच्यत इति** ।

'त्वया जुष्ट' इति भाष्योपात्तश्रुतौ 'मेघा देवी जुषमाणा न आगात्' इति पूर्वमन्त्रे प्रकृता मेधाशब्दितज्ञानस्वरूपा श्रीदेवी देवीति सम्बोध्यते । हे देवि, त्वया जुष्टा = अनुगृहीतः पुमान् ऋषिः = ज्ञानी भवति । त्वया जुष्टः = पुमान् ब्रह्मा = ब्रह्मपदवीमारूढो भवति । त्वया जुष्टः आगतश्रीः = प्राप्तसम्पत्तिः भवतीति । ब्रह्मादिपददातृत्वमाहात्म्यं प्रतीयत इति प्रकृतसिद्धिः ।

भाष्यम्

**इति शङ्का कस्यचिद् भवति । अतो जानन्नपि सूक्ष्मयुक्तिज्ञानार्थं पृच्छति एवमिति । एवंशब्देन दृष्टश्रुतरूपं 'मत्कर्मकृत्' इत्यादिप्रकारश्च परामृश्यते । अव्यक्तं प्रकृतिः । 'महतः परमव्यक्तम्' इति प्रयोगात् । "यत्तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्" इति भागवते । अक्षरं च तत् । "अक्षरात् परतः परः" इति श्रुतेः ।**

***प०टी०***— प्रसिद्ध शृणु श्रद्धेयम् । इत्यव्यक्तोपासनस्यापि मोक्षसाधनत्वप्रतीतेः किमधिकम् ? इति शङ्का कस्यचिद्भवति । तां परिहर्तुं पृच्छति **सूक्ष्मेति** । कारणान्तरम् । 'एवं'शब्देन सततयुक्तत्वं परामृश्यत इति शङ्कां निराकरोति **एवमिति** । तथा चैवम्भूतं त्वामेवमुपासत इत्यर्थो भवति ।

***प्र०दी०***— भवत्वेवं ततः किम् । असन्दिग्धतया भगवन्तमेवोपासीनस्यार्जुनस्य कथं अयं संशयः ? येनैवं पृच्छतीत्यत आह **इतीति** । यत एवं भगवदुपासनस्येवाव्यक्तोपासनस्यापि विनोपचारेण मोक्षसाधनत्वं प्रतीयत इति तस्मात् मार्गद्वयेनैकमेव फलं प्राप्नुवतां मध्ये के श्रेष्ठाः ? इति

साधकबाधकप्रमाणाभावेन शङ्का संशयः कस्यचिद् अविदिततत्त्वस्य भवति । अतस्तदनुजिघृक्षया भगवदुपासका एव श्रेष्ठा इति जानन्नप्यर्जुनः पृच्छतीत्यर्थः ।

अथवा जानन्नपि तत्र स्वाविदितयुक्तिज्ञानार्थं संशयमाहृत्य पृच्छतीत्याह **सूक्ष्मेति** । योग्यता-वशाद् एवम्भूतं त्वामेवंप्रकारेणोपासत इत्युभयत्रैवंशब्दस्य अन्वय इत्याशयवानाह **एवमिति** । दृष्टं श्रुतं च रूपं यस्य ब्रह्मणः तत्तथा । अव्यक्त-अक्षरशब्दयोरपव्याख्यानं निराकर्तुमर्थं तावदाह **अव्यक्तमिति** । **प्रकृतिः** चेतना । **त्रिगुणं** त्रिगुणाभिमानित्वात् । **सदसदात्मकं** कार्यकारणा-भिमानित्वात् । **अविशेषम्** अकार्यम् । ततः प्रधानं **प्राहुः** । **विशेषवत्** कार्यवत् । ततः **प्रकृतिं प्राहुः** । तत् प्रकृत्याख्यं तत्त्वम् । **परतः परः** अत्युत्तमः । अत्र 'अव्यक्तं' इति विशेष्यवाची । 'अक्षरं' इति विशेषणवाची । 'अव्यक्तासक्तचेतसाम्', 'अव्यक्ता हि गतिः' इत्यादिवचनात् । अतो व्युत्क्रमेण व्याख्यानम् । विशेषणोपादानं च देवतान्तरवैलक्षण्यप्रदर्शनेन प्रश्नसम्भावनार्थम् । एतदेव भाष्यकृता 'महच्च' इत्यादिना प्रपञ्चितम् ।

***भा०दी०***— 'त्वयेति च' इति भाष्यस्य 'तदुपासनमपि मोक्षसाधनं प्रतीयते' इति पूर्व-भाष्येण अन्वयमुपेत्य अर्थमाह **यत एवमिति** । इतिपदानुवादेन अर्थमाह **इति तस्मादिति** । पञ्चम्यन्ताक्षरशब्दस्य चित्प्रकृतित्वलाभाय 'परतः परः' इत्यस्य अभिप्रेतार्थमाह **अत्युत्तम इति** । गीतास्थयोरक्षराद्युक्तशब्दयोर्व्युत्क्रमेण व्याख्याने बीजमाह **अत्राव्यक्तमितीति** । **देवतान्तरेति** । ब्रह्मादिदेवतोपास्तेः मुक्तिहेतुत्वस्योपचरितत्वेऽपि नाव्यक्तोपास्तेः तथात्वमिति वैलक्षण्येत्यर्थः । **एतदेवेति**। अक्षरपदप्रदर्शितं वैलक्षण्यमेवेत्यर्थः ।

***भा०र०***— एवमुक्तरीत्या देव्या माहात्म्यं भवत्, ततः किं न किमपि सिद्ध्यतीति उक्त-मेवोपपाद्यते **असन्दिग्धतयेति** । भाष्यगतेति शब्दस्य हेत्वर्थत्वं संशयप्रकारसमर्थकत्वं च स्फोरयितुमाह **यत एवमिति** । प्रकारार्थमाह **के श्रेष्ठा इतीति** । तदनुजिघृक्षया = अविदित-तत्त्वपुरुषानुग्रहेच्छया अधिष्ठानयाथात्म्यनिश्चयवतोऽपि अविदिततत्त्वलोकानुजिघृक्षया प्रश्न इति प्रश्नोपपत्तिमुक्त्वा प्रकारान्तरेणापि प्रश्नोपपत्तिं भाषत इत्याह **अथवेति** । तत्र स्वविदिते भगव-दुपासका एव श्रेष्ठा इत्यर्थे योग्यतावशात् । प्रतीतान्वय प्रमाणविरोधाभावो योग्यता । तद्वशात् दृष्टं श्रुतं च यद्रूपं तदेवंशब्देन परामृश्यत इति, कर्मधारये गीतायां प्रथमान्तस्यान्वयाभावः । बहुव्रीहि-पक्षे दृष्टश्रुतरूप इति गीतानुसारेण पुंलिङ्गत्वापत्तिरित्याशङ्क्य बहुव्रीहिपक्षमङ्गीकृत्य तत्रोक्तं दोषं परिहर्तुमाह दृष्टं श्रुतं रूपं यस्य ब्रह्मणः तत्तथेति । एवंभूतं दृष्टश्रुतरूपयुक्तब्रह्मशब्दवाच्यार्थाभिन्नं त्वामुपासत इति गीतायामन्वयामन्वय इत्याशय इति भावः । प्रयोगादिति भाष्ये महतः परत्वलिङ्गेन

पुरुषावरत्वलिङ्गेन च अव्यक्तशब्देन चेतनप्रकृतिरेव ग्राह्येति भावः । श्रीदेव्यां त्रिगुणत्वादिकं अभिमान्यधिकरणन्यायेन घटयति **त्रिगुणमित्यादि** । अविशेषत्वं प्रधानशब्दवाच्यत्वे विशेषवत्त्वं प्रकृतिशब्दवाच्यत्वे हेतुरिति भावेनोक्तं **तत इत्यादिना** । भाष्ये 'भागवत' इत्यतःपरं प्रयोगादव्यक्तं प्रकृतिरित्यनुवृत्त्या **योज्यम्** । प्रकृतिरिति प्रकृतत्वेऽपि क्लीबत्वं घटयितुमाह **प्रकृताख्यं तत्त्वमिति**। श्रीतत्त्वमित्यर्थः । नानेन वचनेन श्रीतत्त्वस्याक्षरशब्दार्थत्वे सिद्ध्यति । अक्षरात्परं किञ्चिद्वस्तु ततोऽपि भगवानित्येवात्र प्रतीतेरित्यतो व्याचष्टे **परतः परोऽत्युत्तम इति** । प्रथमान्ता तसिना परः पर इति लाभे शब्दाधिक्यादर्थे अत्यतिशयो लभ्यत इति भावः । अक्षरात्परत इति पञ्चम्योः सामानाधिकरण्ये जडप्रकृत्यादेरुत्तमाच्छ्रीतत्वात्पर इत्युक्ते अत्युत्तम इति लभ्यत इति भावेनेयमुक्ति-रित्यप्याहुः । अदृश्यत्वाधिकरणसूत्रभाष्यादौ तु अक्षरात्परत इत्यत्र अक्षरशब्दो जडप्रकृत्यर्थो व्याख्यातः । 'इति च श्रुतेः' इति भाष्ये चशब्देन 'कूटस्थोऽक्षर उच्यते । लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः' इत्यादि वचनसमुच्चय इत्याहुः । ननु 'ये चाप्यक्षरमव्यक्तम्' इति गीताक्रमानुसारेण अक्षरशब्दं व्याख्याय अव्यक्तशब्दो व्याख्यातव्यः । तत्कुतो व्युत्क्रमेण व्याख्यानमित्यतः तत्र बीजं वक्तुमाह **अत्रेति** । वैपरीत्ये नियामकमाह **अव्यक्तासक्तेति** । अतः विशेष्यसमर्पकतया प्राधान्यात् ।

नन्वव्यक्तोपासकाः श्रेष्ठाः भवदुपासका वेति प्रश्नकरणसम्भवात् किमक्षरमिति विशेषणोपा-दानकृत्यमित्यत आह **विशेषणोपादानं चेति** । **देवतान्तरवैलक्षण्येति** । अक्षरदेहत्वं ह्यक्षरशब्द-प्रवृत्तिनिमित्तं तच्चाव्यक्तशब्दितश्रीदेव्यामेव, 'लक्ष्मीरक्षरदेहत्वादक्षरा' इति वचनात् ब्रह्मादिदेवता-न्तरस्य तु नाक्षरदेहत्वं, 'ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात् क्षरा' इति वचनात् । तथाचेतर-विलक्षणमहिमश्रीदेव्युपासकाः श्रेष्ठा इति प्रश्नः सम्भवतीति । तत्सम्भावनार्थं विशेषणमुपात्त-मित्यर्थः । तर्हि देवतान्तरवैलक्षण्यस्य गीतायामेव स्पष्टमावेदनात् प्रश्नसम्भावनार्थं महच्च माहात्म्य-मित्यादि भाष्ये व्यर्थमित्यत आह **एतदेवेति** । अक्षरशब्देन इतरमाहात्म्यं उपलक्षया गृहीत्वा तस्य नानाश्रुत्यादिप्रदर्शनेन विभावनात् प्रपञ्चितमित्युक्तम् । परं तु ब्रह्म भगवतो वासुदेवादन्यदस्ति । तद्विषयौ च पूर्वोत्तरार्धाविति सङ्करव्याख्यानं न युक्तम् । यतो भागवते ब्रह्मवासुदेवयोरभेद एवावेदित इति भाष्यार्थः स्फुटत्वान्नोक्तः ।

भाष्यम्

**परं तु ब्रह्म न हि भगवतोऽन्यत् । "आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे" इति भागवते ।**

*प्र०दी०*— अन्ये तु 'ये त्वां भगवन्तं वासुदेवमुपासते, ये चाप्यक्षरमव्यक्तं परं ब्रह्म, तेषां के योगवित्तमाः' इति व्याचक्षते । तदसदित्याह परं **त्विति** । 'आनन्दम्' इत्यादेः पूर्वेणोत्तरेण च अन्वयो द्रष्टव्यः । तथा च ये त्वां पर्युपासते ये च त्वामित्युक्तं स्यात् । तथा च उन्मत्तप्रलापत्वप्रसङ्ग इति भावः ।

*भा०दी०*— **पूर्वोत्तरेण चेति** । द्वितीयस्कन्धे द्वितीयाध्याय एव 'उपैति शान्तिमानन्दम्' इति पूर्वेण 'एतां गतिम्' इत्युत्तरेणेत्यर्थः ।

अयमर्थः । देवानां स्वस्वोत्तमदेवप्राप्तिद्वारा भगवति सायुज्यमुक्त्युक्तिप्रस्तावे 'तेनात्मना आत्मानमुपैति शान्तिम्' इति पूर्ववाक्ये हरिः शान्तिशब्दितचित्प्रकृतिस्थम् आनन्दमात्मानं स्वात्मानमेव तेनात्मना विरिञ्चेन सहोपैति । स आनन्दमयः पूर्णानन्दो हरिः द्विपरार्धावसाने सर्वान्तर्यामिणि ब्रह्मणि स्वमूलरूपमुपैति । एवं स्वस्वबिम्बद्वारेण हरिं प्रविष्टानामपुनरावृत्तिः । एतां गतिं भगवतो गतिं गतो यः स वै 'पुनर्नेह विषज्जते अङ्ग' इति उत्तरवाक्येणोच्यते । यो भागवतो वासुदेवे एतां सायुज्यलक्षणां गतिं गतः सः इह संसारे न विषज्जत इति । तथाच अपुनरावृत्तिप्राप्तिहेतुः वासुदेवः कथं न परब्रह्मेति भावः ।

*भा०र०*— ननु भागवतवाक्यमन्वयाभावेनाबोधकत्वादमानमित्याशङ्क्याह **आनन्दमित्यादेः पूर्वेणोत्तरेण चान्वयो द्रष्टव्य इति** । आनन्दमिति द्वितीयान्तपदस्य 'तेन आत्मनात्मानमुपेति शान्तिम्' इति पूर्वश्लोकगतेन शान्तिमानन्दमुपैति इति क्रियापदेनान्वयः । आनन्दमय इति प्रथमान्तपदस्य 'वासुदेवे एतां गतिं गतो नेह विषज्यत' इति तत्तात्पर्यनिर्णयोक्तरीत्या उत्तरार्धे श्रुतेन न विषज्यत इति क्रियापदान्तेनान्वय इत्यर्थः ।

तथा च अयं श्लोकार्थः— 'सभूतसूक्ष्मेन्द्रियसन्निकर्षादि'ति पूर्वश्लोके स इति परामृष्टो भगवान् ज्ञानी च विज्ञानतत्त्वं विज्ञानतत्त्वाभिमानिदेवतागतं विज्ञाननामानं याति । तेन विज्ञानतत्त्वं गतेन आत्मना भगवता गुणसन्निरोधं गुणानां सत्त्वरजस्तमसां सम्यगत्यन्तं निरोधो वैधुर्यं यस्मिन् तन्निर्गुणमात्मानं भगवन्तं याति तेनात्मना शान्तिं शान्तिशब्दवाच्यचित्प्रकृतिस्थितं आनन्दमानन्दनामानं आत्मानं भगवन्तमुपैति । तथा च आनन्दः आनन्दमयः भगवत्प्रसादोद्रिक्तपरमानन्दमूर्तिरसन्वसाने द्विपरार्धावसाने सर्वात्मके सर्वान्तर्यामिरूपाभिन्ने बृंहणात्स्वस्य योग्यतानुसारेण भक्तानां बृंहयितृत्वाच्च ब्रह्मशब्दवाच्ये वासुदेवे एतां ज्ञानिनः प्रलये सर्वे ब्रह्मणा सह पार्थिवं परमात्मानं आविश्य वारिस्थं ईशो शंवतोऽहङ्कारगं हरिं तत आनन्दनामानमव्यक्तस्थं जनार्दनं प्राप्तानां

वृत्तिमायान्तीति शास्त्रोक्तां गतिं सायुज्यलक्षणां मुक्तिं गतः । जात्यर्थकर्मकेत्यादिना गमेः कर्तरि क्तः गतवान् यो भगवत आत्यन्तिकभगवद्भक्तिमान्, सः ज्ञानिजीवः पुनरिह संसारे न विषज्यते नावर्तत इति यावत् । वैशब्दात् 'न स पुनरावर्तत' इति श्रुतिः प्रसिद्धिमर्हति । भागवतटीकायां तु आनन्दमयः पूर्णानन्दो विष्णुः सर्वात्मके सर्वान्तर्यामिणि ब्रह्मणि स्वमूलरूपे विहरतीति शेषः । इत्येषां देवानां मुक्तिरिति भावः । एवं स्वस्वबिम्बद्वारेण भगवन्तं प्रविष्टानां पुनरावर्तिर्नास्तीत्यत आह **वासुदेवमिति** । यो भागवतो वासुदेवे एतां सायुज्यलक्षणां गतिं गतस्सब्रह्मादिजीवसङ्घः न विषज्यति वैशब्देनानन्दसंज्ञकेनापि ब्रह्मणा जीवस्यैक्यं, समुद्रे प्रविष्टनदीवदिति दयतीति व्याख्यातम् । दीपिकायां तु गुणसन्निरोधं निर्गुणं वासुदेवमिति तात्पर्ये द्वितीयान्तं पूर्वान्वितमेकं वाक्यम् । एतां गतिं गतो नेह विषज्यत इत्यपरं वाक्यमिति वाक्यद्वयं पठित्वा तद्वयं चोपपादितोपपादकपरतया व्याख्याय भागवतगतसप्तम्यन्तवासुदेवपदस्य प्रविशतीत्यध्याहृतक्रियापदेनान्वय इत्युक्तम् । एवं च भागवते भगवतो वासुदेवस्यैव परब्रह्मत्वावेदनान्न परव्याख्यानं शोभां बिभर्तीति भाष्यभाव इत्याह **तथाचेति** । उन्मत्तप्रलापत्वप्रसङ्गः ।

भाष्यम्

**रूपं चेदृशं साधितं पुरस्तात् । उपासनं च तथैव कार्यम् । "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" इत्यारभ्य, "तमेवं विद्वान् अमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति हि सा अभ्यासा । आदित्यवर्णत्वादिश्च न वृथोपचारत्वेनाङ्गीकार्यः ।**

***प०टी०***— 'अव्यक्त-अक्षर'शब्दाभ्यां निर्गुणब्रह्मेत्यपव्याख्यादूषणायाव्यक्तादिपदं सप्रमाणकं व्याचष्टे **उपासनं चेति** । 'तमेवं विदित्वा' **इत्यभ्यासः** । आदित्यवर्णत्वसहस्रशिरस्त्वाद्यु... निर्गुणमिति प्रश्नार्थः किं न स्यात् ? इत्यत आह **आदित्येति** । वृथेति बाधकाभावात् ।

***प्र०दी०***— ननु भगवान् करचरणादिमद्रूपवान् । **परं ब्रह्म तु** नेदृशरूपवत् । 'अशब्दमस्पर्शमरूपम्' इत्यादिश्रुतेः । अतः कथमेतत् ? इत्यत आह **रूपं चेति** । पराभ्युपगतस्य ब्रह्मणोऽपीति शेषः । अस्तु भगवानेव परं ब्रह्म । किन्तु ये त्वामेवं साकारमुपासते, ये चाव्यक्तं निराकारं तेषां के योगवित्तमाः ? इति प्रश्नार्थ इत्यत आह **उपासनं चेति** । **तथैव** रूपवत्तयैव । स्यादयं प्रश्नार्थः, यदि रूपवत्त्वारूपवत्त्वाभ्यां भगवदुपासनं कार्यं स्यात् । न त्वैतदस्ति । किन्तु रूपवत्तयैव । अन्यस्य मिथ्योपासनत्वेनानर्थहेतुत्वादिति भावः ।

कुत एतत् ? इत्यत आह **सहस्रेति** । 'आरभ्य' इत्यनेन 'ब्राह्मणोऽस्य मुखम्' इत्यादेः, 'आदित्यवर्णं तमसः परस्तात्' इत्यादेश्च ग्रहणम् । अभ्यासशब्देन तत्फलनियमो लक्ष्यते । श्रुतिः 'साकारोपासनं मोक्षसाधनमाह' इति शेषः । नन्वत्रोच्यमान आदित्यवर्णत्वादिः आकारः अतमस्कत्वादिसादृश्यादुपचरित एवेत्यत आह **आदित्येति** । **वृथा** बाधकेन विना । उपचर्यत इत्युपचारः ।

केचित् 'सहस्रशीर्षा' इत्यादिकं हिरण्यगर्भविषयमिति मन्यन्ते । अतस्तद्विधूयेश्वरविषयतया स्वमतं गृहीतुम् 'आदित्य' इत्याद्युक्तम् ।

***भा०दी०*—** उपासनाफलवाक्यमुक्त्वा (उपासनं चेति फलवाक्यमुक्त्वा) 'सा अभ्यासा' इत्युक्तिः अयुक्तेत्यत आह **अभ्यासशब्देनेति** । 'कथं सा अभ्यासा' इत्यस्य तं पुरुषमेवं सहस्रशीर्षत्वादिप्रकारेण विद्वान् अमृतो भवति । नान्यो मार्गोऽस्ति मोक्षाय इति, रूपवत्तयोपासनस्य फलनियमोक्तिरूपेत्यर्थः । 'सा अभ्यासा' इत्यस्याकाङ्क्षां पूरयति **श्रुतिरित्यादिना** । उपचारशब्दः कर्मणि व्युत्पन्नः । अतः आदित्यवर्णत्वादिश्चोपचारत्वेनेत्युक्तमिति भावेनाह **उपचर्यत इतीति** । अन्यथा शब्दधर्मत्वादुपचारकल्पनस्यात्र अनन्वयः स्यादिति भावः । 'सहस्रशीर्षा' इति वक्तव्ये 'आदित्य' इत्याद्युक्तेर्बीजमाह **केचिदिति** ।

***भा०र०*—** अर्जुनप्रश्नस्य अशब्दमस्पर्शमरूपमव्ययमित्यादि श्रुतेरिति, यद्यप्यत्र श्रुतौ रूपशब्दः शब्दस्पर्शप्रायपाठात् शुक्लपीतादिगुणवाचकः । तथा च तत्त्वप्रकाशिकाशब्दादि गुणशून्यमिति । एवं च विग्रहभावेनेदं प्रमाणं भवति तथापि महत्त्वसमानाधिकरणोद्भूतरूपाभावे करचरणादिमद्देहवत्त्वमप्ययुक्तमेवेत्येतत् श्रुतिसामर्थ्यादवगन्तव्यमिति भावेन स्वभावकृतिसौन्दर्यवपुषु श्लोकशब्दयो रूपमिति अभिधानादत्र रूपशब्दः आकारार्थश्चेति भावेन वा अत्रैतच्छ्रुत्युदाहरणम् । आदिपदेन अपाणिपादो जवनः तदपाणिपादमित्यादिश्रुतिपरिग्रहः । एतदुन्मत्तप्रलापप्रसञ्जनम् । ईदृशमिति भाष्यपदस्य करचरणादिमदित्यर्थः । पुरस्तादित्यत्र भाष्ये कथमन्यथा सर्वपुराणादिप्रसिद्धाकृतिर्भगवत उपपद्येत । न चान्यद्भगवत उत्तमं ब्रह्मेत्यादिना द्वितीयान्त इति शेषः । **पराभ्युपगतस्य** = निराकारत्वेन पराभ्युपगतस्य । तथा च द्वितीयान्ते भाष्यं न च तद्ब्रह्मणो शरीरत्वादेतत् कल्प्यम्, तस्यापि शरीरश्रवणात् आनन्दममृतमित्यादि तस्य पराभिमतस्य ब्रह्मण इति हि तत्र टीका । एवमिति गीतापदार्थः । साकारमेति परचोदितप्रश्नार्थोऽनेन कथं दूषित इत्यतो भाष्यभावमाह **स्यादिति** । एतत् रूपवत्त्वारूपवत्त्वाभ्यां भगवदुपासनं कार्यमिति एतत् । तथा मानाभावादिति भावः । अरूपत्वेन भगवदुपासने को दोष इत्यत आह **अन्यस्येति** । **अनर्थ-**

**हेतुत्वादिति** । अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्यामिति शास्त्रादन्यथोपासका ये तु तमोऽन्धं प्राप्नुवन्तीत्यादि वचनाच्चेति भावः । एतत् रूपवत्तथैवोपासनं कार्यमित्येतत् । ब्राह्मणोऽस्य मुखमित्यत्र मुखरूपाकारश्रवणादादित्यवर्णमिति विग्रहो पापस्थानाच्चाह **ब्राह्मणोऽस्य मुखमित्यादि** । नन्वेकप्रकारासकृदुक्तिः अभ्यासः । न च सहस्रशीर्षेत्यादावसकृदुक्तिरस्ति । तत्कथमभ्यासशब्द इत्यत आह **अभ्यासशब्देनेति** । तत्फलं = अभ्यासफलम् । नियमः = अवधारणम्। लक्षणाबीजसम्बन्धद्योतनाय तत्फलमित्युक्तम् । अभ्यासस्य हीदमित्थमेवेत्यवधारणं फलम् । तमेवमिति वाक्येन च तं पुरुषमेवं सहस्रशीर्षत्वादिना प्रकारेण विद्वानमृतो भवति । मोक्षाय साधनान्तरं नास्तीति आवेदनान्मोक्षाय रूपवत्तथैव भगवदुपासनं कार्यम्, न निराकारतयेत्यवधारणं प्रत्याययितुं भाष्ये साभ्यासेत्युक्तमिति भावः । केचित्तु तत्फलनियमो लक्ष्यत इति पठन्तः आकारवतैवोपासने मोक्षफलं न निराकारतयोपासने इति तत्फलनियमोऽभ्यासपदेन लक्षणया ग्राह्य इत्यर्थे इत्याहुः । साभ्यासेत्यनन्तरं भाष्ये शेषमाह **श्रुतिस्साकारोपासनं मोक्षसाधनमाहेति** । शेष इति भाष्येत्यारभ्येत्यनन्तरं पठ्यमानेत्यपि शेषो वक्तव्यः । तेन ल्यबुपपत्तिः । अवमस्कत्वादि सादृश्यात् तमःशून्यत्वसुवर्णत्वतेजीयस्त्वादि सादृश्यात् । ननूपचारो गौणी वृत्तिः । वृत्तिश्च शब्दधर्मः । यदाहुः 'तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता । उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः' इति । तत्कथमादित्यवर्णत्वादिरूपेऽर्थे उपचारशब्द इत्याशङ्क्य, कर्मणि घञन्तोऽयमुपचारशब्द इति युज्यतेऽर्थेऽप्युपचारशब्द इत्याह **उपचर्यत इतीति** ।

ननु प्रथमोपस्थितत्वात् तथैव भाष्ये पाठाच्च सहस्रशीर्षत्वादिश्च न वृथोपचारत्वेनाङ्गीकार्य इति भाषणीयम्, तत्किमर्थमादित्यवर्णत्वादिश्चेत्युक्तमित्यत आह **केचिदिति** । **हिरण्यगर्भविषयमिति** । 'तस्माद्विराडजायते'ति ब्रह्माण्डोत्पादकत्वलिङ्गात् प्रजापतिश्रुतेश्चेति भावः ।

भाष्यम्

**तथा च सामवेदे सौकरायणश्रुतिः— "स्थाणुर्ह वै प्राजापत्यः । स प्रजापतिं पितरमेत्य उवाच— मुमुक्षुभिः साधुभिः पूतपापैः किमु ह वै तारकं तारवाच्यम् । ध्यानं च तस्यासरुचेः कथं स्याद् ध्येयश्च कः पुरुषोऽलोमपादः" इति । तं होवाच— "एष वै विष्णुः तारकोऽलोमपादो ध्यानं च तस्यासरुचेर्वदामि । सोऽनन्तशीर्षो बहुवर्णः सुवर्णो ध्येयः स वै लोहितादित्यवर्णः । श्यामोऽथ वा हृदये सोऽष्टबाहुरनन्तवीर्योऽनन्तबलः पुराणः ॥" इति । अरूप-**

**त्वादेस्तु गतिरुक्ता । पुरुषभेदश्च प्रश्नादौ प्रतीयते । "त्वां पर्युपासते", "ये चाप्यक्षरमव्यक्तम्" इत्यादौ ॥ १-२ ॥**

***प०टी०***— सविचारे सावयवतावध्येयत्वोक्तेश्चोपासनं तथैव कार्यमित्याह **तथा चेति** । **राधुभिः** राधनशीलैः । **किं तारवाच्यं संसारतारकम्** ? इति प्रश्नस्यैष परिहारः । **ध्येयश्च कः** ? इत्यस्य **ध्येयः स वै** इति परिहारः । **अलोमपादोऽसौ कथं ध्येयः** ? इत्यस्य **अलोमपादोऽपि ध्येय इत्याह** इति परिहारः । लोमपादादिशून्यस्यापि नानवयविनो ध्यानं युक्तमित्यभिप्रायः । तर्हि 'अरूपमव्ययम्' इत्यादेः का गतिः ? इत्यत आह **अरूपत्वादेरिति** । इतश्च सशरीरं वाऽशरीरं वेत्यर्थो न भवतीत्याह **पुरुषेति** ॥ १-२ ॥

***प्र०दी०***— उपचारानर्हां चात्र श्रुतिमाह **तथा चेति** । **स्थाणुः** रुद्रः । **प्राजापत्यः** प्रजापतेरपत्यम् । **साधुभिः** साधकैः । **तारकं** संसारस्य । **तारः** ॐकारः । **आप्तरुचेः** व्याप्ततेजसः । 'लोम' इति केशवचनम् । 'लोमपाद' इति द्वन्द्वः । न विद्यन्ते लोमान्तपादाद्यवयवाः यस्यासावलोमपादः। तं स्थाणुम् **उवाच प्रजापतिः** । **सुवर्णः** सुवर्णवर्णः । अत्र **मुमुक्षुभिः** **को ध्येयः** ? इत्येकः प्रश्नः। **तारवाच्यं** तारकं वस्तु किमिति द्वितीयः ।

तस्य ध्यानं कथं स्यात् ? किं साकारतया, उत निराकारत्वेन ? नाद्यः । अलोमपादो ह्यसावुच्यते । न द्वितीयः, बुद्ध्यावनारोहात् इति तृतीयः । तत्राद्यद्वितीययोरर्थतो न भेदः । तारकस्यैव मुमुक्षुध्येयत्वादित्यभिप्रेत्य द्वयोरेकमेवोत्तरमाह 'यः त्वया मुमुक्षुध्येयः तारकः पृष्टः एषः विष्णुः' इति । 'यद्यप्यसावलोमपाद उच्यते तथाऽपि तस्य साकारस्यैव ध्यानं वदामि' इति तृतीयस्य ।

यदि ब्रह्म साकारमेव तद्ध्यानं च तथैव कार्यम्, तर्हि 'अशब्दमस्पर्शमरूपमव्ययम्' इत्यादेः का गतिः ? इत्यत आह **अरूपत्वादेस्त्विति** । लौकिकरूपाद्यभावरूपा । एतेन अलोमपाद इत्यस्याभिप्रायोऽप्युक्तो भवति । इतोऽपि न परोक्तः प्रश्नार्थ इत्याह **पुरुषेति** । एवं हि व्याख्याने ध्येयस्यैव ध्यानं द्वेधेत्युक्तं स्यात् । अत्र तु ध्येयौ पुरुषौ द्वौ प्रतीयेते । अतश्च नैवमित्यर्थः । प्रश्नस्य एकध्येयविषयतया कथञ्चिद्व्याख्यानेऽप्युत्तरं निरवकाशमित्याशयेन आदिग्रहणं कृतम् ।

किञ्च साकारोपासनेन विशुद्धाशये निराकारमुपास्ते इत्येकस्यैव क्रमेण ध्येयद्वयमिति परेषां सिद्धान्तः । अत्र तु उपासकपुरुषभेदः प्रतीयते । ततोऽपि नान्योऽर्थ इत्याह **पुरुषेति** । उत्तरापव्याख्याननिराकरणं तु तात्पर्यनिर्णय इत्युक्तमेव व्याख्यानमिति स्थितम् ॥ १ ॥ २ ॥

*भा०दी०*— श्रुत्यर्थस्य गहनत्वाद्विवेकमाह **मुमुक्षुभिरिति**। 'को ध्येयः' इति शेषोक्तिः। एवमग्रेऽपि। **तृतीयस्येति**। 'उत्तरम्' इत्यनुकर्षः। **एवं हि व्याख्यानमिति**। 'अस्तु भगवानेवायं परं ब्रह्म' इत्यादिना प्रागुक्तव्याख्यानमित्यर्थः। **एकध्येयेति**। विशेष्यैक्याभिप्रायेणेति भावः। **निरवकाशमिति**। ध्यानद्वयस्य उत्तमाधमरूपफलभेदोक्त्या ध्येयद्वयस्यैव प्रतीतेरिति भावः। **तात्पर्यनिर्णय इति**। 'ये तु तेमे युक्ततमा मताः' 'मय्येव मन आधत्स्व' इत्यादौ भगवतोक्ते-ऽप्यव्यक्तोपासकानामाधिक्यं वदन्ति। ते त्वपलापकत्वादतिसाहसिकत्वात् सुशोच्या इत्यादिना ग्रन्थेनेत्यर्थः॥ १-२॥

*भा०र०*— उपचारानर्हां स्थाणूरुद्र इत्यत्र द्रलोपे पूर्वस्य दीर्घ इति दीर्घः। वेदे राधसाधसंसिद्धावित्यतः कर्तरि उप्रत्यये राधुशब्द इति भावेन तदर्थमाह **साधकैरिति**। भावप्रदीपिकायां तु ताच्छील्यादर्थादुनस्तथेति शास्त्रात्ताच्छील्यविशिष्टे कर्तर्युन्प्रत्ययमङ्गीकृत्य राधनशीलैरित्युक्तम्। संसारस्येति तु शेषः। तारवाच्यमित्यत्र तारशब्दार्थकण्टकार इति तरन्त्यनेन संसार इति तार इति सुधा। ननु साकारतया भगवदुपासनं न कर्तुं शक्यम्। तस्यालोमपादत्वादिति वक्तुं 'अलोमपादो ह्यसौ उच्यत' इति श्रुत्युक्तमयुक्तं लोमयुक्तपादत्वाभावेऽपि साकारोपासनोपपत्तिरित्याशङ्क्य 'तनूरुहं रोमलोमे'त्यभिधानेनाङ्गरुहवाचिनापि लोमशब्देन शिरोरुहकेशग्रहणं चरणवाचिना पादशब्देन चाङ्घ्रिग्रहणम्। ताभ्यां च लोमपादपदाभ्यां केशान्तपादादि सर्वावयवाः लक्षणया विवक्षिताः। तत्र च कर्मधारयादेरसम्भवाल्लोमानि पादौ चेति द्वन्द्वानन्तरं नञा समासे अलोमपादशब्देन सकलावयवराहित्यं निराकारत्वं लभ्यत इति, अयुक्तं साकारोपासनमिति युक्त एव कथमित्याक्षेप इति भावेनाह **लोमेति केशवचनमित्यादिना**। बहुवर्ण इत्युक्तं बहुवर्णत्वं विशदयितुं सुवर्णलोहितादित्यवर्णत्वं श्यामत्वं च सुज्ञानं सुवर्ण इति प्रसिद्धेरियमुक्तिः। श्रुतौ कति प्रश्नः। कति चोत्तराणीति। शोभनवर्णत्वमात्रं प्रतीयते न तु वर्णविशेष इत्यतोऽत्र प्रकृतोपयोगार्थमाह **सुवर्णवर्ण इति**। रुक्मवर्ण इति न ज्ञायत इत्यतो विवेकं दर्शयति **अत्र मुमुक्षुभिरित्यादिना**। अनेनैवातिव्यवहितानां पदानामन्वयश्च दर्शितो भवति। तारवाच्यं तारकं संसारस्य। द्वितीयं प्रश्न इत्यनुवर्तते। असौ ध्येयः पुरुषः। तृतीय प्रश्नः शब्दतोभेदस्य स्फुटमवभासादुक्तमर्थत इति तदेवाह **यस्त्वयेति**। तृतीयस्य प्रश्नस्य उत्तरमाहेत्यनुवर्तते। ध्यानं च तस्येति शेषः। **तथैव** = साकारतयैव। गतिरुक्तेति भाष्ये द्वितीयान्त इति शेषः। **अभिप्राय इति**। अलोमपाद इत्यस्य लौकिककेशपादाद्यवयवराहित्यं विवक्षितमित्यभिप्रायः। प्रश्नार्थः— ये त्वामेवं साकारमुपासते ये चाप्यव्यक्तं निराकारमित्यादिनोक्तः, द्वेधा साकारत्वेन निराकारत्वं नेति द्वेधा, अत्र 'त्वां पर्युपासते ये चाप्यक्षरम्' इति गीतायां पुरुषौ महापुरुषोऽक्षरशब्दितकूटस्य पुरुषश्चेति द्वौ पुरुषौ। वासुदेवे पुरुषत्वस्य

सुप्रसिद्धत्वात् 'अक्षरात्परतः परः', 'अक्षरादपि चोत्तमः' इत्यादावक्षरशब्दस्य च कूटस्थ पुरुषार्थत्वादिति भावः । **एकध्येयविषयतयेति** । ये त्वां एवं साकारमुपासते ये चाप्यव्यक्तं निराकारं त्वामिति विशेष्यैक्याभिप्रायेण प्रश्न इत्येकध्येयविषयतयेत्यर्थः । उत्तरार्धे त्वामित्यस्य अनुवृत्तिप्रसङ्गव्यक्तमित्यनेनैव पूर्तावक्षरमित्यस्य वैयर्थ्यप्रसङ्गश्चाच्छादन इति भावेनोक्तं **कथञ्चिदिति** । उत्तरं **निरवकाश इति** । 'ते मे युक्ततमा मताः' इति यस्त्वात्मोपासका एवोत्तमा इति भगवता वक्ष्यमाणमर्जुनप्रश्नस्योत्तरं, न तन्निर्गुणोपासकोत्तमत्वपरतयाऽऽशङ्क्य व्याख्यातुम् । 'मय्यावेश्य मनो ये माम्' इत्यस्मच्छब्देन वासुदेवस्यैव ग्राह्यतयाऽन्यत्रानवकाशादिति भावः । प्रकारोक्तप्रश्नार्थे दूषणान्तरपरत्वेन पुरुषभेद इति भाष्यमेव प्रकारान्तरेणावतारयति **किं चेति** । विशुद्धाशयः = परिशुद्धान्तःकरणः । एकस्यैव उपासकस्य द्वयं सगुणोपासनं निर्गुणोपासनमिति उपासनद्वयम् । **उपासकपुरुषभेद इति** । 'ये त्वां पर्युपासते ये चाप्यक्षरमव्यक्तम्' इति चशब्दो ह्यसमुच्चयस्य समुच्चेयपुरुषभेदाविनाभावादिति भावः । ननु यदुक्तमुत्तरं निरवकाशमिति न तद्युक्तम् । यतः सङ्करः ये अक्षरोपासकाः सम्यग्दर्शिनः निवृत्तेषणास्त्वेतावत्तिष्ठन्तु तत्र यद्वक्तव्यमक्षरोपासकानां श्रैष्ठ्यं तदुपरिष्टात् ये त्वक्षरमनिर्देश्यमव्यक्तमित्यत्र वक्ष्यन् विश्वरूपपरमेश्वरोपासकान् योगवित्तमान् । भगवता च मय्यावेश्येत्युत्तरार्ध इति व्याचख्यौ । प्रश्नस्य परिहारानुसारेण योज्य इति न भाष्यकारीयं प्रश्नव्याख्यानं युक्तमित्यत आह **उत्तरापव्याख्याननिराकरणं त्विति** । 'ये तु ते मे युक्ततमा मताः, मय्येव मन आधत्स्व' इत्यादौ भगवतोक्तेऽपि अव्यक्तोपासकानामाधिक्यं वदन्ति ते त्वपलापकत्वादतिसाहसिका इति सुशोच्या एवेति । गीतातात्पर्यनिर्णये ते मे युक्ततमा मता इति भगवदुपासकानामुत्तमत्वमुक्त्वा मय्येवेति मदुपासकानामुक्तत्वान्मदुपासक एव भवेति स्फुटमुक्तत्वादव्यक्तोपासकानामाधिक्यं वदतां अपलापकत्वमेव । ततश्च साहसिकत्वादहो नष्टा एते इति शोकविषयत्वमेव । न तु परिहारं वक्तुं प्रतिवादित्वमिति सङ्करकृतं प्रत्युत्तरापव्याख्यानं प्रत्याख्यातमिति भाष्यकारीयं प्रश्नव्याख्यानमेव स्थितमित्यप्यर्थः ॥ १-२ ॥

*गीताक्षरार्थस्तु*— श्रीदेवीशब्दिताव्यक्तोपासनात् भगवदुपासनस्य उत्तमत्वसिद्धये भगवदुपासनोपायप्रदर्शनमस्मिन्नध्याये क्रियते । तदुपायप्रदर्शनं च भगवदुपासनाधिक्यज्ञापनार्थमेव इति अध्यायस्यैकवाक्यता आधिक्योपासनगोचरत्वलक्षणभगवन्माहात्म्यस्य प्रतिपादयिषित्वात् तन्माहात्म्यप्रतिपादनपरषट्कान्तर्भावश्च । 'एवं सततयुक्ता ये' इत्यर्जुनप्रश्नसङ्गतिप्रदर्शनेनैवानन्तर्यलक्षणापि सङ्गतिर्ज्ञायते । तत्र तावत् 'तमेवं विद्वानमृत इह भवति', 'तमेवं विदित्वातिमृत्युमेति', 'तरति शोकमात्मवित्' इत्यादौ भगवज्ज्ञानस्य मोक्षसाधनत्वं प्रतीयते । ज्ञानं च नोपासनं विना नानि-

ष्पद्यत इति तदुपासनमिति मोक्षसाधनमेष्टव्यम् । श्रूयते च मुमुक्षुभिः साधुभिः पूतयायैरिति भगवदुपासनं मोक्षहेतुरिति । तथा च यथा भगवदुपासनं मोक्षसाधनं तथा श्रीदेव्युपासनमपि, 'श्रियं वसाना अमृतत्वमायन्ननाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते । उपास्यन्तां श्रियमव्यक्तसंज्ञा भक्त्या मृत्योर्मुच्यते सर्वबन्धैः' इत्यादौ मोक्षसाधनं प्रतीयते । न चैवं प्रतीयमानमप्यव्यक्तोपासनस्य मोक्षसाधनत्वमुपचरितमेव । 'अन्तवत्तु फलं तेषाम्' इत्युक्तन्यायेन ब्रह्माद्युपासनस्येव तदुपासनस्याप्यन्तवत्फलत्वादिति वाच्यम् । वैषम्यात् । युक्तं ब्रह्माद्युपासनस्य मोक्षसाधनतायाः उपचरितत्वकल्पनम् । तेषां जननमरणादिदोषवत्त्वेन तदुपासनस्य जननमरणादिरूपमोक्षसाधनत्वस्यासम्भवात् । श्रीदेव्यास्तु 'चतुष्कपर्दा युवतिस्सुपेशा घृतप्रतीका वयुनानि वस्ते', 'चतुःशिखण्डा युवतिः सुपेशाः', 'अहं रुद्रेभिर्वसुभिश्चरामि', 'यं कामये तं तमुग्रं करोमि', 'अहं सुवे पितरमस्य मूर्धन्', 'परो दिवा पर एना', 'त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया, त्वया जुष्टश्चित्रं विन्दते वस्त्वि'त्यादौ नित्ययौवनज्ञानमयत्वसर्वदेवपूज्यत्वादिमहामाहात्म्यवत्त्वेनानावेदिताया मोक्षहेतुज्ञानविषयत्वासम्भवाभावाद्वास्तवमेव तदुपासनस्यापि मोक्षसाधनत्वमिति भगवदुपासनाव्यक्तोपासनरूपमार्गद्वयेनैकमेव मोक्षरूपं फलं प्राप्नुवतां मध्ये के श्रेष्ठा इति साधकबाधकप्रमाणाभावात् संशयः कस्यचिदविदितत्वपुंसो भवतीति तदनुजिघृक्षया भगवदुपासका एव श्रेष्ठा इति जानन्नप्यर्जुनः तत्र स्वविदितयुक्तिजिज्ञासया वा परकीयसंशयाध्याहारेणापृच्छदित्युच्यते **अर्जुन उवाच एवं सततयुक्ता इति** ।

ये भक्ताः सततयुक्ताः नैरन्तर्येण भगवति मनोयोगवन्तः सन्तः एवमेवम्भूतं दृष्टश्रुतरूपवन्तं त्वामेवं 'मत्कर्मकृन्मत्परम्' इत्याद्युक्तप्रकारेण पर्युपासते, ये चाप्यक्षरं देहतोऽपि क्षणरहितमिति विशेषणं देहक्षरणवद्भ्यो ब्रह्मादिदेवेभ्यो वैलक्षण्यप्रदर्शनेन प्रश्नसम्भावनार्थमुपात्तमव्यक्तं चित्प्रकृतिं पर्युपासते भक्तिश्रद्धातिशयेन ध्यायन्ति तेषां मध्ये के योगवित्तमाः अतिशयेन मोक्षोपाययज्ञेषु श्रेष्ठा इति शब्दोऽध्याहर्तव्यः । तस्य चोवाचेत्यन्वयः ।

एवं सन्दिह्य कृतप्रश्नस्य मदुपासका एवोत्तमा इति परिहार उच्यते **भगवानुवाच मयीति** । ये मयि मन आवेश्य = समाधाय नित्ययुक्ताः = नित्योद्योगशालिनः परयोत्तमया **श्रद्धया** = आस्तिक्यबुद्ध्या उपेताः सन्तो मामुपासते । ते मे मतिबुद्धिपूजार्थेभ्यश्चेति षष्ठी मम **युक्ततमाः** = साधकतमा मताः । अत्रापीति शब्दोऽध्याहार्यः ॥ १-२ ॥

गीता

# ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
# सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

*वि०वि०*— ननु त्वदुपासकानां मोक्षफलवत्त्वेनोत्तमत्त्वे, अधमत्वादव्यक्तोपासकानां मोक्षफलगामित्वं न स्यात्, ततश्च श्रुतिविरोध इत्यत आह **येत्त्विति** । अक्षरम् अविनाशि । सूक्ष्मत्वादनिर्देश्यम् । अप्रसिद्धत्वात्सर्वजगदुपादानप्रकृत्यभिमानित्वाच्चाव्यक्तम् । लक्ष्म्या नामैतत् । इतरत् विशेषणं सर्वत्रगम् । देशतो व्याप्तम् । गुणबाहुल्यादचिन्त्यम्— 'सूक्ष्मत्वादप्रसिद्धत्वाद्गुणबाहुल्यतस्तथा । अनिर्देश्यो तथाऽव्यक्तावचिन्त्यौ श्रीश्च माधवः ॥' इति वचनात् । कूटे आकाशे अभिमानित्त्वेन स्थितं कूटस्थम् । 'आकाशे संस्थिता त्वेषा सतः कूटस्थिता मता' इत्युक्तेः । अचलं कदापि स्वपदादभ्रष्टम् । 'न चलेत्स्वात्पदाद्यस्मादचला श्रीस्ततो मता' इति वचनात् । ध्रुवं निर्विकारम् ॥ ३ ॥

*सा०सं०*— नन्वव्यक्तोपासकानां मोक्षाभावे 'श्रियं वसाना अमृतत्वमायन्' इत्यादि श्रुतिविरोधः । मोक्षसत्वे च कथं त्वदुपासकानामेव युक्ततमत्वं फलसाम्यादित्यत आह **ये त्विति** । यद्वा, उक्तश्रुत्यादिनाऽव्यक्तोपासकानां मत्प्राप्तिरूपमोक्षसत्वेऽपि तदुपासनं कष्टसाध्यम् । मदुपासनं न तथा । अतो मदुपासका एवोत्तमा इत्याह **ये तु** इत्यादिना श्लोकपञ्चकेन । **अक्षरम**विनाशि । सूक्ष्मत्वात् । **अनिर्देश्यम्** । अप्रसिद्धत्वात् जगदुपादानप्रकृत्यभिमानित्वा**च्चाव्यक्त**नामकं श्रीतत्त्वम् । **पर्युपासते** । विष्णुभक्तिविष्णूत्तमत्वज्ञानविष्णूपासनादिपूर्वकमुपासते । तद्विशिनष्टि **सर्वत्रगमिति** । देशतो व्याप्तम् । गुणबाहुल्याद**चिन्त्यम्** । **कूटस्थं** कूटेऽव्याकृताकाशे अभिमानितया स्थितम् । कदाऽपि स्वपदादभ्रष्टत्वा**दचलम्** । **ध्रुवं** निर्विकारमिति ॥ ३ ॥

*अ०प्र०*— तर्हि इतरे किमश्रेष्ठाः ? ननु त्वदुपासकानां मोक्षफलत्वेनोत्तमत्वेऽधमत्वादव्यक्तोपासकानां मोक्षफलाभावः स्यात् ततश्चोक्तश्रुत्यादिविरोध इत्यत आह **ये त्विति** द्वाभ्याम् ।

ये तु भक्ताः[1], अक्षरं[2], अनिर्देश्यं[3], सर्वत्रगं[4], अव्यक्तादेव अचिन्त्यं[5], कूटस्थं[6], अचलं[7], ध्रुवं[8], एतादृशं अव्यक्तं[9], पर्युपासते[10] तेऽपि मामेव प्राप्नुवन्तीति उत्तरेणान्वयः ।

ये तु भक्ताः[1], अक्षरं = क्षरं न भवतीत्यक्षरं अविनाशि[2], अनिर्देश्यं = इदमिति मनोबुद्धीन्द्रियैः वा केवलध्यानेनापि वा निर्देष्टुमशक्यम् । सूक्ष्मत्वात् = अप्रसिद्धत्वात्[3], सर्वत्रगं = देश-

कालतो व्याप्तं सर्वव्यापी[४], अचिन्त्यं = अव्यक्तादेव अचिन्त्यं यद्वा, मनाद्यगोचरं गुणबाहुल्यात् । तदुक्तम्– 'सूक्ष्मत्वादप्रसिद्धत्वाद्गुणबाहुल्यतस्तथा । अनिर्देश्यौ तथाव्यक्तावचिन्त्यौ श्रीश्च माधवः' इति वचनात् ॥[५],

कूटस्थं = मायाप्रपञ्चे अन्तर्यामित्वेन स्थितम् । यद्वा, कूटे आकाशे अभिमानित्वेन स्थितं कूटस्थम् । तदुक्तम्— 'आकाशे संस्थिता त्वेषा ततः कूटस्थिता मते'ति वचनात् । यद्वा, कूटे गुणजन्यतत्त्वसमुदाये तिष्ठतीति तथा । अचलं वृद्ध्यादिरहितम् । यद्वा, कदापि स्वपदाद्भ्रष्टं न । तदुक्तम्— 'न चलेत्स्वात्पदाद्यस्मादचला श्रीस्ततो मता' इत्युक्तेः[७], ध्रुवं = नित्यं[८], एतद्गुणविशिष्टं अव्यक्तं = उपाधिहीनं यद्वा, सर्वजगदुपादानप्रकृत्यभिमानित्वात् अव्यक्तं व्यक्तं न भवतीत्यव्यक्तं[९], पर्युपासते = ध्यायन्ति[१०] तेऽपि मामेव प्राप्नुवन्तीत्युत्तरेणान्वयः॥ ३ ॥

**गीतातात्पर्यनिर्णयः**

**युक्ततमाः साधकतमाः ॥ २-३ ॥**

***न्या॰दी॰*— ये नित्ययुक्ताः ते युक्ततमा इत्ययुक्तम् । एकार्थत्वात् इत्यत आह युक्तेति ॥ नित्ययुक्तपदं नित्योद्युक्तार्थमिति च द्रष्टव्यम् ।**

**गीतातात्पर्यनिर्णयः**

**"विष्णोरन्यन्न स्मरेद् यो विना तत्परिवारताम् ।**
**तदधीनतां वाऽनन्ययोगी स परिकीर्तितः ॥" इति च ।**

*प्रका॰*— विष्णूपासकाः साधकतमाश्चेत् "अनन्येनैव योगेन मां ध्यायन्त" इत्यत्र अनन्ययोगपदं कथं घटत इत्यत आह **विष्णोरन्यदिति** ।

***न्या॰दी॰*— ननु "ये तु सर्वाणि" इत्यत्र अनन्ययोगेन भगवदुपासनस्योत्तमत्वम् उच्यते । अतः कथं श्रियासहितभगवदुपासनस्य आधिक्यकथनपरतयैतद्व्याख्यायत इत्याशङ्कां प्रमाणवाक्येनैव परिहरति विष्णोरिति ॥ नात्रानन्ययोगपदेन अन्योपासनसम्बन्धो निषिद्ध्यते । किन्त्वन्यस्य भगवदधीनत्वं तत्परिवारत्वं विनोपासनम् । अतो युक्तं प्राचीनव्याख्यानमिति भावः ।**

**गीतातात्पर्यनिर्णयः**

"अन्तवत्तु फलं तेषाम्" इत्यादिनाऽन्यदेवोपासनायाः पूर्वमेव निन्दितत्वात् लक्ष्म्यास्त्वतिसामीप्याद् विशेषमाशङ्क्य तदुपासनाविषय एव प्रश्नः कृतः ॥

*प्रका०*— "ये चाप्यक्षरमव्यक्तम्" इत्यनेन श्रीदेव्युपास्तिवत् देवतान्तरोपासनस्य मोक्षसाधनत्वं कस्मान्नाशङ्क्यते इत्यत आह **अन्तवत्त्विति** ।

***न्या०दी०***— ननु यदि भगवदुपासकानामिवाव्यक्तोपासकानामपि मोक्षश्रवणात् तदुपासनविषये किमुत्तममिति प्रश्नः क्रियते तर्हि "ज्ञात्वा शिवं शान्तिमत्यन्तमेति", "हरिं हरं विरिञ्चं च ज्ञात्वा मुच्येत संसृतेः" इत्यन्यदेवतोपासनस्यापि मोक्षहेतुत्वश्रवणात् तद्विषये किमिति प्रश्नो न क्रियत इत्याशङ्कां सिंहावलोकनन्यायेन परिहरति **अन्तवदिति** ॥ अन्यदेवतोपासनाया मोक्षसाधनत्वस्य पूर्वमेव निषिद्धत्वेन श्रुत्यादौ तदुक्तावपि तस्य अन्यार्थत्वं कल्पयित्वा अव्यक्तोपासनविषय एव प्रश्नः कृतो न अन्यदेवतोपासनविषय इति भावः । तर्हि सामान्यतो भगवदन्योपासनस्य मोक्षसाधनत्वस्य पूर्वमेव निषिद्धत्वेन अव्यक्तोपासनस्यापि तदभावप्राप्तेस्तद्वचनानामप्यर्थान्तरम् अकल्पयित्वा किमिति तद्विषये प्रश्नः क्रियत इत्यत उक्तं **लक्ष्म्या इति** ॥ सामान्यतो भगवदन्योपासनस्य मोक्षसाधनत्वनिषेधेऽपि लक्ष्म्याः भगवदतिप्रियत्वेनान्येभ्यो विशेषसद्भावात् तदुपासनस्य मोक्षसाधनत्वसम्भवेन निषेधस्य तदतिरिक्तोपासनविषयत्वं कल्पयित्वा अर्जुनेनान्योपासनविषयप्रश्नमकृत्वाप्यव्यक्तोपासनविषय एव प्रश्नः कृत इति भावः ।

*भा०दी०*— पूर्वमेवेति । सप्तमे "अन्तवत्तु फलं तेषामि"त्यादिना निषिद्धत्वेनेत्यर्थः ।

**गीतातात्पर्यनिर्णयः**

"वैष्णवान्येव कर्माणि यः करोति सदा नरः ।
जपार्चामार्जनादीनि स्वाश्रमोक्तानि यानि च ॥
स तत्कर्मेति विज्ञेयो योऽन्यदेवादिपूजनम् ।
कृत्वा हरावर्पयति स तु तद्योगमात्रवान् ॥
तत्र पूर्वो विशिष्टः स्यादादिमध्यान्ततः स्मृतेः ।
अवान्तरे च नियमाद् विष्णोस्तद्दासताऽस्य यत् ॥

**मनसा वर्ततेऽन्योऽपि यथाशक्ति हरिस्मृतेः ।**
**पूर्वोक्तयोग्यो भवति यदि नित्यं तदिच्छति ॥**

*प्रका०*— अव्यक्तदेवतोपसकाद्विष्णूपासकस्याधिक्यं वचनान्तरेण दर्शयन् ''ये तु सर्वाणि कर्माणी''त्यस्यार्थमाह **वैष्णवानीत्यादिना** ।

***न्या०दी०*— मदुपासनस्याधिकत्वात् तदेव कुरु । तदलाभे मां जानीहि । तदभावे चाभ्यासयोगेन मां जानीहि । तदभावे च मत्कर्मपरो भव । तदशक्तौ च मद्योगमाश्रितः कर्मफलत्यागं कुर्वित्युच्यते 'मयि' इति । तत्र मत्कर्मकृत्त्वमेव मद्योगः । अतः कथमेतदित्यतः स्मृत्यैव व्याचष्टे वैष्णवानीति ॥ सर्वकर्माणि वैष्णवानि करोतीति योजना । विष्णुविषयतया करोति इत्यर्थः । अर्चामार्जनं प्रतिमास्नापनम् । आदिपदेन ध्यानं च ग्राह्यम् । तद्योगमात्रवान् तत्कर्मत्वोपायमात्रवान् । अनेन मद्योगमिति मत्कर्मत्वयोगमिति व्याख्यातम् । यदि भगवत्कर्मत्वं कामयते तर्ह्येव तद्योगो भवति । न तु काम्येन अन्योपासनादिनेत्यर्थः । अनेन 'सर्वकर्म' इत्युक्तार्थं भवति ।**

*भा०दी०*— श्लोकचतुष्टयार्थं सङ्ग्रहेणानुवदति **मदुपासनस्येत्यादिना** । श्लोकचतुष्टयस्य प्रतीकग्रहणं **मयीतीति** ॥ **तद्योगो भवतीति** । वैष्णवतया सर्वकर्मकरणयोग्यो भवतीत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**असम्यग्ज्ञानिनो ध्यानाज्ज्ञानमेव विशिष्यते ।**
**ज्ञात्वा ध्यानं ततस्तस्मात् तत्फलेच्छाविवर्जितम् ।**
**तस्माज्ज्ञानाद् भवेन्मुक्तिस्त्यागध्यानयुतात् स्फुटम् ॥'' —इति च ।**

*प्रका०*— **असम्यग्ज्ञानिनः** इत्यादिना ''श्रेयो हि ज्ञान'' इत्यादेरर्थ उच्यते ।

***न्या०दी०*— भगवदुपासनेऽपि तारतम्यमाह असम्यगिति ॥ ध्यानालाभे ज्ञानं, तदलाभेऽभ्यास इत्येतत्समर्थ्यते 'श्रेयो हि' इति । तदनेन व्याख्यातं भवति । ज्ञानपूर्वध्यानेऽपि सकामान्निष्काममेवाधिकमित्याह तस्मात् इति ॥ तत्र हेतुमाह तस्मादिति ॥ अनेन 'ध्यानात्' इत्येतद् व्याख्यातं भवति ।**

*भा०दी०*— **तदनेनेति** । श्रेयो हीत्यादिकं असम्यगिति स्मृत्युदाहरणेन व्याख्यातमित्यर्थः ॥
॥ २-३ ॥

गीता

## संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
## ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

*वि०वि०*— येत्त्विन्द्रियाणां ग्रामं समूहम् । सम्यक् नियम्य । सर्वत्र समबुद्धयः षष्ठोक्त-प्रकारेण जीवचिदादिसाम्यज्ञानवन्तः । भगवदविरोधिसर्वभूतहिते रताः सन्तः । अक्षरत्वादिविशेषणविशिष्टं मोक्षदानसामर्थ्ययुक्तमव्यक्तम् । परितः सदाचारविष्णुभक्त्यादिसाधनसम्पत्या उपासते, ते मामेव प्राप्नुवन्ति ॥ ४ ॥

*वा०ल०*— 'ते प्राप्नुवन्ति' इत्यत्र, ते श्रियमुपास्य तद्वारा मदुपासकाः ॥ ४ ॥

*सा०सं०*— तदुपासनायामितिकर्तव्यतामाह **सन्नियम्येति** । **इन्द्रियग्रामं** इन्द्रियसमुदायम् । **सन्नियम्य** विषयेभ्य उपसंहृत्य । **सर्वत्र** समबुद्धयः । षष्ठाध्यायोक्तदिशा सम्यग्ज्ञानवन्तः । **सर्वभूतहिते रताश्च** सन्तः । **पर्युपासत** इत्यन्वयः । अत्र अक्षरत्वादिविशेषणं मोक्षदानशक्तिद्योतनाय । **ते मामेव** । **प्राप्नुवन्तीति** ॥ ४ ॥

*अ०प्र०*— सर्वत्र समबुद्धयः[१], सर्वभूतहिते रताः[२], ये भक्ताः[३], इन्द्रियग्रामं[४], सन्नियम्य[५], अव्यक्तं पर्युपासत इति पूर्वेण अन्वयः । तेऽपि[६], मामेव प्राप्नुवन्ति इत्यन्वयः ।

सर्वत्र समबुद्धयः = सर्वजीवराशिषु श्रीविष्णुरन्तर्यामित्वेन समस्तिष्ठतीति बुद्धिमन्तः[१], किञ्च, सर्वभूतहिते रताः भगवदविरोधि सर्वभूतहिते रताः सन्तः[२], ये = भक्ताः[३], इन्द्रियग्रामं = इन्द्रियसमूहं[४], सन्नियम्य = सम्यक् नियम्य नियमं कृत्वा[५], अव्यक्तं पर्युपासते = अक्षरत्वादिविशेषेण विशिष्टमोक्षप्रदत्वसामर्थ्ययुक्तमव्यक्तं तदा श्रीतत्वं परितः अतिसदाचारयुक्तः विष्णुभक्त्यादिसाधनसम्पत्त्या उपासन्ते तेऽपि तेनापि मार्गेण[६], मामेव[७], प्राप्नुवन्ति[८] इत्यर्थः ॥ ४ ॥

भाष्यम्

भवन्तु त्वदुपासका एवोत्तमाः । इतरेषां तु किं फलमित्यत आह **ये त्वित्यादिना** । अनिर्देश्यत्वं चोक्तं भागवते मायायाः "अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः" इति । ईश्वरस्तु दैवशब्देनोक्तः 'दैवमन्येऽपरे' इत्यत्र । उक्तं च सामवेदे काषायणश्रुतौ "नासदासीन्नो सदासीत् तदानीम्" इति । "न महाभूतं

**नोपभूतं तदाऽऽसीत्" इत्यारभ्य "तम आसीत् तमसा गूढमग्रे" इति । "तमो ह्यव्यक्तमजरमनिर्देश्यमेषा ह्येव प्रकृतिः" इति ।**

*प०टी०*— भगवदुपासनस्यैवाधिक्येऽपि किमव्यक्तोपासकस्य श्रुतो मोक्षो नास्ति ? इत्याशङ्कोत्तरत्वेन श्लोकद्वयमवतारयति **भवन्त्विति** । अनिर्देश्यत्वं परब्रह्मधर्मः, कथमव्यक्तस्य ? इत्यत आह **अनिर्देश्यत्वं चेति** । अत्रेश्वरो 'अनिर्देश्य'पदोक्तः किं न स्यात् ? इत्यत आह **ईश्वरस्त्विति** । श्रुतावपि मायाया अनिर्देश्यत्वं सिद्धमित्याह **उक्तं चेति** ।

*प्र०दी०*— एवं तर्हि 'मय्यावेश्य' इत्यनेनैव मदुपासका एव उत्तमा इति प्रश्नस्य उत्तरं जातम् । किमुत्तरेण वाक्येन ? इत्यत आह **भवन्तु इति** । आक्षेपगर्भोऽयमभ्युपगमः । न युक्तं त्वदुपासकानामेवोत्तमत्वमिति भावः । तदुपपादनाय पृच्छति **इतरेषामिति** । अव्यक्तोपासकानां किं फलं मोक्षोऽस्ति वा न वा । न चेदुदाहृतवाक्यविरोधः । आद्ये कथं त्वदुपासकानामुत्तमत्वम् ? फलसाम्यादिति भावः ।

नन्वेषां विशेषणानां ब्रह्मणोऽन्यत्रासम्भवात् कथं 'इतरेषां किं फलम् ?' इत्यस्योत्तरत्वेन एतदवतारः ? इत्यतोऽक्षराव्यक्तत्वयोः मायायामुपपादितत्वात् तदन्यानि तत्रोपपादयन् अनिर्देश्यत्वं तावदुपपादयति **अनिर्देश्यत्वं चेति** । शब्दागोचरत्वम् । 'धर्मस्य मम पादभङ्गः' इत्यन्वयः ।

नन्वत्रापीश्वरोऽस्त्वनिर्देश्य इत्यत आह **ईश्वरस्त्विति** । दैवं पादभङ्गकारणमाहुः । तथा च पुनरुक्तिः स्यादिति भावः । न च दैवशब्दोऽदृष्टवाची । तस्य 'अपरे कर्म' इति पृथगुक्तत्वात् । मायाया अनिर्देश्यत्वे स्पष्टं च प्रमाणमाह **उक्तं चेति** । **महाभूतम्** आकाशवायुरूपम् । **उपभूतं** तेजोऽब्-भूलक्षणम् । **तदा** प्रलये । **अजरम्** इत्यादिकं प्रलयेऽवस्थानस्योपपादकम् । न च 'एतद्ब्रह्म' इति प्रदर्शनाय 'एषा ह्येव प्रकृतिः' इत्युदाहृतम् ।

*भा०दी०*— **उदाहृतवाक्येति** । 'श्रियं वसाना' इत्यादिश्रुतीत्यर्थः । 'धर्मस्य मम पादभङ्गः' इत्यन्वय इति । प्रथमस्कन्धे वृषभरूपधर्मस्य परीक्षितस्य संवादरूपे सप्तदशेऽध्याये 'कोऽवृश्चत्तव पादांस्त्रीन् सौभरेय चतुष्पदः' इति परीक्षित्कृतप्रश्नं प्रति एकपादस्थितवृषरूपो धर्मः उत्तरमुक्तवान् । 'दैवमन्ये परे कर्म स्वभावमपरे प्रभुम् । अतर्क्यात्' इत्यादिना । तत्र पञ्चम्यन्तस्य साकाङ्क्षत्वात् धर्मस्य मम पादभङ्ग इति शेषोक्त्या श्लोकेऽन्वयो बोध्य इत्यर्थः । 'दैवम्' इत्यादिवाक्येऽप्याकाङ्क्षां शेषोक्त्या पूरयति **पादभङ्गेत्यादि** । सच्छब्दार्थस्यैवाकाशवायुरूपस्यैव श्रुतावुक्तेरसच्छब्दार्थं स्वयमाह **तेजोऽब्-भूलक्षणमिति** । **असम्भवादिति** । अनुत्पाद्यमानादित्यर्थः ।

*भा०र०*— एवं उक्तरीत्यैव यदि व्याख्यानं त्वदुपासका एवोत्तमा इति पक्षस्याभ्युपगमे अव्यक्तोपासकानां किं फलमिति फलप्रश्नोऽनुपपन्नः प्रश्नस्य उत्तरितत्वादित्यत आह **आक्षेपेति** । आक्षेपभङ्ग्या अयं अभ्युपगम इति नाभ्यप्युपगमाभिप्रायमिदं भाष्यम् । किं तु आक्षेपतात्पर्यकमिति भावेन तमेवाक्षेपं दर्शयति **न युक्तमिति** । तदुपादानाय = भगवदुपासकानां उत्तमत्वाभावोपपादनाय । **उदाहृतश्रुतीति** । 'श्रियं वसाना अमृतत्वमायन्' इत्युदाहृतश्रुतिविरोध इत्यर्थः । 'एषां ये त्वक्षरमनिर्देश्यम्' इति श्लोकोक्तानामष्टानां विशेषणानां इतरेषां भगवदुपासकेतरेषामव्यक्तोपासकानाम् । मायायां प्रकृतिशब्दितश्रीदेव्यां अक्षरं च तत् 'अक्षरात्परतः परः' इत्यादिना 'अव्यक्तं प्रकृतिः महतः परम्' इत्यादिना च भाष्ये एवोपपादित्वादित्यर्थः । तदन्यानि 'अनिर्देश्यं सर्वत्रगम्' इत्यादीनि विशेषणानि । तत्र = मायायाम् । नन्वनिर्देश्यत्वं निर्देशायोग्यत्वं निर्देशशब्दश्च बालोऽङ्गुलिनिर्देशेन मातापितरावावेदयतीत्यादौ प्रदर्शनेऽपि दृष्टः । अप्रदर्शनीयत्वं चातीन्द्रियसाधारणमिति कथमिदं मायाविशेषणं स्यादित्यतोऽत्र विवक्षितमनिर्देश्यत्वं व्याख्याति **शब्दागोचरत्वमिति** । वेदाद्यगोचरापरिमितस्वरूपमित्यर्थः ।

यद्वा अनिर्देश्यत्वं नाम मनसोऽप्यगोचरत्वं चेत् पर्युपासत इति व्याहतम् । मनसालोकनरूपत्वादुपासनस्येत्यत आह **शब्दागोचरत्वमिति** । शब्दगोचरमहिम्नोऽपि भगवदुपास्यत्वमिव मायाया अप्युपास्यत्वं नायुक्तमिति भावः । भागवतवचने पञ्चम्यन्तं साकाङ्क्षमनन्वितं अतस्तदन्वयं दर्शयति **धर्मस्य ममेति** । 'कोवृश्चंतवपादांस्त्रीन् सौरभेयचतुष्पद' इति । 'तपः शौचं दया सत्यमिति पादाकृतेकृताः । अधर्माङ्गै स्त्रयो भग्नाः स्मयसङ्गमदैस्तव' इत्यादि पूर्वोत्तरग्रन्थपर्यालोचनायां लभ्यस्य धर्मस्य मम पादभङ्ग इत्यस्य श्रुतपादत्वादध्याहृतेनान्वय इत्यनुक्त्वा इत्यन्वय इति सामुग्धेनोक्तम् । केचित्तु 'केचिद्वैकल्प्यवचसा आहुरात्मानमात्मनः' इयतोऽनुवृत्तस्यात्मन इत्यस्यार्थो धर्मस्य ममेति पादभङ्ग इत्येव त्वध्याहार इत्याहुः । शूद्ररूपकलिपीडितं छिन्नं त्रिपादं वृषभरूपं वृषभशब्दवाच्यं धर्मं दृष्ट्वा, हे वृषभ कस्मात्तव पादभङ्गो जात इति परीक्षिता प्रश्ने कृते तत्रोत्तररूपं धर्मवाक्यम् । 'न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ । पुरुषं तं विजानीमो वाक्यभेदविमोहिताः । केचिद्वैकल्पिकवचसा आहुरात्मानमात्मनः । दैवमन्ये परे कर्म स्वभावमपरे प्रभुम् । अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः । अत्रानुरूपं राजर्षे विमृशस्व मनीषया' इति । हे पुरुषर्षभ परीक्षिद्राज । यतः पुरुषानं जीवानां क्लेशबीजानि स्युस्तं पुरुषमयमेवेति न जानीमो = न निर्धारयामः । कुतः यतो वाक्यभेदविमोहिताः । के ते वाक्यभेदाः तव मोहका इत्यत्रोच्यते **केचिदित्यादि** । वैकल्पं विकल्पसमूहोपेतं वचो येषां ते तथोक्ताः । सन्देहापादकवचनाः केचिदात्मनो

जीवस्य आत्मानं स्वात्मानं क्लेशबीजमाहुः । अन्यैः देवमीश्वरमात्मनो जीवस्य क्लेशबीजं प्रकरणात् पादभङ्गादिक्लेशकारणमाहुः । परे कर्म । अपरे प्रभुमप्रतिहतसामर्थ्यस्वशब्दार्थभगवदुद्भवं कालं तद्बीजमाहुः । अवेद्यलक्षणत्वादप्रतर्क्यादनिर्देश्याच्छब्दगोचरात् प्रधानादात्मतः क्लेशः प्रकृतापेक्षया धर्मस्य मम पादभङ्गः श्रीतत्त्वहेतुक इति केष्वपि पुरुषेषु निश्चयः । अत्र एतेषूक्तेषु क्लेशस्थानेष्वनुरूपं वेदशास्त्रोक्ततयोचितं त्वमेव विमृशस्वमनीषयेति भागवते मायाशब्दितश्रीदेव्यामप्यप्रतर्क्यत्वमुक्तमिति न ब्रह्मणोऽन्यत्राप्रतर्क्यत्वविशेषणासम्भव इति भावः । भागवतटीकायां तु— अप्रतर्क्यादनिर्देश्यादित्यादि पठित्वा, अनवेद्यत्वात् सर्वात्मना अप्रतर्क्यात् तर्काविषयात् अनिर्वाच्यात् प्रधानात् क्लेशपरम्परा जीवानां भवतीति व्याख्यातम् । अत्रापि = अप्रतर्क्यात् अनिर्देश्यादिति भागवतवाक्येऽपि । दैवमन्ये इत्यत्र आहुरिति अनुवर्त्यस्य प्रकरणलभ्यपदेनान्वय इति भावेनोक्तं **दैवं पादभङ्गकारणमाहुरिति** । दैवमन्य इत्यत्रेत्येव भाषणीये यत्पर इत्यप्यभाषत, तच्छङ्कान्तरपरिहारायेति भावेनाह **न चेति** ।

पूर्वप्रमाणे विशेष्यस्य संयोज्यत्वादाह **स्पष्टं चेति** । असत्सच्छब्दव्याख्यानम् । महाभूतमुपभूतमिति । तदिदं पदद्वयमपि यदन्यद्वयोश्चान्तरिक्षाच्चैतत्सद्वायुरन्तरिक्षं चासीदिति भगवत्पादैरन्यत्रोदाहृतां श्रुतिं मनसि निधाय व्याचष्टे **महाभूतमित्यादि** । अन्नं पृथिवी । तथा च तत्त्वोद्योतटीका— अपसद्वाय्वन्तरिक्षाख्यम् । स च पृथिव्यप्तेजोरूपमिति । अव्यक्तमित्यस्यादित्वेऽपि अजरमित्यादिकमित्युक्तिः क्षरणशून्यत्वं प्रलये अवस्थानस्य स्फुटमुपपादकमितरदर्थादित्यावेदयितुम् । एतत् अव्यक्तमक्षरमनिर्देश्यमिति श्रुत्युक्तमनिर्देश्यम् । श्रुतावेषेति स्त्रीलिङ्गं प्रकृतिपदापेक्षया ........... सा वैश्वदेव्यामिक्षेति यथा भाष्ये प्रकृतिरितीत्यस्य उक्तं चेति पूर्वेणान्वयः । तेनारभ्येति ल्यबुपपद्यते । उपपादयितुं तथाहीत्यादिना । **भावेति** ।

भाष्यम्

**सर्वगा अचिन्त्यादिलक्षणा हि सा । तथा हि मोक्षधर्मे— "नारायणगुणाश्रयाद् अजराद् अतीन्द्रियाद् अग्राह्याद् असम्भवतः असत्याद् अहिंस्रात् ललामाद् द्वितीयप्रवृत्तिविशेषाद् अवैराद् अक्षयाद् अमराद् अजराद् अमूर्तितः (सर्वव्यापिनः) सर्वस्याः सर्वकर्तुः शाश्वततमसः" इति ।**

***प०टी०***— सर्वगतत्वादिधर्मपञ्चकं च मायायां प्रमाणतः साधयति **सर्वगेति** । नारायणं गुणतयाऽऽश्रयत इति । असति प्रधाने स्थितम् **असत्यम्** । **द्वितीयप्रवृत्तिविशेषात्** नारायणा-

नन्तरिकप्रवृत्त्यांख्यविशेषतः । अक्षे रमत इति **अक्षरम्** । सर्वप्रेरकत्वादिना **सर्वस्याः** । एतस्मात् परमपुरुषो जात इत्यन्वयः ।

***प्र०दी०—*** इदानीं 'सर्वत्रगम्' इत्यादिकं मायायामुपपादयितुमाह **सर्वगेति** । भावप्रधानो निर्देशः । स्वरूपवाची वा लक्षणशब्दः । नारायणगुणः तदिच्छालक्षणः आश्रयो यस्य तत्तथोक्तम्। अनेन ब्रह्मणो व्यावृत्तिः । 'अजरात्' 'अमरात्' इति जडप्रधानादेः । तस्य तत्प्राप्त्यभावात् । **अग्राह्यात्** मनसोऽप्यगोचरात् इत्यनेन 'अचिन्त्यम्' इति सिद्ध्यति । 'असम्भवतः', 'अक्षयात्', 'अक्षरात्' इति ध्रुवत्वसिद्धिः । असति प्रलये भवं **असत्यम्** । **ललामं** प्रधानम् । द्वितीया भगवदेकाधीना प्रवृत्तिः विशेषो यस्य तत्तथा । **अमूर्तितः** प्राकृतदेहरहितात् । **सर्वस्याः** सर्वगायाः इति छान्दसो लिङ्गव्यत्ययः । अनाद्यविद्याभिमानित्वात् **शाश्वततमसः** । 'पुरुषोऽभूत्' इत्यन्वयः ।

***भा०र०—*** **सर्वगत्वाचिन्त्यत्वादिति** । भावप्रधान इत्यर्थः । **स्वरूपेति** । पूर्वव्याख्याने तु लक्षणशब्दो साधारणधर्मरूपविशेषणवाचीति भावः । पुरुषोऽभूदिति तत्र वक्ष्यमाणसृष्ट्यानुगुणया चोक्तं **तदिच्छालक्षण इति** । गुणान्तरपरित्यागेन इच्छाग्रहणं इच्छाधीनत्वरूपास्वातन्त्र्यद्योतनायेत्याहुः । तथोक्तमित्यनन्तरं तस्मादिति योज्यम् । अनेन = नारायणगुणाश्रयादिति विशेषणेन। ब्रह्मणः = परब्रह्मणः । नारायणगुणाश्रयत्वं जडप्रकृतिकलादेरपि सम्भवतीति तद्ग्रहणं व्युदसितुमाह **अजरादमरादितीति** । व्यावृत्तिरिति वर्तते । तत्प्राप्त्यभावात् जडत्वेन जरामरणप्राप्त्यभावात् । इति विशेषणत्रयेण न विद्यन्ते सन्ति वस्तूनि यस्मिन् सोऽसन् प्रलयस्तत्र भव इत्यर्थे अव्ययम् । त्यपि इत्यत्र योगविभागात् ल्यप्प्रत्ययः तद्धिता इति बहुवचनज्ञापितो यत्प्रत्ययो वा । मात्वाञ्जडस्त्वाभाव इति भावेनाह **असति प्रलये भवमसत्यमिति** । असति प्रलये भावादिति तृतीयतात्पर्यवचनादसच्छब्दः प्रलयार्थः । ततो भवार्थे दिवादिषु । चिह्नप्रभावे पुण्ड्रेषु प्रधानध्वजभृङ्ग्योरिति । द्वितीयत्वं वैवक्षिकम् । कथं विशेष्योच्यत इत्यतो विवक्षितार्थमाह **भगवदेकाधीनेति** । प्रवृत्तिविशेषः न विद्यते मूर्तिः तनुर्यस्य तदमूर्ति । तस्मादमूर्तित इत्यत्र मूर्तिशब्दविवक्षितार्थमाह **प्राकृतेति** । सर्वस्या इत्यस्यार्थः **सर्वगाया इति** । अनेन सर्वत्रगमिति मायाविशेषणं सिद्ध्यति । छन्दसि सुप्तिङुपग्रहलिङ्गनराणां व्यत्ययानुशासनस्य छन्दसि वेत्ति योगविभागेन व्याख्यानादाह **छान्दस इति** । शाश्वततमस्त्वं घटयितुमाह **अनादीति** । भावप्रदीपिकायां तु नारायणं गुणतयाऽऽश्रयत इति नारायणगुणाश्रयः । अक्षे रमत इत्यक्षरम् । असति प्रधाने स्थितमसत्यम्, द्वितीयप्रवृत्तिविशेषात् नारायणानन्तरिकप्रकृत्याख्यविशेषतः अक्षे रमत इत्यक्षरम् । सर्वप्रेरकत्वादिना सर्वस्या इति व्याख्यातम् । पञ्चम्यन्तस्य मोक्षधर्म एव श्रुतेन पदान्तरेणान्वय इत्याह **पुरुष इति** । हिरण्यगर्भ इत्यर्थः।

भाष्यम्

**"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" इति मानवे । "कूटस्थोऽक्षर उच्यते" इति वक्ष्यति । कूटे आकाशे स्थिता कूटस्था । "आकाशे संस्थिता त्वेषा ततः कूटस्थिता मता" इति हि ऋग्वेद-खिलेषु । "सा सर्वगा निश्चला लोकयोनिः सा चाक्षरा विश्वगा विरजस्का ॥" इति सामवेदे गौपवनशाखायाम् ॥ ३ ॥ ४ ॥**

***प०टी०*— प्रलय **इदम्** अव्यक्ताख्यतमः **सर्वत आसीदभूत्** । न जातम् । सृष्टिकाल इव **प्रवृत्त्यभावात्** वा **प्रसुप्तमिव** । अत्रार्थादुक्तविशेषणसिद्धिः । कूटस्थत्वे प्रमाणमाह **कूटस्थ इति**। 'कूटस्थ'शब्दस्यार्थं सप्रमाणकमाह **कूट इति** । सर्वगतत्वादित्यस्य स्पष्टश्रुत्या समर्थयति **सेति** ॥ ॥ ३-४ ॥

***प्र०दी०*— इदं** = प्रसिद्धं, **तमः** = मायाख्यं, **प्रलये सर्वतः प्रसुप्तमिव** निर्व्यापारं **आसीत्** । **अभूतं** = अजातम् । 'अप्रज्ञातम्' इत्यादिना प्रत्यक्षानुमानागमवेद्यत्वाभाव उच्यते । अवेद्यलक्षणत्वात् 'अप्रतर्क्यम्' । अनेन सर्वत्रगमचिन्त्यं ध्रुवमिति सिद्ध्यति । गीतावाक्येन कूटस्थत्वं नित्यत्वं चेत् 'ध्रुवम्' इति पुनरुक्तिः । कूटमनृतं तिष्ठत्यस्मिन्नित्यसम्भवीत्यत आह **कूट इति** । कूटशब्दस्य आकाशवाचित्वेऽभिधानं प्राक् पठितम् । तथाऽपि दार्ढ्याय श्रुत्युदाहरणम् । श्रुत्यनुसारेण स्त्रीलिङ्गम् ।

'सा सर्वगा' इत्युक्तार्थे स्पष्टं प्रमाणम् । निश्चला = स्वपदादभ्रष्टा । विश्वं गतमाश्रितम् अस्यामिति **विश्वगा** । एतानि चोक्तविशेषणानि तदुपासनस्य मोक्षसाधनत्वाङ्गीकारसमर्थनार्थानीति ज्ञेयम् ॥ ३-४ ॥

***भा०दी०*— इत्यादिनेति** । अप्रज्ञान्तमलक्षणमविज्ञातमिति पादत्रयेणेत्यर्थः । **अनेनेति** । 'आसीत्' इत्यादि पदेनेत्यर्थः । **सर्वगेति** । सर्वतः सर्वगतत्वस्य 'अप्रज्ञातम्' इत्यादिना, अचिन्त्यत्वस्य 'अभूतम्' इत्यनेन ध्रुवत्वस्य प्रतीतेरिति भावः । **इति सिद्ध्यतीति** । **इति** गीतोक्तं प्रमेयं सिद्ध्यतीत्यर्थः । **प्राक्पठितमिति** । षष्ठे अध्याये 'सा सर्वगता' इति स्पष्टं प्रमाणमित्यन्वयः । कुत्रेत्यत उक्तं **उक्तार्थ इति** । सर्वागमचिन्त्यादिना गीतोक्तसर्वगतत्वाद्यर्थ इत्यर्थः । **इति विश्वगेति** । तथा च न 'सर्वगा' इत्यनेन पौनरुक्त्यमित्यर्थः । ननु 'ये त्वक्षरमनिर्देश्यम्' इत्यादि विशेषणान्यव्यक्तस्य किमर्थमुक्तानि ? येन महता प्रयत्नेन अनिर्देश्यत्वं चोक्तम् । **भागवतः** इत्या-

दिना कथमितिपर्यन्तभाष्येणाव्यक्ते तत्समाधानं कृतमित्यतो गीतोक्ताव्यक्तविशेषणानाम् उपयोगमाह **एतानि चेति** । एतेन अव्यक्तं विशेष्यम्, अन्यानि तद्विशेषणानीति सूचितम् ॥ ३-४ ॥

*भा०र०*— मायायाः प्रकृतत्वादसाङ्गत्यपरिहाराय आह **तमोमायाख्यमिति** । इवशब्दोक्त-सादृश्योक्तिः **निर्व्यापारमिति** । इत्यादिनेत्यत्र आदिपदेन अलक्षणं अविज्ञेयं इति अनयोर्ग्रहणम् । तत्र प्रकर्षेण टेटवोपरेरवादिमत्तया वस्त्ववगाहि यत्प्रत्यक्षं तदवेद्यत्वं अप्रज्ञातमित्यनेनोच्यते । लक्षणस्य केवलव्यतिरेकि विधाय अयं गौर्भवितुमर्हति सास्नादिमत्त्वादित्यादौ अनुमानत्वदर्शना-दलक्षणमित्यनुमानवेद्यत्वसिद्धिः । अविज्ञेयत्वमित्यनेन च तमासीदजामेकामित्यादिना आगमेन सामान्यतो ज्ञेयत्वेऽपि विशेषाकारेण ज्ञेयत्वाभाव एवोच्यते इत्यागमवेद्यत्वाभावसिद्धिरिति भावः । अवेद्यलक्षणात् प्रत्यक्षानुमानागमावेद्यस्वरूपात् किमनेन वचनेन प्रकृतिविशेषणमावेदितमासीदित्यत आह **अनेनेति** । 'बह्वीं प्रजां जनयन्तीं सरूपाम्' इति मायां यां सव्यापारत्वावेदनात् प्रसुप्तशक्ति-रयुक्तेत्यतः शेषमाह **प्रलय इति** । सर्वतः सर्वस्मादपि व्यापारात् प्रसुप्तमिति सर्वव्यापारादुपरतत्व-मुच्यते । तथा सर्वतः सर्वत्रासीदित्यनेन गीतोक्तं सर्वगमिति विशेषणं प्रत्यक्षानुमानागमावेद्यतया मनसोऽप्यगोचर इत्यचिन्त्यमभूतमजातं प्रलयेऽप्यासीदित्यनेन ध्रुवत्वं च सिद्ध्यतीत्यर्थः । केचित्तु अलक्षणमित्येतत् व्यर्थम् । भगवदेकाधीन सर्वगतत्वाचिन्त्यत्वादि लक्षणा च सेति भाष्ये लक्षणा-भिधानाद्बाधितार्थं चेत्यतो प्रतर्क्यत्वे साध्ये हेत्वर्थगर्भमिदं विशेषणमिति न वैयर्थ्यादि शङ्केति भावेनाह । अवेद्यलक्षणत्वादप्रतर्क्यमिति व्याकुर्वते । भावप्रदीपिकायां तु 'प्रलये इदमव्यक्ताख्यं तमः सर्वत आसीदभूत् । न जातं सृष्टिकाल इव प्रवृत्त्यभावात् प्रसुप्तमिव अत्रार्थात् उक्तविशेषणसिद्धि-रि'ति, मनुवचनं व्याख्याय मायायां कूटस्थत्वमस्तीति कुतो ज्ञातव्यमित्यतोऽत्र प्रमाणमुच्यते कूट-स्थोक्षर उच्यत' इति । पुरुषोत्तमयोगे वक्ष्यति भगवानिति भाष्यमवतारितम् । तदिदमयुक्तमिति शङ्कते **गीतावाक्येनेति** । नित्यत्वमाद्यन्तशून्यत्वं चेद्विवक्षितं तर्हीति शेषः । 'कूटं यन्त्रे नृते राशौ' इति विश्वाभिधानादाह **कूटमनृतमिति** । तिष्ठत्यस्मिन्निति वदन् कूटशब्दोपपदे तिष्ठतेर्घञर्थे कवि-धानमित्यधिकरणोक्तप्रत्ययः आतो लोप इटि चेत्याकारलोपः। उपपदसमासश्चेत्यभिसन्धत्ते **अस-म्भवीति**। सत्येकमूर्तौ श्रीदेव्यामनृतावस्थानमसम्भवदुक्तिकमिति नेदं विशेषणम् । सम्भवव्यभि-चाराभ्यां स्याद्विशेषणमिति भावः । कूटस्थशब्दस्याकाशवाचित्वेऽपि किं प्रमाणमिति चोद्यापनोदा-याह **कूटशब्दस्येति** । यद्यपीति शेषः । प्राक् 'कूटं खं विदलं व्योमे'ति षष्ठाध्याये कूटस्थेति भाष्ये सुपि स्थ इत्यत्र योगविभागात्तिष्ठतेः कप्रत्ययो द्रष्टव्यः । कूटे स्थितं कूटस्थमित्येव भाषणीयम् । तत्कथं स्त्रीलिङ्गमित्यत आह **श्रुत्यनुसारेणेति** । उक्तेऽर्थे सर्वगतत्वे अचलत्वे च मोक्षधर्मे सर्वस्याः

सर्वगाया इति **मनुवचने** सर्वतः सर्वत्रासीदिति च व्याख्यातत्वात् स्पष्टमित्युक्तम् । सा सर्वगतेति स्पष्टं प्रमाणमित्यन्वयः । 'न चलेत् स्वपदाद्यस्मादचला श्रीः' इति तात्पर्यनिर्णयोक्तिं हृदि निधायाह **स्वपदादभ्रष्टेति** । अनेन सर्वगेत्यनेन, निश्चलत्वस्य लाभादार्थिकपुनरुक्तिरिति परिहृतम् । सर्वगेत्यनेनापौनरुक्त्यायाह **विश्वमिति** । गमेरनेकार्थत्वाश्रयणेन तात्पर्यगत्या वाह **गतमाश्रितमिति** । गच्छतीति गन्निरुपपदादपि गमेरन्येष्वपि दृश्यत इति डः । ततो विश्वं गं यस्यामिति सप्तम्यार्थे बहुव्रीहिरिति भावः । गीतायामेतावतां व्यक्तविशेषणानामस्ति प्रयोजनमित्याह **एतानि चेति** ॥ ॥ ३-४ ॥

**गीता**

## क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
## अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥ ५ ॥

***वि०वि०***— कथं तर्हि त्वदुपासकानामुत्तमत्वमित्यत आह **क्लेश इति** । केवले अव्यक्ते आसक्तचित्तानाम् । क्लेशोऽधिकतरः । कथं गम्यत इति गतिर्मार्गः । अव्यक्तोपासनद्वारको मत्प्राप्तिमार्गो दुःखं यथा तथाऽवाप्यते हि । पृथगव्यक्तोपासने । उक्तप्रकारेण पर्युपासनमिन्द्रियग्रामातिनियमनं सर्वत्र समबुद्धित्वं सर्वभूतहितेरतत्वादिसुष्ट्वाचारमन्तरेणाव्यक्तप्रसादो न भवति । किञ्चिद्भगवदुपासनं कृत्वा बहुकालं पृथक् श्रियमुपास्य पुनः श्रिया सह निरन्तरं भगवदुपासनं कर्तव्यम् । ततो मुक्तिरिति चिरेणैव भवतीति क्लिष्टोऽयं मार्गः ॥ ५ ॥

***वा०ल०***— 'क्लेशोऽधिकतरस्तेषाम्' इत्यत्र, ऋजुमार्गेण सिद्ध्यतोऽर्थस्य वक्रेण साधनात् क्लेशोऽधिकतरः । दुःखं दुःखं यथा भवति तथा । लक्ष्मीप्रीत्यर्थं देहदण्डनादितपः करणात्, पुनः मत्प्रीत्यर्थं च करणात् । अव्यक्ता अव्यक्तद्वारा सम्पादिता । तर्हि कुत एवं कुर्युः ? इति चेत्, तथा तेषां योग्यता । किञ्चिदैहिकाशापूर्वकं परलोके आशावन्तश्च ॥ ५ ॥

***सा०सं०***— अव्यक्तोपासकानामपि त्वत्प्राप्तिरूपमोक्षसत्वे कथं त्वदुपासकानां उत्तमतेत्यत आह **क्लेश** इति । अव्यक्ते विष्णुं विना कृतश्रीतत्त्वे । आसक्तचित्तानां तेषाम् । **क्लेशः अधिकतरः** अत्यन्ताधिकः । कथमित्यत आह **अव्यक्ता हीति** । **गति**शब्दो गम्यतेऽनेनेति करणव्युत्पत्त्या मार्गपरः । अव्यक्तशब्दस्तदुपासनं लक्षयित्वा तद्वारकलक्षकः । अव्यक्तोपासनद्वारको भगवत्प्राप्तिमार्गः दुःखं यथा भवति तथा देहवद्भिः अवाप्यते हि । प्रागुक्तपरिशब्दार्थपूर्वकमुपासनम्, इन्द्रिय-

ग्रामातिनियमनम्, षष्ठोक्तप्रकारेण सर्वत्र समबुद्धित्वम्, सर्वभूतहितकरत्वम्, सुष्ठ्वाचारं च विना न देवीप्रसादः । तेन विना नेश्वरप्रसादः । तेन विना न तत्प्राप्तिरिति तदुपास्तिद्वारकभगवत्प्राप्तिमार्गस्य क्लेशतरत्वं ध्येयम् ॥ ५ ॥

*अ०प्र०*— ननु च तेऽपि त्वमेव प्राप्नुवन्ति चेत् तर्हि कथं त्वदुपासकानामुत्तमत्वमित्यत आह **क्लेशेति** त्रिभिः ।

हि यस्मात्[1], देहवद्भिः[2], अव्यक्ता[3], गतिः[4], दुःखं[5], अवाप्यते[6], तस्मात् अव्यक्तासक्तचेतसां[7], तेषां[8], क्लेशः[9], अधिकतरः[10] इत्यन्वयः ।

हि यस्मात् देहवद्भिः = देहाभिमानिभिः[2], अव्यक्ता गतिः = अव्यक्तविषया निष्ठा अव्यक्तशब्देनाव्यक्तोपासनं लक्ष्यते तेन च तदुपासनद्वारकत्वं लक्ष्यते । गतिः गम्यते अनयेति गतिः मार्गः[4], दुःखं = यथा भवत्येवं[5], अवाप्यते = पृथगव्यक्तोपासने इन्द्रियग्रामातिनियमनसर्वसमबुद्धित्वसर्वभूतहितेरतत्वातिसुष्ठ्वाचारविष्णुभक्तिश्रीतत्त्वध्यानेनाव्यक्तापरोक्षज्ञानं तेनाव्यक्तप्रसादो भवति । ततस्तत्पतित्वेन भगवदुपासने कृते तदपरोक्षतज्जन्यतत्प्रसादेन तत्प्राप्तिरूपमोक्षो भवतीति क्लेशयुक्तोऽयं मार्ग इति भावः[6], तस्मात् अव्यक्तासक्तचेतसां = केवलाव्यक्तेरासक्तचित्तानां[7], तेषां = तद्भक्तानां[8], क्लेशः[9], अधिकतरः[10] ॥ ५ ॥

भाष्यम्

## कथं तर्हि त्वदुपासकानाम् उत्तमत्वमित्यत आह— क्लेश इति । अव्यक्ता गतिः दुःखं ह्यवाप्यते ।

*प०टी०*— ननु यद्युभयोरपि मोक्षः, तर्हि कथं त्वदुपासकानामाधिक्यम् इत्याशङ्कोत्तरत्वेनोत्तरश्लोकद्वयमवतारयति **कथमिति** । 'क्लेशः' इत्युक्तार्धेन परोत्तरार्धान्वयमुक्त्वाऽर्थं चाह **अव्यक्तेति**।

*प्र०दी०*— ननु 'इतरेषां किं फलम्?' इत्यस्य प्रश्नस्य 'ते प्राप्नुवन्ति मामेव' इत्युत्तरं दत्तम्। तत्किमुत्तरेण ? इत्यत आह **कथमिति** । पूर्ववाक्ये पक्षग्रहणमात्रं कृतम् । न तु तत्राभिप्रेतस्य दोषस्य परिहारः । अतः पूर्वपक्षिणा अभिप्रायोद्घाटने कृते तत्समाधानम् **आह** इति भावः । **तर्हि** उभयेषां फलसाम्ये । यद्यप्येषा शङ्का पूर्ववाक्ये परिहृता । पर्यादिशब्दप्रयोगात् । तथा च वक्ष्यति। तथाऽपि साध्यस्यानुक्तत्वाद्धेतुवचनं स्वरूपकथनं मन्यमानस्य भवत्येव पुनः शङ्का । उत्तरार्धे पदानां व्यवहितत्वादन्वयाप्रतीतौ तमाह **अव्यक्तेति** । अनेन 'दुःखम्' इत्यस्य क्रियाविशेषणत्वमुक्तम् ।

*भा०दी०*— **पूर्ववाक्ये** मामेवेति वाक्ये, अव्यक्तोपासनपक्षस्य ग्रहणे मात्रम् अङ्गीकारस्य मात्रम् इत्यर्थः । **तर्ही**ति भाष्यानुवादः । **उभयेषा**मित्यादि व्याख्या । भगवदुपासकानां अव्यक्तोपासकानां चेत्यर्थः । पूर्ववाक्य इति । 'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते' इति वाक्य इत्यर्थः । **पर्यादीति** । 'परिशब्दं सन्नियम्य' इत्यत्र संशब्दः, 'क्लेशोऽधिकतरस्तेषाम्' इत्यत्र तरशब्दप्रयोगादित्यर्थः । परिशब्दादिप्रयोगात् अव्यक्तोपासने भगवदुपास्तौ भवेदित्यर्थः । तावता कथं परिहृतः ? इत्यतः पर्यादिशब्दप्रयोगादव्यक्तोपासनस्य भगवदुपास्तितो अतिकष्टत्वसूचनमित्येतत् भाष्यकार एव 'अतिशयोपासन' इत्यादिना परि-संज्ञा-तरप्-शब्दैः प्रतीयते' इत्यन्तेन वक्ष्यतीत्याह **तथा च वक्ष्यतीति** । **साध्यस्येति** । क्लेशाधिक्यलक्षणफलस्येत्यर्थः । **हेत्विति** । इन्द्रियसंयमनसर्वत्रसमबुद्धित्वसर्वभूतहितत्वरूपाव्यक्तोपासनहेतुवचनमित्यर्थः ।

*भा०र०*— **इतरेषां** अव्यक्तोपासकानाम्, **इत्यस्य** गमनिकाभाष्यकृतप्रश्नस्य, **पूर्ववाक्ये** क्लेशोऽधिकतर इत्यतः पूर्ववाक्ये । पक्षग्रहणमात्रं = ते प्राप्नुवन्तीति मोक्षः फलमस्तीत्येतावन्मात्रम् । मात्रपदव्यावर्त्यं **न त्विति** । दोषस्य फलं मोक्षोऽस्ति न वा, न चेदुदाहृतश्रुतिविरोधः इत्यादिनोक्तस्य परिहारः कृत इति लिङ्गव्यत्ययेनान्वयः । **अभिप्रायेति** । अव्यक्तोपासकानामपि मोक्षः फलमस्ति चेत् कथं त्वदुपासकानां उत्तमत्वं फलसाम्यादित्यभिप्रायोद्घाटने कृते सत्यव्यक्तोपासनेन मोक्षसम्पादनं क्लेशोदर्कमिति न साम्यमिति शङ्का । पूर्ववाक्ये ते प्राप्नुवन्ति ससाधनमित्यर्थः । **तर्हीत्यनुवादः** । **उभयेषां फलसाम्य** इति व्याख्या । एषा शङ्का फलसाम्ये कथं त्वदुपासकानां उत्तमत्वमिति । मामेवेत्यत्र अव्यक्तोपासका अपि मोक्षमेव प्राप्नुवन्ति किन्तूक्तप्रकारेण नेन्द्रियग्रामातिनियमनेन सर्वत्र समबुद्धित्वेन सर्वभूतहितरतत्वादि सुष्ठ्वाचारेण च समापादित अव्यक्तप्रसादा एव सन्तः । कुत एतत् ? पर्युपासते, 'सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः सर्वभूतहिते रताः' इति वाक्येषु परिसमादि शब्दप्रयोगात् । एवं नानाविध दुस्सम्पादाङ्गसम्पन्नाव्यक्तोपासनशालिनामन्ततोऽहमेव प्राप्यः । एवं विश्वक्लेशोदर्काङ्गसाकल्यवैधुर्येणापि मामुपासीनानामहमेव प्राप्य इत्यतो मदुपासका एवोत्तमा इति लाभात् परिहृतेत्यर्थः । वक्ष्यति 'तदेतत्सर्वम्' इत्यनुपदमेव भाष्यकारः । साध्यस्याव्यक्तोपासका अधमा इत्यभिमतसाध्यस्य, 'अव्यक्ता हि गतिर्दुःखम्' इति हि शब्दोपलब्धवचनेन साध्यमूहितुं शक्यम् । अव्यक्तोपासनमेतादृशं हीति प्रसिद्धस्वरूपकथनमिति मन्यमानस्य हेतुवचनत्वानवबोधादित्याह **हेतुवचनमिति** । व्यवहितत्वात् = हिपदेन दुःखपदेन च अन्वयविरोधिना व्यवहितत्वात् । कथमिति अव्यक्तशब्दस्य प्रधाने रूढत्वादिति भावः ।

भाष्यम्

**गतिः मार्गः । अव्यक्तोपासनद्वारको मत्प्राप्तिमार्गो दुःखम् अवाप्यत इत्यर्थः ।**

*प्र०दी०*— गतिशब्दस्य 'अकर्तरि कारके' 'भावे च' प्रयोगादत्र विवक्षितमर्थमाह **गतिरिति** । गम्यते अनेनेति व्युत्पादनात् उपायो गतिरित्यर्थः । ननु मार्गस्य अव्यक्तत्वं कथमुच्यते ? कुतश्च गम्यार्थता गतिशब्दस्य त्यज्यते ? इत्यत आह **अव्यक्तेति** । अव्यक्तोपासनं द्वारमुपायो यस्यासौ तथोक्तः । अव्यक्तोपासनानन्तरभावि यद् भगवदुपासनं तदेवमुच्यते । अनेन अव्यक्तशब्दः तदुपासनं लक्षयति । तेन च तद्वारकत्वं लक्ष्यते । (गत्यर्थतायां) गम्यार्थतायां च गतिशब्दस्याव्यक्ताख्यं गम्यमित्युक्तं स्यात् । न च तद्युक्तम् । 'ते प्राप्नुवन्ति मामेव' इति भगवत्प्राप्तेरुक्तत्वादित्युक्तं भवति ।

*भा०दी०*— **अकर्तरीति** । कर्तृभिन्ने कर्मकरणादिकारके भावार्थे च प्रयोगादित्यर्थः । 'अकर्तरि च कारके संज्ञायाम्' इति सूत्रे 'भाव' इत्यनुवृत्तेरिति भावः । **एवमुच्यत इति** । अव्यक्ता गतिरित्येवमुच्यत इत्यर्थः । तल्लाभप्रकारमाह **अनेनेति** । अव्यक्तेत्यादिभाष्येणेत्यर्थः ।

*भा०र०*— अव्यक्तोपासनस्थभगवत्प्राप्तिमोक्षमार्गत्वं स्पष्टयितुमाह **अव्यक्तोपासनानन्तरभावीति** । एवमुच्यते = अव्यक्ता गतिरित्येवमुच्यते । कथं मार्गस्याव्यक्तत्वं कुतश्च गतिशब्दस्य गम्यार्थता त्याग इति कृतचोद्यद्वयं भाष्यभावोक्त्या परिहरन् 'तदेवमुच्यते' इत्येतत् विशदयति **अनेनेति** । अव्यक्तोपासनेत्यादिभाष्येणेत्यर्थः । इत्युक्तं भवतीति अन्वयः । लक्षणाबीजं सम्बन्धं दर्शयितुमुक्तं **तदुपासनमिति** । तेन च = अव्यक्तोपासनलक्षणेन च । लक्ष्यते = अव्यक्तशब्दगतलक्षितलक्षणावृत्त्या गृह्यते । अनेन कथमव्यक्तत्वं मार्गस्येति चोद्यं परिहृतम् । गम्यार्थतायामित्यनेन च कुत इति चोद्यं निरस्तमिति ज्ञातव्यम् । अत्र क्लेशोऽधिकतर इति गीतायां तत् अधिकतरक्लेशवत्त्वम् ।

भाष्यम्

**अतिशयेन उपासनं सर्वेन्द्रियनियमनसर्वसमबुद्धिसर्वभूतहितेरतत्वातिसुष्ठ्वाचारसम्यग्विष्णुभक्त्यादिसाधनसन्दर्भम् ऋते न अव्यक्तापरोक्ष्यम् । तदृते च न विष्णुप्रसादः । सत्यपि तस्मिन् न सम्यग् भगवदुपासनं ऋते । नर्ते च तं मोक्षः । विनाऽव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इति क्लेशिष्टोऽयं मार्ग इति भावः ।**

**तथाऽप्यपरोक्षीकृताव्यक्तानां सुकरं भगवदुपासनमित्येतावत् प्रयोजनम् । तत्रापि योऽव्यक्तापरोक्ष्ये प्रयासः तावता प्रयासेन यदि भगवन्तमुपास्ते, ऊनेन वा, तदा भगवदपरोक्ष्यमेव भवतीति द्वितीयमधिकम् । इन्द्रियसंयमनाद्यूनभावेऽत्युपासकस्यापि देवी नातिप्रसादमेति । देवस्तु तानि साधनानि भक्तिमतः स्वयमेव अप्रयत्नेन ददातीति च अतिसौकर्यमिति भक्तानां भगवदुपासने । इतरत्र तु क्लेशोऽधिकतरः ।**

*प०टी०*— कथमव्यक्तोपासनद्वारकमार्गे दुःखम् ? इत्यत आह **अतिशयेति** । अव्यक्तप्रसादस्य दुरापाद्यत्वे किमायातं तद्द्वारकभगवत्प्राप्तिमार्गस्य ? इत्यत आह **तदिति** । तदनेन भवतीत्येव । तेन किम् ? इत्यत आह **सत्यपीति** । तस्मिन्नव्यक्तापरोक्षे सत्यपि भगवदुपासनमृते न भगवत्प्रसादः, तमृते न मोक्ष इत्यर्थः । क्लेशिष्टत्वस्य प्रतियोगिसापेक्षत्वात् तस्य कथं सौकर्यम् ? इत्यत आह **विनाऽपीति** । नन्वेवमस्य मार्गस्यातिक्लेशिष्टत्वेऽननुष्ठेयत्वमेव स्यादित्यत आह **तथाऽपीति** । तर्हि भगवदुपासनमार्गस्य प्रयोजनस्याभावात् साम्यमेवेत्यत आह **तत्रापीति** । **द्वितीयं** श्रीपतित्वेन भगवदुपासनम् । इतश्च न साम्यमित्याह **इन्द्रियेति** ।

*प्र०दी०*— अत्र पूर्वार्धे अस्य मार्गस्य अधिकतरक्लेशवत्त्वं प्रतिज्ञाय कथमित्यतः तत्प्रसिद्धम् इत्युत्तरार्धेनोक्तम् । तत्प्रसिद्धिं विवृणोति **अतिशयेति** । षष्ठोक्तप्रकारेण सर्वसमबुद्धिः । ततः किम्? इत्यत आह **तदृते चेति** । अयोगव्यवच्छेद एवायमुक्तो न तु तावन्मात्रेणेत्याह **सत्यपीति** । तस्मिन्नव्यक्तापरोक्ष्ये सति विष्णुप्रसाद इति वर्तते । ततोऽपि किम् ? इत्यत आह **नर्ते चेति** । **तं** विष्णुप्रसादम् । अस्त्वेवमव्यक्तोपासनद्वारकभगवत्प्राप्तिमार्गप्रकारः । तथाऽपि कथमत्राधिकः क्लेशः ? इत्यत आह **विनेति** । अव्यक्तोपासनमार्गम् । अयमव्यक्तोपासनद्वारकः । एवं तर्हि किमिति प्रवृत्तो, येनार्जुनेनाशङ्कितः ? इत्यत आह **तथाऽपीति** । एवं तर्हि मार्गयोः साम्यमेव । अनेन प्रयोजनेन क्लेशस्य समाधानादित्यत आह **तत्रापीति** । अव्यक्तोपासनद्वारके मार्गेऽपि । द्वितीयं भगवदुपासने दुःखपाक्षिकमेतत् । 'ऊनेन वा' इत्युक्तत्वात् । इतश्चाव्यक्तोपासनद्वारके मार्गे भगवदुपासनात् क्लेशोऽधिकतर इत्याह **इन्द्रियेति** । 'नातिप्रसादमेति' इत्यतःपरं 'एक' इति शब्दः । द्वावपि हेतौ प्रकारार्थौ वा ।

*भा०दी०*— **प्रसिद्धमिति** । हिशब्दस्य तत्र श्रवणादिति भावः । **षष्ठोक्तप्रकारेणेति** । 'सुहृन्मित्रार्युदासीन' इत्याद्युक्तप्रकारेणेत्यर्थः । **अयोगेति** । अव्यक्तापरोक्षस्य भगवत्प्रसादजनने यो

योगः हेतुत्वाभावः तद्व्यवच्छेद एवायम्, न तु तदेव प्रसादसामग्री । किं तु कारणान्तरम् इत्यपेक्षितमित्याह इत्यर्थः । 'अङ्गावबद्धास्तु' इत्युक्तदिशा भगवदुपासावर्जनत्वेन श्रियोऽप्युपास्यत्वात् कथं 'तद्विना' इत्युक्तिः ? इत्यत आह **अव्यक्तोपासनद्वारकमार्गमिति** । भगवदुपास्तितः प्राक् पृथगुपासनमित्यर्थः । **अयम्** इत्यनुवादः । **अव्यक्त** इत्यादि व्याख्या । तत्रापीत्यस्यार्थं वदन्नेव द्वितीयपादेनान्वयमाह **अव्यक्तेत्यादिना** । ननु तावता प्रयोगेन इत्युक्तत्वाद् दुःखं तत्र अपि सममेवेत्यत आह **भगवदिति** । **द्वारकेति** । अध्याहृतश्चकारात् पूर्वतनश्चेत्यर्थः । यद्वा, श्रूयमाणौ द्वावित्यर्थः ।

***भा०र०***— ननु सर्वसमबुद्धित्वं न मुमुक्षुविशेषणं भवितुमर्हति विषमाणां साम्यावबोधस्य 'विषमाणां समानेषु' इति शास्त्रप्रतिषिद्धत्वादित्यत उक्तं **षष्ठोक्तेति** । जीवानां चिद्रूपत्वेन तदन्तर्यामिणो भगवतो गुणपूर्णत्वादिना सुहृदादिनिष्ठसुहृत्त्वादेर्हरिनिमित्तकत्वेन च साम्यमेव बोद्धव्यमिति षष्ठाध्यायोक्तप्रकारेणेत्यर्थः । हितेरतत्वेति भाष्ये सर्वभूतहितेरतत्वमासक्तत्वम् । साधनसन्दर्भमृते इत्यादि भाष्यटीकयोः, ऋते द्वितीया चेति चान्द्रसूत्रेण द्वितीयाविभक्तिः । तेनान्यारादितरर्ते इति ऋतशब्दयोगे पञ्चम्या भाव्यमिति चोद्यानवकाशः । ततः किमव्यक्तापरोक्ष्याभावात् किमनिष्टमित्यर्थः । अव्यक्तोपासनमृते न विष्णुप्रसाद इति भाष्ये अव्यक्तपरोक्षज्ञानस्य भगवत्प्रसादे अयोगः हेतुत्वाभावः । तद्व्यवच्छेद एव अव्यक्तापरोक्षज्ञानं विष्णुप्रसादजनने साधनं भवत्येवेत्ययमर्थ एवोक्तो न, पुनरव्यक्तापरोक्षज्ञानमेव विष्णुप्रसादजनकमित्यभिप्रेतमित्यभिसन्धाय उत्तरभाष्यमवतारयति **अयोगव्यवच्छेद इति** । विष्णुप्रसादस्याव्यवहितत्वादुपस्थितिव्युदासायाह **तस्मिन्नव्यक्तापरोक्ष्य इति** । अव्यवहितपरामर्शः प्रकृते बाधादयुक्त इति हृदयम् । ऋते इत्यनन्तरमनुवर्तनीयमाह **विष्णिवति** । अत्र = अव्यक्तोपासने । ननु 'उपास्यतां श्रियमव्यक्तसंज्ञां भक्त्या मर्त्यो मुच्यते सर्वबन्धैः' इति श्रीदेव्या उपास्यत्वस्य गीतातात्पर्यवचनमिदम्, 'अविष्णुज्ञैस्तद्भक्तैस्तदुपासाविवर्जितैः । शेषादुपासिताऽप्येषा श्रीस्तांस्तद्भूततत्त्ववित्' इत्यादि, 'श्रीस्तांस्तद्धरितत्त्ववित् । तद्भक्तस्तदुपास्यैव श्रियं ध्यायीत नित्यदा' इति, 'तवापि सर्वपरमां सर्वदोषविवर्जिताम् । ज्ञात्वा श्रियं तत्परमं तत्पतिं पुरुषोत्तमम् । विज्ञायोपासते नित्यं ते हि युक्ततमा मताः' इति शास्त्रेण श्रीदेव्या भगवद्विशेषणत्वेनोपास्यवत्त्वस्य चावेदनात् कथं भाष्ये 'विनाव्यक्तोपासनमि'ति श्रीदेव्युपासनानादर इत्यत आह **आद्यामिति** । भगवदुपासनात्प्राक्काले करणीयत्वेनाभिमतमित्यर्थः । तथा च अन्यत्र यतः क्लेशोऽधिकरस्तेषां पृथक्श्रियमुपासतामिति भाष्यपदमनूद्यार्थमाह **श्रियमिति** । मार्गो भगवत्प्राप्त्युपाय इति भाष्यार्थः । एवं तर्हि उक्तरीत्या अधिकक्लेशवत्त्वे । किमिति केन प्रयोजनेन, अव्यक्तोपासनद्वारको

भगवत्प्राप्तिरिति मार्गः प्रवृत्तः । यद्यपि क्लेशोदर्कस्तथापीति भाष्यार्थः । एवं तर्हि उक्तरीत्याऽसौ कार्यरूपप्रयोजनसद्भावे तत्कुत इत्यत उक्तम् **अनेनेति** । सुकरणरूपेणेत्यर्थः । भावप्रदीपिकायां तु द्वितीयं श्रीपतित्वेन भगवदुपासनमित्युक्तम् । **ऊनेन वेत्युक्तत्वादिति** । तावता प्रयासेन यदि भगवन्तमुपास्ते तदा भगवदापरोक्ष्यमेव भवतीति पाक्षिकमेव । ऊनेन भगवदुपासनेन तदापरोक्ष्यमेव भवतीति स्वयमेवोक्तत्वादित्यर्थ इत्याहुः । इतरत्र क्लेशोऽधिकतर इति भाविभाष्यार्थमाह । अव्यक्तोपासनद्वारके मार्गे भगवदुपासनात् क्लेशोऽधिकतर इति पाठेऽप्युक्त एवार्थः । 'एक इति शब्द' इति अध्याहर्तव्यः । आकृष्य योजनीयो वेति शेषः । द्वौ योजित एकः ददातीत्यत्र सूत्रोपर इति द्वावपीति शब्दौ नातिप्रसादमेतीति हेतोः । देवो ददातीति च । **हेताविति** । हेतुसमर्पकावित्यर्थः। 'इति हेतुप्रकरणप्रकारादिसमाप्तिष्वि'त्यभिधानादिति भावः । **प्रकारेति** । इत्येवंप्रकारेणेतरत्र क्लेशोऽधिकतर इत्येवंप्रकारेणातिसौकर्यमिति प्रकारार्थावित्यर्थः ।

भाष्यम्

**तदेतत्सर्वं 'पर्युपासते', 'सन्नियम्य', 'अधिकतरः' इति परि, सं, तरप्शब्दैः प्रतीयते ।**

***प०टी०***— नन्वतिशयोपासनेत्यादि गीतानुक्तमेव कथमुच्यते ? इत्यत आह **तदेतदिति** ।

***प्र०दी०***— कुतोऽयं भगवतो भावः ? इत्यत आह **तदेतदिति** । उपलक्षणमेतत् । 'सर्वत्र समबुद्धयः' इत्यादिनेत्यपि द्रष्टव्यम् । अत्र 'परि' इत्यनेनोपासकस्यातिशयः । 'सम्' इत्यनेन इन्द्रियनियमस्यातिशयः । 'सर्वत्र' इत्यादिना सर्वेत्यादिकम् । तरपा अतिसुष्ठ्वाचारादिकम् । 'अव्यक्ता गतिः' इत्यनेन 'तद्दते च' इत्यादि व्यवधानम् । 'मामेव' इत्यवधारणेन तथाऽपीत्यादिकं प्राप्नुवन्तीति स्वातन्त्र्योक्त्येन्द्रियसंयमादौ इति देवतासहायाभावः । भगवदुपासने त्वेतदभावो यथा गीतोक्तः तदुत्तरत्र प्रदर्शयिष्यते ।

***भा०दी०***— प्राग् भोक्तस्य समबुद्धित्वादेर्लाभायाह **उपलक्षणमेतदिति** । **तरपेति** । 'क्लेशोऽधिकतरः' इति तरपेत्यर्थः । **व्यवधानमिति** । भाष्योक्तं मोक्षस्य व्यवधानम् अव्यक्ता हि गतिः इति गीतावाक्येन प्राक्टीकोक्तलक्षितलक्षणादिव्याख्यानरीत्या लब्धमित्यर्थः । **अवधारणेनेति** । तेन भगवदुपासनासौकर्यद्वारा तत्प्राप्तिसूचनादिति भावः । **इन्द्रियसंयमादिति** । इन्द्रियसंयमनादाविव इत्यादिभाष्यवाक्येण उक्त उपास्यदेवीरूपदेव्या साहाय्यभाव इति भावः । आप्नुवन्तीति स्वतन्त्र्योक्त्या लब्ध इत्यर्थः ।

नन्वस्तु अव्यक्तोपासने भाष्योक्तक्लेशप्रकारः गीतोक्तपदवाक्यैः उक्तदिशा लब्धः । भगवदुपासने तु 'तत्रापि' इत्यादिना भाष्योक्तक्लेशाभावस्तु कथं गीतापदैर्लब्धः इत्यत आह **भगवदुपासने त्विति** । 'एतत्' इत्युक्तक्लेशाभावो 'मदुपासकानां भक्तानाम्' इत्यादिभाष्यव्याख्यानावसरे प्रदर्शितं दृश्यत इत्यर्थः ।

*भा०र०*— भाष्ये सर्वमिति कथम्, परि सं तरप्शब्दैस्त्रयाणामेव प्रतीतेरित्याह **उपलक्षणमिति** । इत्यादिना चेत्यत्रादिशब्देन सर्वभूतहितेरताः, अव्यक्तागतिः मामेवप्राप्नुवन्तीत्येषां ग्रहणम् । तदेतत्सर्वमिति भाष्योक्तं विवेचयति **अत्रेत्यादिना** । सर्वत्र समबुद्धय इत्यनेन सर्वभूतहितेरताः इत्यनेन च । सर्वेत्यादिकं सर्वसमबुद्धिः, सर्वभूतहितत्वं च । अतिसुष्ठ्वाचारादिकम् । सुष्ठ्वाचारः सम्यग्विष्णुभक्त्यादिसाधनसम्पत्तिः । सन्दर्भः इत्यादि तदृते च न विष्णुप्रसादः सत्यपि तस्मिन्नित्यादि भाष्योक्तम् । व्यवधानं इत्यादिकं अपरोक्षीकृताव्यक्तानां सुकरं भगवदुपासनमित्येतत् । **स्वातन्त्र्योक्तेति** । प्राप्नुवन्तीत्याख्यातार्थो हि कर्ताकर्ता च स्वतन्त्रः । स्वतन्त्रः कर्तेत्युक्तेरिति भावः । **इन्द्रियसंयमादीति** । **देवतेति** । इन्द्रियसंयमाद्यूनभावे अत्युपासकस्यापि देवी नातिप्रसादमेतीति भाष्योक्तः, श्रीदेवीरूपदेवताप्रसादशब्दितसाहाय्याभावः । उत्तरत्र = 'मदुपासकानां भक्तानां न कश्चित्क्लेशः' इति भाष्ये ।

भाष्यम्

**सामवेदे माधुच्छन्दसशाखायां चोक्तम्— "भक्ताश्च येऽतीव विष्णावतीव जितेन्द्रियाः सम्यगाचारयुक्ताः । उपासते तां समबुद्धयश्च तेषां देवी दृश्यते नेतरेषाम् । दृष्टा च सा भक्तिमतीव विष्णौ दत्वोपास्ते सर्वविघ्नांश्छिनत्ति । उपास्य तं वासुदेवं विदित्वा ततस्ततः शान्तिमत्यन्तमेति ॥" इति ।**

**उक्तं च सामवेदे आयास्यशाखायाम्— "प्रसन्नो भविता देवः सोऽव्यक्तेन सहैव तु । यावता तत्प्रसादो हि तावतैव न संशयः । न तत्प्रसादमात्रेण प्रीयते स महेश्वरः । तस्मिन् प्रीते तु सर्वस्य प्रीतिस्तु भवति ध्रुवम् । यद्यप्युपासनाधिक्यं तथाऽपि गुणदो हि सः । मुक्तिदश्च स एवैको नाव्यक्तादेस्तु कश्चन ॥" इति ।**

***प०टी०***— प्रमाणैश्च एतत्सर्वं साधयति **सामवेद इति** । **ततः** तदनन्तरं वासुदेवात् । **अव्यक्तादेः** मध्ये ।

***प्र०दी०***— आगमान्तरसिद्धत्वान्नायं भवति भगवदभिप्राय इत्याह **सामवेद इति** । **तेषाम्** इत्यादि षष्ठी तृतीयार्थे । **विदित्वा** साक्षात्कृत्य । **ततः** वेदनात् प्रसन्नात् **ततः** वासुदेवात् । यावता प्रयासेन तत्प्रसादोऽव्यक्तप्रसादः । **सर्वस्यापि** इति द्वितीयः **तु**शब्दः अपिशब्दार्थे । **आधिक्य**शब्देन न्यूनत्वमप्युपलक्ष्यते । न्यूनाधिकयोरन्यत्र प्रत्यवायहेतुत्वात् । 'नाव्यक्तादेः' इति पाठे मध्येत्युपस्कर्तव्यम् ।

***भा०दी०***— 'तथापि' इत्यस्य घटनायाह **न्यूनत्वमप्युपलक्षित इति** । भगवदुपासनस्य न्यूनाधिकतावाद्यपि 'तथापि सः = भगवान् गुणदः' इति योजनेति भावः । **अन्यत्र** अव्यक्तादौ **इत्युपस्कर्तव्यमिति** । अव्यक्तादेर्मध्ये कश्चनमुक्तिद इति योजनेति भावः ।

***भा०र०***— अयं अस्मदुक्तः इत्यादि षष्ठी तेषामेषामित्युभयत्र श्रुताः । कर्तृकरणयोस्तृतीया इति तृतीयानुशासनादिति भावः । अपरोक्षज्ञानस्यैव प्रसादद्वारा शान्तिशब्दितमोक्षहेतुत्वस्य शास्त्रार्थत्वात् वेदनशब्दस्य सामान्यपरस्याप्युपासनानन्तरभाविवेदनं साक्षात्कार इति वक्तव्यत्वाच्चाह **विदित्वा साक्षात्कृत्येति** । ततस्तत इत्यनयोर्विवक्षितमर्थं विवेकेन दर्शयति **ततो वेदनात्प्रसन्ना ततो वासुदेवादिति** । भावप्रदीपिकायां तु ततस्तदनन्तरं ततो वासुदेवादित्युक्तम् । यावतेत्यतःपरं भाष्यपूरणं **प्रयासेनेति** । तत्प्रसाद इत्यत्र तच्छब्दार्थमाह **अव्यक्तेति** । तावतैव प्रयासेन देवः प्रसन्नो भविता भविष्यति न संशय इति भाष्येऽन्वयः । द्वितीयं प्रीतिशब्दात्परं अपिशब्दार्थे वर्तमानः सर्वस्यापीति सम्बध्यत इति भावेनोक्तं **सर्वस्यापीति** । अव्यक्तादेरपीत्यर्थः । ननूपासनाधिक्येन चेद्भगवानपरोक्षज्ञानलक्षणगुणदोषः भक्तानां, तर्हि भगवदुपासने सौकर्यमुक्तमनुपपन्नम् । यद्यपीति पदमस्वरसं चेत्यत आह **आधिक्यशब्देनेति** । यद्यप्युपासनायां न्यूनत्वमाधिक्यं वास्तु, तथापि भगवान् गुणद एव, तत्कथमित्यत आह **न्यूनाधिकयोरिति** । अन्यत्र = अव्यक्तविषये । प्रत्यवायहेतुत्वादित्यत्र प्रत्यवायशब्दाप्राप्तिरूपो विवक्षितः । अव्यक्तविषये न्यूनोपासने वाधिकोपासनस्यापि न तदापरोक्ष्यरूपेष्टाप्राप्तिहेतुरिन्द्रियसंयमनाद्यूनभाव सत्युपासकस्यापि देवी नातिप्रसादमेति । देवस्तु तानि साधनानि भक्तिमतः स्वयमेव ददातीति परमश्रद्धामात्रयुक्तानां सुष्ठ्वाचारादेरूनत्वेऽपि भगवत्प्रसादः सम्भवतीति भाषितत्वाद् भगवदुपासने सौकर्यम् । यद्यपीत्यस्य स्वारस्यं चेति भावः । 'मुक्तिदस्तु स एवैको नाव्यक्तादेस्तु कश्चन' इति कचिद्भाष्यं पठ्यते । तत्र

पक्षे षष्ठ्यन्वयायाह **नाव्यक्तादेरिति** । **पाठ इति** । अस्मिन्पक्षे भाष्ये तुशब्दोऽप्यर्थकश्च । नापीति सम्बध्यते । मध्ये त्विति वा । तथा च भावप्रदीपिका । **अव्यक्तादेर्मध्य इति** ।

भाष्यम्

**"ममात्मभावमिच्छन्तो यतन्ते परमात्मना" इति च मोक्षधर्मे श्रीवचनम् । "धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि । प्रश्रिते दानशीले च सदैव निवसाम्यहम्" इति च । महतः परं तु ब्रह्मैव । तथा हि भगवता सयुक्तिकमभिहितम् । "ॐ वदतीति चेन्न प्राज्ञो हि ॐ","ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ" इत्यादि । "तम्" इति पुल्लिङ्गाच्चैतत्सिद्धिः । महतः परत्वं त्वव्यक्तपरस्य भवत्येव । तथा च आग्निवेश्यशाखायाम् "अनाद्यनन्तं महतः परं ध्रुवम्" इति । "परो हि देवः पुरुहूतो महत्तः" इति ।**

*प०टी०*— **ममात्मभावं** मदुपासनद्वारात्मना मोक्षम् । **श्रीवचनमित्युत्तरत्रापि** सम्बन्धः । **तस्मिन्निवसामि** इति तस्य प्रत्यक्षा स्यामित्यर्थः । नन्वव्यक्तोपासकानां मोक्षाय पुनर्भगवदुपासनं न युक्तम् । **अनाद्यनन्तम्** इत्याद्युदाहृतश्रुतिविरोधादित्यत आह **महत** इति । **श्रियं वसाना** इत्यादिश्रुतिर्भगवदुपासनद्वारा अव्यक्तोपासनस्यामृतत्वसाधनपरा । **महतः परम्** इत्यादिश्रुतिस्तु भगवत्परैवेत्यर्थः । इयं श्रुतिः कुतो भगवद्विषया ? इत्यत आह **तथाहीति** । **एतत्सिद्धिरित्यस्य** वाक्यस्य ब्रह्मपरत्वसिद्धिः । न तु **तमिति महतः परं** इत्युक्तपरामर्शः । सन्निहितभगवत्परामर्शसम्भवादिति । महत्परत्वलिङ्गादत्राव्यक्तं किं न स्यात् ? इत्यत आह **महदिति** । भगवत्परत्वेन एतच्छ्रुतेः श्रुत्यन्तरेण व्याख्यातत्वाच्च ब्रह्मपरेयं श्रुतिरित्याह **तथा चेति** ।

*प्र०दी०*— **मम** उपासनेन **आत्मभावं** कैवल्यम् । **परमात्मने** तमुद्दिश्य । अस्य वाक्यस्य कथं प्रकृतोपयोगः ? इत्यत उक्तम् **श्रीवचनमिति** । **नित्ये** नियते । **ब्रह्मण्ये** ब्रह्मणि साधौ । **निवसामि** प्रसन्ना भवामि । **इति च** 'श्रीवचनम्' इति सम्बन्धः । पूर्वं शङ्काहेतुत्वेन श्रियं वसाना इत्यादीनि वाक्यान्युदाहृतानि । तेष्विदमेकं नाव्यक्तविषयमिति वस्तुस्थितिमाह **महत इति** । 'अनाद्यनन्तं महतः परम्' इति वाक्यप्रतिपाद्यमिति यावत् । अत्राभ्युच्चययुक्तिं चाह **तमिति** ।

ननु 'उक्तपरामर्शोपपत्तेः' इति पूर्वपक्षेऽपि युक्तिरुक्तेत्यतः साऽन्यथासिद्धेत्याह **महत इति** । तथा च उक्तवक्ष्यमाणबलात् 'अव्यक्तात् पुरुषः परः' इत्युक्तस्यायं परामर्श इति भावः । श्रुत्यन्तरेणैवं व्याख्यानाच्च एतद्वाक्यं तत्परमित्याह **तथा चेति** । पुरुभिः हूतः **पुरुहूतः** ।

*भा०दी०*— तत्र साधुरिति यत्प्रत्यय इत्युपेत्याह **ब्रह्मणि साधाविति** । अन्यथासिद्धमेव व्यनक्ति तथा चोक्तेति । 'वदतीति च' इत्यादि प्रागुक्तसूत्रबलात्, वक्ष्यमाणश्रुतिबलाच्चेत्यर्थः ।

*भा०र०*— ममेत्यनन्तरं मोक्षधर्मे शेषमाह **उपासनेनेति** । आत्मनो जीवचैतन्यस्य भावो वा स्थितिरित्यस्यार्थोक्तिः **कैवल्यमिति** । तादर्थ्यार्थकचतुर्थीभावोक्तिः । **तमुद्दिश्येति** । क्रियार्थोपपदस्य च कर्मणि स्थानिन इत्यात्मनि इति चतुर्थी । आत्मानं प्रसादयितुमित्यर्थः । तमुद्देश्येति तु फलितप्रदर्शनमित्यप्याहुः । **श्रीवचनमितीति** । तथा च मदुपासनद्वारको मोक्षमार्गः । क्लेशोदर्क इति भाव आवेदितो भवतीति हृदयम् । धर्मेषु नित्य इत्यत्र नित्यशब्दो ध्रुवार्थ इति । तस्य प्रकृतोपयुक्तमर्थमाह **नियत इति** । तत्र साधुरिति ब्रह्मशब्दाद्यत्प्रत्यय इति भावेनोक्तं **ब्रह्मणि साधाविति**। ननु 'चिकितुषी प्रथमा' इति श्रीदेव्याः अनादित सर्वत्रकृतनिवासत्वस्य श्रुतिसिद्धस्य किमिति तत्रैव निवसाम्यहमित्यवध्यनुवाद इत्यतस्तदभिप्रेतमाह **प्रसन्ना भवामीति** । अस्य च श्रीवचनस्य ब्रह्मणे सम्पादितं भगवत्प्रसाद एव भक्ते अहं प्रसन्ना भवामीति स्वप्रसादकामेनापि भगवत्प्रसाद एवापादनीय इत्यभिप्रायावेदनात् प्रकृतोपयोग इति भावेनोक्तं **इति च श्रीवचनमिति** । **सम्बन्ध इति** । भावप्रदीपिकायां तु निवसामीत्येतत्प्रत्यक्षा स्यामिति व्याख्यातम् । भाष्ये ब्रह्मणो महतः परत्ववचनं प्रकृतानुपयुक्तं इत्यतः तद्भावं वक्तुमवतारयति **पूर्वं शङ्काहेतुत्वेनेति** । इदं अनाद्यनन्तं महत इति वाक्यम् । इतरवाक्यानामव्यक्तपरत्वं सम्मतं अस्य तु न तत्परत्वं किन्तु ब्रह्मपरत्वमेवेति भावेनोक्तं **वस्तुस्थितिमिति** । नैतद्वाक्यमव्यक्तविषयमित्येतदत्र न प्रतीयत इत्यतो भाष्यभावमाह **अनाद्यनन्तमिति** । केचित्तु ननु कथं ब्रह्मैवेत्यवधारणं महतः परमव्यक्तमिति श्रुतौ अव्यक्तस्यापि महतः परत्वावेदनादित्यत आह **अनाद्यनन्तं महतःपरमिति** । वाक्यप्रतिपाद्यमितीत्यप्यवतारयन्ति ।

भाष्योदाहृतब्रह्मसूत्राक्षरार्थस्तु यदुक्तमव्यक्तस्य मोक्षार्थं ज्ञेयत्ववचनं नास्तीति, तदज्ञेयत्वावचनमव्यक्तस्यासिद्धम् । यतो 'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' इति महत्परत्वलिङ्गावेदिताऽव्यक्तत्वस्य मोक्षार्थं ज्ञेयत्वं वदति श्रुतिरिति चेन्न । हि यस्मात् प्राज्ञो विष्णुरेव तत्रोच्यते । सर्वतः परे भगवति महतः परत्वं युक्तम् । प्राज्ञस्य प्रतिपाद्यत्वं च 'सोध्वनः पारमाप्नोति तद्विष्णोः परमं पदमि'ति विष्णुप्रकरणाद्विज्ञायते । इतश्च प्राज्ञ एव निचाय्यवाक्योक्त इत्युच्यते । **त्रयाणामेवेति** । आद्यश्चशब्दो न केवलं प्रकरणात् किन्तु युक्त्यन्तरादपीति समुच्चयार्थः । अन्त्यः प्रश्नोपन्याससमुच्चयार्थः । प्राज्ञ इत्यनुवर्तते बुद्धिस्तत्वादेतदुपनिषदीत्यन्वेति । एवं 'वीतमन्युस्त्वां दृशिवान् मृत्युमुखात् प्रमुक्तमिति, स्वर्ग्यमग्निं नचिकेतः प्रजानन्निति दैवैरत्रापि विचिकित्सितं किलेत्येवंप्रकारेण त्रयाणां पितृसौमनस्यस्वर्ग्याग्निब्रह्मणामेवोपन्यासो यतोऽतश्च प्राज्ञ एव तत्रोच्यते,

त्रयाणामेवेति कुत इत्यत उक्तं **प्रश्नश्चेति**। 'सुमना यथा स्याद्वीतमन्युरि'ति 'स्वत्वमग्निं स्वर्गमध्येषिमृत्यो प्रब्रूहितमि'ति ये यं प्रेते विचिकित्सामनुष्य इति चैतत् त्रितय विषय एवं प्रश्नश्च यतोऽतः उपन्यासस्यादावुक्तिः। त्रयाणामेव चेत्येव पूर्तविवमित्युक्तिः, त्रयमध्ये प्रधानस्य न निवेश इति दर्शयितुं उपन्यासस्योक्तत्रयविषयत्वसिद्ध्यै प्रश्नोक्तिरिति। कूटस्थोऽक्षर उच्यते इत्यादाविवात्राप्यस्तु पुंलिङ्गमिति परः परिहर्तुमुत्सहेतापि इति हृदि निधायोक्तमत्राभ्युदययुक्तिमिति। एतत्सिद्धिरेतद्वाक्यस्य भगवत्परत्वसिद्धिरिति भाष्यार्थः। पूर्वपक्षे अव्यक्तपरत्वपक्षे। युक्तिरुक्तेति अनाद्यनन्तमिति वाक्ये हि तं महतः परमिति परामर्शो दृश्यते स चोक्तस्यैव भवति। अव्यक्तमेव च। महतः परमव्यक्तमिति महतः परत्वेनोक्तम्। अतोऽत्राप्यव्यक्तग्रहणे तमित्ययं महतः परमव्यक्तमित्युक्तस्य परामर्श इत्युपपद्यते। अन्यथानुक्तपरामर्शः प्रसज्येत। परमात्मा तु न महतः पर इत्युक्तः किन्त्वव्यक्तात्पुरुषः पर इत्येवमित्यन्यविषयत्वव्युदासेनाव्यक्तविषयत्वे युक्तिरुक्ता। पूर्वभाष्य एवेत्यर्थः। महतः परादव्यक्तात्परस्य भगवतो महतः परत्वं सुबालमेवेति विभावयितुं भाष्ये एव शब्दः। अन्यथासिद्धा = अप्रयोजिका। अनुक्तपरामर्शः प्रसज्येतेत्युक्तदोषमुद्धर्तुं भाष्यभावमाह **तथा चेति**। उक्तं ब्रह्मसूत्रम्। वक्ष्यमाणं 'अनाद्यनन्तं महतः परं ध्रुवमिति, परो हि देव' इति श्रुतिः इति वाक्यम्। ननु पुरुहूत इति पुरन्दरः प्रसिद्धः। तत्कथं अत्र भगवत उक्तिरित्यत उक्तं **पुरुभिरिति**। पुरुशब्दो हि बहुनामहूत इति च शब्दार्थस्य क्रियतेर्निष्ठायां रूपम्। अनन्तैर्वेदैः शब्दितः प्रतिपादित इति लभ्यत इति। प्राज्ञप्रयोगेनाज्ञरूढिबाधे भगवत एव प्रतिपत्तिरिति भावः।

भाष्यम्

**न च अव्यक्तस्वरूपं भगवता निषिद्धम्। भारतादौ साधितत्वात्। "ॐ शरीररूपकविन्यस्तगृहीतेः ॐ" इत्यादौ तु साङ्ख्यप्रसिद्धं निषिद्ध्य वैदिकमव्यक्तमेवोक्तम्। तथा च सौकरायणश्रुतिः— "शरीररूपिकाऽशरीरस्य विष्णोः यतः प्रिया सा जगतः प्रसूतिः" इति। सुव्रतानां क्षिप्रं महदैश्वर्यं ददाति देवी न देव इति विशेषः। "सुवर्णवर्णां पद्मकरां च देवीं सर्वेश्वरीं व्यासजडां च बुद्ध्वा। सैवेति वै सुव्रतानां तु मासान्महाविभूतिं श्रीस्तु दद्यान्न देवः" इति ऋग्वेदखिलेषु॥ ५॥**

*प०टी०*— नन्वव्यक्तस्वरूपमेव नास्ति सूत्रकृता निषिद्धत्वात्, अतो दूरोत्सारितस्तदुपासनस्य मोक्षसाधनत्वादिविचार इत्यत आह **न चेति**। भारतादावव्यक्तं साधयन् कथं शरीररूपकेति

प्रत्याचख्यौ ? इत्यत आह **शरीरेति** । एतत्सूत्रेऽपि 'आनुमानिकम्' इति **साङ्ख्यप्रसिद्धं** स्वतन्त्र-कारणं प्रधानं नेति **निषिद्ध्य** शरीररूपकपदेन **वैदिकमव्यक्तं** साधितमेवेत्यर्थः । **शरीररूपक-पदेनाव्यक्तं** कुतः ? इत्यत आह **तथा चेति** । तस्मादव्यक्तोपासकानां पुनर्ब्रह्मोपासनमपेक्षितमेवेति तत्राधिकदुःखमित्यर्थः । तर्हि पुनरव्यक्तमार्गो नानुष्ठेय एवापन्न इत्यत आह **सुव्रतानामिति** । **सैव** स्वात्मानं बुद्ध्वा बोधयित्वा **महाविभूतिं दद्यात्** । कथमिति ? मासान् ध्याता इत्यर्थः ॥ ५ ॥

***प्र०दी०***— नन्वव्यक्तं नाम तत्त्वमेव नास्तीति सूत्रकृतोक्तम् । ततस्तदभिमानिनी अव्यक्ताख्या देवताऽपि नास्ति । तत्कथं तद्विषयतया व्याख्यानम् ? इत्यत आह **न चेति** । तर्हि तत्कथं सूत्रितम् ? इत्यत आह **शरीरेति** । **साङ्ख्यप्रसिद्धं** प्रधानमिति **स्वतन्त्रं** मुख्यतः शब्दवाच्य-मित्यर्थः । वैदिकमिति भगवदधीनं तत्सम्बन्धेन शब्दवाच्यमित्यर्थः ।

अत्र श्रुतिं चाह **तथा चेति** । प्राक् 'तथाप्यपरोक्षीकृताव्यक्तानाम्' इत्यादिनैकं प्रयोजन-मुक्तम् । अपरं च सप्रमाणकमाह **सुव्रतानामिति** । बुद्ध्वेत्युक्तप्रकारेणोपासीनायेति शेषः । एत-त्प्रयोजनं गीतायां न सूचितमिति न तत्रैवोक्तम् ॥ ५ ॥

***भा०दी०***— **व्याख्यानमितीति** । गीतावाक्यानामित्यर्थः । **एकं प्रयोजनमिति** । भगव-दुपासनासौकर्यरूपमित्यर्थः । बोधमात्रस्य महाभूतहेतुत्वादाह **बुद्ध्वेत्युक्तप्रकारेणेति** । 'सर्वेन्द्रिय-संयमन' इत्यादिनोक्तप्रकारेणेत्यर्थः ॥ ५ ॥

***भा०र०***— **सूत्रकृतोक्तं** = आनुमानिकमप्येकेषामिति चेन्नेति सूत्रकृतोक्तम् । तत्राव्यक्तादि-शब्दानां भगवति समन्वयसमर्थनेनान्यस्याव्यक्तपदार्थस्य तेनानभ्युपगमादानुमानादेः प्रतिपक्षादि-ग्रस्तत्वसम्भवेन तत्र प्रमाणाभावे वस्त्वेव न सिद्ध्यतीति भावः । तद्विषयतया ये चाप्यक्षरमव्यक्त-मिति प्रश्नवाक्यस्याव्यक्ततत्त्वविषयतया । अव्यक्तं प्रकृतिरिति भाष्ये कथं व्याख्यानमित्यर्थः । भावप्रदीपिकायां तु— 'नन्वव्यक्तस्वरूपमेव नास्ति, सूत्रकृताप्रतिषिद्धत्वादतो दूरोत्सारितस्तदुपा-सनस्य मोक्षसाधनत्वविचारः इत्यतः आह न चेती'ति भाष्यमवतारितम् । कथमिति भारतादा-व्यक्ततत्त्वं साधयन् सूत्रकारः कथमनुमानिका सूत्रे प्रत्याचक्षीतेत्यर्थः । मतद्वयेऽप्यव्यक्तं धर्मस्येवेति कथं निषेध्यमित्यतः साङ्ख्यप्रसिद्धप्रधानं निषिध्येत्यस्य तात्पर्यमाह **स्वतन्त्रं मुख्यतः शब्द-वाच्यमिति** । **अव्यक्तमिति** । प्रकृतेऽपि यत्प्रधानशब्दं प्रायुङ्क्त तस्येदं तात्पर्यमव्यक्तरूपतोऽस्ति किन्तु प्रधानस्य तन्त्रं कारणं प्रधानं परममुख्यवृत्त्या अव्यक्तादिशब्दवाच्यं च नेत्यव्यक्तं प्रधानं नेति धर्मनिषेध एव तात्पर्यम् । सूत्रकारस्य । न तु तत्त्वस्वरूपविषयेऽपीति विभावितं भवति ।

तत्सम्बन्धेन = भगवत्सम्बन्धेन । शब्दवाच्यम् = अव्यक्तशब्दवाच्यम् । तथा च भावप्रदीपिकायां एतत्सूत्रेऽप्यानुमानिकमिति साङ्ख्यप्रसिद्धं प्रधानं स्वतन्त्रं कारणं नेति प्रतिषिध्य शरीररूपकपदेन वैदिकमव्यक्तं साधितमेवेति । ब्रह्मसूत्राक्षरार्थस्तु— आनुमानिकमपि = अनुमानगम्यं प्रधानादिकमेव एकेषां 'अव्यक्तात्पुरुषः परः', 'जीवा एव तु दुःखिनः' इत्यादि शाखास्वव्यक्तजीवादिशब्दवाच्यमुच्यत इति चेन्न । अव्यक्तादिशब्दैः परममुख्यया वृत्त्या विष्णोरेवोच्यमानत्वात् । कुत एतत् । यतः 'अव्यक्तमचलं शान्तम्' इति श्रुतिः 'अव्यक्तोऽक्षर उच्यते' इति स्मृतिश्च अव्यक्तं ब्रह्मेति दर्शयति । विष्णोरेवाव्यक्तशब्दवाच्यत्वे कथमन्यत्र योग इत्यत उक्तं 'शरीरे'ति । शरीरस्य रूपमिव रूपं यस्य तच्छरीररूपं, कुत्सितं शरीररूपं शरीररूपकं प्रधानादि । तत्र विन्यस्यावस्थितस्य विष्णोरव्यक्तपदेन गृहीतेः अव्यक्तादिशब्दवाच्यब्रह्मसम्बन्धादव्यक्तादिशब्दव्यवहारोऽन्यत्र द्रष्टव्य इति भावः । वैपरीत्यं किन्न स्यादित्यतः शरीरपदम् । यथा शरीरं पुरुषतन्त्रं तथा प्रधानाद्यपि विष्णुतन्त्रमिति गुणयोगात् शरीरमिति वक्तुमुपात्तम् । तच्च मुख्यशरीरं न भवतीति वक्तुं कप्रत्ययेन कुत्सयामास । 'तदवस्थितगृहीतेरि'ति वाच्ये 'विन्यस्ते'त्युक्तिः । 'प्रधानादिविशिष्टस्यैव अव्यक्तादिगृहीतिः न केवलस्ये'ति विभावितुमिति तन्त्रदीपिकायां स्फुटम् इति । अत्र भगवदधीनत्वे तत्सम्बन्धेन तच्छब्दवाच्यत्वे च न केवलं सूत्रं, श्रुतिं चेति चशब्दः सा अव्यक्तशब्दवाच्या । प्रकृतिशरीरस्य प्राकृतशरीररहितस्य विष्णोः शरीररूपिका शरीरमिव भगवदधीना अमुख्यशरीरं च शरीरशब्दो गौणीवृत्तिरत्रेति वक्तुं गुणयोग 'उच्यते 'यतः प्रिये'ति । या जगतः प्रसूतिः प्रसवित्री सा च सेति श्रुत्यर्थः । असाङ्गत्यपरिहारायोत्तरभाष्यमवतारयति **प्रागिति** । एकं प्रयोजनं भगवदुपासनसौकर्यरूपम् ।

ननु बुद्ध्वा दद्यादित्यनन्वितम् । बोधनादयोर्भिन्नकर्तृत्वात्, बुध्यासुवृत्तानामित्यप्यनन्वयं, सुवृत्तस्य बोधात् पूर्वभावित्वेन बोधान्तरत्वयोगादित्यतः त्वान्तस्याध्याहृतेनान्वय इति वदन् इति शब्दार्थं च दर्शयति **बुद्ध्वा इत्युक्तप्रकारेणेति** । सुवर्णवर्णामित्याद्युक्तविशेषणसम्पन्नत्वेन उपासीनानामुपासनं कुर्वतामित्यर्थः । उपासीनायेति पाठे सुव्रतानां सर्वेन्द्रियातिनियमनादिशोभनव्रतमुक्तानां भक्तानां मध्ये उपासीनाय पुरुषाय देवी महाभूतिं दद्यादिति योजना । केचित्तु उपासीनाये इति पठित्वा ये उपासीनास्तेषां सुव्रतानामित्यन्वय इति व्याचक्षते । अपरे तु इति शब्दार्थं वदन् बोधोऽन्तरङ्गोपायमध्याहरति बुद्ध्वेत्युक्तप्रकारेण उपासनायेति शेष इतीत्यवतार्य, बुद्ध्वेति ल्यबन्तस्य सुव्रतानामित्यन्वय इति व्याकुर्वन्तः उपासीनायेति पठन्ति । भावप्रदीपिकायां तु— सैव श्रीर्देवी स्वात्मानं बुद्ध्वा बोधयित्वा महाभूतिं सुव्रतानां दद्यात् । कथं मासाद्ध्यातेत्युक्तं सुव्रताना-

मेव देवी महदैश्वर्यं ददाति, न देव इति च, विशेष इत्येतदपि प्रयोजनम् । तथाप्यपरोक्षीकृता-व्यक्तानामिति च व्याख्यानान्तरमेव वक्तव्यम् । व्यवधानेनात्र किमित्युच्यत इत्यतोऽत्र निमित्तमाह **एतत्प्रयोजनमिति** ॥ ५ ॥

***गीताक्षरार्थस्तु***— नन्वव्यक्तोपासकानां किं फलं मोक्षोऽस्ति न वा, न चेदुदाहृतश्रुति-विरोधः । आद्ये कथं त्वदुपासकानामुत्तमत्वं फलसाम्यात् इत्याशङ्क्य व्यक्तोपासकानां मोक्षमङ्गी-कृत्य सहेतुकं सोपासकानामुत्तमत्वमुच्यते **ये त्विति त्रिश्लोक्या** । अक्षरं = देहतोऽप्यविनाशि । अनिर्देश्यं = शाब्दगोचरम् । सर्वत्र गच्छतीति गमेर्डप्रत्यये सर्वदेशव्यापि । अचिन्त्यं = मनसो-ऽप्यगोचरम् । कूटस्थं = 'कूटं स्वं विदलं व्योम' इत्यभिधानात् कूटमाकाशं तत्राभिमानितया-वस्थितम् । सुपि स्थः कः । अचलं = स्वपदादभ्रष्टम् । ध्रुवं = नित्यम् । एतानि चाव्यक्त-विशेषणानि । तदुपासनस्य मोक्षसाधनत्वसमर्थनार्थानीति ज्ञेयम् । एवंविधमव्यक्तं चित्प्रकृतिं, इन्द्रियग्रामं = इन्द्रियसमूहं, सन्नियम्य = विषयेभ्यः सम्यगुपसंहृत्य, सर्वत्र समबुद्धयः = षष्ठा-ध्यायोक्तप्रकारेण जीवचिदादिसाम्यज्ञानवन्तः सन्तः, पर्युपासते = सर्वेन्द्रियातिसंयमादिसाधन-सम्पत्त्या ध्यायन्ति ते मामेव प्राप्नुवन्ति मोक्षं प्रतिपद्यन्ते ॥ ३-४ ॥

ननु त्वदुपासकानामिव व्यक्तोपासकानामपि तत्प्राप्तिरूपमोक्षसद्भावे उभयेषां फलसाम्यात् कथं त्वदुपासकानामुत्तमत्वमित्यत उच्यते **क्लेशोऽधिकतर इति** । अव्यक्ते विष्णुविनाकृतश्रीतत्त्वे आसक्ततेजसां क्लेशोऽधिकतरः । अत्यन्ताधिका = अव्यक्ता । अत्राप्यव्यक्तशब्दो व्यक्तोपासनं लक्षयति । तेन च तद्वाचकं लक्ष्यते । गम्यते मोक्षोऽनेनेति व्युत्पादनादुपायो गतिः । अव्यक्तो-पासनद्वारको मत्प्राप्तिलक्षणमोक्षमार्गः । अव्यक्तोपासनानन्तरभावि भगवदुपायासनं देहवद्भिः प्राकृत-प्रायैः पुरुषैः दुःखं यथा भवति तथा अवाप्यते । यतः क्लेशोऽधिकस्तेषां पृथक् श्रियमुपासता-मित्यादि प्रमाणप्रसिद्धमेतदिति हिशब्दः । अयमेव भगवदभिप्रायो नान्य इत्येतत्तु भाष्यटीकयोः स्फुटम् । क्लेशोऽधिकतर इति गीतायां, तदभावः ॥ ५ ॥

**गीता**

## ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
## अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥

***वि०वि०***— श्रीपतित्वेन भगवदुपासने परमश्रद्धामात्रयुक्तानां सुष्ठ्वाचारादेरूनत्वेऽपि श्रीपति-प्रसादसम्भवादचिरान्मोक्षो भवतीति सुगमोऽयं पन्थाः इत्याह **ये त्वित्यादिना**। ये त्वनन्येनैव योगेन

'विष्णोरन्यन्न स्मरेद्यो विना तत्परिवारताम् । तदधीनतां वाऽनन्ययोगी स परिकीर्तितः ॥' इत्युक्त-रीत्या लक्ष्म्यादीनां परिवारत्वादिना तत्साहित्यलक्षणेन न तु पृथक्त्वेन मामुपासते ॥ ६ ॥

*सा०सं०*— मदुपासने न तथा क्लेश इत्याह **ये त्विति** । पूर्वस्माद्वैलक्षण्यद्योतकस्तुशब्दः । **ये तु** । **सर्वाणि कर्माणि** । **मयि** । **सन्नस्य** सर्वस्वतन्त्र हरिरेव मयि स्थित्वा स्वपूजात्वेन कर्माणि स्वाधीनकर्त्रा मया कारयतीत्यनुसन्धाय समर्प्येति वा । **मत्पराः** अहमेवोत्तम इति जानन्तः । **अनन्येनैव योगेन** अव्यक्तोपासनां विना कृतेन ध्यानेन केवलमद्विषयध्यानेनापीति यावत् । **मां ध्यायन्तः उपासते** । अत्र उपासत इत्युक्त्या पर्युपासत इत्युक्ताव्यक्तोपासनमिव नातिशयितोपासनम् । अतीवेन्द्रियनियमनादिकं मत्प्रसादे नापेक्षितमिति न क्लेश इति सूचितम् । तथा, 'न चिरात्' इत्यनेनाव्यक्तापरोक्षे यावान् प्रयासस्तावता यदि मामुपासते तदूनेन वा तदा मदपरोक्षमेव भवतीत्यतोऽपि न क्लेश इति सूचितम् । 'तेषामहं समुद्धर्ता भवामि' इत्यनेनेन्द्रियसंयमाद्यूनभावेऽपि देवीवद्देवो नोपेक्षते, किन्तु तानि साधनानि भक्तिमतः स्वयमेवाप्रयत्नेन ददातीति चातिसौकर्यं भक्तानां भगवदुपासने इति भावः ।

यद्वा, 'क्लेशोऽधिकतर' इति श्लोके अव्यक्तोपास्तिमार्गस्य क्लेशतरत्वोक्त्यैव सुष्ठ्वाचारादेरूनत्वेऽपि मत्प्रसादो भवत्येवेत्यक्लेशत्वात्, मदुपास्तिमार्ग एव श्रेष्ठ इति तात्पर्यगत्योक्तप्रायत्वात्, हेत्वन्तरेणापि भगवदुपास्तिमार्गः श्रेष्ठः इत्याह **ये त्विति** । पूर्वार्धस्य प्रागिवार्थः । अनन्येनैव अन्यशब्दो लक्ष्म्याद्यन्यदेवतावाची सन् तन्निष्ठस्वातन्त्र्यपरिवारत्वविषयपरः, स न भवतीत्यन्यः, तेन योगेन, ध्यानेन । भगवदधीनतया तत्परिवारत्वेन लक्ष्मीब्रह्मादिसहितेन ध्यानयोगेनेति यावत् । 'ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ' (३-३-५७) इत्यादि सूत्रात् । **मां ध्यायन्त उपासते** ॥ ६ ॥

*अ०प्र०*— मद्भक्तानां तु नेदृशः क्लेशः मत्प्रसादादनायासत एव सिद्धिर्भवति इत्याह **ये त्विति** द्वाभ्याम् ।

ये तु[१], मयि[२], सर्वाणि[३], कर्माणि[४], संन्यस्य[५], मत्पराः भूत्वा[६], अनन्येन[७], योगेन[८], मां एव[९], ध्यायन्तः सन्तः[१०] उपासते तेषामहं समुद्धर्ता भवामीत्यन्वयः ॥

ये तु = ये भक्तास्तु[१], मयि = परमेश्वरे[२], सर्वाणि कर्माणि = वर्णाश्रमोचितानि नित्य-नैमित्तिकसर्वाणि कर्माणि कृत्वा[४], संन्यस्य = कर्तृत्वाभिमानं त्यक्त्वा समर्प्य[५], मत्पराः = मनोवाक्कायैरहमेव परः प्रियो येषां ते तथा मद्भजनशीलाः भूत्वा[६], अनन्येन = न विद्यते अन्यो

भजनीयो यस्मिन् तेन अनन्येन[७], योगेन = एकान्तभक्त्युपायेनैव यद्वा, मन आदीन्द्रियवृत्तीनां एकत्वेन मय्येव निवसनमनन्ययोगः[८], मामेव ध्यायन्तः सन्तः[९], उपासते = उपासनां करोति[१०] तदुक्तम्— विष्णोरन्यं न स्मरेद्यो विना तत्परिवारताम् । तदधीनता वा नान्यत् योगी स परिकीर्तितः ॥ इति वचनात् 'तेषामहं समुद्धर्ता भवामी'त्युत्तरेणान्वयः ॥ ६ ॥

**गीता**

## तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
## भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

***वि०वि०***— तेषां मृत्युरूपात् संसारात् । न चिराच्छीघ्रमुद्धर्त्ताऽस्मि । उक्तं च—

'अविष्णुज्ञैरतद्भक्तैस्तदुपासाविवर्जितैः ।
शपेदुपासिताऽप्येषा श्रीस्तांस्तद्धरितत्ववित् ॥
मद्भक्तस्तमुपास्यैव श्रियं ध्यायीत नित्यदा ।
तेन तुष्टातु साऽच्छिद्रं दद्याद्विष्णोरुपासनम् ॥
ततस्तद्दर्शनान्मुक्तिं यात्यसौ नात्र संशयः ।
तथाऽपि सर्वपरमां सर्वदोषविवर्जिताम् ॥
ज्ञात्वा श्रियं तत्परमं तत्पतिं पुरुषोत्तमम् ।
विज्ञायोपासते नित्यं ते हि युक्ततमा मताः ॥
यतः क्लेशोऽधिकस्तेषां पृथक् श्रियमुपासताम् ।
विष्णुना सहिता ध्याता साऽपि तुष्टिं परां व्रजेत् ॥
अन्यथा तु पुनर्विष्णोः श्रीपतित्वेन चिन्तनम् ।
अच्छिद्रमेव कर्तव्यमिति मुक्तिश्चिराद्भवेत् ॥
तस्मादक्लेशतो मुक्तिः क्षिप्रं विष्णुमुपासताम् ।' इति ॥ ७ ॥

***सा०सं०***— **तेषां** मय्यावेशितचेतसाम् । **अहम्** । **मृत्युसंसारसागरात्** मृत्युरूपसंसार-समुद्रात् । **न चिरात्** शीघ्रम् । **समुद्धर्ता भवामी**त्यर्थः । अत्र न चिरादित्युक्त्या श्रिया सह भगवदुपासने द्वयोरपि परमप्रसादसम्भवेन अचिरान्मोक्षो भवति । पृथगव्यक्तोपासनपक्षे तु पूर्वं किञ्चिद्भगवदुपासनं कृत्वा बहुकालं पृथक् श्रियमुपास्य पुनः श्रिया सह भगवदुपासनं तु निरन्तरं

कार्यम्, ततो मुक्तिरिति चिरेणैव भवतीत्यतोऽचिरेण मुक्तिहेतुत्वाच्च भगवदुपासनमेवाधिकमित्युक्तं भवति । तदुक्तम् 'विष्णुना सहिता ध्याता साऽपि तुष्टिं परां व्रजेत्' इत्यादि ॥ ७ ॥

***अ०प्र०***— हे पार्थ ![1], मय्यावेशितचेतसां[2], तेषां[3], अहं[4], मृत्युसंसारसागरात्[5], अचिरात्[6], समुद्धर्ता[7], भवामि[8] ॥

हे पार्थ ![1], मय्यावेशितचेतसां = मयि आवेशितं चेतो यैस्ते तथा[2], तेषां = भक्तानां[3], अहं = परमकारुणिकः[4], मृत्युसंसारसागरात् मृत्युयुक्तसंसार एव सागरः तस्मात् मृत्युसंसाराख्य-समुद्रात्[5], अचिरात् = अचिरेणैव[6], समुद्धर्ता = तारयिता[7], भवामीत्यर्थः ॥ ७ ॥

भाष्यम्

**मदुपासकानां भक्तानां न कश्चित् क्लेश इति दर्शयति ये तु इत्यादिना । उक्तं च सौकरायणश्रुतौ— "उपासते ये पुरुषं वासुदेवमव्यक्तादेरीप्सितं किं नु तेषाम्" इति । "तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः । अहमेव गतिस्तेषां निराशीः कर्मकारिणाम्" इति मोक्षधर्मे ॥ ६-७ ॥**

***प०टी०***— ननु विनाऽव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इत्यादि गीतानुक्तमेव किमित्युक्तम् ? इत्याशङ्क्य, उत्तरश्लोकानवतार्य तदर्थं श्रुतिस्मृतिभ्यां समर्थयति **मदुपासकानामिति** । **तेषां** चतुर्विधभक्तानां मध्ये ॥ ६-७ ॥

***प्र०दी०***— नन्वव्यक्तोपासकानां क्लेशातिशयो गीतायां प्रतीयते । भगवदुपासकानां तु तदभावो न प्रतीयते । अतः 'तदेतत् सर्वं' इति कथमुक्तम् ? इत्यत आह **मदुपासकानामिति** । 'भक्तानाम्' इत्यनेन नान्यत्रात्यन्तमादरमिति सूचयति । अत्र 'अनन्येनैव योगेन' इत्यादिना विनाऽव्यक्तोपासनम् इत्येतत् प्रतीयते । उपासत इत्येवोक्त्या अतिशयोपासनाद्यभावः । 'नचिरात्' इत्यनेन तत्रापीत्यादिकम् । 'तेषामहं समुद्धर्ता भवामि' इत्यनेन देवस्त्वित्यादिकं आगामिगीता-वाक्यमपेक्ष्य प्राक् बुद्ध्यारोहाय तदुक्तमिति ।

अत्र श्रुत्यादिसम्मतिं चाह **उक्तं चेति** । **तेषाम्** आर्तादीनाम् । मध्ये **गतिः** साधनादि-सम्पादकः ॥ ६-७ ॥

***भा०दी०***— **कथमुक्तमिति** । अव्यक्तोपासकानां क्लेशस्य भगवदुपासकानां तदभावस्य च प्रागुक्तत्वेन तदुभयस्यापि 'तदेतत्सर्वम्' इति भाष्येण परामर्शात् परिसन्तरशब्दैः क्लेशस्यैव ज्ञापित-

तया क्लेशाभावे गीतास्थज्ञापकान् भाष्ये प्रदर्श्य तावत् सर्वपरिसन्तरशब्दैः प्रतीयत इति कथमुक्तमित्यर्थः । **नान्यत्रेति** । इन्द्रियसंयमनादावित्यर्थः ।

भगवदुपास्तौ क्लेशो नेति प्राक् भाष्योक्तक्लेशाभावे गीतास्थं ज्ञापकं स्वयमाह **अत्र अनन्येनैवेत्यादिना** । 'इत्येतत्' इति प्राग्भाष्योक्त इत्यर्थः । **अभावः** इत्यनन्तरं 'प्रतीयते' इत्यनुषङ्गः।

ननु भगवदुपासने क्लेशाभावोपपादनं भाष्येऽत्रैव कर्तव्यम्, प्रागेव क्लेशोपपादनप्रस्तावे कस्मात् कृतम् ? इत्यत आह **आगामिगीतावाक्यमिति** । **तदुक्तमिति** । भगवदुपास्तौ क्लेशोनेत्येतदित्यर्थः। **आर्तादीनामिति** । मोक्षधर्मे पूर्वत्र आर्तजिज्ञास्वर्थादीनां प्रस्तुतत्वादेवमुक्तम् । प्रकृतोपयोगायार्थमाह **गतिः साधनादिसम्पादक इति** ॥ ६-७ ॥

***भा०र०***— **तदेतत्सर्वमितीति** । तदेतत्सर्वं पर्युपासते । सन्नियम्य अधिकतर इति परिसन्तरशब्दः प्रतीयत इति पूर्वभाष्ये कथमुक्तमित्यर्थः । अन्यत्र = इन्द्रियसंयमनादौ । **सूचयति इति** । 'भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित्' इति । भक्तिरेव प्रधानमिति भक्तपदेन सङ्क्षिप्य वक्तीत्यर्थः । इत्येतत् विनाव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इत्येतत् । अन्येन न विद्यते अन्य उपासितव्यो यस्मिन् स तथा । तेन योगेनोपायेनेत्यनेन प्रतीयत इत्यर्थः । अतिशयेनोपासनाभावः । प्रतीयत इति वर्तते इत्यादिकम् । तत्रापि व्यक्तापरोक्षे प्रयासः तावता प्रयासेन यदि भगवन्तमुपास्ते ऊनेन वा तदा भगवदपरोक्ष्यमेव भवतीति द्वितीयमधिकमित्येतन्नचिरादित्यनेन प्रतीयते । देवस्त्वित्यादिकमित्यत्रादिशब्देन देवस्तुतानि साधनानि भक्तिमतः स्वयमेवाप्रयत्नेन ददाति इति चातिसौकर्यं भक्तानां भगवदुपासन इति समग्रवाक्यग्रहः प्रतीयत इति सम्बन्धः । नन्वत्र कर्तव्यं भगवदुपासनसौकर्योपपादनं भाष्यकारैः किमिति पूर्वमुक्तमित्यतस्तथा भाषणस्य प्रयोजनमाह **आगामीति** । तद्भगवदुपासकानां क्लेशो नास्तीति प्रमेयम् । अत्र भगवदुपासकानां क्लेशाभावे अव्यक्तादेः सकाशादीप्सितमाप्तुमिष्टं किन्नु स्यान्न किमपीति श्रुतिखण्डार्थः । मोक्षधर्मे चतुर्विधा मम जना भक्ता एवं हि मे श्रुतमित्यार्तादीनां प्रकृत्वादुक्तम् **तेषामार्तादीनामिति** । निर्धारणे षष्ठी । यमिति भावेनोक्तम् । मध्य इति श्रेष्ठाः । कुतः । यतः अनेनाव्यक्ताद्युपासनापादनीयफलाभिसन्धिरहिता इति प्रसिद्धिः । तेषां = निष्कामकर्मिणामहमेव गतिगम्यः इत्यर्थत्वे प्रकृतासङ्गतिः स्यादित्यतो देवस्तुतानि साधनानि भक्तिमतः स्वयमेव ददातीति चासौकर्यं भगवदुपासन इत्युक्तार्थस्थापनाय प्रवृत्तमहमेव गतिस्तेषामिति वाक्यमिति भावेन गतिशब्दस्य विवक्षितार्थासिद्धिरिति भावः । **सम्पादक इति** । फलितप्रदर्शनमित्येके ॥ ६-७ ॥

गीता

# मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
# निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः॥ ८ ॥

***वि०वि०***— भगवदुपासनस्योत्तमत्वमभिधाय उत्तमत्वादेव कुरु । तदलाभे तत्सिद्ध्यर्थमुपायान्तराणि सम्पादयेत्याह **मयीत्यादीना** । मय्येव मन आधत्स्व मामेवोपास्व । बुद्धिं मयि निवेशय । मां जानीहि । अत ऊर्ध्वम् एतत्सम्पत्त्यनन्तरम् । मय्येव निवसिष्यसि । निर्दुःखानन्दात्मिकां स्थितिं प्राप्स्यसि ॥ ८ ॥

***सा०सं०***— एवमुक्तदिशा भगवदुपास्तेरेवोत्तमत्वात्, तदेव कुरु । तदशक्तौ तत्सिद्ध्यर्थम् उपायान्तराणि सम्पादयेत्याह **मयि** इत्यादि चतुष्टयेन । **मय्येव मन आधत्स्व** आधेहि । मामुपास्वेति यावत् । तदलाभे, **मयि बुद्धिं निवेशय** । मद्विषयं ज्ञानं सम्पादय । **अत ऊर्ध्वम्**, मत्सम्पत्त्यनन्तरम् । **मय्येव निवसिष्यसि** । निर्दुःखानन्दानुभवात्मिकां स्थितिं प्राप्स्यसि ॥ ८ ॥

***अ०प्र०***— यस्मादेवं तस्मात् **मय्येवेति** ।

एवं भगवदुपासनस्योत्तमत्वात् त्वमपि तदेव कुरु । तदशक्तौ च तत्सिद्ध्यर्थमेवोपायान्तराणि कुर्वीत्याह **मयीत्यादिना** ।

अन्वयः— हे पार्थ !, यस्मादेवं तस्मात् मय्येव[१], मनः[२], आधत्स्व[३], बुद्धिमपि[४], मय्येव[५], निवेशय[६], एवं कुर्वन् मत्प्रसादेन लब्धज्ञानः सन् अत ऊर्ध्वं अपरोक्षोत्तरं देहान्ते[७], मय्येव[८], निवसिष्यसि[९], न संशयः[१०] ॥

हे पार्थ !, यस्मादेवं तस्मात् मय्येवापि = परमात्मन्येव[१], मनः = सङ्कल्पविकल्पात्मकं मनः[२], आधत्स्व = संस्थापय विषयेभ्यो मनः प्रत्याहृत्य मय्येव स्थिरीकुर्वित्यर्थः[३], अध्यवसायात्मिकां बुद्धिमपि[४], मय्येव[५], निवेशय = प्रवेशय[६], एवं कुर्वन् मत्प्रसादेन लब्धज्ञानः सन् अतः मनोबुद्धिनिवेशनात् ऊर्ध्वं अनन्तरं यद्वा अपरोक्षोत्तरं देहान्ते[७], मय्येव[८], निवसिष्यसि = प्राप्स्यसि यद्वा, निवत्स्यसि मे लोके वासं करिष्यसि[९], न संशयः = नात्र संशयः[१०] मनः मयि स्थिरीकृते सति मद्ध्यानेनापरोक्षोत्तरं मदाधाररूपां मुक्तिं प्राप्स्यसीत्यर्थः[८], अत्राशक्तं प्रति सुगमोपायमाह यदि ध्यानं कर्तुं न शक्तस्तर्हि तदुपायेन विक्षिप्तस्य मनसः पुनः पुनः प्रत्याहरणयुक्तमदनुस्मरणलक्षणेनाभ्यासेन मां प्राप्तुमिच्छ ध्यानार्थमभ्यासं कुरु इत्यर्थः ॥ ८ ॥

**गीता**

## अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
## अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ ९ ॥

*वि०वि०*— अथ मयि स्थिरं चित्तं समाधातुं न शक्नोषि, ततोऽभ्यासयोगेन मामाप्तुमिच्छ ॥ ९ ॥

*सा०सं०*— अथेत्यर्थान्तरे । **स्थिरं** यथा तथा । **मयि चित्तं समाधातुं न शक्नोषि** । **ततो** मनःसमाधानाशक्तत्वात् । पुनः पुनः प्रत्याहारेण भगवन्मनःसमाधानरूपाभ्यासलक्षणो**पायेन** । **मामाप्तुं** ज्ञातुम् **इच्छ** ॥ ९ ॥

*अ०प्र०*— तदेव **अथ चित्त**मित्यनेन वदति ।

हे धनञ्जय ![१], अथ[२], स्थिरं[३], चित्तं[४], मयि[५], समाधातुं[६], न शक्नोषि[७], ततः[८], अभ्यास-योगेन[९], मां[१०] आप्तुं[११] इच्छ[१२] इत्यन्वयः ।

हे धनञ्जय ![१], अथवा[२], स्थिरं यथा भवत्येवं[३], मयि = परमेश्वरे[४], चित्तं = मनोबुद्धिसहितं[५], समाधातुं = धारयितुं सम्यक् निधातुं निक्षिप्तुं[६], न शक्नोषि यदि शक्तो न भवसि निक्षिप्तुं न समर्थोऽसि ततः[७], तर्हि[८], अभ्यासयोगेन = विक्षिप्तं चित्तं पुनःपुनः प्रत्याहृत्य मम अनुस्मरण-लक्षणो योऽभ्यासः स एव योग उपायः तेन तथा[९], मां[१०] आप्तुं = प्राप्तुं[११] इच्छ = प्रयत्नं कुरु ध्यानार्थमभ्यासं कुर्वित्यर्थः ॥ ९ ॥

**गीता**

## अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
## मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥

*वि०वि०*— अभ्यासेऽप्यसमर्थश्चेदसि, ततः सर्वकर्माणि मद्विषयाणि कुर्वन् **मत्कर्मपरमो** भव । सिद्धिं मोक्षम् ॥ १० ॥

*वा०ल०*— 'मत्कर्मपरमो भव' इत्यत्र, मत्कर्म मम पूजादिकर्म ॥ १० ॥

*सा०सं०*— **अभ्यासेऽप्यशक्तोऽसि** । तदा **मत्कर्मपरमः** मत्प्रीत्यर्थं मद्विषयकर्मानुष्ठानमेव परममुत्तमं यस्य स तथा तादृशः **भव** । तावता कथमिष्टसिद्धिरित्यत आह **मदर्थमिति** । **कुर्वन्नपी**त्यर्थः ॥ १० ॥

*अ०प्र०*— यदि पुनः **अभ्यास** इति ।

अभ्यासेऽपि[१], असमर्थोऽसि[२], = यदि अभ्यासेऽपि अशक्तोऽसि शक्तो न भवसि[२], तर्हि मत्कर्मपरमः[३], = मत्प्रीत्यर्थानि यानि कर्माणि एकादश्युपवासव्रतचर्यानामसङ्कीर्तनादीनि मत्कर्माणि तदनुष्ठानमेव परमं यस्य सः मत्कर्मपरमः[३], तादृशः भव[४], एवं मदर्थमपि[५], पूर्वोक्तरीत्या लघूनि गुरूणि वा कर्माणि अभ्याससाधनान्यपि मत्प्रीत्यर्थं कर्माणि कुर्वन् मयि समर्पणं कुर्वन् सन्[७], सिद्धिं = मोक्षं[८], अवाप्स्यसि = प्राप्स्यसि[६], इति ॥ १० ॥

**गीता**

## अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
## सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

*वि०वि०*— अथैतदपि कर्तुमशक्तोऽसि तर्हि अन्यदेवादिपूजनं कृत्वाऽन्ते मत्समर्पणलक्षणं योगमात्रमाश्रितः, यतात्मवान् शुद्धचित्तः सर्वकर्मफलत्यागं कुरु । उक्तं च— वैष्णवान्येव कर्माणि यः करोति सदा नरः । जपार्चामार्जनादीनि स्वाश्रमोक्तानि यानि च ॥ स तत्कर्मेति विज्ञेयो योऽन्ये देवादिपूजनम् । कृत्वा हरावर्पयति स तु तद्योगमात्रवान् ॥ इत्यादि ॥ ११ ॥

*वा०ल०*— 'सर्वकर्मफलत्यागम्' इत्यत्र, सर्वकर्मणां यत् फलं स्वर्गधनकनकादिकम्, तत्राशां न कुरु । वैराग्यमेव कुर्वित्यर्थः ॥ ११ ॥

*सा०सं०*— **अथे**ति प्राग्वत् । एतदपि सर्वाण्यपि जपार्चनादिति कर्माणि मदुद्देश्यकानि मत्प्रीत्यर्थकानीत्यनुष्ठानमपि **कर्तुमशक्तोऽसि** । तर्हि देवतान्तरोद्देशेन कर्माणि कृत्वाऽन्ते मयि समर्पणरूपं मद्योगम् । मत्कर्मत्वे उपायम् अन्ते मयि समर्पणम् । सर्वकर्मणां वैष्णवत्वेन करणे य उपायस्तमाश्रितो भव । **ततो** मद्योगात् । **यतात्मवान्** नियतमनस्कः । **सर्वकर्मफलत्यागं कुर्वि**त्यर्थः । सर्वप्रकारेणापि मदुपासनमेव त्वदुपलक्षितैः सर्वैः कार्यमिति तात्पर्यार्थः ॥ ११ ॥

*अ०प्र०*— अत्यन्तं भगवद्धर्मापरिनिष्ठस्याशक्तस्य पक्षान्तरमाह **अथेति** ।

अथ[१], एतदपि[२], कर्तुं[३], अशक्तोऽसि[४], तर्हि मद्योगं[५], आश्रितः सन्[६], ततः[७], यतात्मवान् भूत्वा[८], सर्वकर्मफलत्यागं[९], कुरु इत्यर्थः ॥

अथ एतदपि कर्तुं अशक्तोऽसि = अथ मत्प्रीत्यर्थं कर्म कर्तुमपि समर्थो न भविष्यसि चेत् तर्हि[४], मद्योगं = ममानुसन्धानं मदेकशरणत्वं[५], आश्रितः सन्[६], ततः = अनन्तरं[७], यतात्मवान् भूत्वा = विषयेभ्यो यतो नियमितः आत्मा बुद्धिर्येन स त्वं तद्वान् । यद्वा, नियतचित्तः = शुद्धचित्तः एतादृशो भूत्वा[८], सर्वकर्मफलत्यागं = सर्वेषां दृष्टार्थानां आवश्यकानां चाग्निहोत्रादि-कर्मणां फलानि तेषां त्यागः तथाभूतं त्यागं[९], कुरु[१०] तदुक्तं भवति— मया तावदीश्वराज्ञया यथा-शक्ति कर्माणि कर्तव्यानि । फलं पुनः दृष्टमदृष्टं वा । श्रीपरमेश्वराधीनमित्येवं मयि भारमारोप्य फलासक्तिं परित्यज्य एवं वर्तमानस्त्वं मत्प्रसादेन कृतार्थो भविष्यसीति तरस्माज्जन्मान्तरं न प्राप्नोषि इत्यर्थः ॥ ११ ॥

**गीता**

## श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते ।
## ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥

***वि०वि०—*** ध्यानालाभे ज्ञानम्, तदलाभेऽभ्यास इत्येतत्समर्थयते **श्रेयो हीति** । अभ्यासा-दज्ञानपूर्वाज्ज्ञानमेव श्रेयः, ज्ञानमात्रात्सज्ञानं ध्यानं विशिष्यते, तस्मात्ध्यानात्कर्मफलत्यागः । ज्ञान-पूर्वं ध्यानेऽपि सकामान्निष्काममेव ध्यानमधिकमिति यावत् । त्यागात् फलत्यागोपलक्षितनिष्काम-ध्यानादनन्तरम् । ज्ञानमात्रव्यवधानेन शान्तिर्मुक्तिर्भविष्यति । तदुक्तम्— 'असम्यक् ज्ञानिनो ध्यानाज्ज्ञानमेव विशिष्यते । ज्ञात्वा ध्यानं ततस्तस्मात् तत्फलेच्छाविवर्जितः ॥ तस्माज्ज्ञाना-द्भवेन्मुक्तिस्त्यागाद्ध्यानयुतात् स्फुटम् ॥' इति ॥ १२ ॥

***वा०ल०—*** 'श्रेयो हि' इत्यत्र, अभ्यासात् शुष्कवेदाभ्यासात् । ज्ञानं श्रवणमननाभ्यां वेदा-र्थावधारणम् । शान्तिः बुद्धेर्मन्निष्ठता ॥ १२ ॥

***सा०सं०—*** 'मयि' इत्यादिनोक्तध्यानालाभे ज्ञानं तदलाभेऽभ्यासयोग इत्येतत् समर्थयते **श्रेयो हीति** । अज्ञानपूर्वकाद**भ्यासाज्ज्ञानं श्रेयः** । **ज्ञान**मात्राज्ज्ञानपूर्वक**ध्यानं श्रेयः** । तस्मा-**द्ध्यानात्** ज्ञानपूर्वकसकामध्यानादित्यर्थः । **कर्मफलत्यागः** श्रेयान् । एतादृशसकामध्यानात् कर्मफलत्यागोपलक्षिततादृशनिष्कामध्यानं श्रेय इति योज्यम् । **फलत्यागात्** कर्मफल त्यागोप-

लक्षितनिष्कामध्यानादित्यर्थः । अपरोक्षज्ञानं श्रेय इति योज्यम् । **अनन्तरं शान्तिः** मोक्ष इत्यर्थः ॥ १२ ॥

***अ०प्र०***— तमिमं फलत्यागं स्तौति । ध्यानालाभे ज्ञानं, ज्ञानालाभेऽभ्यासः, कर्म इत्यादिकं समर्थयते **श्रेयो हीति** ।

अथान्वयः— हि यस्मात्[1], अभ्यासात् = सम्यग्ज्ञानरहितादभ्यासात् यद्वा, पूर्वोक्तसाधन-योगात्[2], ज्ञानं = परमात्मा स्वातन्त्र्यादिगुणविशिष्टः जीवस्तदधीनः अस्वन्तत्रादिगुणवान् इत्यादि वेदशास्त्रप्रमाणादियुक्ति-सहितोपदेशपूर्वकं ज्ञानं[3], श्रेयः = अतिशयेन प्राशस्त्यं श्रेष्ठं मोक्षप्रदत्वा-च्छ्रेयस्करमित्यर्थः[4], ज्ञानात् = पूर्वोक्तज्ञानमात्रात्[5], ध्यानं = सज्ञानध्यानं[6], विशिष्यते = विशेषेण श्रेष्ठं[7], ध्यानात् = तस्माद्ध्यानात् सकामज्ञानपूर्वध्यानात् कर्मफलत्यागः श्रेष्ठः निष्कामसज्ञानध्यानं अधिकमिति भावः । ध्याने सर्वेन्द्रियभावाः एकत्वमाप्नुवन्ति तदा कर्मजातं सर्वं स्वात्मनः पृथक्तया दूरे तिष्ठति कर्मणि दूरे सति स्वभावतः करणादेव फलत्यागः सम्भवति कर्माभावात् । अतो ध्याना-त्कर्मफलत्यागः श्रेष्ठः इत्यर्थः । तस्मात् = त्यागात् एवंभूतात् त्यागात् कर्मसु तत्फलेषु च आसक्तिनिवृत्त्या मत्प्रसादेनैव च अनन्तरं अपरोक्षज्ञानमात्रव्यवधानेन समनन्तरमेव शान्तिः = संसारशान्तिर्मोक्षः तस्मादित्यर्थः । तदुक्तम्— असम्यक् ज्ञानिनो ध्यानाज्ज्ञानमेव विशिष्यते । ज्ञात्वा ध्यानं ततस्तस्मात्तत्फलेच्छादिवर्जितम् ॥ तस्माज्ज्ञानाद्भवेन्मुक्तिः त्यागध्यानयुतात्स्फुटमिति ॥ १२ ॥

**गीता**

## अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
## निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥ १३ ॥

***वि०वि०***— 'ये तु सर्वाणि कर्माणि' इत्यादिनोक्तं प्रपञ्चयति **अद्वेष्टेत्यादिना** । मैत्रः समेषु सत्सु स्नेहवान् । करुणः अधमेषु सत्सु कृपावान् ॥ १३ ॥

***सा०सं०***— 'ये तु सर्वाणि कर्माणि' इत्युक्तम्, तदुपलक्षितधर्मान्तरोक्त्या प्रपञ्चयति **अद्वेष्टेत्यादिना** । **अद्वेष्टा** अप्रियमकुर्वन् । क्लेशस्थानं निरूप्य ततो रक्षिता **मैत्रः** । **करुणः** कृपा-वान् । **निर्ममः** ममेदमिति स्वातन्त्र्यबुद्धिहीनः । **निरहङ्कारः** अविद्यमानात्मगुणाभिमानमोहहीनः । हेयतया दुःखसमं वैषयिकसुखं यस्य स **समदुःखसुखः** । **क्षमी** सहिष्णुः ॥ १३ ॥

*अ०प्र०*— ये तु सर्वाणि कर्माणि इत्यादिनोक्तान् भगवत्प्रसादसाधनभूतान् धर्मान् प्रपञ्चयन्नाह । यद्वा, एवम्भूतस्य भक्तस्याक्षिप्तमवयवपरमेवेश्वरप्रसादहेतून् धर्मानाह **अद्वेष्टे**त्यष्टभिः । तत्र **अद्वेष्टेति** ।

सर्वभूतानां[१], अद्वेष्टा = सर्वभूतेषु अन्तर्यामित्वेन श्रीमहाविष्णुस्तिष्ठतीति ज्ञात्वा द्वेषं न जानाति तस्मादद्वेष्टा । यद्वा, सर्वभूतानां यथायथं यथाशास्त्रमद्वेष्टा[२], मैत्रः करुणश्च = उत्तमेषु द्वेषशून्यः, समेषु मित्रतया वर्तत इति मैत्रः हीनेषु कृपालुरित्यर्थः[३,४,५], निर्ममः निरहङ्कारः = निर्गतो देहादहङ्कारो यस्मात्सः निर्ममः । यद्वा, निर्गतं इदं ममेति ममकारो यस्मात्सः । सर्वत्र कर्मादौ अहङ्कारममकारशून्य इत्यर्थः[६,७], समदुःखसुखः = समे सुखदुःखे यस्य सः सुखदुःखरहित इत्यर्थः । कर्मानुसारेणेश्वरप्रदत्त्वेन अनुपादेयत्वेन वा सुखदुःखयोः साम्यं[८], क्षमी = पृथ्वीवत् क्षमास्यास्तीति क्षमी क्षमावान् क्षमा नाम तितिक्षा एतादृशः यो मद्भक्तः स मे प्रियः इति उत्तरेणान्वयः ॥ १३ ॥

**गीता**

## सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
## मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥

*वि०वि०*— यदृच्छालब्धेन सन्तुष्टः ॥ १४ ॥

*सा०सं०*— **सन्तुष्टः** अलम्बुद्धिमान् । **योगी** कर्मध्यानरूपज्ञानोपायवान् । **यतात्मा** विषयेभ्य उपसंहृतचित्तः । **दृढनिश्चयः** अप्रामाण्यशङ्काशून्यतत्त्वनिश्चयवान् । मय्यर्पिते मनोबुद्धी यस्य स तथोक्तः ॥ १४ ॥

*अ०प्र०*— किञ्च, **सन्तुष्ट** इति ।

सततं सन्तुष्टः = लाभालाभकाले मत्सेवादौ निरन्तरं मनोवाक्कायैः सन्तुष्टः[१-२], दृढनिश्चयः = प्रसन्नचित्तो वा[३], योगी = अप्रमत्तः यद्वा, जीवपरमात्मनोर्दासस्वामित्वेन हृदयभवने निवसनं योगः सोऽस्यास्तीति योगी[४], यतात्मा = यतं नियमितं आत्मा अन्तःकरणं येन तथा संयतस्वभावः दृढनिश्चयः दृढो मद्विषयो निश्चयो यस्य सः । कदाचिदपि मनसो विषयप्रवर्तनं यथा न भवति तथा दृढः स्थिरो बुद्धेर्निश्चयो यस्य सः तथा[१], मय्यर्पितमनोबुद्धिः = मयि अर्पिता बुद्धिः मनश्च येन स

तथा । यद्वा, मयि परमात्मनि अर्पिते निवेदिते मनोबुद्धी येन सः तथा । यो मद्भक्तः स मे प्रियः = एवंभूतो यो मद्भक्तः स मे प्रियः ॥ १४ ॥

**गीता**

## यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
## हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

***वि०वि०***— नोद्विजते न बिभेति स चेति । चशब्दाद्भक्त इत्यनुकृष्यते ॥ १५ ॥

***सा०सं०***— किञ्च, **यस्माल्लोको नोद्विजते** न बिभेति, लोकस्य भयहेतुर्यो न भवति । यश्च सर्वमीशाधीनं बुद्ध्वा **लोकाज्जनान्नोद्विजते** । **यश्च हर्षामर्षभयोद्वेगैः** । हर्षो नाम सदाऽधर्माय मनःप्रवृत्तिः, अमर्षो रोषः । उद्वेगो मनःकम्पविशेषः । तैर्मुक्तो हीनः । **स** चेत्यत्र भक्त इत्यनुषज्यते । **मे प्रियः** ॥ १५ ॥

***अ०प्र०***— किञ्च **यस्मादिति** ।

यस्मात्[1], लोकः[2], नोद्विजते[3], यश्च[4], लोकान्[5], नोद्विजते[6], यश्च[7], हर्षः[8], आमर्षः[9], भयं[10] उद्वेगः[11] एतैर्विमुक्तः[12], यः = मद्भक्तः[13], सः[14], मे = मम प्रियः[15] ॥

यस्मात् = भक्तात्[1], लोकः = जनः[2], नोद्विजते = उद्विजते बिभेति भयशङ्कया सक्षोभं उद्वेगं न प्राप्नोति[3], यश्च पुरुषः[4], लोकान् = जनान् दृष्ट्वा[5], नोद्विजते = न बिभेति भयशङ्कां न करोति[6], यश्च = भक्तः[7], हर्षः = स्वस्येष्टार्थलाभे उत्साहः[8], अमर्षः = परस्य लाभे असहनं[9], भयं च = त्रासः उद्वेगः उद्विग्नता च । यद्वा, भयादिनिमित्तचित्तक्षोभः[10-11] एतैर्विमुक्तः[12], यः = मद्भक्तः[13], सः[14], मे = मम[14], प्रियः[15] ॥ १५ ॥

भाष्यम्

अज्ञानपूर्वादभ्यासाद् ज्ञानमेव विशिष्यते । ज्ञानमात्रात् सज्ज्ञानं ध्यानम् । तथा च सामवेदे अनभिम्लातशाखायाम्— "अधिकं केवलाभ्यासाद् ज्ञानं तत्सहितं ततः । ध्यानं ततश्चापरोक्ष्यं ततः शान्तिर्भविष्यति" इति । "ध्यानात् कर्मफलत्यागः" इति तु स्तुतिः । अन्यथा कथं 'असमर्थोऽसि' इत्युच्येत ?

**"तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते" इति चोक्तम् । "सर्वाधिकं ध्यानमुदाहरन्ति ध्यानाधिके ज्ञानभक्ती परात्मन् । कर्माफलाकाङ्क्षमथो विरागः त्यागश्च न ध्यानकलाफलार्हः" —इति काषायणशाखायाम् ।**

*प॰टी॰*— ज्ञानेन सम्भवतोऽभ्यासस्य कथं ज्ञानसाधनत्वमुच्यते ? ध्यानसाध्यज्ञानस्य च कथं तदवमत्वं 'श्रेयो हि' इत्यनेन ? इत्यत एतत् सप्रमाणकं व्याचष्टे **अज्ञानेति** । **तत्सहितं ततो ध्यानमिति** । ज्ञानमात्रात् ज्ञानसहितं ध्यानमधिकमित्यर्थः । 'ध्यानात् कर्मफलत्यागः' इत्यन्यथा-प्रतीतिमुपपत्तिवचनाभ्यां वारयति **ध्यानादिति** ।

*प्र॰दी॰*— ननु ज्ञानं अभ्यासस्य साधनम् । तत्कथं ततः श्रेयः ? इत्यत आह **अज्ञानेति** । **एवेति** । केवलम् । 'ज्ञानाद्ध्यानं विशिष्यते' इत्यसत् । साधनस्यापि ज्ञानस्य सम्भवात् । अज्ञान-पूर्वस्य ध्यानस्य सम्भवाच्चेत्यत आह **ज्ञानमात्रादिति** ।

उपपत्तिलब्धमर्थं श्रुत्यापि द्रढयति **तथा चेति** । तत्सहितं = ज्ञानसहितं ध्यानम् । ततो ज्ञानमात्राद् अधिकम् । ध्यानात् कर्मफलत्यागो विशिष्यत इत्येतद् अन्यथाप्रतीतिनिरासाय व्याख्याति **ध्यानादिति** । त्यागस्य प्रशस्तत्वमेवानेन लक्ष्यते । न प्रतीतार्थे तात्पर्यमित्यर्थः । कुतः ? इत्यत आह **अन्यथेति** । 'अथैतदप्यशक्तोऽसि कर्तुम्' इति । ध्यानात् प्रत्यवरे कर्मत्यागेऽप्यशक्तस्य कर्मफलत्यागः कथमन्यथा ध्यानादाधिक्ये सत्युपदिश्येतेत्यर्थः । **कर्मसंन्यासात्** कर्मफलरागसंन्या-सात् कर्मयोगोऽपि **विशिष्यते** । किमुत ध्यानयोगः । वक्ष्यमाणकर्मादिसर्वाधिक्यम् । **परात्मन्** परमात्मनि विषये । **विरागः** शोभनाध्यासाभावः ।

*भा॰दी॰*— एवशब्दः कैवल्यार्थ इत्याह **एवेति** । **केवलमिति** । ध्यानं विना कृतमित्यर्थः । **उपपत्तीति** । ज्ञानपूर्वाभ्यासात् केवलज्ञानस्य, सद्ध्यानज्ञानात् केवलध्यानस्य श्रेयस्त्वायोग-रूपोपपत्त्या अज्ञानपूर्वाद् अभ्यासाद् अज्ञानं केवलज्ञानात् सद्ज्ञानध्यानं श्रेय इत्यर्थो लब्ध इत्युपपत्त्या लब्धमित्युक्तम् ।

**अन्यथा** इति भाष्यानुवादः, **ध्यानादाधिक्ये सति** इति व्याख्या । प्रकृतोपयोगाय अनूद्य अर्थमाह **कर्मसंन्यासादिति** । **वक्ष्यमाणेति** । उत्तरार्धे वक्ष्यमाणयत्कर्मविरागत्यागाख्यं सर्वं ततोऽधिकमित्यर्थः । **अफलाकाङ्क्षम्** इत्यनेन त्यागपदेन वा एकार्थनिरासायाह **विराग इति** ।

*भा॰र॰*— ननु श्रवणमननात्मकशास्त्राभ्यासात् तज्जन्यत्वनिर्णयात्मकज्ञानस्य फलरूपत्वा-दाधिक्यं सिद्धमेव, तत्किमर्थं 'श्रेयो हि ज्ञानमभ्यासात्' इत्यत्र अभ्यासपदं विशेषपरतया भाष्ये

व्याख्यायते इत्याशङ्क्य व्याख्यानबीजमाक्षेपं प्रदर्शयति **ननु ज्ञानमभ्यासस्येति** । ज्ञानं = श्रवण-मननजन्यपरोक्षतत्त्वनिश्चयः । अभ्यासो नाम शास्त्राभ्यासः । उपासनापरपर्यायः । 'सोपासना च द्विविधा, शास्त्राभ्यासस्वरूपिणी' इत्युक्तेः । स च द्विविधः श्रवणमननजन्यतत्त्वज्ञानपूर्वभावी तदुत्तरभावी चेति । तत्राद्यः श्रवणमननरूपः । तथा च तत्त्वप्रकाशिकामाहुः श्रवणमनने इति द्वितीयो निदिध्यासनावान्तरलक्षणः । 'निदिध्यासनया भवेत् । द्विविधासावसम्प्रोक्ता विष्णुशास्त्रा-वमर्शनम्, एकं ध्यानं हरेरन्यत्' इति तन्त्रसारसङ्ग्रहवचनात् । अत्र च द्वितीय एवाभ्यासशब्देन ग्राह्यः । तथा च ज्ञानमभ्यासस्य साधनमिति युज्यत इति ज्ञातव्यम् । **कथमिति** । न हि फला-त्साधनं श्रेय इति भावः । केवलाभ्यासादित्युपरितनवचनानुसारेणाह **एवेति** । **केवलमिति** । ध्यानं विना कृतमित्यर्थः । ननु श्रवणजन्यतत्त्वज्ञानात् ध्यानस्योत्तमत्त्वं सिद्धमेव । अपरोक्षज्ञानान्तरङ्गत्वात् तत्कुतो भाष्ये ज्ञानध्यानशब्दौ विशेषपरौ व्याख्यायेते इत्यतस्तन्निवर्त्य शङ्कां दर्शयति **ज्ञानाद्ध्यानं विशिष्यत इत्यसदिति** । ज्ञानमात्रस्य ध्यानाधमत्वं तस्यैव तस्मादुत्तमत्वं चायुक्तमित्यर्थः । अधमत्वायोगे युक्तिमाह **साधनस्यापीति** । अत्र सर्वत्र ज्ञानशब्देन श्रवणमननजन्यत्वनिर्णयो ग्राह्य इत्युक्तमेव । उत्तमत्वायोगे युक्तिमाह **अज्ञानपूर्वस्येति** । श्रवणमननसमकालीनस्येत्यर्थ इत्याहुः । केचित्तु सा ध्यानस्यापि ज्ञानस्य सम्भवादज्ञानपूर्वस्य ध्यानस्य असम्भवाच्चेत्यपि पाठो दृश्यते, तत्र सा ध्यानस्य ध्यानासहितस्येत्यर्थः । ध्यानं च निरन्तरचिन्तनम् । तच्च ज्ञानमन्तरा न सम्भवत्येवेति भाव इत्यपरे । केचित्तु ज्ञानमभ्यासस्य साधनमित्यत्र ज्ञानशब्देन ध्यानप्रकारज्ञानं ग्राह्यम् । तच्च ज्ञानस्य साधनमित्यर्थः । भाष्ये 'अज्ञानपूर्वादभ्यासात्' इत्यत्र ध्यानप्रकार ज्ञानशून्याध्ययनावृत्ति-रूपाभ्यासादित्यर्थः । 'ज्ञानाद्ध्यानम्' इत्यत्रापि ध्यानप्रकारज्ञानाद्ध्यानमित्यर्थः । तथा च षष्ठाध्याये न्यायदीपिका । सम्यग्ध्यानप्रकाराज्ञस्य ध्यानतो ध्यानप्रकारज्ञानमेवोत्तमं ध्यानप्रकारज्ञानसहितं ध्यानं ध्यानप्रकारज्ञानमात्रतोऽधिकमिति व्याचक्षते । तदभव्यम् । अभ्यासस्य साधनमित्यत्राभ्यास-पदस्वारस्यात् । अभ्यासपदस्य ध्यानावृत्तिपरत्वे च तदभावे चाभ्यासयोगेन मां जानीहि इति न्यायदीपिकाविरोधः । न हि ध्यानवृत्त्या भवदभिमतं ध्यानप्रकारज्ञानं भवति । ज्ञानं ध्यानस्य साधनमिति टीकावाक्यविन्यासापातः, शास्त्राभ्यासे अभ्यासशब्दस्येव ध्यानावृत्तौ तस्याप्रयोगा-द्ध्यानाभिप्रायकत्वे 'श्रेयो हि ज्ञानमाध्यानात्' इति गीतापाठापत्तिश्चेत्यपरे । भावप्रदीपिकायां ज्ञानेन सम्भवतोऽभ्यासस्य कथं ज्ञानसाधनत्वमुच्यते, ध्यानसाध्यज्ञानस्य च कथं तदवमत्वं, श्रेयो हीत्यनेनोच्यते इत्येतत्प्रमाणकं व्याचष्टे अज्ञानपूर्वादभ्यासादित्यादि भाष्यमवतारितम् । **उपपत्ति-लब्धमिति** । ज्ञानध्यानशब्दयोः सामान्यपरत्वाभावे यदुपपत्तिरभिहिता तया लब्धं ज्ञानमात्रात्

सज्ज्ञानं ध्यानमित्यर्थः । पदानां व्यवहितत्त्वाद्विवक्षितमन्वयं दर्शयति **तत्सहितमित्यादि** । कस्य स्तुतिरिति ज्ञायत इत्यतोऽन्वयप्रतियोगिदर्शनपूर्वं स्तुतिशब्दार्थमाह **त्यागस्य प्रशस्तत्वमेवेति** । एतत् कर्म परम इति प्रकृतं, कर्म, कर्म कर्तुमशक्त इति सम्बन्ध इत्यभिधानेन कर्तुमित्यन्तमुपात्तम् । प्रत्यवरे = अत्यधमे । **अन्यथा** इत्यनुवादः । **ध्यानाधिक्ये सति** इति व्याख्या ।

ननु संन्यासकर्मयोगयोर्मध्ये कर्मसंन्यासात्कर्मानुष्ठानविषये द्वेषादिवर्जनरूपात् कर्मयोगो भगवदर्पणबुद्ध्या कर्मानुष्ठानविशिष्ट इत्येवमेतस्य वचनस्य पञ्चमे व्याख्यातस्य कथं प्रकृतार्थ प्रत्यायकत्वमित्याशङ्क्य प्रकृतोपयोग्यार्थान्तरं आह **कर्मफलरागसंन्यासादिति** । संन्यासः = त्यागः । कर्मयोगो भगवदर्पणबुद्ध्या कर्मानुष्ठानं विशिष्यत इत्युक्तिमात्रेण प्रकृतार्थस्य ध्यानयोगोत्तमत्वस्य अलाभात् तद्घटनायाह **किमुत ध्यानयोग इति** । **वक्ष्यमाणेति** । उत्तरार्धकर्मविरागत्यागानां वक्ष्यमाणत्वात् तदपेक्षया ध्यानमधिकमित्यर्थः । सम्बुद्धिभ्रान्तिनिरासायाह **परमात्मनीति** । सफलाकाङ्क्षमित्यनेन अपौनरुक्त्यायाह **शोभनाध्यासाभाव इति** । अशोभने विषये शोभनत्वभ्रान्ती रागः । विशब्दश्च नञर्थः । नञश्चाभावोऽर्थ इति भावः । 'न ध्यानफलार्हः' इति भाष्यस्य, ध्यानस्य या कला तस्याः यत्फलं तदपि कर्मविरागत्यागः नापादयितुमर्हन्तीति अर्थः ।

भाष्यम्

**वाक्यसाम्येऽप्यसमर्थविषयत्वोक्तेस्तात्पर्याभावः इतरत्र प्रतीयते । ध्यानादिप्राप्तिकारणत्वाच्च त्यागस्तुतिर्युक्ता ।**

***प०टी०***— ननु 'तयोस्तु कर्मसंन्यासात्' 'ध्यानात् कर्मफलत्यागः' इत्यनयोर्वचनत्वाविशेषात् कथमेकेनान्यस्य स्तुतिपरत्वकल्पनम् ? इत्यत आह **वाक्येति** । इतश्चास्य स्तुतिपरतैवेत्याह ।

***प्र०दी०***— ननु 'तयोस्तु' इति 'सर्वाधिकम्' इति च द्वयोरपि वाक्यत्वात् कथं तद्विरोधेन 'ध्यानात्' इति वाक्यस्य स्वार्थे तात्पर्याभावः व्याख्यातः ? इत्यत आह **वाक्येति** । वाक्यत्वेन साम्येऽप्युपपत्तिसाहित्येन प्राबल्यादित्यर्थः । **इतरत्र** 'ध्यानात्' इति वाक्यस्य प्रतीतेऽर्थे ।

युक्त्यन्तरं चाह **ध्यानादीति** । त्यागो हि ध्यानज्ञाननिवृत्तकर्मानुष्ठानप्राप्तौ कारणत्वेन 'परीक्ष्य लोकान्' इत्यादावुच्यते । न च फलात्साधनं श्रेयः । अतोऽपीयं स्तुतिरेवेत्यर्थः । अनेन लक्ष्यार्थोऽपि निष्कृष्योक्तो भवति ।

*भा०दी०*— **उपपत्तीति** । अन्यथा कथं 'असमर्थोऽसि' इत्युच्येत इत्यत्रोक्तोपपत्तिसाहित्येनेत्यर्थः । **अनेनेति**। 'ध्यानादिप्राप्ति' इत्यादिभाष्येण प्रशस्तत्वरूपो लक्ष्यार्थः, ध्यानादिप्राप्तिकारणत्वेनेति निष्कृष्योक्तो भवतीत्यर्थः ।

*भा०र०*— **उपपत्तिसाहित्येनेति** । ध्यानात्प्रत्यवरे कर्मयोगेऽप्यशक्तस्य कर्मफलत्यागः कथं ध्यानादाधिक्येस्त्युपदिश्येतेति या कर्मफलत्यागस्य ज्ञानादधमत्वस्याधिका युक्तिरुक्ता तत्साहित्येनेत्यर्थः । इदं च असमर्थविषयस्योक्तेरित्यस्य तात्पर्यकथनम् । **इतरत्रेत्यनुवादः ध्यानादित्यादि** व्याख्या । भाष्यस्थादिपदार्थोक्तिः **ज्ञाननिवृत्तकर्मेति** । इयं ध्यानात्कर्मफलत्यागो विशिष्यत इत्युक्तिः । अनेन ध्यानादिप्राप्तिकारणत्वेनेति भाष्येण लक्ष्यार्थः । ध्यानात् कर्मफलत्याग इति तु स्तुतिरिति प्रशस्तत्वं लक्ष्यत इत्युक्तम् । प्रशस्तत्वं च गुणवत्त्वं, गुणश्च ध्यानादिप्राप्तिकारणत्वरूप इति निष्कृष्योक्त इत्यर्थः ।

भाष्यम्

**केवलध्यानात् फलत्यागयुक्तं ध्यानमधिकम् । ध्यानयुक्तत्याग एव च अत्र उक्तः । अन्यथा कथं 'त्यागाच्छान्तिरनन्तरम्' इत्युच्यते ? कथं च ध्यानादाधिक्यम् ? तथा च गौपवनशाखायाम्— "ध्यानात्तु केवलात् त्यागयुक्तं तदधिकं भवेत्" इति ।**

*प०टी०*— ननु त्यागस्योक्तगुणाभावे स्तुतिरपि कथं युक्ता ? इत्याशङ्क्याह **ध्यानादिति** । ध्यानात् कर्मफलत्यागग्रहणे ध्यानादाधिक्यं न युक्तमेवेत्यर्थः ।

*प्र०दी०*— प्रकारान्तरेण व्याख्याति **केवलेति** । त्यागरहितात् ध्यानात् । ननु कुतो 'ध्यानात्' इति केवलस्य निर्धारणम् । कुतश्च कर्मफलत्यागः ? इति तत्सहितध्यानलक्षणा । त्यागस्य वा ध्यानसाहित्येनोपस्कार इत्यतः प्रतिज्ञापूर्वकमाह **ध्यानेति** । त्यागयुक्तं ध्यानं ध्यानयुक्तः त्याग इति द्विविधोक्त्योक्तं प्रकारद्वयं सूचयति । **अन्यथा** केवलत्यागाङ्गीकारे । 'कथं च' इत्यत्रापि 'अन्यथा' इति वर्तते । न केवलमन्यथाऽनुपपत्त्या अयमर्थः सिद्धः । किं तर्हि ? श्रुत्याऽपीत्याह **तथा चेति** ।

*भा०दी०*— 'ध्यानात् कर्मफलत्यागः' इति गीतायां 'ध्यानात्' इत्यस्य केवलाद् ध्यानाद् इति, 'त्यागः' इत्यस्य ध्यानयुक्तत्याग इति कुतो ज्ञायते ? इति शङ्कते **ननु कुत इति** ।

**द्विविधोक्त्येति** । भाष्ये प्रमाणे च मिलित्वेति भावः । **उक्तमिति** । अवतारिकायां स्वेनोक्त-मित्यर्थः । **अन्यथा** इत्यनुवादः । **केवल** इत्यादि व्याख्या । **अन्यथाऽनुपपत्तेति** । त्यागाच्छान्त्युक्त्यन्यथानुपपत्त्या ध्यानादाधिक्यानुपपत्त्या चेत्यर्थः ।

***भा०र०***— **प्रकारान्तरेणेति** । प्रशस्तत्वं पूर्वं स्तावकत्वरूपेणैकेन प्रकारेण ध्यानात् कर्मफलत्याग इति वचनं व्याख्यातम् । इदानीमन्येनापि केवलात् त्यागरहितात् ध्यानात् त्यागः ध्यानयुक्तत्यागोऽधिक इति प्रकारेण व्याख्यातीत्यर्थः । **कुत इति** । ध्यानशब्दस्य ध्यानसामान्यवाचिनः त्यागरहितात् ध्यानादिति विशेषविषयत्वनिश्चयः कस्माद्धेतोरित्यर्थः । कर्मफलत्यागे इतीत्यनन्तरं अत्र त्यागशब्देनेति शेषः । लक्षणाबीजसम्बन्धप्रदर्शनाय तत्सहितेत्युक्तम् । फलत्यागसहितेत्यर्थः । उपस्कारः ध्यानयुक्तत्याग इति विशेषणम् । **प्रकारद्वयमिति** । त्यागशब्देन त्यागसहितध्यानलक्षणेत्येवमेकः प्रकारः ध्यानयुक्तत्याग इति त्यागस्य ध्यानयुक्तत्वरूप उपस्कार इत्यपरः प्रकारः इति प्रकारद्वयम् । त्यागशब्दव्याख्यानप्रकारद्वयमित्यर्थ इत्याहुः । केवलत्यागाङ्गीकारे = ध्यानं विना त्यागाङ्गीकारे । अन्यथानुपपत्त्या = अन्यथा कथमित्यादिभाष्योक्त्या, त्यागाच्छान्त्युक्त्यन्यथानुपपत्त्या ध्यानादाधिक्योक्तमन्यथानुपपत्त्या च,

भाष्यम्

**न हि त्यागमात्रानन्तरमेव मुक्तिर्भवति । भवति च ध्यानयुक्तात् । केवलत्यागस्तुतिरेवमपि भवति । यथा "अनेन युक्तो जेता, नान्यथा" इत्युक्ते ॥१२-१५॥**

***प०टी०***— ननु कथं केवलत्यागग्रहे त्यागाच्छान्तिरित्ययुक्तम्, तस्यापि मोक्षहेतुत्वात् ? इत्यत आह **न हीति** । त्यागयुक्तध्यानाभ्युपगमेऽप्येतत्कुतो युक्तम् ? इत्यत आह **भवति चेति**। ननु तर्हि त्यागाद्ध्यानमित्येव वक्तव्यं ध्यानत्यागयोर्ध्यानस्यैव प्राधान्यादित्यत आह **केवलेति** । **एवमप्यर्थे** केवलत्यागग्रहणं **स्तुतिरेव भवति** । यथा 'भृत्येन युक्तो राजा जेता' इत्युक्ते राज्ञः प्राधान्येऽपि भृत्यस्तुतिरेव भवति । तथैवेत्यर्थः । केवलत्यागग्रहणे स्तुतिपरध्यानादिकारणत्वगुणेनेत्युक्तम् । इदानीमर्थान्तरोक्तौ गुणान्तरेणापि स्तुतिर्युक्तेति वा आह **केवलेति** ॥ १२-१५ ॥

***प्र०दी०***— आद्यामन्यथाऽनुपपत्तिमुपपादयति **न हीति** । 'ततश्च आपरोक्ष्यम्' इत्युक्तश्रुतिविरोधादिति भावः । उक्ताङ्गीकारे कथमेतदनुपपत्त्यभाव इत्यत आह **भवति चेति** । त्यागादिति सम्बन्धः । ज्ञानमात्रव्यवधानेति भावः । द्वितीयानुपपत्तिस्तु 'तयोस्तु' इत्युपपादितैव । ननु 'अथैतदप्यशक्तोऽसि' इत्यनेन केवलत्यागो विहितः । तत्प्रोचनाय 'श्रेयो हि' इति तस्य स्तुतिरुप-

क्रान्ता । न च केवलध्यानात् तत्फलत्यागयुक्तं ध्यानमधिकमिति व्याख्याने केवलत्यागस्तुतिर्लभ्यते । किं तु तद्युक्तस्य ध्यानस्यैव । अतः पूर्वसङ्गतत्वात् पूर्वमेव व्याख्यानं युक्तम् । न तु द्वितीयमसङ्गतेरित्यत आह **केवलेति** ।

यथा **अनेन** भृत्येन **युक्तः** राजा रिपूणां **जेता, नान्यथा** इत्युक्ते भृत्यस्य स्तुतिर्लभ्यते । तथैवमप्यस्मिन्नपि व्याख्याने **केवलत्यागस्तुतिः** युक्ता । ध्यानस्य ध्यानान्तराधिक्ये तत्साहाय्यस्य हेतुत्वेनोक्तत्वादित्यर्थः ॥ १२-१५ ॥

***भा०दी०*— इत्युक्तेति** । प्रागुदाहृतश्रुतीत्यर्थः ।**पूर्वसङ्गतत्वादिति** । 'अथैतत्' इति वाक्योक्तत्यागविधिसङ्गतत्वात् **पूर्वं** प्राचीनमेव व्याख्यानं युक्तमित्यर्थः । **असङ्गतेरिति** । त्यागस्तुतेरप्राप्तिरिति भावः । **व्याख्यानेति** । येन केनचिदिति निमित्तोक्त्या तस्य व्याख्यानता प्रतीतेरिति भावः ॥ १२-१५ ॥

***भा०र०*—** आद्यां अन्यथा कथमित्युक्तं त्यागानन्तरमेवमुक्तिः कुतो न भवतीत्यतोऽत्र भाष्यकाराभिप्रेतं हेतुमाह **ततश्चेति** । ततश्चापरोक्ष्यं ततः शान्तिर्भविष्यतीत्यनुपदमेवोक्तश्रुतिविरोधादित्यर्थः । उक्तार्थाङ्गीकारे केवलध्यानात् फलत्यागयुक्तं ध्यानमधिकमित्यर्थाङ्गीकारे इति सम्बन्ध इति । कथं त्यागाच्छान्तिरिति पूर्वभाष्यगतस्य त्यागादित्यस्य ध्यानयुक्तादित्यत्र विशेषतया सम्बन्ध इत्यर्थः । प्रकरणवशप्राप्तस्य त्यागादित्यस्य संयोजनमित्यर्थ इत्यन्ये । ननु ध्यानयुक्तत्यागस्य मोक्षसाधनत्वभाषणमयुक्तम् । ततश्चापरोक्ष्यं ततः शान्तिरित्युदाहृतश्रुतौ ध्यानान्तरभाव्यपरोक्ष्यज्ञानसाध्यत्वावेदनात् शान्तेरित्यत आह **ज्ञानमात्रेति** । 'न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृग्' इति वचनादिति भावः ।

द्वितीया । कथं च ध्यानादाधिक्यमित्युक्ता । **तयोस्त्वितीति** । (न किञ्चिदन्तराधाय निर्वाणा) तयोस्तु कर्मसंन्यासात्कर्मफलरागन्यासात् कर्मयोगो विशिष्यते किन्तु ध्यानयोग इति प्रमाणोदाहरणेनोपपादितेत्यर्थः । केवलत्याग इति सर्वकर्मफलत्यागं कुर्वीत तत्रैव श्रवणादिति भावः। तद्युक्तध्यानस्यैव = त्यागयुक्तध्यानस्यैव । स्तुतिर्लक्ष्यत इति वर्तते पूर्वसङ्गत-त्वात् । अथैतदप्यशक्तोऽसि तर्हि कर्मफलत्यागं कुर्विति पूर्ववाक्योक्तत्यागप्रोचनार्थत्वेन सङ्गतत्वात् ध्यानात् कर्मफलत्याग इति तु स्तुतिरिति यत्पूर्वव्याख्यानं तद्युक्तम् । न तु केवलध्यानात् कर्मफलत्यागे युक्तं ध्यानमधिकमिति द्वितीयं व्याख्यानम् । केवलत्यागप्रोचनपरत्वायोगेनासङ्गतत्वादित्यर्थः । अनेनेत्यत्र विशेष्य पूरणम् । **भृत्येनेति** । **एवमपी**त्यनुवादः । **अस्मिन्नपी**ति व्याख्या । तत्साहाय्यस्य = त्यागसाहाय्यस्य ॥ १२-१५ ॥

**गीतातात्पर्यनिर्णयः**

शान्तिर्मुक्तिः ॥ ४-१५ ॥

***न्या०दी०***— नन्वत्र त्यागाच्छान्तिः फलमुच्यते । अतः कथमुच्यते तस्मान्मुक्तिरित्यत आह **शान्तिरिति** ॥ नन्वत्र कर्मफलत्यागमात्रस्यैव ध्यानाधिक्यमुच्यत इति किं नेष्यते ? ज्ञानपूर्वं ध्यानसाहित्यं किमुच्यते ? इत्यतो वाऽऽह **शान्तिरिति** ॥ अत्र त्यागस्य शान्तिपदोदितमुक्तिहेतुत्वमुच्यते । न च तत्केवलत्यागग्रहणे युक्तम् । "संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः" इत्युक्तत्वात् । ज्ञानपूर्वकध्यानसहितत्यागस्य तत्सम्भवात् स एवात्र विवक्षित इति भावः ॥ ४-१५ ॥

***भा०दी०***— **संन्यासस्तु** इति । त्यागस्त्वित्यर्थः । **अयोगतः** कर्मानुष्ठानहीनात् ॥ **इत्युक्तत्वादिति** । पञ्चमेऽध्याये ॥ ४-१५ ॥

**गीता**

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः॥ १६ ॥**

***वि०वि०***— शुचिर्बाह्यान्तरशुद्धिमान् । दक्षः पटुः । उदासीनः सर्वत्र समः । सर्वारम्भपरित्यागीति सर्वारम्भाभिमानत्यागेन फलत्यागेन भगवति समर्पणरूपेण च त्यागी । तस्यैव प्रपञ्चः **शुभाशुभपरित्यागीति** । भक्त्यादिव्यतिरेकेणेतराकाङ्क्षारहितः । उक्तं च— 'भक्तिं ज्ञानं च वैराग्यमृते यो नेच्छति क्वचित् । शुभाशुभपरित्यागी विद्वद्भिः कीर्तितो हि सः ॥' इति वचनात् ॥ ॥ १६ ॥

***वा०ल०***— 'उदासीनो गतव्यथः' इत्यत्र उदासीनः विषयेष्वासक्तिरहितः ॥ १६ ॥

***सा०सं०***— किञ्च **अनपेक्षो** भगवत्प्रीत्यन्यत्र क्वाप्यपेक्षाहीनः । **शुचिः** बाह्यान्तरशुद्धिमान् । **दक्षः** भगवत्कर्मकरणे पटुः । **उदासीनः** कर्तव्योपकारापकारयोरुपेक्षकः । **गतव्यथः** परकृतापकारैरप्राप्तमनःक्लेशः । **सर्वारम्भपरित्यागीत्यस्य** अवैष्णवसर्वारम्भपरित्यागीति, सर्वारम्भाभिमानत्यागी, सर्वारम्भफलत्यागी, भगवति सर्वारम्भसमर्पणरूपत्यागवानिति चतुर्धाऽर्थः ॥ १६ ॥

***अ०प्र०***— किञ्च, **अनपेक्ष** इति ।

अनपेक्षः = अन्यसुखापेक्षा न विद्यते यस्य सोऽनपेक्षः । यद्वा, यदृच्छोपस्थितेऽप्यर्थे निस्पृहः[१], शुचिः = बाह्यान्तरशौचसम्पन्नः[२], दक्षः = अनलसः परमात्मभक्तौ समर्थ इत्यर्थः[३], उदासीनः = पक्षपातरहितः[४], गतव्यथः = आधिशून्यः यद्वा, वैराग्येन गता नष्टा संसारव्यथा दुःखं यस्य सः निरन्तरसुखीत्यभिप्रायः[५], सर्वारम्भपरित्यागी = सर्वेषामारम्भानां मूलमहङ्कारः तत्परित्यागी । यद्वा, दृष्टादृष्टार्थानां आरम्भान् उद्यमान् परित्यक्तुं शीलं यस्य स तथा, यद्वा, अवैष्णवसर्वकर्मपरित्यागी सर्वकर्मस्वाभिमानत्यागेन तेषां भगवत्समर्पणेन वा त्यागी यः स एव तथोच्यते[६], एवंभूतः स यो मद्भक्तः सः मे = मम प्रियः । तदुक्तम्— भक्तिज्ञानं च वैराग्यं ऋते यो नेच्छति क्वचित् । शुभाशुभपरित्यागी विद्वद्भिः कीर्तितो हि सः ॥ अनेन शुभाशुभादित्यागी ॥ १६ ॥

**गीतातात्पर्यनिर्णयः**

**अवैष्णवसर्वारम्भपरित्यागी । सर्वारम्भाभिमानत्यागेन फलत्यागेन भगवत्समर्पणरूपेण च त्यागी ।**

*प्रका०*— "सर्वारम्भपरित्यागी यो मद्भक्त" इत्यत्र सर्वारम्भपरित्यागस्य विष्णुभजनेनाविरोधं दर्शयति **अवैष्णवेत्यादिना** । "सर्वकर्मपरित्यागं प्राहुस्त्यागं विचक्षणाः । इत्यादिवाक्यपर्यालोचनया सर्वारम्भपरित्यागश्चतुर्धा युज्यत इत्यर्थः ।

**न्या०दी०— "ये तु सर्वाणि कर्माणि" इत्यादि प्रपञ्च्यते 'अद्वेष्टा' इति । तत्र "सर्वारम्भपरित्यागी" इत्येतदन्यथाप्रतीतिनिरासाय चतुर्धा व्याचष्टे अवैष्णवेति ॥**

*भा०दी०*— **प्रपञ्च्यत** इति । तत्रोक्तधर्मेभ्यो धर्मान्तरकथनेनेति योज्यम् ॥ **अन्यथाप्रतीतीति** । आरम्भसामान्यनिषेधप्रतीतीत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

**"सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणः ॥"**

**"मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ॥" इत्यादेः ॥ १६ ॥**

**न्या०दी०**— उक्तार्थानुपपादयति **सर्वेति** ॥ **सर्वकर्मफलत्यागमित्यनेन सर्वारम्भफलपरित्यागेन सर्वारम्भपरित्यागीत्युक्तं सिद्ध्यति । मयीत्यनेन सर्वारम्भाभिमानत्यागेन सर्वारम्भाणां भगवति समर्पणेन च सर्वारम्भपरित्यागीत्युक्तं सिद्ध्यति । 'मयि" इति**

**वाक्यस्य स्मृत्यैव तथा व्याख्यातत्वात् । आदिपदगृहीतेन "सर्वधर्मान् परित्यज्य" इत्यादिना अवैष्णवारम्भपरित्यागेन सर्वारम्भपरित्यागीत्युक्तं सिद्धयति । तस्य तथा सयुक्तिकं व्याकरिष्यमाणत्वात् ॥ १६ ॥**

***भा०दी०***— **स्मृत्यैव व्याख्यातत्वादिति** । तृतीये "नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलमि"ति स्मृत्या "नाहं कर्ते"त्यभिमानत्यागः । "हरिः कर्ते"त्यादिना च भगवति समर्पण-रूपः कर्मन्यास इति व्याख्यातत्वादिति भावः ॥ **व्याकरिष्यमाणत्वादिति** । अष्टादशे (अन्य) सर्वधर्मान् परित्यज्येत्युक्तशेषत्वेनेत्यादिनेत्यर्थः ॥

**गीता**

# यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
# शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥

***वि०वि०***— 'हर्षादिभिर्मुक्तः' इत्युक्ते कादाचित्कमपि भवतीति, 'यो न हृष्यति' इत्यादि, 'हर्षामर्ष' इत्यादिकमुपचारपरिहारार्थम् । उक्तं च— '(ह)धृतिर्मदादधर्माय हर्षो नाम प्रकीर्तितः ॥' इत्यभिधानात् ॥ १७ ॥

***वा०ल०***— 'शुभाशुभपरित्यागी' इत्यत्र, शुभं काम्यशुभम् ॥ १७ ॥

*॥ इति श्रीमद्भगवद्गीतालक्षालङ्कारे द्वादशोऽध्यायः ॥*

***सा०सं०***— 'हर्षामर्षभयोद्वेगैर्मुक्तः' इत्युक्ते निष्ठाप्रत्ययेनातीतत्वप्रतीत्या कालान्तरे हर्षादि-मानिति शङ्का स्यात् । तन्निरासाय तद्व्यनक्ति **यो न हृष्यतीत्यादिना** । 'क्रियासातत्यरूपक्रिया-प्रबन्धसामीप्ययोः' (पा.सू. ३-३-१३५) इति सूत्रेण क्रियासातत्यरूपक्रियाप्रबन्धे विहितलट्-प्रत्ययान्तत्वेन '**हृष्यति**' इत्यादेर्यावज्जीवं हृष्यतीत्यादिरर्थः । '**न हृष्यति न द्वेष्टि**' इत्यादिरूपेण नञ्सम्बन्धे सति कदाऽपि न हृष्यतीत्यादिरर्थो भवतीति भावः । उदाहृतं च वृत्तौ तार्तीयतृतीय-पादे । 'यावज्जीवमन्नमदात्' इत्यादि । 'सर्वारम्भपरित्यागी' इति सामान्यत उक्तम् । विशेषोक्त्या व्यनक्ति **शुभाशुभेति** । ज्ञानभक्तिवैराग्याद्यन्यशुभत्यागीत्यर्थः । अत एव तदन्यन्न काङ्क्षतीत्यर्थो न काङ्क्षतीत्यस्य ज्ञेयः । एवं 'लोकान्नोद्विजते' इत्यस्यापि 'हर्षामर्षभयैर्मुक्तः' इत्यनेनापौनरुक्त्यं ध्येयम् । उक्तशङ्कानिरासार्थत्वादिति ॥ १७ ॥

*अ०प्र०*— यः भक्तः विष्णुभक्तिं विना अन्यत्किमपि अधिकं न पश्यति तस्मात् विषय-भोगविशेषैः नश्वरसुखं प्राप्य[१], न हृष्यति = हर्षं न प्राप्नोति[२], न द्वेष्टि च = तथा प्रारब्धकर्मणा अप्रियं प्राप्य न द्वेष्टि[२], न शोचति = इष्टार्थनाशे सति न शोचति[३], न काङ्क्षति = अप्राप्तमर्थं न काङ्क्षति[४], शुभाशुभपरित्यागी = शुभाशुभे पुण्यपापे त्यक्तुं शीलं यस्य सः कथञ्चेत्यस्योत्तरं अनेनैवोक्तं द्रष्टव्यम् । पुण्येन शुभं स्ववर्णाश्रमोचितकर्मणां आचरणं कृते सति निष्कामतया ईश्वरार्पणं त्यागः । प्रारब्धकर्मवशात् प्रायेण अशुभं दुःखं प्राप्तं चेत् तदपि तद्वदेव करणं त्यागः एवमुक्तप्रकारेण अनयोः परित्यागोऽस्यास्तीति तथा । तदुक्तम्— प्रायो सुखादिषु समः प्रायो हर्षादिवर्जितः । तथोच्यते यथाल्पस्वो निःस्व इत्युच्यते जनैः ॥ न हि मुख्यतया साम्यं कस्य-चित्सुखदुःखयोः । न च हर्षादिसन्त्यागी यावन्मुक्तिः कुतश्चन ॥ इति ॥

येन केनचिद्दैवलब्धेनेत्यर्थः[५], एवंभूतो = भूत्वा यः[६], भक्तिमान्[७], सः[८], मे = मम[९], प्रियः ॥ १७ ॥

भाष्यम्

**'सर्वारम्भपरित्यागी', 'शुभाशुभपरित्यागी' इत्यादेः सामान्यविशेषव्याख्यान-व्याख्येयभावेन अपुनरुक्तिः । हर्षादिभिर्मुक्त इत्युक्ते कादाचित्कमपि भवतीति 'यो न हृष्यति' इत्युक्तम् । उपचारपरिहारार्थं पूर्वम् ।**

*प०टी०*— 'सर्वारम्भ...'इत्यादौ प्रतीतपुनरुक्तिं परिहरति **सर्वेति** । ननु 'यो न हृष्यति' इत्यनेन सर्वदा हर्षाद्यभावसिद्धिश्चेत्, किं 'हर्षामर्ष...' इति वाक्येन ? इत्यत आह **उपचारेति** ।

*प्र०दी०*— पुनरुक्तिदोषमाशङ्क्य परिहरति **सर्वेति** । 'सर्वारम्भपरित्यागी', 'शुभाशुभ-परित्यागी' इत्यादौ सामान्यविशेषभावेन । 'सन्तुष्टः सततम्' 'सन्तुष्टो येन केनचित्' इत्यादौ व्याख्यानव्याख्येयभावेन । 'हर्षामर्षभयोद्वेगैर्मुक्तः', 'यो न हृष्यति' इत्यत्र नोक्तं प्रकारद्वयं सम्भवतीत्यत आह **हर्षादिभिरिति** । निष्ठाप्रत्ययेनातीतत्वप्रतीत्या कालान्तरे हर्षादिकं भवती-त्याशङ्क्य क्रियाप्रबन्धे विहितेन लटा प्रतिपादयतीत्यर्थः ।

*भा०दी०*— **क्रियाप्रबन्ध इति** । तृतीयाध्यायतृतीयपादे 'नानद्यतनवत् क्रियाप्रबन्ध-सामीप्ययोः' इति सूत्रम् । तस्यार्थः । भूतानद्यतने भविष्यदनद्यतने च लङ्-लुटौ विवक्षितौ । तयोः प्रतिषेधः क्रियते । अनद्यतने च प्रत्ययविधिर्न भवति । क्रियाप्रबन्धे सामीप्ये च गम्यमाने

क्रियाणाम् । प्रबन्धक्रिया क्रियाप्रबन्धः । सातत्येनानुष्ठानं कालानाम्, सामीप्यं तुल्यजातीयेनाव्यवधानम् । यावज्जीवं भद्रमन्नमदात्, यावज्जीवं भृदामन्नं दास्यति, यावज्जीवं युक्तो अध्यापिपत्, यावज्जीवं युक्तो अध्यापयिष्यति । सामीप्ये तु 'येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनादधीत । 'सोमेनायष्ट । स ग्राममदादधिपतये यममावास्यागामिना एतस्या यक्ष्यति असङ्गां दास्यति उपाध्यायः अग्निना दास्यति सोमेन अग्निना अधीते इत्यादीन्युदाहरणानि ।

अद्यतनवत् क्रियाप्रबन्धसामीप्ययोरित्येव वक्तव्ये नानद्यतनवदिति चेति द्वौ प्रतिषेधौ प्राप्तस्याप्यनुज्ञानायेत्युक्तम् । 'भूतभविष्यानद्यतनवत् प्रत्ययौ न भवतः' इत्युक्त्या अद्यतने लटो अप्रतिषेधात् क्रियाप्रबन्धे लडित्युक्तम् । तथा च हृष्यतीति सन्ततहर्षवान् इत्यर्थो भवतीति भावः ।

*भा०र०*— **व्याख्यानेति** । 'सन्तुष्टः सततं योगी' इत्यत्रोक्तः सन्तोषो न यादृशतादृशः । किन्तु येन केनचिद्दैवलब्धेन प्राप्त इति व्याख्यानाभावे नापुनरुक्तिरिति व्याख्यागतमित्यर्थः । भूताधिकारेनिष्ठाप्रत्ययानुशासनादिति भावेनोक्तम् **अतीतत्वेति** ।

भाष्यम्

**आधिक्यज्ञापनाय भक्त्यभ्यासः । 'ये तु सर्वाणि कर्माणि' इत्यादेः प्रपञ्च एषः ॥ १६-१७ ॥**

*प०टी०*— 'भक्तिमान् यः' 'मद्भक्तः' इत्यादिना बहुवारभक्त्युक्तेः कृत्यमाह **आधिक्येति** । साधनेषु भक्तिरित्यर्थः । 'अद्वेष्टा' इत्याद्यसङ्गतं साधनं किमुच्यते ? इत्यत आह **ये तु इति** ॥ ॥ १६-१७ ॥

*प्र०दी०*— तर्हीदमेवास्तु, किं तेन ? इत्यत आह **उपचारेति** । सिद्धेऽर्थे वचनमुपचारं तात्पर्यद्योतनेन परिहरतीत्यर्थः । 'यो मद्भक्तः' इति भक्तिः पुनः पुनरुच्यते । तत्प्रयोजनमाह **आधिक्येति** । 'अद्वेष्टा' इत्यादिनोक्तेषु सर्वधर्मेषु भक्तेरिति शेषः । 'अद्वेष्टा' इत्यादेः सङ्गत्यदर्शनात् तामाह **ये त्विति** । **प्रपञ्चः** तदुपलक्षितस्याभिधानम् ।

'अक्षरोपासकानधिकृत्यैतदुच्यते' इत्यसत् । सन्निहितसम्बन्धे सति व्यवहितसम्बन्धग्रहणायोगात् 'यो मद्भक्तः स मे प्रियः' इत्यादिवचनाच्च ॥ १६-१७ ॥

*भा०दी०*— अपव्याख्यां 'हृष्यति' इत्युक्त्या अद्यतनो हि ईश्वरो उपासकानाम् इति निराह **अक्षरोपासकानिति** । **एतदिति** । 'अद्वेष्टा' इत्यादिकमित्यर्थः । **सन्निहितेति** । 'येन सर्वाणि' इति

भगवदुपासकाः सन्निहिताः तैर्व्यवहिता 'ये त्वक्षरम्' इत्यक्षरोपासका इति भावः । **इत्यादिवचनाच्च** । इत्यस्य 'इत्यसत्' इत्यनेनान्वयः ॥ १६-१७ ॥

*भा०र०*— **तर्हीति** । 'यो न हृष्यति' इत्यनेन सर्वदा हर्षाद्यभावे लटा प्रतिपादितेऽपि वचनम् । हर्षामर्षेति हर्षाद्यभाववचनम् । 'यो मद्भक्त इति' इत्यत्र इतिशब्द आद्यर्थे । 'भक्तिमान्य' इति 'भक्तिमान्मे प्रिय' इत्यत्र चेत्यर्थः । कस्य किं प्रतियोगिकमाधिक्यमिति न ज्ञायत इत्यतः तत्स्फूरणाय शेषमाह **अद्वेष्टीतीति** । **तदुपलक्षस्येति** । 'ये तु सर्वाणि कर्माणि' इत्यत्र यत्सर्वकर्मसंन्यासपदेन, 'मां ध्यायन्त' इत्यनेन चोक्तं साधनं नैतावतैव पर्याप्तम् । किन्त्वन्यदप्युक्तपदैरुपलक्षतया ग्राह्यमिति भावेनाद्वेष्टेत्यादिना तदभिधत्त इति युक्तम् । प्रपञ्च इति भाषणमिति भावः । भाष्ये 'एष' इत्यस्य द्विष्टेत्यादि श्लोकसन्दर्भ इत्यर्थः ।

यत्तु अत्र सङ्करः— अक्षरोपासकानां सम्यग्दर्शननिष्ठानां संन्यासिनां त्यक्तसर्वेषणानां 'अद्वेष्टा सर्वभूतानाम्' इत्यादि धर्मपूर्णं साक्षादमृतत्वसाधनं वक्ति भगवानित्यद्वेष्टेत्यादेः सङ्गतिमभ्यधत्त तदसदिति भावेनाह **अक्षरोपासकानामिति** । निर्गुणब्रह्मोपासकानित्यर्थः । एतत् अद्वेष्टेत्यादिनोक्तं साधनजातम् । **सन्निहितेति** । ये तु 'सर्वाणि कर्माणि मयि संन्यस्य' इति सन्निहितमच्छब्दितं भगवदुपासकानाधिकृत्यैतदिति सङ्गतौ सम्भवत्यां ये त्वक्षरमनिर्देश्यमिति दूरस्थनिर्गुणसम्बन्धग्रहणमयुक्तमित्यर्थः । अर्थदोषं चाह **यो मद्भक्त इति** । मयि संन्यस्य मत्पर इत्युक्तस्यैव यो मद्भक्तः स मे प्रिय इति प्रत्यभिज्ञानाच्चाद्वेष्टेत्यादौ भगवदुपासका एव ग्राह्य न पुनरक्षरोपासका इति भाष्योक्तसङ्गतिरेव युक्तेति भावः ॥ १६-१७ ॥

**गीता**

## समः शत्रौ च मित्रे च तथा मानापमानयोः ।
## शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥

*वि०वि०*— सुखादिषु साम्यम्, हर्षादिराहित्यं च प्रायिकमेव । उक्तं च— 'प्रायः सुखादिषु समः प्रायो हर्षादिवर्जितः । तथोच्यते यथाऽल्पस्वो निःस्व इत्युच्यते जनैः ॥ न हि मुख्यतया साम्यं कस्यचित्सुखदुःखयोः । न च हर्षादिसन्त्यागो यावन्मुक्तिः कुतश्चन ॥' इति ॥ १८ ॥

*सा०सं०*— किञ्च 'समः शत्रौ च मित्रे च' इत्यादि । पूर्वं 'समदुःखसुखः' इति सामान्येनोक्तम् । तद्विशिष्योक्त्या व्यनक्ति **शीतोष्णेत्यादि** । शीतोष्णादिविषयजन्यसुखदुःखेषु । **समः** उत्सेकानुत्सेकहीनः । **सङ्गविवर्जितः** फलस्नेहहीनः ॥ १८ ॥

*अ०प्र०*— किञ्च, **सम इति** ।

शत्रौ च[१], मित्रे च[२], समः = एकरूपः[३], मानापमानयोरपि[४], तथा = सम एव हर्षविषाद-शून्यः[५], शीतोष्णसुखदुःखेषु च समः = शीतोष्णयोश्च सुखदुःखयोश्च समः[७], सङ्गविवर्जितः = देहाभिमानोऽन्तःसङ्गः तेन गृह-दारपुत्रादिषु ममेति बहिःसङ्गः एवमन्तर्बहिस्सङ्गाभ्यां विवर्जितः क्वचिदपि अनासक्तः[८], स मे प्रियः इति पूर्वेणान्वयः ॥ १८ ॥

**गीता**

## तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
## अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥

*वि०वि०*— अनिकेतः अनियतवासः, भगवदाश्रयो वा ॥ १९ ॥

*सा०सं०*— किञ्च **तुल्यनिन्दास्तुतिः** । हेयत्वेन निन्दायास्तुल्या स्तुतिर्यस्य स तथा । **अनिकेतः** अनियतवासः । अकारवाच्यभगवदाश्रयो वा । **स्थिरमतिः** कुतर्कैरचञ्चलज्ञानः । 'यो मद्भक्तः', 'भक्तिमान्' इति भक्तेर्बहुवारोक्तिरद्वेष्टेत्यादिनोक्तेषु धर्मेषु भक्तेराधिक्यज्ञापनाय । अत्र सुखादिषु साम्यं हर्षादिराहित्यं च प्रायेणेति ज्ञेयम् । 'प्रायः सुखादिषु समः प्रायो हर्षादिवर्जितः' इत्यादेः । 'सन्तुष्टः सततम्' इत्यस्य 'सन्तुष्टो येन केनचित्' इत्येतद्व्याख्यानरूपमित्यपौनरुक्त्यम् ॥ १९ ॥

*अ०प्र०*— किञ्च, **तुल्यनिन्देति** ।

तुल्यनिन्दास्तुतिः = तुल्ये निन्दास्तुती यस्य सः तथा[१], मौनी = मौनमस्यास्तीति मौनी संयतवाक् वस्तुतो न वदत्येव केनापि प्रार्थितश्चेत् वेदान्तविषये तथा व्यवहारे वा वदन्नपि वक्ता न भवति तस्य श्रीविष्णुभक्तिः सर्वेन्द्रियवृत्तौ निरभिमानित्वात् मौनी[२], येनकेनचित् सन्तुष्टः = यथालब्धेन[३], यद्वा, येनकेन पदार्थेन सन्तुष्टश्चेत् तदभावे सन्तुष्टिर्न स्यात् ।[३], लाभे न हृष्यति अलाभेऽप्यसन्तुष्टो न भवति तस्य पूर्णत्वात्[४], अनिकेतः = नियतवासशून्यः यद्वा, नास्ति निकेतो आश्रयो यस्य सोऽनिकेतः श्रीकृष्णचरणारविन्दे मनःस्थापनत्वात् तदेव महत् गृहमिति यस्य सः[५], स्थिरमतिः = व्यवसितचित्तः[६], एवंभूतो भक्तिमान् नरः[८], मे = मम[९], प्रियः ॥ १९ ॥

**गीतातात्पर्यनिर्णयः**

"भक्तिं ज्ञानं च वैराग्यमृते यो नेच्छति क्वचित् ।
शुभाशुभपरित्यागी विद्वद्भिः कीर्तितो हि सः ॥" इति च ।

***प्रका०***— "शुभाशुभपरित्यागी भक्तिमानि"त्यत्र भक्त्यादिव्यतिरिक्तशुभपरित्यागी विवक्षित इत्याह **भक्तिमिति** ।

***न्या०दी०***— ननु "सर्वारम्भपरित्यागी" इत्यस्य "शुभाशुभपरित्यागी" इति प्रपञ्च्यमानत्वात् अवैष्णवारम्भपरित्यागीत्यादिकं किं विशिष्याभिधीयत इत्यतस्तत्स्मृत्यैव उक्ताविरुद्धतया व्याचष्टे **भक्तिमिति** ॥ उपलक्षणं चैतत् । तत्साधनतया वैष्णवारम्भांश्चेति ज्ञातव्यम् ।

***भा०दी०***— **उक्ताविरुद्धतयेति** । अवैष्णवेत्याद्युक्ताविरुद्धतया शुभपदस्य ज्ञानभक्तिवैराग्यान्यशुभपरतया व्याचष्ट इत्यर्थः । एतेन वैष्णवेत्यस्य ज्ञानभक्तिवैराग्यान्यानीत्युक्तम् ॥ **तत्साधनतयेति** । ज्ञानभक्तिवैराग्यसाधनतया तुलस्याहरणभगवदाराधनतीर्थयात्राद्यारम्भांश्च विनेत्यर्थः ॥

**गीतातात्पर्यनिर्णयः**

"प्रायः सुखादिषु समः प्रायो हर्षादिवर्जितः ।
तथोच्यते यथाऽल्पस्वो निःस्व इत्युच्यते जनैः ॥
न हि मुख्यतया साम्यं कस्यचित् सुखदुःखयोः ।
न च हर्षादिसन्त्यागो यावन्मुक्तिः कुतश्चन ॥" इति च ।

"हृतिर्मदादधर्माय हर्षो नाम प्रकीर्तितः ॥"

—इति शब्दनिर्णये ॥

***प्रका०***— "यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति । शीतोष्णसुखदुःखेषु सम" इत्यादेरर्थमाह **प्राय इत्यादिना** । यो न हृष्यतीत्येतदशुभविषयमित्याह **हृतिरिति** ।

***न्या०दी०***— "समदुःखसुखः", "हर्षामर्षभयोद्वेगैर्मुक्तः" इत्येतन्नियमप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे **प्राय इति** ॥ तथोच्यते सुखादिषु समो हर्षादिवर्जित उच्यते । एवं

चेदल्पवैषम्यादेर्विद्यमानत्वात् कथं तदभावोक्तिरित्यत आह **यथेति** ॥ मुख्यार्थ एव किं न स्यादित्यत आह **न हीति** ॥ ननु हर्षस्य गुणत्वात् कथं तत्परित्यागोऽपेक्षिततयोच्यत इत्यतो हर्षशब्दस्य हेयार्थतां स्मृत्यैव दर्शयति **हृतिरिति** । मनस इति शेषः ।

**गीतातात्पर्यनिर्णयः**

**व्यस्तेन प्रियाः समस्तेनातीव प्रियाः । भक्तिस्तु व्यस्तेष्वप्युक्तैव । "यस्मान्नोद्विजते" इत्यत्रापि स चेत्यनेन भक्तिरनुषज्यते ।**

***न्या०दी०*— ननु "अद्वेष्टा" इत्यादावद्वेषादिमतां प्रियत्वमात्रमुक्त्वा "ये तु धर्म्यामृतम्" इत्यत्र श्रद्धादिमतामतिप्रियत्वं किं निमित्तमुच्यत इत्यत आह **व्यस्तेनेति** ॥ 'अद्वेष्टा' इत्यादौ यत् पृथक् पृथक् साधनमुक्तं तत्तन्मात्रेण प्रियत्वमुक्तम् । "ये तु" इत्यत्र अद्वेष्टेत्यादिप्रागुक्तसमस्तसाधनेन अतीवप्रियत्वम् । व्यस्तात् समस्तस्याधिक्यादिति भावः । ननु 'अद्वेष्टा' इत्यादावद्वेषादिसाधनेन प्रियत्वमुच्यते, "ये तु" इति भक्त्याऽतीव प्रियत्वमुच्यत इति किं न स्यात् ? भक्तेः सर्वसाधनोत्तमत्वादित्यत आह **भक्तिरिति** ॥ अद्वेषादिकथनेऽपि भक्तेरुक्तत्वात् नायं विभागो युक्त इति भावः । "यस्मान्नोद्विजते लोकः" इति व्यस्तसाधनकथने भक्तेरनुक्तत्वात् कथं भक्तिस्तु व्यस्तेष्वयुक्तैवेत्युच्यत इत्यत आह **यस्मादिति** ॥ १७-१९ ॥

***भा०दी०*— व्यस्तसाधनकथन इति** । असमस्तसाधनकथन इत्यर्थः ॥ १७-१९ ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते*
*द्वादशोऽध्यायः ॥*

**गीता**

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे*
*भक्तियोगो नाम द्वादशोऽध्यायः ॥*

***वि०वि०—*** भक्तेराधिक्यं ज्ञापयितुं पुनर्भक्ता इत्युक्तम् । पृथग्द्वेषादिसाधनवन्तोऽभक्ताः । प्रियाः समस्तसाधनवन्तो भक्ताः अतीव प्रिया इत्याशयेनोपसंहरति **ये त्विति** । धर्मो विष्णुः, तस्मादनपेतं तद्विषयं धर्म्यम् । अमृतमित्यादि संसारनाशकं चेति धर्म्यामृतम् । यथोक्तं सर्वम् ॥२०॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां द्वादशोऽध्यायः ॥ १२ ॥*

***सा०सं०—*** 'अद्वेष्टा सर्वभूतानाम्' इत्यादावद्वेषादिकं यत् पृथक् प्रीतिमात्रसाधनमुक्तम् 'स मे प्रियः', 'स च मे प्रियः' इत्यादिना तत् सर्वं मिलितम्, यत्रास्ति स तु मेऽत्यन्तं प्रिय इति प्रागुक्तं पिण्डीकृत्योपसंहरति **ये त्विति** । **धर्म्यामृतं** धारकत्वाद्धर्मो विष्णुः । तदुपासनाङ्गत्वा-दुपचारेण **धर्म्यम्** । अमृतशब्दितमुक्तिसाधनम् **अमृतम्** । धर्म्यं च तदमृतं च **धर्म्यामृतम्** । यथोक्तमद्वेष्टेत्यादिनोक्तमद्वेषादिकं प्रीतिसाधनं समस्तम् । **श्रद्दधानाः** आस्तिक्यवन्तः । **मत्परमाः** मदुत्तमताज्ञानिनः सन्तः । **ये पर्युपासते** सम्यगनुतिष्ठन्ति । **ते भक्ताः** । **अतीव मे प्रियाः** इत्यर्थः ॥ २० ॥

*॥ इति श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते द्वादशोऽध्यायः ॥*

***अ०प्र०—*** अकारवाच्येश्वरे वा सर्वसाधनेषु भक्तेराधिक्यज्ञापनाय पुनः पुनः भक्त इत्या-द्युक्तिः । अत्र व्याख्यानव्याख्येयभावादिनाऽपुनरुक्तिर्द्रष्टव्या । पृथक्पृथक् द्वेषादि साधनवन्तोऽभक्ताः प्रियाः । समस्तसाधनवन्तो भक्ताः अतीव प्रिया इत्याशयेनोपसंहरति **ये त्विति** । उक्तधर्मजात-मुपसंहरति **ये त्विति** ।

अन्वयः— ये तु भक्ताः[१], इदं = पूर्वोक्तं[२], धर्म्यामृतं = धर्मो विष्णुस्तस्मादनपेतं तद्विषयं धर्म्यं अमृतं मर्त्यादिमत्संसारनाशकं चेति धर्म्यामृतम् । यद्वा, धर्म एव अमृतं अमृतत्वसाधनं, यद्वा, अमृतधारेव धर्मोऽस्मिन् वर्तत इति धर्म्यं च तदमृतं च ये तु श्रुत्वेत्यध्याहारः[३], यथोक्तं = सर्वसाधनजातं यद्वा, उक्तप्रकारं पर्युपासते अनुतिष्ठन्ति[४], श्रद्धधानाः = आस्तिकाः[५], मत्परमाः = मदासक्ताः अहमेव परमप्रियो येषां ते तथा[६], भक्ताः = मद्भक्ताः[८], ते[९], अतीव[१०] मे = मम[११] प्रियाः[१२] ॥ २० ॥

* *(द्वादशाध्यायस्य षष्ठश्लोकमारभ्य एकादशश्लोकपर्यन्तं तात्पर्यं मध्वमतानुसारेण लिखितं भवति ।)* षष्ठमश्लोकः— **ये तु सर्वाणि कर्माणि इति** ॥[६], तदुक्तं मधुच्छन्दशाखायाम्—

चेदल्पवैषम्यादेर्विद्यमानत्वात् कथं तदभावोक्तिरित्यत आह **यथेति** ॥ मुख्यार्थ एव किं न स्यादित्यत आह **न हीति** ॥ ननु हर्षस्य गुणत्वात् कथं तत्परित्यागोऽपेक्षिततयोच्यत इत्यतो हर्षशब्दस्य हेयार्थतां स्मृत्यैव दर्शयति **हृतिरिति** । मनस इति शेषः ।

**गीतातात्पर्यनिर्णयः**

**व्यस्तेन प्रियाः समस्तेनातीव प्रियाः । भक्तिस्तु व्यस्तेष्वप्युक्तैव । "यस्मान्नोद्विजते" इत्यत्रापि स चेत्यनेन भक्तिरनुषज्यते ।**

***न्या०दी०***— ननु "अद्वेष्टा" इत्यादावद्वेषादिमतां प्रियत्वमात्रमुक्त्वा "ये तु धर्म्यामृतम्" इत्यत्र श्रद्धादिमतामतिप्रियत्वं किं निमित्तमुच्यत इत्यत आह **व्यस्तेनेति** ॥ 'अद्वेष्टा' इत्यादौ यत् पृथक् पृथक् साधनमुक्तं तत्तन्मात्रेण प्रियत्वमुक्तम् । "ये तु" इत्यत्र अद्वेष्टेत्यादिप्रागुक्तसमस्तसाधनेन अतीवप्रियत्वम् । व्यस्तात् समस्तस्याधिक्यादिति भावः । ननु 'अद्वेष्टा' इत्यादावद्वेषादिसाधनेन प्रियत्वमुच्यते, "ये तु" इति भक्त्याऽतीव प्रियत्वमुच्यत इति किं न स्यात् ? भक्तेः सर्वसाधनोत्तमत्वादित्यत आह **भक्तिरिति** ॥ अद्वेषादिकथनेऽपि भक्तेरुक्तत्वात् नायं विभागो युक्त इति भावः । "यस्मान्नोद्विजते लोकः" इति व्यस्तसाधनकथने भक्तेरनुक्तत्वात् कथं भक्तिस्तु व्यस्तेष्वयुक्तैवेत्युच्यत इत्यत आह **यस्मादिति** ॥ १७-१९ ॥

***भा०दी०***— **व्यस्तसाधनकथन इति** । असमस्तसाधनकथन इत्यर्थः ॥ १७-१९ ॥

*॥ इति श्रीमद्गीतातात्पर्यटीकाभावदीपे राघवेन्द्रयतिकृते द्वादशोऽध्यायः ॥*

**गीता**

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥**

*इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ॥*

**विoविo—** भक्तेराधिक्यं ज्ञापयितुं पुनर्भक्ता इत्युक्तम् । पृथग्द्वेषादिसाधनवन्तोऽभक्ताः । प्रियाः समस्तसाधनवन्तो भक्ताः अतीव प्रिया इत्याशयेनोपसंहरति **ये त्विति** । धर्मो विष्णुः, तस्मादनपेतं तद्विषयं **धर्म्यम्** । अमृतमित्यादि संसारनाशकं चेति धर्म्यामृतम् । यथोक्तं सर्वम् ॥२०॥

*॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीमज्जयतीर्थशिष्य–विद्याधिराजभट्टोपाध्यायविरचितायां श्रीमन्मध्वमतानुवर्तिन्यां द्वादशोऽध्यायः ॥ १२ ॥*

**साoसंo—** 'अद्वेष्टा सर्वभूतानाम्' इत्यादावद्वेषादिकं यत् पृथक् प्रीतिमात्रसाधनमुक्तम् 'स मे प्रियः', 'स च मे प्रियः' इत्यादिना तत् सर्वं मिलितम्, यत्रास्ति स तु मेऽत्यन्तं प्रिय इति प्रागुक्तं पिण्डीकृत्योपसंहरति **ये त्विति** । **धर्म्यामृतं** धारकत्वाद्धर्मो विष्णुः । तदुपासनाङ्गत्वा-दुपचारेण **धर्म्यम्** । अमृतशब्दितमुक्तिसाधनम् **अमृतम्** । धर्म्यं च तदमृतं च **धर्म्यामृतम्** । यथोक्तमद्वेष्टेत्यादिनोक्तमद्वेषादिकं प्रीतिसाधनं समस्तम् । **श्रद्दधानाः** आस्तिक्यवन्तः । **मत्परमाः** मदुत्तमताज्ञानिनः सन्तः । **ये पर्युपासते** सम्यगनुतिष्ठन्ति । **ते भक्ताः** । **अतीव मे प्रियाः** इत्यर्थः ॥ २० ॥

*॥ इति श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते द्वादशोऽध्यायः ॥*

**अoप्रo—** अकारवाच्येश्वरे वा सर्वसाधनेषु भक्तेराधिक्यज्ञापनाय पुनः पुनः भक्त इत्या-द्युक्तिः । अत्र व्याख्यानव्याख्येयभावादिनाऽपुनरुक्तिर्द्रष्टव्या । पृथक्पृथक् द्वेषादि साधनवन्तोऽभक्ताः प्रियाः । समस्तसाधनवन्तो भक्ताः अतीव प्रिया इत्याशयेनोपसंहरति **ये त्विति** । उक्तधर्मजात-मुपसंहरति **ये त्विति** ।

अन्वयः— ये तु भक्ताः[१], इदं = पूर्वोक्तं[२], धर्म्यामृतं = धर्मो विष्णुस्तस्मादनपेतं तद्विषयं धर्म्यं अमृतं मर्त्यादिमत्संसारनाशकं चेति धर्म्यामृतम् । यद्वा, धर्म एव अमृतं अमृतत्वसाधनं, यद्वा, अमृतधारेव धर्मोऽस्मिन् वर्तत इति धर्म्यं च तदमृतं च ये तु श्रुत्वेत्यध्याहारः[३], यथोक्तं = सर्वसाधनजातं यद्वा, उक्तप्रकारं पर्युपासते अनुतिष्ठन्ति[४], श्रद्धधानाः = आस्तिकाः[५], मत्परमाः = मदासक्ताः अहमेव परमप्रियो येषां ते तथा[७], भक्ताः = मद्भक्ताः[८], ते[९], अतीव[१०] मे = मम[११] प्रियाः[१२] ॥ २० ॥

* *(द्वादशाध्यायस्य षष्ठश्लोकमारभ्य एकादशश्लोकपर्यन्तं तात्पर्यं मध्वमतानुसारेण लिखितं भवति ।)* षष्ठमश्लोकः— **ये तु सर्वाणि कर्माणि इति** ॥[६], तदुक्तं मधुच्छन्दशाखायाम्—

'भक्ताश्च येऽतीव विष्णौ अतिजितेन्द्रियः सम्यगाचारयुक्ताः', 'उपासते तां समबुद्धयश्च', 'तेषां देवी दृश्यते नेतरेषाम्', 'दृष्टाञ्जसा भक्तिमतीव विष्णो', 'दत्वोपास्तौ सर्वविघ्नान् छिन्दति, 'उपास्यं तं वासुदेवं विदित्वा','ततस्ततः शान्तिमत्यन्तमेती'ति मदुपासकानां नेदृशः क्लेश इत्याह ॥ ६ ॥

तेषामहं समुद्धर्ता इति ॥, तदुक्तम्—

'प्रसन्नो भविता देवः सोऽव्यक्तो न सहैव तु ।
यावता तत्प्रसादाद्धि तावतैव न संशयः ॥
न तत्प्रसादमात्रेण प्रीयते स महेश्वरः ।
तस्मिन्प्रीते तु सर्वस्य प्रीतिरस्तु भवति ध्रुवम् ॥
यद्यप्युपासनाधिक्यं तथापि गुणदो हि सः ।
मुक्तिदस्तु स एवैको नाव्यक्तादिस्तु कश्चन ॥' इति ॥

तत्प्रसादोऽव्यक्तप्रसादः प्रीतिस्त्विति तुशब्दोऽप्यर्थः सर्वस्यापि सम्बध्यते । योऽव्यक्तापरोक्ष-प्रयासस्तावता प्रयासेन यदि भगवन्तमुपास्ते ऊनेन वा तदा भगवदपरोक्ष्यं भवतीति प्रमाणार्थः । किञ्च इन्द्रियसंयमनाद्यूनभावेऽपि उपासकस्यापि देवी नातिप्रसादमेति । देवस्तु तानि साधनानि भक्तिमतः स्वयमेव प्रसन्नेन ददातीति भगवदुपासने भक्तानां सौकर्यमित्यन्यत्र क्लेशोऽधिकतरमिति भावः । तदुक्तं तात्पर्ये—

'अविष्णुज्ञैरतद्भक्तैस्तदुपासाविवर्जितैः ।
शपेदुपासिताप्येषा श्रीस्तांस्तद्धरितत्त्ववित् ॥
तद्भक्तस्तमुपास्यैव श्रेयं ध्यायीत नित्यदा ।
तेन तुष्टा तु साच्छिद्रं दद्याद्विष्णोरुपासनम् ॥
ततस्तद्दर्शनान्मुक्तिः यात्यसौ नात्र संशयः ।
तथापि सर्वपरमां सर्वदोषविवर्जिताम् ॥
ज्ञात्वा श्रियं त्वत्परमं मत्पतिं पुरुषोत्तमम् ।
विज्ञेयोपासते नित्यं ते हि युक्ततमा मताः ॥
यतः क्लेशोऽधिकस्तेषां पृथक् श्रियमुपासताम् ।
विष्णुना सहिता ध्याता साऽपि तुष्टिं परां व्रजेत् ॥

अन्यथा तु पुनर्विष्णोः श्रीपतित्वेन चिन्तनम् ।
अच्छिद्रमेव कर्तव्य इति मुक्तिश्चिराद्भवेत् ॥
तस्मादक्लेशतो मुक्तिः क्षिप्रं विष्णुमुपासताम्' इति ॥

तथाऽप्यव्यक्तोपासकानां भाग्यं शीघ्रं भवति न हर्युपासकानामिति तत्प्रवृत्तिर्लोके ।

धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि ।
प्रश्रिते दानशीले च सदैव निवसाम्यहम् ॥

—इति महालक्ष्मीवाक्यम् ।

'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्' इति श्रीविष्णोर्वाक्यं चास्त्यतो युक्तमुक्तम् । स्वोपासक इति शेषः । आदौ अपहरामि पश्चाद्ददामि च ॥ ७ ॥

अथैतदप्यशक्तोऽसीति ।

वैष्णवान्येव कर्माणि यः करोति सदा नरः ।
याज्यार्च्यामार्जनादीनि स्वाश्रमोक्तानि यानि च ॥
स तत्कर्मेति विज्ञेयो योऽन्यदेवादिपूजनम् ।
कृत्वा हरावर्पयति स तु तद्योगमास्रवान् ॥

तत्र

'पूर्वो विशिष्टस्या आदिमध्यान्ततः स्मृतेः ।
अवान्तरे च नियमाद्विष्णोस्तद्वासना स यत् ॥
मनसा वर्ततेऽन्योऽपि यथाशक्ति हरिस्मृतेः ।
अवान्तरे च नियमाद्विष्णोस्तद्वासना स यत् ॥
मनसा वर्ततेऽन्योऽपि यथाशक्ति हरिस्मृतेः ।
पूर्वोक्तयोग्यो भवति यदि नित्यं तदिच्छति ॥'

इति वैष्णवान्येन विष्णुद्वेषं नैव करोतीत्यर्थः । अर्च्या प्रतिमास्थापनं ध्यानं तत्कर्मस्य उपायमात्रवान् । यदि भगवत्कर्मत्वं कामयते तर्ह्येव तद्योग्यो भवति । न तु काम्येनान्योपासनादिनेति प्रमाणार्थः ॥ ११ ॥

*इति श्रीमद्भगवद्गीताया विवरणे अन्वयप्रकाशिकायां द्वादशोऽध्यायः ॥*

भाष्यम्

पिण्डीकृत्योपसंहरति **ये तु धर्म्यामृतमिति** । धर्मो विष्णुः, तद्विषयं धर्म्यम्, अमृतं मृत्यादिसंसारनाशकं चेति धर्म्यामृतम् । श्रत् आस्तिक्यम् । 'श्रन्नामाऽस्तिक्यमुच्यते' इत्यभिधानम् । तद् दधानाः श्रद्दधानाः ॥ २० ॥

*॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये द्वादशोऽध्यायः ॥*

***प०टी०***— अन्त्यश्लोकमवतार्य व्याचष्टे **पिण्डीकृत्येति** । 'साधनम्' इति शेषः ॥ २० ॥

*॥ इति श्रीपद्मनाभतीर्थभट्टारकविरचित-श्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां द्वादशोऽध्यायः ॥*

***प्र०दी०***— 'ये तु' इत्युक्तमेव किमर्थमुच्यत इत्यत आह **पिण्डीकृत्येति** । **धर्म्यामृतम्** इत्येतदप्रतीतार्थं व्याख्यातुं धर्मशब्दं तावद्व्याख्याति **धर्म इति** । **तद्विषयं** तदुपासनाङ्गत्वात् । धर्मादनपेतं **धर्म्यम्**, धर्मश्च विष्णुः । नादृष्टम् । प्रवृत्तस्यासम्भवात् । निवृत्तस्यैतत्साधनत्वात् । इदानीम् अमृतशब्दं व्याकुर्वन् धर्म्यामृतमिति कर्मधारयोऽयमित्याह **धर्म्यमिति** ।

न मृतं **अमृतम्** । नञ् विरुद्धार्थे । **मृतशब्दश्चो**पलक्षक इत्यर्थः । **श्रद्धधानाः** इत्येतद् व्युत्पादयति **श्रदिति** । 'श्रत्शब्दस्योपसङ्ख्यानम्' इत्युपसर्गत्वेनोपसङ्ख्यायमानस्यापि अस्य सत्त्ववाचित्वम् अविरुद्धम्; उपसर्गत्वस्य कार्यविशेषार्थत्वात् ॥ २० ॥

***इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वादशोऽध्यायः समाप्तः ॥***

***भा०दी०***— ननु ज्ञानमेव भगवद्विषयकं संसारनाशकम् । न तु 'ये तु सर्वाणि' इत्यादिना प्रागुक्तं भगवति सर्वकर्मसमर्पणादिकम् । तत्कथमुच्यते इदं सर्वकर्मसंन्यसनादिकं धर्मविषयममृतं चेति । अत आह **तदुपासनाङ्गत्वादिति** । 'यो प्रभावश्च' इति वक्तुमित्यादि भाष्यदिशेति भावः । (भावादिप्रकृत्योर्गतिशून्यत्वे परिणामोन्मुखत्वादिरूपप्रवृत्तिस्तु सम्भवतीति भावः ।)

**प्रवृत्तस्येति** । काम्यकर्मणो भगवदर्पणादेरसम्भवाद् अमृतहेतुत्वाभावाच्चेत्यर्थः । **निवृत्तस्येति** । निष्कामकर्मणो हर्षामर्षादिसाधनत्वेन तत्साध्यानामेव प्रागुक्ततया तेषामेव अत्रेदंपदेन ग्राह्यत्वादिति भावः । आदिपदतात्पर्यमाह **अमृतशब्दश्चेति** । सुखदुःख इत्यादिबन्धस्योपलक्षक इत्यर्थः । **इत्युपसर्गत्वेनेति** । वार्तिके उपसर्गत्वेन सङ्गृह्यमाणस्यापि आस्तिक्यरूपवस्तुवाचित्वमर्थः । उपसर्गत्वोक्तेः 'ते प्राग्धातोः' इति सूत्रेण विहितप्राक्प्रयोगादिरूपकार्यविशेषमात्रार्थत्वेन उप-सर्गवदसत्त्ववाचित्वाभावाद् व्यर्थं न भवतीति सत्त्वावाचित्वमविरुद्धमित्यर्थः इति ॥ २० ॥

*इति श्रीगीताभाष्यटीकायाः प्रमेयदीपिकायाः टिप्पण्यां*
*राघवेन्द्रयतिकृतायां भावदीपे द्वादशोऽध्यायः ॥*

*भा०र०*— ये त्वित्युक्तमेव ये तु सर्वाणि कर्माणीत्युक्तमेव । 'पिण्डीकृत्य' इति भाष्ये साधनजातमिति शेषः । द्वेषाभावादेर्विष्णुविषयत्वाभावात् कथं तद्विषयमिति विष्णुविषयत्वभाषणमित्यतस्तदुपपादयति **तदुपासनाङ्गत्वादिति** । तद्विषयं धर्म्यमिति कथं विषयत्वार्थे यत्प्रत्ययाननुशासनादित्याशङ्क्य धर्मपथ्यर्थन्यायादनपेत इति शास्त्रेण धर्मादनपेतमित्यर्थे यतोऽनुशिष्टत्वादिहानपेतत्वं धर्मोपासनाङ्गत्वं तदेव धर्मविषयत्वं विवक्षितमिति भावेन भाष्ये तयोक्तमित्यभिप्रेत्य धर्मो विष्णुरित्येतच्च समर्थयते **धर्मादनपेतमित्यादिना** । अदृष्टं च भवत्प्रवृत्तं निवृत्तं वेति विकल्पं हृदि निधाय आद्य आह **प्रवृत्तस्येति** । असम्भवात् प्रवृत्तधर्मस्य द्वेषादिवर्जनविरोधितया करुणशालित्वस्य पृशोरिवाकरुणः स्वर्गकामं इत्यादौ अभावावेदनेन च तदनपेतत्वासम्भवादित्यर्थः । अन्त्य आह **निवृत्तस्येति** । तस्य द्वेषाभावादिसाधनत्वेन तत्साध्यत्वायोगादिति भावः । कर्मधारयः धर्म्ये च तदमृतं चेति कर्मधारयः । अयं धर्म्यामृतमिति समासः । विशेषणं विशेष्येन बहुलमित्यत्र बहुलग्रहणाद्विशेषणयोरपि समासो युक्त इति हृदयम् । उपलक्षकः भृत्यादिरूपसंसारस्य । **श्रच्छब्दस्येति** । उपासङ्ख्यायमानस्य श्रच्छब्दस्योपसङ्ख्यानमिति वार्तिककारेण सङ्ग्राह्यतयोक्तस्य सत्त्वावाचित्वं आस्तिक्यरूपद्रव्यवाचित्वम् । लिङ्गसङ्ख्यान्वितं द्रव्यमिति । क्लीबत्वैकत्वाभ्यां युक्तस्य सच्छब्दितास्तिक्यस्य परिभाषिकद्रव्यत्वं नायुक्तमिति भावः । तर्हि 'चादयोः सत्त्वे, प्रादयः उपसर्गाः क्रियायोगे' इत्यद्रव्यार्थानामेव प्रादीनामुपसर्गसंज्ञोक्तिः किमर्थेत्यत आह **उपसर्गत्वस्येति** । श्रच्छब्दस्योपसर्गत्वोपसङ्ख्यानस्य आतश्चोपसर्ग इत्याङ्प्रत्ययविधानेन श्रद्धेति रूपसिद्ध्यर्थमेव न तु तस्य द्रव्यवाचित्वविघातार्थत्वमपीति युक्तमेव । तद्दधानाः श्रद्दधाना इति भाषणमिति भावः । 'श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्ये'त्यादौ उपसर्गत्ववचनस्य 'ते प्राग्धातोः' इति धातोः पूर्वप्रयोज्यत्वरूपकार्यविशेषार्थत्वादित्यर्थ इत्यप्याहुः ॥ २० ॥

*गीताक्षरार्थस्तु*— मदुपासकानामव्यक्तोपासकानामिव न क्लेशो मोक्षापादान इत्युच्यते **ये तु सर्वाणीति द्वाभ्याम्** ।

तुशब्दः अव्यक्तोपासकेभ्यो भगवदुपासकानां वैशेष्यद्योतकः । ये तु सर्वाणि स्वाश्रमोचितानि कर्माणि संन्यस्य = सर्वस्वतन्त्रो हरिरेव मयि स्थित्वा स्वपूजात्वेन स्वदत्तकर्तृतासम्पन्नेन मया कारयतीत्यनुसन्धाय मत्पराः अहं पर उत्तमो येषां ते तथोक्ताः । मम सर्वोत्तमत्वं जानन्तः अनन्येन = न विद्यते अन्यः स्वातन्त्र्येण भजनीयो यस्मिन् सोऽनन्यः तेन । **योगेन** = उपायेन भक्ति-लक्षणेन मां ध्यायन्तश्चिन्तयन्त उपासते तेषामभ्यावेशितचेतसां समाहितमानसानां अहं मृत्युरूप-संसारसागरात् नचिरात् शीघ्रमुद्धर्ता भवामि । अत्रानन्येनैव योगेनेत्यादिना विनाव्यक्तोपासनं भव-त्येव । **मदुपासकानां मोक्ष इति** । उपासत इत्येवोक्त्या अतिशयोपासनाद्यभाव इति । नचिरा-दित्यनेन अव्यक्तोपासनद्वारके मार्गेऽपि यो व्यक्तापरोक्षे प्रयासस्तावता प्रयासेन यदि मामुपास्ते ऊनेन वा तदा मदापरोक्ष्यमेव भवतीति । तेषामेवं समुद्धर्ता भवामीत्यनेन इन्द्रियसंयमाद्यूनभावे अत्युपासकस्यापि देवी नातिप्रसादमेति । अहं तु तानि साधनानि भक्तिमतः स्वयमेवाप्रयत्नेन ददामि इति च प्रतीयन्त इति न भगवदुपासकानामव्यक्तोपासकानामिव क्लेशभूयेत्यव्यक्तोपासकेभ्यो न भगवदुपासका एवोत्तमा इति विभावितं भवतीति भाष्यटीकयोः स्फुटम् ॥ ६-७ ॥

एवं मदुपासनस्योत्तमत्वात् तदेव कुरु तदलाभे मां जानीहि तदभावे च मत्कर्मपरमो भव तदशक्तौ च मद्योगमाश्रितः फलत्यागं कुर्वित्युच्यते मय्येव मन आधत्स्वेत्यादि चतुःश्लोक्या **मय्येवेति** । मय्येव न त्वन्यत्र । मन आधत्स्व स्थापय । मदुपासनमेव कुरु नान्योपासनम् । तदलाभे मयि बुद्धिं निवेशय मत्तत्त्वनिश्चयमापादय । अत ऊर्ध्वं तत्त्वनिश्चयानन्तरभाविध्यान-जनितापरोक्ष्यज्ञानोत्पत्त्यनन्तरं मयि निवसिष्यसि = निवत्स्यसि निश्चयेन मयि वा सञ्चरिष्यसि निर्दुःखानन्दानुभवात्मिकां स्थितिं प्राप्स्यसीति यावत् ॥ ८ ॥

**अथेति** । अथ मयि चित्तं स्थिरमचञ्चलं यथा तथा समाधातुं स्थापयितुं न शक्नोषि चेत् ततस्तर्हि अभ्यासयोगेन विष्णुशास्त्रश्रवणमननावृत्तिरूपोपायेन मामाप्तुं = ज्ञातुमिच्छा = निश्चेतुं प्रयतस्व । अभ्यासे शास्त्रश्रवणमननावृत्तावप्यसमर्थोऽसि चेन्मत्कर्मपरमः = मत्पूजात्मकानि कर्माणि परमाणि उत्तमानि यस्य स भव । मत्प्रीत्युद्देश्यककर्मानुष्ठानतत्परो भव ॥ ९ ॥

ततः किं सिद्ध्येदित्यत उच्यते **मदर्थमिति** । कर्माणि कुर्वन्नपि सिद्धिम् । कर्मणा ज्ञान-मातनोति ज्ञानेनामृतो भवति शास्त्रात् ज्ञानं मोक्षं वा, एतत् मत्प्रीत्युद्देश्यकमद्योगं कर्म, मद्योगं

योऽन्यदेवादिपूजनं कृत्वा हरावर्पयति । स तु तद्योगमात्रवान् इति शास्त्रोक्तम् । अन्ते मयि समर्पणलक्षणं मत्कर्मत्वोपायम् ॥ १० ॥

ततः = तर्हि **यतात्मवान्** = शुद्धिचित्तः सन् **कर्मफलत्यागं** = सर्वकर्मफलत्यागं कुरु ॥ ॥ ११ ॥

तदलाभे शास्त्राभ्यास इत्येतत् समर्थ्यते **श्रेयो हीति** । ज्ञानं = श्रवणमननजन्यः अपरोक्ष्यतत्त्वनिश्चयरूपं, अभ्यासात् = केवलाभ्यासात्, अज्ञानपूर्वकाच्छ्रवणमननावृत्तिलक्षणशास्त्राभ्यासः श्रेयः श्रेष्ठम् । ज्ञानात् ज्ञानमात्रात् ध्यानं ज्ञानसहितध्यानं विशिष्यते । श्रेयः । ध्यानात् कर्मफलत्यागो विशिष्यत इत्यनेन त्यागस्य प्रशस्तत्वलक्षणास्तुतिरेवाभिप्रेयते । न तु प्रतीतोऽर्थो ग्राह्य इति व्याख्यानं भाष्यटीकयोः स्पष्टम् । अथवा ध्यानात्केवलस्त्यागरहितात् ध्यानात् कर्मफलत्यागः कर्मफलरागत्यागरहितं ध्यानमिति लक्षणया ग्राह्यम् । 'सर्वाधिकं ध्यानमुदाहरन्ती'ति शास्त्रात् । यद्वा कर्मफलत्यागः कर्मफलरागत्यागरहितं ध्यानमिति लक्षणया ग्राह्यं सर्वाधिकं ध्यानमुदाहरन्तीति शास्त्रात् । यद्वा कर्मफलत्यागः ध्यानसाहित्येनोपस्कृतो विशिष्यत इति योज्यम् । त्यागात् कर्मफलत्यागानन्तरमपरोक्षज्ञानमात्रव्यवधानेन शान्तिर्मोक्षो भवति ॥ १२ ॥

'ये तु सर्वाणि कर्माणी'त्यादि प्रपञ्च्यते **अद्वेष्टेत्यादि अष्टश्लोक्या** । सर्वभूतानामिति कर्मणि षष्ठी । भगवदविरोधिषु भूतेषु स्वात्मनो व्यधा हेतुमपि न किञ्चित् द्वेष्टि यस्य तथा । सर्वाणि भूतानि दयनीयानि येषां ते सर्वभूताः महान्तस्तेषां महतामद्वेष्टा । 'उत्तमेष्वात्मनो नित्यं मात्सर्यं परिवर्जयेदि'ति शास्त्रात्स्वोत्तमेषु अपराधहीन इत्यर्थ इत्यप्याहुः । **मैत्रः** = मित्रस्येदं मैत्रं मित्रत्वं तदस्यास्तीति मत्वर्थीयोऽर्श आद्यच् स्वसमेषु सत्सु स्वात्मनीव स्नेहवान् । **करुणः** = अधमेषु दया, करुणा, तद्वान् पूर्ववदच् । 'समेषु स्वात्मवत्स्नेहः सत्स्वन्यत्र ततो दये'ति शास्त्रम् । **निर्ममः** = ममेति ममत्वार्थकमव्ययम् । भगवदधीनेषु स्वगात्रपुत्रकलत्रादिषु स्वकीयत्वाभिमानो ममत्वम् । तन्निर्गतं यस्मात्स तथोक्तः । **निरहङ्कारः** कर्तव्येषु कर्तृत्वाध्यासहीनः । अविद्यमानानात्मगुणाभिमानो **अहङ्कारः** । तद्वाहत इति स्वामिनः । हेयतया दुःखसमं वैषयिकसुखं यस्य स तथा । अपकारिण्यपि क्रोधात्समुत्थितः । दृढनिश्चयः = अप्रामाण्यशङ्काकलङ्करहितत्वनिश्चयवान् । अर्पितमनोबुद्धिः = बुध्यतेऽनयेति बुद्धिर्वाक् मानसं वाक् च मय्येव अर्पिते यस्य स तथा । मनःशब्देन मननं बुद्धिशब्देन मनोवृत्तिविशेषो, निदिध्यासनं गृह्यत इत्यप्याहुः । मद्भक्ताश्रयः स मे प्रियः ॥ ॥ १३-१४ ॥

किञ्च **यस्मादिति** । यस्माच्चार्थानां भयहेतुरित्यापादनता । **नोद्विजते** उद्वेगं न प्राप्नोति । हर्षमर्षभयोद्वेगैः इत्यत्र हर्षः प्रियलाभे अन्तःकरणस्योन्नाहः । **अमर्षः** असहिष्णुता **भयं** त्रासः **उद्वेगः** मनोवैक्लव्यम् । तैर्युक्तं चशब्दाद्भक्तश्चेति समुच्चीयते ॥ १५ ॥

अपि च **अनपेक्षः** काम्यकर्मफलाभिलाषरहितः । **शुचिः** बाह्याभ्यन्तरशुद्धिमान्, **उदासीनः** कर्तव्य उपकारे अपकारे वा उपेक्षाबुद्धिमान्, **गतव्यथः** परकृतापकारैरनवाप्तमनः पीडः, **सर्वारम्भ-परित्यागी** सर्वेषां कर्मणामारम्भं परित्यक्तुं शीलमस्यास्तीति तथा ॥ १६ ॥

हर्षामर्षभयोद्वेगैर्मुक्त इत्यत्र निष्ठाप्रत्ययेनातीतत्वप्रतीत्या कालान्तरे हर्षादिकं भवतीति शङ्कां परिहर्तुमुक्तं **यो न हृष्यतीत्यादि** । क्रियाप्रबन्धे विहितं लटं प्रयुञ्जानस्य सदातनहर्षाद्यभावो-ऽभिसंहितः । सर्वारम्भपरित्यागीति यदुक्तं तद्विशेषपरमित्युच्यते । **शुभाशुभपरित्यागीति** । तथा च सामान्यविशेषाभावेनापुनरुक्तिः । 'सन्तुष्टो येनकेनचित्' इत्यस्य च व्याख्यानव्याख्येयभावेना-पुनरुक्तिरित्याकरे स्फुटम् । **समः** प्रियाप्रियालाभे उत्सेकानुत्सेकहीनः । **मौनी** = नियतवाक् । **अनिकेतः** = आवासभूम्यभिमानहीनः । भगवदाश्रयो वा । यो मद्भक्तः स मे प्रिय इत्यादौ भक्तिरभ्यस्यते तस्येदं प्रयोजनं यदि दृष्टेत्यादिना । यो भागवतधर्मा उक्ताः तेषु सर्वेष्वपि भक्तिरेवाधिकेति ज्ञापनम् ॥ १७-१९ ॥

ये तु सर्वाणि कर्माणीत्यादिनोक्तं साधनजातं बुद्ध्यारोहाय पिण्डीकृत्योपसंश्रियते **ये तु धर्म्यामृतमिति** । धारकत्वाद्धर्मो विष्णुस्तस्मादनपेतं धर्म्यं धर्मोपासनाङ्गत्वादुपचारेण भागवत-धर्मजातमपि धर्म्यं व्यपदिश्यते । न मृतममृतं नञ्विरुद्धार्थेऽमृतशब्दश्च मृत्यादिसंसारोपलक्षकः । मृत्यादिसंसारनाशकं धर्म्यं च तदमृतं च धर्म्यामृतम् । इदं 'ये तु सर्वाणि कर्माणि' इत्यत्रोक्तम्, यथोक्तं 'अद्वेष्टे'त्यादिना प्रपञ्चितम् । पर्युपासते = सम्यगापादयन्ति । श्रद्दधानाः श्रच्छब्देन अत्रोक्तमस्ति । अनेन प्रयोजनमस्तीति बुद्धिरूपमास्तिक्यं गृह्यते । श्रद्दधानाः मत्परमाः अन्तराय-सहस्रेणाप्यप्रतिबद्धो भगवति निरस्तप्रेमप्रवाहे । भक्ताः = तद्युक्ताः ते, अतीव = अत्यर्थमेव, मे = मम, प्रियाः इति ॥ २० ॥

श्रीमदानन्दतीर्थार्यहृदयाम्भोजवासिने ।
कृष्णाय कृष्णारमणप्रियायास्तु नमो नमः ॥

नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमस्ते नमः श्रीनृसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमो व्यासराम ॥

आर्यस्वान्तां भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ॥

कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥

श्रीमद्गीताभाष्यटीकाद्वादशाध्यायसेवया ।
तेषामायान्तु विबुधां गुणग्रहणभूषणाः ॥

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥

श्रीमद्भगवत्पादाचार्येभ्यो नमो नमः ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भगवद्गीताभाष्यटीकायां भावरत्नकोशसमाख्यायां श्रीमत्सुरीन्द्रश्रीपादशिष्यश्रीमत्सुमतीन्द्रतीर्थविरचितायां द्वादशोऽध्यायः समाप्तः ॥*

**गीतातात्पर्यनिर्णयः**

**धर्मसाधनं धर्म्यं तदेवामृतसाधनममृतं धर्म्यामृतम् ॥ २० ॥**

***॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीतातात्पर्यनिर्णये द्वादशोऽध्यायः ॥***

***प्रका०*— "ये तु धर्म्यामृतम्" इत्येतद्व्याचष्टे **धर्मसाधनमिति** ।

*इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य श्रीमद्गीतातात्पर्यनिर्णयस्य प्रकाशिकायां पद्मनाभतीर्थविरचितायां द्वादशोऽध्यायः ॥*

**न्या०दी०—** धर्म्यामृतपदस्य दुर्गमत्वादर्थमाह **धर्मेति** ॥ २० ॥

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीतातात्पर्यनिर्णयस्य टीकायां जयतीर्थमुनिविरचितायां न्यायदीपिकायां द्वादशोऽध्यायः समाप्तः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★



कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्याऽऽत्मना वाऽनुसृतः स्वभावम् ।
करोमि यद्यत् सकलं परस्मै
नारायणाय इति समर्पयामि ॥

